संशयः ॥ २० ॥ बिभेत्यल्पश्रुताद्वेदो मामयं प्रतरिष्यति ॥ इतिहासपुराणैश्च कृतोऽयं निश्चयः पुरा ॥ २१ ॥ आत्मा पुराणं वेदानां पृथगंगानि तानि षट् ॥ यच्च दृष्टं हि वेदेषु तद्दृष्टं स्मृतिभिः किल ॥ २२ ॥ उभाभ्यां यत्तु दृष्टं हि तत्पुराणेषु गीयते ॥ पुराणं सर्वशास्त्राणां प्रथमं ब्रह्मणः स्मृतम् ॥ २३ ॥ अनंतरं च वक्त्रेभ्यो वेदास्तस्य विनिर्गताः ॥ पुराणमेकमेवासीदस्मिन्कल्पांतरे मुने ॥ २४ ॥ त्रिवर्गसाधनं पुण्यं शतकोटिप्रविस्तरम् ॥ स्मृत्वा जगाद च मुनीन्प्रति देवश्चतुर्मुखः ॥ २५ ॥ प्रवृत्तिः सर्वशास्त्राणां पुराणस्याभवत्ततः ॥ कालेनाग्रहणं दृष्ट्वा पुराणस्य ततो मुनिः ॥ २६ ॥ व्यासरूपं विभुः कृत्वा संहरेत्स युगेयुगे ॥ अष्टलक्षप्रमाणे तु द्वापरेद्वापरे सदा ॥ २७ ॥ तदष्टादशधा कृत्वा भूर्लोकेस्मिन्प्रभाष्यते ॥ अद्यापि देवलोके तच्छतकोटिप्रविस्तरम् ॥ २८ ॥ तदथात्र चतुर्लक्षं संक्षेपेण निवेशितम् ॥ पुराणानि दशाष्टौ च सांप्रतं तदिहोच्यते ॥ नामतस्तानि वक्ष्यामि शृणु त्वमृषिसत्तम ॥ २९ ॥ सर्गश्च प्रतिसर्गश्च वंशो मन्वंतराणि च ॥ वंशानुचरितं चैव पुराणं पञ्चलक्षणम् ॥ ३० ॥ ब्राह्मं पुराणं तत्राद्यं संहितायां विभूषितम् ॥ श्लोकानां दशसाहस्रं नानापुण्यकथायुतम् ॥ ३१ ॥ पाद्मं च पंचपंचाशत्सहस्राणि निगद्यते ॥ तृतीयं वैष्णवंनाम त्रयोविंशतिसंख्यया ॥ ३२ ॥ चतुर्थं वायुना प्रोक्तं वायवीयमिति स्मृतम् ॥ शिवभक्तिसमायोगाच्छैवं तत्परासंख्यया ॥ ३३ ॥ चतुर्विंशतिसंख्यातं सहस्राणि तु शौनक ॥ चतुर्भिः पर्वभिः प्रोक्तं भविष्यं पंचमं तथा ॥ ३४ ॥ चतुर्दशसहस्राणि तथा पंचशतानि तत् ॥ मार्कण्डं नवसाहस्रं षष्ठं तत्परिकीर्तितम् ॥ ३५ ॥ आग्नेयं सप्तमं प्रोक्तं सहस्राणि तु षोडश ॥ अष्टमं नारदीयं तु प्रोक्तं वै पञ्चविंशतिः ॥ ३६ ॥ नवमं भगवन्नाम भागद्वयविभूषितम् ॥ तदष्टादशसाहस्रं प्रोच्यते ग्रन्थसंख्यया ॥ ३७ ॥ दशमं ब्रह्मवैवर्तं तावत्संख्यमिहोच्यते ॥ लैंगमेकादशं ज्ञेयं तथैकादशसंख्यया ॥ ३८ ॥ भागद्वयं विरचितं तल्लिंगमृषिपुंगव ॥ चतुर्विंशतिसाहस्रं वाराहं द्वादशं विदुः ॥ ३९ ॥ विभक्तं सप्तभिः खण्डैः स्कांदं भाग्यवतां वर ॥ तदेकाशीतिसाहस्रं संख्यया वै निरूपितम् ॥ ४० ॥ ततस्तु वामनंनाम चतुर्दशतमं स्मृतम् ॥ संख्यया दशसाहस्रं प्रोक्तं कुलपते पुरा ॥ ४१ ॥ कौर्मं पञ्चदशं प्रादुर्भागद्वयविभूषितम् ॥ दशसप्तसहस्राणि पुरा सांख्यपते कलौ ॥ ४२ ॥ मात्स्यं मत्स्येन यत्प्रोक्तं मनवे षोडशं क्रमात् ॥ तच्चतुर्दशसाहस्रं संख्यया वदतां वर ॥४३॥ गारुडं सप्तदशमं स्मृतं चैकोनविंशतिः ॥ अष्टादशं तु

१ अग्रहणम्—प्रज्ञामांद्यात्—इति भावः । २ अष्टभिः—इति क्वचित्पुस्तके पाठो दृश्यते । परं नारदीयमहापुराणोक्तरीत्या—स्कान्दमहापुराणं तु सप्तखण्डात्मकमेवास्ति । स्कान्दमुपपुराणं च पंचाशत्खण्डविभक्तमस्ति । तत्त्वन्यदेव । इदं च स्कान्दं महापुराणं सप्तखण्डात्मकमेवास्ति तदेतद्विवेचनीयं सुधीभिः ।

ब्रह्माण्डं भागद्वयविभूषितम् ॥ ४४ ॥ तच्च द्वादशसाहस्रं शतमष्टसमन्वितम् ॥ तथैवोपपुराणानि यानि प्रोक्तानि वेधसा ॥ ४५ ॥ इदं ब्रह्म
पुराणस्य सुलभं सौरमुत्तमम् ॥ संहिताद्वयसंयुक्तं पुण्यं शिवकथाश्रयम् ॥ ४६ ॥ आद्या सनत्कुमारोक्ता द्वितीया सूर्यभाषिता ॥ सनत्कुमार
नाम्ना हि तद्विख्यातं महामुने ॥ ४७ ॥ द्वितीयं नारसिंहं च पुराणे पाद्मसंज्ञिते ॥ शौकेयं हि तृतीयं तु पुराणे वैष्णवे मतम् ॥ ४८ ॥ बार्ह
स्पत्यं चतुर्थं च वायव्यं संमतं सदा ॥ दौर्वाससं पंचमं च स्मृतं भागवते सदा ॥ ४९ ॥ भविष्ये नारदोक्तं च सूरिभिः कथितं पुरा ॥ कापिलं
मानवं चैव तथैवोशनसेरितम् ॥ ५० ॥ ब्रह्माण्डं वारुणं चाथ कालिकाद्वयमेव च ॥ माहेश्वरं तथा सांबं सौरं सर्वार्थसंचयम् ॥ ५१ ॥ पाराशरं
भागवतं कौर्मं चाष्टादशं क्रमात् ॥ एतान्युपपुराणानि मयोक्तानि यथाक्रमम् ॥ ५२ ॥ पुराणसंहितामेतां यः पठेद्वा शृणोति च ॥ सोऽनंतपुण्य
भागी स्यान्मृतो ब्रह्मपुरं व्रजेत् ॥ ५३ ॥ इति श्रीस्कांदे महापुराण एकाशीतिसाहस्र्यां संहितायां पञ्चम आवंत्यखंडे रेवाखण्डे पुराण
संहितावर्णनंनाम प्रथमोऽध्यायः ॥ १ ॥ ॥ छ ॥ ॥ सूत उवाच ॥ ॥ नर्मदायास्तु माहात्म्यं कृष्णद्वैपायनोऽब्रवीत् ॥ तत्तेऽहं संप्रवक्ष्यामि
यत्त्वया परिपृच्छितम् ॥ १ ॥ विस्तरं नर्मदायास्तु तीर्थानां मुनिसत्तम ॥ कोन्यः शक्तोस्ति वै वक्तुमृते ब्रह्माणमीश्वरम् ॥ २ ॥ एतमेव पुरा
प्रश्नं पृष्टवाञ्जनमेजयः ॥ वैशंपायनसंज्ञं तु शिष्यं द्वैपायनस्य ह ॥ ३ ॥ रेवातीर्थाश्रितं पुण्यं तत्ते वक्ष्यामि शौनक ॥ पुरा पारीक्षितो राजा
यज्ञदीक्षासु दीक्षितः ॥४॥ संभृते तु हविर्द्रव्ये वर्तमानेषु कर्मसु ॥ आसीनेषु द्विजाग्र्येषु हूयमाने हुताशने ॥५॥ वर्तमानासु सर्वत्र तथा धर्मकथासु
च ॥ श्रूयमाणे तथा शब्दे जनैरुक्ते त्वहर्निशम् ॥६॥ यज्ञभूमौ कुलपते दीयतां भुज्यतामिति ॥ विविधांश्च विनोदान्वै कुर्वाणेषु विनोदिषु ॥ ७ ॥
एवंविधे वर्तमाने यज्ञे स्वर्गसदःसमे ॥ वैशंपायनमासीनं पप्रच्छ जनमेजयः ॥ ८ ॥ ॥ जनमेजय उवाच ॥ ॥ द्वैपायनप्रसादेन ज्ञानवानसि
मे मतः ॥ वैशंपायन तस्मात्त्वां पृच्छामि ऋषिसन्निधौ ॥ ९ ॥ ब्रूहि मे त्वं पुरावृत्तं पितॄणां तीर्थसेवनम् ॥ चिरं नानाविधान्क्लेशान्प्राप्तास्त इति
मे श्रुतम् ॥ १० ॥ कथं द्यूतजिताः पार्था मम पूर्वपितामहाः ॥ आसमुद्रां महीं विप्र भ्रमंतस्तीर्थलोभतः ॥११॥ केन ते सहितास्तात भूमिभागान
नेकशः ॥ चेरुः कथय तत्सर्वं सर्वज्ञोऽसि मतो मम ॥ १२ ॥ ॥ वैशंपायन उवाच ॥ ॥ कथयिष्यामि भूनाथ यत्पृष्टं तु त्वयाऽनघ ॥ नमस्कृत्य
विरूपाक्षं वेदव्यासं महाकविम् ॥ १३ ॥ पितामहास्तु ते पंच पांडवाः सह कृष्णया ॥ उषित्वा ब्राह्मणैः सार्द्धं काम्यके वन उत्तमे ॥ १४ ॥
प्रधानोद्दालके तत्र कश्यपोऽथ महामतिः ॥ विभांडकश्च राजेंद्र मुरुश्चैव महामुनिः ॥ १५ ॥ पुलस्त्यो लोमशश्चैव तथान्ये पुत्रपौत्रिणः ॥ स्नात्वा

स्कं.प.पु. निःशेषतीर्थेषु गतास्ते विंध्यपर्वतम् ॥ १६ ॥ ते च तत्राश्रमं पुण्यं सर्ववृक्षैः समाकुलम् ॥ चंपकैः कर्णकारैश्च पुन्नागैर्नागकेसरैः ॥ १७ ॥ बकुलैः [illegible]
॥१७७॥ कोविदारैश्च दाडिमैरुपशोभितम् ॥ पुष्पितैरर्जुनैश्चैव बिल्वपाटलकेतकैः ॥ १८ ॥ कदंबाम्रमधूकैश्च निंबजंबीरतिंदुकैः ॥ नालिकेरैः कपित्थैश्च [illegible]
खर्जूरपनसैस्तथा ॥ १९ ॥ नानाद्रुमलताकीर्णं नानावल्लीभिरावृतम् ॥ सपुष्पं फलितं कांतं वनं चैत्ररथं यथा ॥ २० ॥ जलाश्रयैस्तु विपुलैः [illegible]
पद्मिनीखंडमंडितम् ॥ सितोत्पलैश्च संछन्नं नीलपीतैः सितारुणैः ॥२१॥ हंसकारंडवाकीर्णं चक्रवाकोपशोभितम् ॥ आडीकाकबलाकाभिः सेवितं
कोकिलादिभिः ॥२२॥ सिंहैर्व्याघ्रैर्वराहैश्च गजैश्चैव महोत्कटैः ॥ महिषैश्च महाकायैः कुरंगैश्चित्रकैः शशैः ॥२३॥ गंडकैश्चैव खड्गैश्च गोमायुसुरभी
युतम् ॥ सारंगैर्मल्लकैश्चैव द्विपदैश्च चतुष्पदैः ॥ २४ ॥ तथाच कोकिलाकीर्णं मनःकांतं सुशोभितम् ॥ जीवंजीवकसंघैश्च नानापक्षिसमायुतम् ॥
॥ २५ ॥ दुःखशोकविनिर्मुक्तं सत्त्वोत्कटमनोरमम् ॥ क्षुत्तृषारहितं कांतं सर्वव्याधिविवर्जितम् ॥ २६ ॥ सिंहीस्तनं पिबंत्यत्र कुरंगाः स्नेहसंयुतम् ॥
मार्जारमूषकौ चोभाववलेहत उन्मुखौ ॥ २७ ॥ पंचास्याः पोतकेभाश्च भोगिनस्तु कलापिनः ॥ दृष्ट्वा तद्विपिनं रम्यं प्रविष्टाः पांडुनंदनाः ॥२८॥
मार्कंडं दृष्टवांस्तत्र तरुणादित्यसन्निभम् ॥ ऋषिभिः सेव्यमानं तु नानाशास्त्रविशारदैः ॥ २९ ॥ कुलीनैः सत्त्वसंपन्नैः शौचाचारसमन्वितैः ॥
धीसंगतैः क्षमायुक्तैस्त्रिसंध्यं जपतत्परैः ॥ ३० ॥ ऋग्यजुःसामविहितैर्मंत्रैर्होमपरायणैः केचित्पंचाग्निमध्यस्थाः केचिदेकांतसंस्थिताः ॥ ३१ ॥
ऊर्द्ध्वबाहुनिरालंबा आदित्यभ्रमणाः परे ॥ सायंप्रातर्भुजश्चान्ये एकाहारास्तथा परे ॥ ३२ ॥ द्वादशाहात्तथा चान्ये अन्ये मासार्द्धभोजनाः ॥ दर्शे
दर्शे तथा चान्ये अन्ये शैवालभोजनाः ॥ ३३ ॥ पिण्याकमपरेऽभुंजन्केचित्पालाशभोजनाः ॥ अपरे नियताहारा वायुभक्ष्यांबुभोजनाः ॥ ३४ ॥
एवंभूतैस्तथा वृद्धैः सेव्यते मुनिपुंगवैः ॥ ततो धर्मसुतः श्रीमानाश्रमं तं प्रविश्य सः ॥ ३५ ॥ दृष्ट्वा मुनिवरं शांतं ध्यायमानं परं पदम् ॥ प्रादक्षि
ण्येन सहसा दंडवत्पतितोऽग्रतः ॥ ३६ ॥ भक्त्यानुपतितं दृष्ट्वा चिरादादाय लोचनम्[1] ॥ को भवानित्युवाचेदं धर्मं धीमानपृच्छत ॥ ३७ ॥
तस्य तद्वचनं श्रुत्वा दारकस्तत्समीपगः ॥ आहायं धर्मराजस्ते दर्शनार्थं समागतः ॥ ३८ ॥ तच्छ्रुत्वादारकेणोक्तं वचनं प्राह सादरः ॥ एह्येहि
॥ ३ ॥ वत्सवत्सेति किंचित्स्थानाच्चलन्मुनिः ॥ तं तु स्नेहादुपाघ्राय आसने उपवेशयत् ॥ ३९ ॥ उपविष्टे सभार्यां तु पूजां कृत्वा यथाविधि ॥ वन्यैर्धा ॥१७७॥
न्यैः फलैर्मूलै रसैश्चैव पृथग्विधैः ॥ ४० ॥ पांडवा ब्राह्मणैः सार्द्धं यथायोग्यं प्रपूजिताः ॥ मुहूर्त्तादथ विश्रम्य धर्मपुत्रो युधिष्ठिरः ॥ ४१ ॥

१ चिरादादाय लोचनम्—चिरेण नेत्रेण तं दृष्ट्वा—इत्यर्थः ।

पृच्छति स्म मुनिश्रेष्ठं कौतूहलसमन्वितः ॥ भगवन्सर्वलोकानां दीर्घायुस्त्वं मतो मम ॥ ४२ ॥ सप्तकल्पानशेषेण कथयस्व ममानघ ॥ कल्पक्षये
पि लोकस्य स्थावरस्येतरस्य च ॥ ४३ ॥ न विनष्टोऽसि विप्रेंद्र कथं वा केन हेतुना ॥ गङ्गाद्याः सरितः सर्वाः समुद्रांताश्च या मुने ॥ ४४ ॥ तासां
मध्ये स्थिताः काः स्वित्काश्चैव प्रलयं गताः ॥ का नु पुण्यजला नित्यं का नु न क्षयमागता ॥ ४५ ॥ एतत्कथय मे तात प्रसन्नेनांतरात्मना ॥
श्रोतुमिच्छाम्यशेषेण ऋषिभिः सह बांधवैः ॥ ४६ ॥ ॥ श्रीमार्कंडेय उवाच ॥ ॥ साधुसाधु महाप्राज्ञ धर्मपुत्र युधिष्ठिर ॥ कथयाभि यथा
न्यायं यत्पृच्छसि ममानघ ॥ ४७ ॥ सर्वपापहरं पुण्यं पुराणं रुद्रभाषितम् ॥ यः शृणोति नरो भक्त्या तस्य पुण्यफलं शृणु ॥ ४८ ॥ अश्वमेध
सहस्रेण वाजपेयशतेन च ॥ तत्फलं समवाप्नोति राजन्नास्त्यत्र संशयः ॥ ४९ ॥ ब्रह्मघ्नश्च सुरापी च स्तेयी गोघ्नश्च यो नरः ॥ मुच्यते सर्वपापे
भ्यो रुद्रस्य वचनं यथा ॥ ५० ॥ गंगा तु सरितां श्रेष्ठा तथा चैव सरस्वती ॥ कावेरी देविका चैव सिंधुः सालकुटी तथा ॥ ५१ ॥ सरयूः शतरुद्रा
च मही चर्मिलया सह ॥ गोदावरी तथा पुण्या तथैव यमुना नदी ॥ ५२ ॥ पयोष्णी च शतद्रुश्च तथा धर्मनदी शुभा ॥ एताश्चान्याश्च सरितः
सर्वपापहराः स्मृताः ॥ ५३ ॥ किं तु ते कारणं तात वक्ष्यामि नृपसत्तम ॥ समुद्राः सरितः सर्वाः कल्पेकल्पे क्षयं गताः ॥ ५४ ॥ सप्तकल्पक्षये क्षीणे
न मृता तेन नर्मदा ॥ नर्मदैकैव राजेंद्र परं तिष्ठेत्सरिद्वरा ॥ ५५ ॥ तोयपूर्णा महाभाग मुनिसंघैरभिष्टुता ॥ गंगाद्याः सरितश्चान्याः कल्पेकल्पे
क्षयं गताः ॥ ५६ ॥ एषा देवी पुरा दृष्टा तेन वक्ष्यामि तेऽनघ ॥ ५७ ॥ आश्चर्यभूता राजेंद्र त्रिषु लोकेषु विश्रुता ॥ ५८ ॥ इति श्रीस्कांदे
महापुराण एकाशीतिसाहस्र्यां संहितायां पञ्चम आवंत्यखण्डे रेवाखंडे रेवामाहात्म्यवर्णनन्नाम द्वितीयोऽध्यायः ॥ २ ॥ ॥ छ ॥ ॥ युधिष्ठिर
उवाच ॥ ॥ सप्तकल्पक्षया घोरास्त्वया दृष्टा महामुने ॥ न चापीहास्ति भगवन्दीर्घायुरिह कश्चन ॥ १ ॥ त्वया ह्येकार्णवे सुप्तः पद्मनाभः
सुरारिहा ॥ दृष्टः सहस्रचरणः सहस्रनयनोदरः ॥ २ ॥ त्वं किलानुग्रहात्तस्य दह्यमाने चराचरे ॥ न क्षयं समनुप्राप्तो वरदानान्महात्मनः ॥
॥ ३ ॥ किं त्वयाश्चर्यभूतं हि दृष्टं च भ्रमताऽनघ ॥ एतदाचक्ष्व भगवन्परं कौतूहलं हि मे ॥ ४ ॥ संप्राप्ते च महाघोरे युगस्यांते
महाक्षये ॥ अनावृष्टिहते लोके पुरा वर्षशताधिके ॥ ५ ॥ औषधीनां क्षये घोरे देवदानववर्जिते ॥ निर्वीर्य्ये निर्वषट्कारे कलिना दूषिते
भृशम् ॥ ६ ॥ सरित्सरस्तडागेषु पल्वलोपवनेषु च ॥ संशुष्केषु तदा ब्रह्मन्निराकारे युगक्षये ॥ ७ ॥ जनं प्राप्ते महर्लोके ब्रह्म
क्षत्रविशादयः ॥ ऋषयश्च महात्मानो दिव्यतेजःसमन्विताः ॥ ८ ॥ स्थितानि कानि भूतानि गतान्येव महामुने ॥ एतत्सर्वं महाभाग कथयस्व

पृथक्पृथक् ॥ ९ ॥ भूतानि कानि विप्रेंद्र कथं सिद्धिमवाप्नुयात् ॥ ब्रह्मविष्ण्विन्द्ररुद्राणां काले प्राप्ते सुदारुणे ॥ १० ॥ एवमुक्तस्ततः सोऽथ धर्मरा
जेन धीमता ॥ मार्कंडः प्रत्युवाचेदमृषिसंघैः समावृतः ॥ ११ ॥ ॥ श्रीमार्कंडेय उवाच ॥ ॥ शृण्वंतु ऋषयः सर्वे त्वया सह नरेश्वर ॥ महत्पु
राणं पूर्वोक्तं शंभुना वायुदेवते ॥ १२ ॥ वायोः सकाशात्स्कंदेन श्रुतमेतत्पुरातनम् ॥ वशिष्ठः श्रुतवांस्तस्मात्पराशरस्ततः परम् ॥ १३ ॥ तस्माच्च
जातूकर्ण्येन तस्माच्चैव महर्षिभिः ॥ एवं परंपराप्रोक्तं शतसंख्यैर्द्विजोत्तमैः ॥ १४ ॥ संहिता शतसाहस्री पुरोक्ता शंभुना किल ॥ आलोड्य सर्वशा
स्त्राणि वेदार्थं तत्त्वतः पुरा ॥ १५ ॥ युगरूपेण सा पश्चाच्चतुर्द्धा विनियोजिता ॥ मंदप्रज्ञानुसारेण नराणां तु महर्षिभिः ॥ १६ ॥ आराध्य पशु
भर्त्तारं मया पूर्वं महेश्वरम् ॥ पुराणं श्रुतमेतद्धि तत्ते वक्ष्याम्यशेषतः ॥ १७ ॥ यच्छ्रुत्वा मुच्यते जंतुः सर्वपापैर्नरेश्वर ॥ मानसैः कर्मजैश्चैव सप्तजन्म
सुसंचितैः ॥ १८ ॥ सप्तकल्पक्षया घोरा मया दृष्टाः पुनःपुनः ॥ प्रसादाद्देवदेवस्य विष्णोश्च परमेष्ठिनः ॥ १९ ॥ द्वादशादित्यनिर्दग्धे जगत्ये
कार्णवीकृते ॥ श्रांतोऽहं विभ्रमंस्तत्र तरन्बाहुभिरर्णवम् ॥ २० ॥ अथाहं सलिले राजन्नादित्यसमरूपिणम् ॥ पुरा पुरुषमद्राक्षमनादिनिधनं प्रभुम्॥
॥ २१ ॥ शृंगं चैवाद्रिराजस्य भासयंतं दिशो दश ॥ द्वितीयोन्यो मनुर्दृष्टः पुत्रपौत्रसमन्वितः ॥ २२ ॥ अगाधे भ्रमते सोपि तमोभूते महार्णवे ॥
अविश्रमन्मुहूर्त्तं तु चक्रारूढ इव भ्रमन् ॥ २३ ॥ अथाहं भयादुद्विग्नस्तरन्बाहुभिरर्णवम् ॥ तत्रस्थोऽहं महामत्स्यमपश्यं मदसंयुतम् ॥ २४ ॥ ततो
ऽब्रवीत्स मां दृष्ट्वा एह्येहीति च भारत ॥ परं प्रधानः सर्वेषां मत्स्यरूपो महेश्वरः ॥ २५ ॥ ततोऽहं त्वरया गत्वा तन्मुखे मनुजेश्वर ॥ सुश्रांतो विग
तज्ञानः परं निर्वेदमागतः ॥ २६ ॥ ततोऽद्राक्षं समुद्रांते महदावर्त्तसंकुलाम् ॥ उद्धत्तरंगसलिलां फेनपुंजाट्टहासिनीम् ॥ २७ ॥ नदीं कामगमां
पुण्यां झषमीनसमाकुलाम् ॥ नद्यास्तस्यास्तु मध्यस्था प्रमदा कामरूपिणी ॥ २८ ॥ नीलोत्पलदलश्यामा महत्प्रक्षोभवाहिनी ॥ दिव्यहाटकचि
त्रांगी कनकोज्ज्वलशोभिता ॥ २९ ॥ द्वाभ्यां संगृह्य जानुभ्यां महत्पोतं व्यवस्थिता ॥ तां मनुः प्रत्युवाचेदं का त्वं दिव्यवरांगने ॥ ३० ॥ तिष्ठसे
केन कार्येण त्वमत्र सुरसुंदरि ॥ सुरासुरगणे नष्टे भ्रमसे लीलयार्णवे ॥३१॥ सरितः सागराः शैलाः क्षयं प्राप्ता ह्यनेकशः ॥ त्वमेका तु कथं साध्वि
॥ ४ ॥ तिष्ठसे कारणं महत् ॥ श्रोतुमिच्छाम्यहं देवि कथयस्व ह्यशेषतः ॥ ३२ ॥ ॥ अबलोवाच ॥ ॥ ईश्वरांगसमुद्भूता ह्यमृतानाम विश्रुता ॥ सरि
त्पापहरा पुण्या मामाश्रित्य भयं कुतः ॥ ३३ ॥ साहं पोतमिमं तुभ्यं गृहीत्वा ह्यागता द्विज ॥ न ह्यस्य पोतस्य क्षयो यत्र तिष्ठति शंकरः ॥३४॥ ॥१७८॥

१ निर्देशानिर्दृतः–इ० पा० ।

तस्यास्तद्वचनं श्रुत्वा विस्मयोत्फुल्ललोचनः ॥ मनुना सह राजेंद्र पोतारूढो मुदं तदा ॥ ३५ ॥ कृतांजलिपुटो भूत्वा प्रणम्य शिरसा
विभुम् ॥ व्यापिनं परमेशानमस्तौषमभयप्रदम् ॥ ३६ ॥ सद्योजाताय देवाय वामदेवाय वै नमः ॥ भवेभवे नमस्तुभ्यं भक्तिगम्याय ते नमः ॥
॥ ३७ ॥ भूर्भुवाय नमस्तुभ्यं रामज्येष्ठाय वै नमः ॥ नमस्ते भद्र[1]कालाय कलिरूपाय वै नमः ॥ ३८ ॥ अचिंत्याव्यक्तरूपाय महादेवाय धामने ॥
विद्महे देवदेवाय तन्नो रुद्र नमोनमः ॥ ३९ ॥ जगत्सृष्टिविनाशानां कारणाय नमोनमः ॥ एवं स्तुतो महादेवः पूर्वं सृष्टया मयाऽनघ ॥ ४० ॥
प्रसन्नोमा[2]ऽवदत्पश्चाद्वरं वरय सुव्रत ॥ ४१ ॥ इति श्रीस्कांदे महापुराण एकाशीतिसाहस्र्यां संहितायां पञ्चम आवंत्यखण्डे रेवाखण्डे नर्मदामाहा
त्म्ये मार्कण्डेयधर्मराजसंवादे कल्पक्षये मार्कण्डेयकृतपोताधीरोहणवृत्तान्तवर्णनंनाम तृतीयोऽध्यायः ॥ ३ ॥ ॥ छ ॥ ॥ ॥
॥ ॥ श्रीमार्कंडेय उवाच ॥ ॥ ततोऽर्णवात्समुत्तीर्य्य त्रिकूटशिखरे स्थितम् ॥ महाकनकवर्णाभे नानावर्णशिलाचिते ॥ १ ॥ महाशृंगे समासीनं
रुद्रकोटिसमन्वितम् ॥ महादेवं महात्मानमीशानमजमव्ययम् ॥ २ ॥ सर्वभूतमयं तात मनुना सह सुव्रत ॥ भूयो ववंदे चरणौ सर्व्व
देवनमस्कृतौ ॥ ३ ॥ तत्काले युगसाहस्रं सह रुद्रेण मानद ॥ तस्मिन्नेकार्णवे घोरे स्थितोऽहं कुरुनंदन ॥ ४ ॥ ॥ युधिष्ठिर
उवाच ॥ ॥ एतच्छ्रुत्वा तु मे तात परं कौतूहलं हृदि ॥ जातं तत्कथयस्वेति शृण्वतः सह बांधवैः ॥ ५ ॥ का सा पद्मपला
शाक्षी तमोभूते महार्णवे ॥ योगिवद्भ्रमते नित्यं रुद्रजां स्वां च याब्रवीत् ॥ ६ ॥ ॥ श्रीमार्कंडेय उवाच ॥ ॥ एतमेव मया प्रश्नं
पुरा पृष्टो मनुः स्वयम् ॥ तदेव तेऽद्य वक्ष्यामि अबलायाः समुद्भवम् ॥ ७ ॥ व्यतीतायां निशायां तु ब्रह्मणः परमेष्ठिनः ॥ ततः प्रभाते विमले
सृज्यमानेषु जन्तुषु ॥ ८ ॥ मनुं प्रणम्य शिरसा पृच्छाम्येतद्युधिष्ठिर ॥ केयं पद्मपलाशाक्षी श्यामा चंद्रनिभानना ॥ ९ ॥ एकार्णवे
भ्रमत्येका रुद्रजाऽस्मीति वादिनी ॥ सावित्री वेदमाता च ह्यथवा सा सरस्वती ॥ १० ॥ मंदाकिनी सरिच्छ्रेष्ठा लक्ष्मीर्वा किमथो उमा ॥
कालरात्रिर्भवेत्साक्षात्प्रकृतिर्वा सुखोचिता ॥ ११ ॥ एतदाचक्ष्व भगवन्का सा ह्यमृतसंभवा ॥ चरत्येकार्णवे घोरे प्रनष्टोरगराक्षसे ॥ १२ ॥
॥ ॥ मनुरुवाच ॥ ॥ शृणु वत्स यथान्यायमस्या वक्ष्यामि संभवम् ॥ यया रुद्रसमुद्भूता या चेयं वरवर्णिनी ॥ १३ ॥ पुरा शिवः शांततनु
श्चचार विपुलं तपः ॥ हितार्थं सर्वलोकानामुमया सह शंकरः ॥ १४ ॥ ऋक्षशैलं समारुह्य तपस्तेपे सुदारुणम् ॥ अदृश्यः सर्वभूतानां सर्वभूता

१ रुद्रकालाय–इ० पा०। २ मा--माम्

त्मको वशी ॥ १५ ॥ तपतस्तस्य देवस्य स्वेदः समभवत्किल ॥ तं गिरिं प्लावयामास स स्वेदो रुद्रसंभवः ॥ १६ ॥ तस्मादासीत्समुद्भूता महा
पुण्या सरिद्वरा ॥ या सा त्वयार्णवे दृष्टा पद्मपत्रायतेक्षणा ॥ १७ ॥ स्त्रीरूपं समवस्थाय रुद्रमाराधयत्पुरा ॥ आद्ये कृतयुगे तस्मिन्समानाम
युतं नृप ॥ १८ ॥ ततस्तुष्टो महादेव उमया सह शंकरः ॥ ब्रूहि त्वं तु महाभागे यत्ते मनसि वर्त्तते ॥ १९ ॥ ॥ सरिदुवाच ॥ ॥ प्रलये
समनुप्राप्ते नष्टे स्थावरजंगमे ॥ प्रसादात्तव देवेश अक्षयाहं भवे प्रभो ॥ २० ॥ सरित्सु सागरेष्वेव पर्वतेषु क्षयिष्वपि ॥ तव प्रसादाद्देवेश पुण्या
क्षय्या भवे प्रभो ॥ २१ ॥ पापोपपातकैर्युक्ता महापातकिनोऽपि ये ॥ मुच्यन्ते सर्वपापेभ्यो भक्त्या स्नात्वा तु शंकर ॥ २२ ॥ उत्तरे जाह्नवी देशे
महापातकनाशिनी ॥ भवामि दक्षिणे मार्गे यद्येवं सुरपूजिता ॥ २३ ॥ स्वर्गादागम्य गंगेति यथा ख्याता क्षितौ विभो ॥ तथा दक्षिणगंगेति भवेयं
त्रिदशेश्वर ॥ २४ ॥ पृथिव्यां सर्वतीर्थेषु स्नात्वा यल्लभते फलम् ॥ तत्फलं लभते मर्त्त्यो भक्त्या स्नात्वा महेश्वर ॥ २५ ॥ ब्रह्महत्यादिकं
पापं यदास्ते संचितं क्वचित् ॥ मासमात्रेण तद्देव क्षयं यात्ववगाहनात् ॥ २६ ॥ यत्फलं सर्व्ववेदेषु सर्वयज्ञेषु शंकर ॥ अवगा
हेन तत्सर्वं भवत्विति मतिर्मम ॥ २७ ॥ सर्वदानोपवासेषु सर्वतीर्थावगाहने ॥ तत्फलं मम तोयेन जायतामिति शंकर ॥ २८ ॥
मम तीरे नरा ये तु अर्च्चयंति महेश्वरम् ॥ ते गतास्तव लोकं स्युरेतदेव भवेच्छिव ॥ २९ ॥ मम कूले महेशान उमया सह दैवतैः ॥ वस नित्यं
जगन्नाथ एष एव वरो मम ॥ ३० ॥ सुकर्मा वा विकर्मा वा शांतो दांतो जितेंद्रियः ॥ मृतो जंतुर्मम जले गच्छतादमरावतीम् ॥ ३१ ॥ त्रिषु
लोकेषु विख्याता महापतकनाशिनी ॥ भवामि देवदेवेश प्रसन्नो यदि मन्यसे ॥ ३२ ॥ एतांश्चान्यान्वरान्दिव्यान्प्रार्थितो नृपसत्तम ॥ नर्म्मदया
ततः प्राह प्रसन्नो वृषवाहनः ॥ ३३ ॥ ॥ श्रीमहेश उवाच ॥ ॥ एवं भवतु कल्याणि यत्त्वयोक्तमनिन्दिते ॥ नान्या वरार्हा लोकेषु मुक्त्वा
त्वां कमलेक्षणे ॥ ३४ ॥ यदैव मम देहात्त्वं समुद्भूता वरानने ॥ तदैव सर्वपापानां मोचिनी त्वं न संशयः ॥ ३५ ॥ कल्पक्षयकरे काले काले घोरे
विशेषतः ॥ उत्तरं कूलमाश्रित्य निवसंति च ये नराः ॥ ३६ ॥ अपि कीटपतंगाश्च वृक्षगुल्मलतादयः ॥ आदेहपतनाद्देवि तेऽपि
यास्यन्ति सद्गतिम् ॥ ३७ ॥ दक्षिणं कूलमाश्रित्य ये द्विजा धर्मवत्सलाः ॥ आ मृत्योर्न्निवसिष्यन्ति ते गताः पितृमंदिरे ॥ ३८ ॥ अहं हि तव
वाक्येन कस्मिंश्चित्कारणांतरे ॥ त्वत्तीरे निवसिष्यामि सदैव ह्युमया समम् ॥ ३९ ॥ एवं देवि महादेवि एवमेव न संशयः ॥ ब्रह्मेन्द्रचन्द्रवरुणैः
साध्यैश्च सह विष्णुना ॥ ४० ॥ उत्तरे देवि ते कूले वसिष्यन्ति ममाज्ञया ॥ दक्षिणे पितृभिः सार्द्धं तथान्ये सुरसुन्दरि ॥ ४१ ॥ वसिष्यंति मया

सार्द्धमेव ते वर उत्तमः ॥ गच्छगच्छ महाभागे मर्त्यान्पापाद्विमोचय ॥ ४२ ॥ सहिता ऋषिसंघैश्च तथा सिद्धसुरासुरैः ॥ एवमुक्त्वा महादेव
उमया सहितो विभुः ॥ ४३ ॥ वंद्यमानोऽथ मनुना मया चादर्शनं गतः ॥ तेन चैषा महापुण्या महापातकनाशिनी ॥ ४४ ॥ कथिता पृच्छ्यते
या ते मा ते भवतु विस्मयः ॥ एषा गंगा महापुण्या त्रिषु लोकेषु विश्रुता ॥ ४५ ॥ दशभिः पंचभिः स्रोतैः प्लावयन्ती दिशो दश ॥ शोणो महा
नदश्चैव नर्मदा सुरसा कृता ॥ ४६ ॥ मंदाकिनी दशार्णा च चित्रकूटा तथैव च ॥ तमसा विदशा चैव करभा यमुना तथा ॥ ४७ ॥ चित्रोत्पला
विपाशा च रंजना वालुवाहिनी ॥ ऋक्षपादप्रसूतास्ताः सर्वा वै रुद्रसंभवाः ॥ ४८ ॥ सर्वपापहराः पुण्याः सर्वमंगलदाः शिवाः ॥ इत्येतैर्ना
मभिर्दिव्यैः स्तूयते वेदपारगैः ॥ ४९ ॥ पुराणज्ञैर्महाभागैराज्यपैः सोमपैस्तथा ॥ इत्येतत्सर्वमाख्यातं महाभाग्यं नरोत्तम ॥ ५० ॥ मनुनोक्तं पुरा
मह्यममृतायाः समुद्भवम् ॥ पुण्यं पवित्रमतुलं रुद्रोद्गीतमिदं शुभम् ॥ ५१ ॥ ये नराः कीर्त्तयिष्यंति भक्त्या शृण्वंति येऽपि च ॥ प्रातरुत्थाय नामा
नि दश पंच च भारत ॥ ५२ ॥ ते नराः सकलं पुण्यं लभिष्यंत्यवगाहजम् ॥ विमानेनार्कवर्णेन घंटाशतनिनादिना ॥ ५३ ॥ त्यक्त्वा मानुष्यकं
भावं यास्यंति परमां गतिम् ॥ ५४ ॥ इति श्रीस्कांदे महापुराण एकाशीतिसाहस्र्यां संहितायां पञ्चम आवंत्यखण्डे रेवाखण्डे नर्मदापञ्चद
शनामवर्णनंनाम चतुर्थोऽध्यायः ॥ ४ ॥ ॥ छ ॥ ॥ युधिष्ठिर उवाच ॥ ॥ आश्चर्यमेतदखिलं कथितं भो द्विजोत्तम ॥ विस्मयं परमा
पन्ना ऋषिसंघा मया सह ॥ १ ॥ अहो भगवती पुण्या नर्मदेयमयोनिजा ॥ रुद्रदेहाद्विनिष्क्रांता महापापक्षयंकरी ॥ २ ॥ सप्तकल्पक्षये प्राप्ते त्व
येयं सह सुव्रत ॥ न मृता च महाभागा किमतः पुण्यमुत्तमम् ॥ ३ ॥ के ते कल्पाः समुद्दिष्टाः सप्त कल्पक्षयंकराः ॥ न मृता चेदियं देवी त्वं चैव
ऋषिपुंगव ॥ ४ ॥ अपक्षिगणसंघाते जगत्येकार्णवीकृते ॥ कीदृग्रूपः समभवन्महादेवो युगक्षये ॥ ५ ॥ कथं संहरते विश्वं कथं चाऽस्ते महार्णवे ॥
कथं च सृजते विश्वं कथं धारयते प्रजाः ॥ ६ ॥ कीदृग्रूपा भवेद्देवी सरिदेकार्णवीकृते ॥ किमर्थं नर्मदा प्रोक्ता रेवेति च कथं स्मृता ॥ ७ ॥ अंज
नेति किमर्थं वा किमर्थं सुरसेति च ॥ मंदाकिनी किमर्थं च शोणश्चेति कथं भवेत् ॥ ८ ॥ त्रिकूटेति किमर्थं वा किमर्थं वालुवाहिनी ॥ कोटि
कोट्यो हि तीर्थानां प्रविष्टा या महार्णवम् ॥ ९ ॥ कियत्यः सरितां कोट्यो नर्मदां समुपासते ॥ यज्ञोपवीतैर्ऋषिभिर्देवताभिस्तथैव च ॥ १० ॥
विभक्तेयं किमर्थं च श्रूयते मुनिसत्तम ॥ वैष्णवीति पुराणज्ञैः किमर्थमिह चोच्यते ॥ ११ ॥ केषु स्थानेषु तीर्थेषु पूजनीया सरिद्वरा ॥ तीर्थानि च

१ मनुत्तमम्—इ० पा० ।

पृथग्गृहि यत्र संनिहितो हरः ॥ १२ ॥ यत्प्रमाणा च सा देवी या रुद्रेण विनिर्मिता ॥ कीदृशानि च कर्माणि रुद्रेण कथितानि ते ॥ १३ ॥ कथं
म्लेच्छसमाकीर्णो देशोऽयं द्विजसत्तम ॥ एतदाचक्ष्व मां ब्रह्मन्मार्कण्डेय महामते ॥ १४ ॥ ॥ श्रीमार्कंडेय उवाच ॥ ॥ शृण्वंतु ऋषयः सर्वे
त्वं च तात युधिष्ठिर ॥ पुराणं नर्मदायां तु कथितं च त्रिशूलिना ॥ १५ ॥ वायोः सकाशाच्च मया तेनापि च महेश्वरात् ॥ अशक्यत्वान्मनुष्याणां
संक्षिप्तमृषिभिः पुरा ॥ १६ ॥ मायूरं प्रथमं तात कौर्म्यं च तदनंतरम् ॥ पुरं तथा कौशिकं च मात्स्यं द्विरदमेव च ॥ १७ ॥ वाराहं यन्मया दृष्टं
वैष्णवं चाष्टमं परम् ॥ न्यग्रोधाख्यमतश्चासीदाकांक्षं पुनरुत्तमम् ॥ १८ ॥ पद्मं च तामसं चैव संवर्त्तोद्वर्त्तमेव च ॥ महाप्रलयमित्याहुः पुराणे वेद
चिंतकाः ॥ १९ ॥ एतत्संक्षेपतः सर्वं संक्षिप्तं तैर्महात्मभिः ॥ विभक्तं च चतुर्भागैर्ब्रह्माद्यैश्च महर्षिभिः ॥ २० ॥ तदहं संप्रवक्ष्यामि पुराणार्थविशा
रद ॥ सप्त कल्पा महाघोरा यैरियं न मृता सरित् ॥ २१ ॥ आजंगमं तमोभूतमप्रज्ञातमलक्षणम् ॥ नष्टचंद्रार्ककिरणमासीद्भूतविवर्जितम् ॥
॥ २२ ॥ तमसोंऽते महानाम्ना पुरुषः स जगद्गुरुः ॥ चचार तस्मिन्नेकाकी व्यक्ताव्यक्तः सनातनः ॥ २३ ॥ स चोंकारमयोऽतीतो गायत्रीमसृज
द्विजः ॥ स तया सार्द्धमीशानश्चिक्रीड पुरुषो विराट् ॥ २४ ॥ स्वदेहादसृजद्विश्वं पंचभूतात्मसंज्ञितम् ॥ क्रीडन्समसृजद्विश्वं पंचभूतात्मसंज्ञितम् ॥
॥ २५ ॥ क्रीडन्सृंजद्विराट्संज्ञः सबीजं च हिरण्मयम् ॥ तच्चांडमभवद्दिव्यं द्वादशादित्यसन्निभम् ॥ २६ ॥ तद्भित्त्वा पुरुषो जज्ञे चतुर्वक्त्रः
पितामहः ॥ सोऽसृजद्विश्वमेवं तु सदेवासुरमानुषम् ॥ २७ ॥ सतिर्यक्पशुपक्षीकं स्वेदांडजजरायुजम् ॥ एतदंडं पुराणेषु प्रथमं परिकीर्तितम् ॥
॥ २८ ॥ पूर्वकल्पे नृपश्रेष्ठ क्रीडंत्या परमेष्ठिना ॥ उमया सह रुद्रस्य क्रीडतश्चार्णवीकृतः ॥ २९ ॥ हर्षाज्जज्ञे शुभा कन्या उमायाः
स्वेदसंभवा ॥ शर्वस्योरःस्थलाज्जज्ञे उमा कुचविमर्द्दनात् ॥ ३० ॥ स्वेदाद्विजज्ञे महती कन्या राजीवलोचना ॥ द्वितीयः संभवो यस्या
रुद्रदेहाद्युधिष्ठिर ॥ ३१ ॥ सा परिभ्रमते लोकान्सदेवासुरमानवान् ॥ त्रैलोक्योन्मादजननी रूपेणाऽप्रतिमा तदा ॥ ३२ ॥ तां
दृष्ट्वा देवदैत्येंद्रा मोहिता लभते कथम् ॥ मृगयंति स्म तां कन्यामितश्चेतश्च भारत ॥ ३३ ॥ हावभावविलासैश्च मोहयत्यखिलं
जगत् ॥ भ्रमते दिव्यरूपा सा विद्युत्सौदामिनी यथा ॥ ३४ ॥ मेघमध्ये स्थिता भाभिः सर्वयोषिदनुत्तमा ॥ ततो रुद्रं सुराः सर्वे दैत्याश्च
सह दानवैः ॥ ३५ ॥ वरयंति स्म तां कन्यां कामेनाऽऽकुलिता भृशम् ॥ ततोऽब्रवीन्महादेवो देवदानवयोर्द्वयोः ॥ ३६ ॥ बलेन तेजसा

१ द्विजः—मूलरूपादुत्पन्नो द्वितीयः पुरुषः—इत्यर्थः । २ अडभाव आर्षः—असृजत् ।

चैव ह्यधिको यो भविष्यति ॥ स इमां प्राप्स्यते कन्यां नान्यथा वै सुरोत्तमाः ॥ ३७ ॥ ततो देवासुराः सर्वे कन्यां वै समुपागमन् ॥ अहमेनां ग्रहीष्यामि अहमेनामिति ब्रुवन् ॥ ३८ ॥ पश्यतामेव सर्वेषां सा कन्याऽतरधीयत ॥ पुनस्तां ददृशुः सर्वे योजनांतरधिष्ठिताम् ॥ ३९ ॥ जग्मुस्ते त्वरिताः सर्वे यत्र सा समदृश्यत ॥ त्रिभिश्चतुर्भिश्च तथा योजनैर्दशभिः पुनः ॥ ४० ॥ धिष्ठितां समपश्यंस्ते सर्वे मातंगगामिनीम् ॥ योजनानां शतैर्भूयः सहस्रैश्चाप्यधिष्ठिताम् ॥ ४१ ॥ तथा शतसहस्रेण लघुत्वात्समदृश्यत ॥ अग्रतः पृष्ठतश्चैव दिशासु विदिशासु च ॥ ॥ ४२ ॥ तां पश्यंति वरारोहामेकधा बहुधा पुनः ॥ दिव्यवर्षसहस्रं तु भ्रामितास्ते तया पुरा ॥ ४३ ॥ न चावाप्ता तु सा कन्या महादेवांगसंभवा ॥ सहोमया ततो देवो जहासोच्चैः पुनःपुनः ॥ ४४ ॥ गणास्तालकसंपातैर्नृत्यंति च मुदान्विताः ॥ अकस्माद्दृश्यते कन्या शंकरस्य समीपगा ॥ ४५ ॥ तां दृष्ट्वा विस्मयापन्ना देवा यांति पराङ्मुखाः ॥ तस्याश्चक्रे ततो नाम स्वयमेव पिनाकधृक् ॥ ४६ ॥ नर्म चैभ्यो ददे यस्मात्तत्कृतैश्चेष्टितैः पृथक् ॥ भविष्यसि वरारोहे सरिच्छ्रेष्ठा तु नर्म्मदा ॥ ४७ ॥ स्वरूपमास्थितो देवः प्राप हास्यं यतो भुवि ॥ नर्मदा तेन चोक्तेयं सुशीतलजला शिवा ॥ ४८ ॥ सप्तकल्पक्षये जाते यदुक्तं शंभुना पुरा ॥ न मृता तेन राजेंद्र नर्मदा ख्यातिमागता ॥ ४९ ॥ ततस्तामददात्कन्यां शीलवतीं सुशोभनाम् ॥ महार्णवाय देवेशः सर्वभूतपतिः प्रभुः ॥ ५० ॥ ततः सा ऋक्षशैलेंद्रात्फेनपुंजाट्टहासिनी ॥ विवेश नर्मदा देवी समुद्रं सरितां पतिम् ॥ ५१ ॥ एवं ब्राह्मे पुरा कल्पे समुद्भूतेयमीश्वरात् ॥ मात्स्ये कल्पे मया दृष्टा समाख्याता मया शृणु ॥ ५२ ॥ इति श्रीस्कांदे महापुराण एकाशीतिसाहस्र्यां संहितायां पंचम आवंत्यखण्डे रेवाखण्डे नर्मदामाहात्म्यनर्मदानामनिरुक्तिवर्णनंनाम पञ्चमोऽध्यायः ॥ ५ ॥ ॥ छ ॥ ॥ मार्कंडेय उवाच ॥ ॥ पुनर्युगांते संप्राप्ते तृतीये नृपसत्तम ॥ द्वादशार्कवपुर्भूत्वा भगवान्नीललोहितः ॥ १ ॥ सप्तद्वीपसमुद्रांतां सशैलवनकाननाम् ॥ निर्दग्धां तु महीं कृत्स्नां कालो भूत्वा महेश्वरः ॥ २ ॥ ततो महाघनो भूत्वा प्लावयामास वारिणा ॥ कृष्णं कृष्णवपुस्त्वेनां विद्युच्चंद्रायुधांकिताम् ॥ ३ ॥ प्लावयित्वा जगत्सर्व्वं तस्मिन्नेकार्णवीकृते ॥ सुष्वाप विमले तोये जगत्संक्षिप्य मायया ॥ ४ ॥ ततोऽहं भ्रममास्तु तमोभूते महार्णवे ॥ दिव्यं वर्षसहस्रं तु वायुभूते महेश्वरे ॥ ५ ॥ ओंकृत्वा देवदेवेशं येनेदं गहनीकृतम् ॥ ध्यायमानस्ततो देवं राजेंद्र विमले जले ॥६॥ तस्मिन्महार्णवे घोरे नष्टे स्थावरजंगमे ॥ मयूरं स्वर्णपत्राढ्यमपश्यंसहसा जले ॥ विचित्रचन्द्रकोपेतं नीलकंठं सुलोचनम् ॥७॥

१ ब्रुवन्–ब्रुवन्तः–इत्यपेक्षितम् प्रत्येकाभिप्रायेण चैकवचनम् ।

ततो मयूरः स महार्णवांते विक्षोभयित्वा हि महारवेण ॥ चचार देवस्त्रिशिखी शिखंडी त्रैलोक्यगोप्ता स महानुभावः ॥ ८ ॥ शिवश्च
रौद्रेण मयूररूपिणा विक्षोभ्यमाणे सलिलेऽपि तस्मिन् ॥ सह भ्रमंतीं च महार्णवांते सारिन्महौघां सुमहान्ददर्श ॥ ९ ॥ स तां महादेवमयूररूपो
दृष्ट्वा भ्रमंतीं सहसोर्मिजालैः ॥ का त्वं शुभे शाश्वतदेहभूता क्षयं न यातासि महाक्षयांते ॥ १० ॥ देवासुरगणे नष्टे सरित्सरमहार्णवे ॥ का त्वं भ्रम
सि पद्माक्षि क गतासि च न क्षयम् ॥ ११ ॥ ॥ नर्मदोवाच ॥ ॥ तव प्रसादाद्देवेश मृत्युर्मम न विद्यते ॥ सृज देव पुनर्विश्वं शर्वरी क्षयमागता
॥ १२ ॥ एवमुक्तो महादेवो व्यधुनोत्पक्षपंजरम् ॥ तावत्पंजरमध्यांते तस्य पक्षाद्विनिःसृताः ॥ १३ ॥ तावंतो देवदैत्येंद्राः पक्षाभ्यां तस्य जज्ञिरे ॥
तेषां मध्ये पुनः सा तु नर्मदा भ्रमते सरित् ॥ १४ ॥ ततश्चान्यो महाशैलो दृश्यते भरतर्षभ ॥ त्रिभिः कूटैः सुविस्तीर्णैः शृंगवानिव गोवृषः
॥ १५ ॥ त्रिकूटस्तु इति ख्यातः सर्वरत्नैर्विभूषितः ॥ ततस्तस्मात्त्रिकूटाच्च प्लावयंती महीं ययौ ॥ १६ ॥ त्रिकूटी तेन विख्याता पितॄणां
त्रायणी परा ॥ द्वितीयाच्च ततो गङ्गा विस्तीर्णा धरणीतले ॥ १७ ॥ तृतीयं च ततः शृंगं सप्तधा खंडशो गतम् ॥ जंबूद्वीपे तु संजाताः
सप्त ते कुलपर्वताः ॥ १८ ॥ चन्द्रनक्षत्रसहिता ग्रहग्रामनदीनदाः ॥ अंडजं स्वेदजं जातमुद्भिज्जं च जरायुजम् ॥ १९ ॥ एवं जगदिदं
सर्व्वं मयूरादभवत्पुरा ॥ समस्तं नरशार्दूल महादेवसमुद्भवम् ॥ २० ॥ ततो नदीः समुद्रांश्च संविभज्य पृथक्पृथक् ॥ नर्मदामाह
देवेशो गच्छ त्वं दक्षिणां दिशम् ॥ २१ ॥ एवं सा दक्षिणा गंगा महापातकनाशिनी ॥ उत्तरे जाह्नवी देशे पुण्या त्वं दक्षिणे शुभा
॥ २२ ॥ यथा गंगा महापुण्या मम मस्तकसंभवा ॥ तद्विशिष्टा महाभागे त्वं चैवेति न संशयः ॥ २३ ॥ त्वया सह भविष्यामि एकेनांशेन
सुव्रते ॥ महापातकयुक्तानामौषधं त्वं भविष्यसि ॥ २४ ॥ एवमुक्ता तु देवेन महापातकनाशिनी ॥ दक्षिणं दिग्विभागं तु सा जगामाऽऽशु
विक्रमा ॥ २५ ॥ ऋक्षशैलेंद्रमासाद्य चंद्रमौलेरनुग्रहात् ॥ वार्योघैः प्रस्थिता यस्मान्महादेवप्रणोदिता ॥ २६ ॥ महता चाऽपि वेगेन
यस्मादेषा समुच्छ्रिता ॥ महती तेन सा प्रोक्ता महादेवान्महीपते ॥ २७ ॥ तपतस्तस्य देवस्य शूलाग्राद्विंदवोऽपतन् ॥ तेनैषा शोणसंज्ञा तु दश
॥ ७ ॥ सप्त च ताः स्मृताः ॥ २८ ॥ सर्वेषां नर्मदा पुण्या रुद्रदेहाद्विनिःसृता ॥ सर्वाभ्यश्च सरिद्भ्यश्च वरदानान्महात्मनः ॥ २९ ॥ शंकराऽनुग्रहाद्देवी ॥१८१॥
महापातकनाशिनी ॥ यस्मान्महार्णवे घोरे दृश्यते महती च सा ॥ ३० ॥ सुव्यक्तांगी महाकाया महती तेन सा स्मृता ॥ तस्माद्विक्षोभ्यमाणा हि

१ सरिन्महौघाम्-महौघां सरितम्-इत्यर्थः। २ ऋषिशैलेन्द्रम्-इ० पा०। ३ संप्रोक्ता-इ० पा०।

दिग्गजैरंबुदोपमैः ॥ ३१ ॥ कलुषत्वं नयत्येव रसेन सुरसा तथा ॥ कृपां करोति सा यस्माल्लोकानामभयप्रदा ॥ ३२ ॥ संसारार्णवमग्नानां
तेन चैषा कृपा स्मृता ॥ पुरा कृतयुगे पुण्ये दिव्यमन्दारभूषिता ॥ ३३ ॥ कल्पवृक्षसमाकीर्णा रोहीतकसमाकुला ॥ वहत्येषा च मंदेन तेन
मंदाकिनी स्मृता ॥३४॥ भित्त्वा महार्णवं क्षिप्रं यस्माल्लोकमिहागता ॥ पूज्या सुरैश्च सिद्धैश्च तस्मादेषा महार्णवा ॥ ३५ ॥ विचित्रोत्पलसंघातैर्ऋक्ष
द्विपसमाकुला ॥ ३६ ॥ भित्त्वा शैलं च विपुलं प्रयात्येवं महार्णवम् ॥ भ्रामयंती दिशः सर्वा रवेण महता पुरा ॥ ३७ ॥ प्लावयन्ती विराजंती तेन
रेवा इति स्मृता ॥ भार्यापुत्रसुदुःखाब्धान्नराञ्छापैः समावृतान् ॥३८॥ विपापान्कुरुते यस्माद्विपापा तेन सा स्मृता ॥ विण्मूत्रनिचयां घोरां पांसु
शोणितकर्दमाम् ॥ ३९ ॥ पाशैर्नित्यं तु संबाधां यस्मान्मोचयते भृशम् ॥ विपाशेति च सा प्रोक्ता संसारार्णवतारिणी ॥ ४० ॥ नर्मदा विम
लांभा च विमलेंदुशुभानना ॥ तमीभूते महाघोरे यस्मादेषा महाप्रभा ॥ ४१ ॥ विमला तेन सा प्रोक्ता विद्वद्भिर्नृपसत्तम ॥ करौरिंदुकरप्रख्यैः
सूर्यरश्मिसमप्रभा ॥ ४२ ॥ क्षरंती मोदते विश्वं करभा तेन चोच्यते ॥ यस्माद्रंजयते लोकान्दर्शनादेव भारत ॥ ४३ ॥ रंजनाद्रंजना प्रोक्ता
धात्वर्थे राजसत्तम ॥ तृणवीरुधगुल्माद्यास्तिर्यंचः पक्षिणस्तथा ॥ तानुद्धूतान्नयेत्स्वर्गं तेनोक्ता वायुवाहिनी ॥ ४४ ॥ एवं यो वेत्ति नामानि
निर्गमं च विशेषतः ॥ स याति पापविर्मुक्तो रुद्रलोकं न संशयः ॥ ४५ ॥ इति श्रीस्कांदे महापुराण एकाशीतिसाहस्र्यां संहितायां पञ्चम
आवन्त्यखण्डे रेवाखण्डे नर्मदामाहात्म्ये सहेतुकरेवानाममाहात्म्यवर्णने मयूरकल्पसमुद्भवोनाम षष्ठोऽध्यायः ॥ ६ ॥ ॥ छ ॥ ॥ श्रीमार्कंडेय
उवाच ॥ ॥ पुनरेकार्णवे घोरे नष्टे स्थावरजंगमे ॥ सलिलेनाप्लुते लोके निरालोके तमोद्भवे ॥ १ ॥ ब्रह्मैको विचरंस्तत्र तमीभूते महार्णवे ॥ दिव्य
वर्षसहस्रं तु खद्योत इव रूपवान् ॥ २ ॥ शेते योजनसाहस्रमप्रमेयमनुत्तमम् ॥ द्वादशादित्यसंकाशं सहस्रचरणेक्षणम् ॥ ३ ॥ प्रसुप्तं चार्णवे घोरे
ह्यपश्यत्कूर्मरूपिणम् ॥ तं दृष्ट्वा विस्मयापन्नो ब्रह्मा बोधयते शनैः ॥ ४ ॥ स्तुतिभिर्मंगलैश्चैव वेदवेदांगसंभवैः ॥ वाचस्पते विबुध्यस्व महाभूत
नमोऽस्तु ते ॥ ५ ॥ तवोदरे जगत्सर्वं तिष्ठते परमेश्वर ॥ तद्विमुंच महासत्त्व यत्पूर्वं संहृतं त्वया ॥ ६ ॥ व्यतीता रजनी ब्राह्मी दिनं समनुवर्त्तते ॥
निरीक्ष्य सर्वलोकेश येन संभवते जगत् ॥ ७ ॥ स निशम्य वचस्तस्य उत्थितः परमेश्वरः ॥ समुद्गिरन्सलोकांस्त्रीन्ग्रस्तान्कल्पक्षये तदा ॥ ८ ॥
देवदानवगन्धर्वाः सयक्षोरगराक्षसाः ॥ सचंद्रार्कग्रहाः सर्वे शरीरात्तस्य निर्गताः ॥ ९ ॥ ततो ह्येकार्णवं सर्वं विभज्य परमेश्वरः ॥ विस्तीर्णो
पलतोयौघां सरित्सरविवर्द्धिताम् ॥ १० ॥ पश्यते मेदिनीं देवः सवृक्षौषधिपल्वलाम् ॥ हिमवंतं गिरिश्रेष्ठं श्वेतं पर्वतमुत्तमम् ॥ ११ ॥

शृंगवन्तं महाशैलं ये चान्ये कुलपर्वताः ॥ जंबूद्वीपं कुशं क्रौंचं सगोमेदं सशाल्मलम् ॥ १२ ॥ पुष्करांताश्च ये द्वीपा ये च सप्त
महार्णवाः ॥ लोकालोकं महाशैलं सर्वं च पुरतः स्थितम् ॥ १३ ॥ चतुःप्रकृतिसंयुक्तं जगत्स्थावरजंगमम् ॥ युगांते तु विनिष्क्रांतमपश्यत्स
महेश्वरः ॥ १४ ॥ विप्रकीर्णशिलाजालामपश्यत्स वसुन्धराम् ॥ कूर्मपृष्ठोपगां देवीं महार्णवगतां प्रभुः ॥ १५ ॥ तस्मिन्विशीर्णशैलाग्रे
सरित्सरोविवर्जिते ॥ नानातरंगभिन्नोद आवर्तोद्वर्त्तसंकुले ॥ १६ ॥ नानौषधिप्रज्वलिते नानोत्पलशिलातले ॥ नानाविहंगसंघुष्टां
मत्स्यकूर्म्मसमाकुलाम् ॥ १७ ॥ दिव्यमायामयीं देवीमुत्कृष्टांबुदसन्निभाम् ॥ नदीमपश्यद्देवेशो ह्यनौपम्यजलाशयाम् ॥ १८ ॥
मध्ये तस्यांबुदश्यामां पीनोरुजघनस्तनीम् ॥ वस्त्रैरनुपमैर्दिव्यैर्नानाभरणभूषिताम् ॥ १९ ॥ सनूपुररवोदामां हारकेयूरमंडिताम् ॥ तादृशीं
नर्मदां देवीं स्वयं स्त्रीरूपधारिणीम् ॥ २० ॥ योगमायामयैश्चित्रैर्भूषणैः स्वैर्विभूषिताम् ॥ अव्यक्तांगीं महाभागामपश्यत्स तु नर्मदाम् ॥ २१ ॥
अर्द्धोद्यतभुजां बालां पद्मपत्रायतेक्षणाम् ॥ स्तुवन्तीं देवदेवेशमुत्थितां तु जलात्तदा ॥ २२ ॥ विस्मयाऽऽविष्टहृदयो ह्यहमुद्वीक्ष्य तां शुभाम् ॥
स्नात्वा जले शुभे तस्याः स्तोतुमभ्युद्यतस्ततः ॥ २३ ॥ अर्चयामास संहृष्टो मन्त्रैर्वेदांगसंभवैः ॥ सृष्टं च तत्पुरा राजन्पश्येयं सचराचरम् ॥
॥ २४ ॥ सदेवासुरगन्धर्वं सपन्नगमहोरगम् ॥ पश्याम्येषा महाभागा नैव याता क्षयं पुरा ॥ २५ ॥ महादेवप्रसादाच्च तच्छरीरसमुद्भवा ॥
भूयोभूयो मया दृष्टा कथिता ते नृपोत्तम ॥ २६ ॥ प्रादुर्भावमिमं कौर्म्यं येऽधीयन्ते द्विजोत्तमाः ॥ येऽपि शृण्वंति विद्वांसो मुच्यन्ते तेऽपि
किल्बिषैः ॥ २७ ॥ इति श्रीस्कांदे महापुराण एकाशीतिसाहस्र्यां संहितायां पंचम आवन्त्यखण्डे रेवाखण्डे नर्मदामाहात्म्ये कूर्मकल्पसमुद्भवोनाम
सप्तमोऽध्यायः ॥ ७ ॥ ॥ छ ॥ ॥ मार्कंडेय उवाच ॥ ॥ नष्टे लोके पुनश्चान्ये सलिलेन समावृते ॥ महार्णवस्य मध्यस्थो बाहुभ्यामतरं
जलम् ॥१॥ दिव्ये वर्षशते पूर्णे श्रांतोऽहं नृपसत्तम ॥ ध्यातुं समारभं देवं महदर्णवतारणम् ॥ २ ॥ ध्यायमानस्ततः काले अपश्यं पक्षिणं परम् ॥
हारकुन्देन्दुसंकाशं बकं गोक्षीरपांडुरम् ॥ ३ ॥ ततोऽहं विस्मयाविष्टस्तं बकं समुदीक्ष्य वै ॥ अस्मिन्महार्णवे घोरे कुतोऽयं पक्षिसंभवः ॥ ४ ॥
॥ ८ ॥ तरन्बाहुभिरश्रांतस्तं बकं प्रत्यभांषिषि ॥ पक्षिरूपं समास्थाय कस्त्वमेकार्णवीकृते ॥ ५ ॥ भ्रमसे दिव्ययोगात्मन्मोहयन्निव मां प्रभो ॥ एतत्क
थय मे सर्व्वं योऽसि सोऽसि नमोऽस्तु ते ॥ ६ ॥ सोऽब्रवीन्मां महादेवो ब्रह्माऽहं विष्णुरेव च ॥ जगत्सर्वं मया वत्स संहृतं किं न बुध्यसे ॥ ७ ॥

१ इदन्–इ०पा० । २ प्रत्यभाषिषि–अहं प्रत्यवोचम्–इत्यर्थः ।

तव माता पिताऽहं वै विश्वस्य च महामुने ॥ कारुण्यं मम संजातं दृष्ट्वा मग्नं महार्णवे ॥ ८ ॥ पक्षिरूपं समास्थाय अतोऽत्राऽहं समागतः ॥ किम
र्थमातुरो भूत्वा भ्रमसीत्थं महार्णवे ॥ ९ ॥ शीघ्रं प्रविश मत्पक्षौ येन विश्रमसे द्विज ॥ एवमुक्तस्ततस्तेन देवेनाऽहं नरेश्वर ॥ १० ॥ ततोऽहं तस्य
पक्षांते प्रलीनस्तु भ्रमञ्जले ॥ काले युगसाहस्रांते अश्रांतोऽर्णवमध्यगः ॥ ११ ॥ ततः शृणोमि सहसा दिक्षु सर्वासु सुव्रत ॥ किंचिन्नूपुरसंमिश्रम
द्भुतं शब्दमुत्तमम् ॥ १२ ॥ तदार्णवजलं सर्वं संक्षिप्तं सहसाऽभवत् ॥ किमेतदिति संचिंत्य दिशः समवलोकयम् ॥ १३ ॥ दश कन्यास्ततो दिक्षु
आगताश्च महार्णवे ॥ वस्त्रालंकारसहिता दिग्भ्यो नूपुरभूषिताः ॥ १४ ॥ काचिच्चन्द्रसमाभासा काचिदादित्यसप्रभा ॥ काचिदंजनपुंजाभा काचि
द्रक्तोत्पलप्रभा ॥ १५ ॥ नानारूपधरा सौम्या नानाऽऽभरणभूषिता ॥ अर्घ्यपाद्यादिभिर्माल्यैर्बकमभ्यर्च्य सुव्रताः ॥ १६ ॥ ततस्तं पर्वताकारं
गुह्यं पक्षिणमव्ययम् ॥ प्रविवेश महाघोरं पर्वतो ह्यर्णवं त्वराद् ॥ १७ ॥ योजनानां सहस्राणि तावन्त्येव शतानि च ॥ त्रिंशद्योजनसाहस्रं याव
द्भूमंडलं त्विति ॥ १८ ॥ ततो भूमण्डलं दिव्यं पंचरत्नसमाकुलम् ॥ दिव्यस्फटिकसोपानं रुक्मस्तंभमनोरमम् ॥ १९ ॥ योजनानां सहस्रं तु
विस्ताराद्द्विगुणाऽऽयतम् ॥ वापीकूपसमाकीर्णं प्रासादाट्टालकावृतम् ॥ २० ॥ कल्पवृक्षसमाकीर्णं ध्वजयष्टिविभूषितम् ॥ तस्मिन्पुरवरे रम्ये नाना
रत्नोपशोभितम् ॥ २१ ॥ तथान्यच्च पुरं रम्यं पताकोज्ज्वलवेदिकम् ॥ शतयोजनविस्तीर्णं तावद्द्विगुणमायतम् ॥ २२ ॥ पुरमध्ये ततस्तस्मिन्नदी प
रमशोभना ॥ महती पुण्यसलिला नानारत्नशिला तथा ॥ २३ ॥ तस्यास्तीरे मया दृष्टं तडित्सूर्यसमप्रभम् ॥ इन्द्रनीलमहानीलैश्चितं रत्नैः
समंततः ॥ २४ ॥ क्वचिद्वह्निसमाकारं क्वचिदिन्द्रायुधप्रभम् ॥ क्वचिद्धूम्रं क्वचित्पीतं क्वचिद्रक्तं क्वचित्सितम् ॥ २५ ॥ नानावर्णैः समा
युक्तं लिंगमद्भुतदर्शनम् ॥ ब्रह्मविष्ण्विन्द्रसाध्यैश्च समंतात्परिवारितम् ॥ २६ ॥ नन्दीश्वरगणाध्यक्षैरिंद्रादित्यैश्च तद्वृतम् ॥ पश्यामि
लिंगमीशानं महालिंगं तमेव च ॥ २७ ॥ परिवार्य ततस्तं तु प्रसुप्तान्देवदानवान् ॥ निमीलिताक्षान्पश्यामि दिव्याभरणभूषितान् ॥
॥ २८ ॥ ततस्ताः पद्मपत्राक्ष्यो नार्य्यः परमसम्मताः ॥ नद्यास्तस्या जले स्नात्वा दिव्यपुष्पैर्मनोरमैः ॥ २९ ॥ दत्त्वाऽर्घपाद्यं विधिवल्लिंगस्य
सह पक्षिणा ॥ अर्चयंतीर्वरारोहा दश ताः प्रमदोत्तमाः ॥ ३० ॥ ततस्त्वभ्यर्च्य तल्लिंगं तस्मिन्नेव पुरोत्तमे ॥ सर्वा अदर्शनं जग्मुर्विद्युतोऽभ्र
गणेष्विव ॥ ३१ ॥ न चाऽसौ पक्षिराट् तस्मिन्न स्त्रियो न च देवताः ॥ तदेवैकं स्थितं लिंगमर्चयन्विस्मयान्वितः ॥ ३२ ॥ ततोहं दुःखमूढात्मा रुद्र
मायेति चिंतयन् ॥ ततः कन्याः समुत्तीर्य दिव्यांबरविभूषणाः ॥ ३३ ॥ भासयंत्यो जगत्सर्व्वं विद्युतोऽभ्रगणानिव ॥ पद्मैर्हिरण्मयैर्दिव्यैरर्चयित्वा

शुभाननाः ॥ ३४ ॥ विविशुस्तज्जलं क्षिप्रं समंताद्वरभूषणाः ॥ तस्मिन्पुरवरे चाऽन्ये तामेवाहं पुनःपुनः ॥ ३५ ॥ पश्यामि भ्रमरां कन्यां अर्च्चयं
तीं महेश्वरम् ॥ ततोऽहं तां वरारोहामपृच्छं कमलेक्षणाम् ॥ ३६ ॥ का त्वमस्मिन्पुरे देवि वससे शिवमर्च्चती ॥ ताश्चागताः स्त्रियः सर्वाः क्व गतास्ते
गणेश्वराः ॥ ३७ ॥ नमोऽस्तु ते महाभागे ब्रूहि पुण्ये महेश्वरि ॥ तव प्रसादाद्विज्ञातुमेतदिच्छामि सुव्रते ॥ दयां कृत्वा महादेवि कथयस्व ममाऽनघे
॥ ३८ ॥ ॥ स्त्र्युवाच ॥ ॥ विस्मृताऽहं कथं विप्र दृष्टा कल्पे पुरातने ॥ मा तेऽभूत्स्मृतिविभ्रंशः सा चाऽहं कल्पवाहिनी ॥ ३९ ॥ नर्मदानाम
विख्याता रुद्रदेहाद्विनिःसृता ॥ यास्ताः कन्यास्त्वया दृष्टा ह्यर्च्चयंत्यो महेश्वरम् ॥ ४० ॥ याभिस्त्विह समानीतः पक्षिराजसमन्विताः ॥ दिशस्ता
विद्धि सर्वेशाः सर्वास्त्वं मुनिसत्तम ॥ ४१ ॥ तिर्यक्पक्षिस्वरूपेण महायोगी महेश्वरः ॥ एभिः[1] शिवपुराद्विप्र आनीतः स महेश्वरः ॥४२॥ सैष देवो
महादेवो लिंगमूर्त्तिर्व्यवस्थितः ॥ अर्च्यते ब्रह्मविष्ण्विन्द्रैः सुरासुरजगद्गुरुः ॥४३॥ लयमायाति यस्माद्धि जगत्सर्वं चराचरम् ॥ तेन लिंगमिति प्रोक्तं
पुराणज्ञैर्महर्षिभिः ॥ ४४ ॥ तेन देवगणाः सर्व्वे संक्षिप्ता मायया पुरा ॥ प्रलीनाश्चैव लोकेश न दृश्यंते हि सांप्रतम् ॥ ४५ ॥ पुनर्दृश्या भविष्यंति
सृजमानाः स्वयंभुवा ॥ साऽहं लिंगार्चनपरा नर्मदानाम नामतः ॥ ४६ ॥ कालं युगसहस्रस्य रुद्रस्य परिचारिका ॥ अस्य प्रसादादमरस्तथा त्वं
द्विजपुंगव ॥ ४७ ॥ सत्यार्जवदयायुक्तः सिद्धोऽसि त्वं शिवार्चनात् ॥ एवमुक्त्वा तु सा देवी तत्रैवांतरधीयत ॥ ४८ ॥ ताः स्त्रियः स च देवेशो बक
रूपो महेश्वरः ॥ तस्यास्तद्वचनं श्रुत्वा अवतीर्य्य महानदीम् ॥ ४९ ॥ स्नात्वा समर्चय त्वं हि विधिना मंत्रपूर्वकम् ॥ ततोऽहं सहसा तस्मात्समुत्ती
र्य्य जलाशयात् ॥ ५० ॥ न च पश्यामि तल्लिंगं न च तां निम्नगां नृप ॥ तदैव लोकाः संजाताः क्षितिश्चैव सकानना ॥ ५१ ॥ ऋक्षचंद्रार्कवि
ततं तदेव च नभस्तलम् ॥ यथापूर्वमदृष्टं तु तथैव च पुनः कृतम् ॥ नतोहं मनसा देवमपूजयं महेश्वरम् ॥ ५२ ॥ एवं बके पुरा कल्पे मया दृष्टेय
मव्यया ॥ नर्मदा मर्त्यलोकस्य महापातकनाशिनी ॥५३॥ तस्माद्धर्मपरैर्विप्रैः क्षत्रशूद्रविशादिभिः ॥ सदा सेव्या महाभागा धर्म्मवृद्ध्यर्थकारिभिः
॥ ५४ ॥ येऽपि भक्त्या सकृत्तोये नर्मदाया महेश्वरम् ॥ स्नात्वाऽर्च्चयंति ते सर्वं पापं नाश्यंत्यसंशयम्[2] ॥ ५५ ॥ इति श्रीस्कांदे महापुराण एका
॥ ९ ॥ शीतिसाहस्र्यां संहितायां पञ्चम आवंत्यखण्डे रेवाखण्डे नर्मदामाहात्म्ये बककल्पसमुद्भवोनामाऽष्टमोऽध्यायः ॥ ८ ॥ ॥ छ ॥ ॥ श्रीमार्कंडेय ॥१८३॥
उवाच ॥ ॥ पुनर्युगांतं ते चाऽन्यं संप्रवक्ष्यामि तच्छृणु ॥ सूर्यैरादीपिते लोके जंगमे स्थावरे पुरा ॥ १ ॥ सरित्सरःसमुद्रेषु क्षयं यातेषु सर्वशः ॥

१ एभिः—पूर्वोक्तैर्बन्दीश्वरादिभिः—इत्यर्थः । २ नाश्यन्ति—नाशयन्ति—इत्यपेक्षितम् । आर्षः प्रयोगः ।

भिन्मांशुषवषट्कारे धर्मर्यादगतिं गते ॥ २ ॥ नानारूपैस्ततो मेघैः शक्रचापविराजितैः ॥ सर्वमापूरितं व्योम वार्योघैः पूरिते तदा ॥ ३ ॥ तत
स्त्वेकार्णवीभूते सर्वतः सलिलावृते ॥ जगत्कृत्स्नोदरे सर्व्वं सुष्वाप भगवान्हरः ॥ ४ ॥ प्रकृतिं स्वामवष्टभ्य योगात्मा स प्रजापतिः ॥ शेते युगसह
स्रांतं कालमाविश्य सार्णवम् ॥ ५ ॥ तत्र सुप्तं महात्मानं ब्रह्मलोकनिवासिनः ॥ भृग्वादिऋषयः सर्व्वे ये चाऽन्ये सनकादयः ॥ ६ ॥ पर्यंके
विमले शुभ्रे नानास्तरणसंस्तृते ॥ शयानं ददृशुर्देवं सपत्नीकं वृषध्वजम् ॥ ७ ॥ विश्वरूपा तु सा नारी विश्वरूपो महेश्वरः ॥ गाढमालिंग्य सुप्त
स्तां ददृशे चाहमव्ययम् ॥ ८ ॥ पादमूले ततस्तस्य श्यामां तां पद्मलक्षणाम् ॥ कन्यां पश्यामि सुश्रोणीं चरणौ तस्य मृद्नतीम् ॥ ९ ॥ विमलांबर
संवीतां व्यालयज्ञोपवीतिनीम् ॥ श्यामां कमलपत्राक्षीं सर्वाभरणभूषिताम् ॥ १० ॥ सकलं युगसाहस्रं नर्मदेयं विजानती ॥ प्रसुप्तं देवदेवेश
मुपास्ते वरवर्णिनी ॥ ११ ॥ स्तैतैर्वेदैश्चतुर्भिश्च ब्रह्माऽप्येवं महेश्वरः ॥ भृग्वाद्यैर्मानसैः पुत्रैः स्तौति शंकरमव्ययम् ॥ १२ ॥ भक्त्या परमया राजं
स्तत्र शंभुमनामयम् ॥ स्तुवंतस्तत्र देवेशं मंत्रैरीश्वरसंभवैः ॥ १३ ॥ अकस्मात्संप्रलीनास्ते चत्वारः श्रुतयोऽर्णवे ॥ वेदैः प्रलीनैर्भगवा
नज्ञानतमसा वृतः ॥ १४ ॥ प्रसुप्तं देवमीशानं बोधयन्समुपस्थितः ॥ उत्तिष्ठ हर पिंगाक्ष महादेव महेश्वर ॥ १५ ॥ मम वेदा
हृताः सर्वे अतोऽहं स्तोतुमुद्यतः ॥ वेदैर्व्याप्तं जगत्सर्वं दिव्यादिव्यं चराचरम् ॥ १६ ॥ अतीतं वर्त्तमानं च स्मरामि च सृजाम्यहम् ॥ तैर्विना
चाऽहमेकस्तु मूकोऽधो जडवत्सदा॥१७॥गतिर्वीर्य्यं बलोत्साहौ तैर्विना न प्रजायते॥ तैर्विना देवदेवेश नाऽहं किंचित्स्मरामि वै॥१८॥ तान्वेदान्देव
देवेश शीघ्रं मे दातुमर्हसि ॥ जडांधबधिरं सर्वं जगत्स्थावरजंगमम् ॥ १९ ॥ स्थानादि दश चत्वारि न शोभंते सुरेश्वर ॥ प्रणमाम्यल्पवीर्यत्वाद्वेद
हीनः सुरेश्वर ॥ २० ॥ वेदेभ्यः सकलं जातं यत्किंचित्सचराचरम् ॥ तावच्छोभंति शास्त्राणि समस्तानि जगद्गुरो ॥ २१ ॥ यावद्वेदनिधिरयं
नोपतिष्ठेत्सनातनः ॥ यथोदितेन सूर्येण तमो याति विनाशताम् ॥ २२ ॥ एवं समस्तपापानि यांति वेदस्य धारणात् ॥ वेदे रहसि यत्सूक्ष्मं
यत्तद्ब्रह्म सनातनम् ॥ २३ ॥ हृदिस्थं देव जानामि गतं तद्वेदगर्जनात् ॥ वेदानुस्मरतो मेऽद्य तव शंकर चाग्रतः ॥ २४ ॥ अकस्मात्ते गता वेदा
न सृजेयं विभो भुवम् ॥ तेऽपि सर्व्वे महादेव प्रविष्टाः सम्मुखार्णवम् ॥ २५ ॥ ते याच्यमाना देवेश तिष्ठंतु स्मरणे मम ॥ दुहितेयं विशालाक्षी
सर्वैः सर्वं विजानते ॥ २६ ॥ जायती युगसाहस्रं नान्या काचिद्दृशी ॥ ऋषिश्चायं महाभागो मार्कंडो धीमतां वरः ॥ २७ ॥ कल्पेकल्पे

१ गतेः—इ०पा० । २ यथायोग्यं वचनं विपरिणमयितव्यम् ।

महादेव त्वामयं पर्युपासते ॥ जगत्त्रयहितार्थाय चरते व्रतमुत्तमम् ॥ २८ ॥ एवमुक्तस्तु देवेशो ब्रह्मणा परमेष्ठिना ॥ उवाच श्लक्ष्णया वाचा
नर्मदां सरितां वराम् ॥ २९ ॥ कथयस्व महाभागे ब्रह्मणस्त्वं तु पृच्छतः ॥ केन वेदा हृताः सर्वे वेधसो जगतीगुरोः ॥ ३० ॥ एवमुक्ता तु रुद्रेण
उवाच मृगलोचना ॥ ब्रह्मणो जपतो वेदांस्त्वयि सुप्ते महेश्वर ॥ ३१ ॥ भवतश्छिद्रमासाद्य घोरेऽस्मिन्सलिलावृते ॥ पूर्वकल्पसमुद्भूतावसुरौ
सुरदुर्जयौ ॥ ३२ ॥ श्रियावृत्तौ महादेव त्वया चोत्पादितौ पुरा ॥ सुरासुरसुदुर्जेयौ दानवौ मधुकैटभौ ॥ ३३ ॥ तौ वायुभूतौ सूक्ष्मौ च पठतो
ऽस्मात्पितामहात् ॥ तावाशु हृत्वा वेदांश्च प्रविष्टौ च महार्णवम् ॥ ३४ ॥ एतच्छ्रुत्वा महातेजा ह्यमृतायास्ततो वचः ॥ सस्मार स च देवेशं शंख
चक्रगदाधरम् ॥ ३५ ॥ स विवेश महाराज भूतलं ससुरोत्तमः ॥ दानवांतकरो देवः सर्वदैवतपूजितः ॥ ३६ ॥ मीनरूपधरो देवो लोडयामास
चार्णवम् ॥ वेदांश्च ददृशे तत्र पाताले निहितान्प्रभुः ॥ ३७ ॥ तौ च दैत्यौ महावीर्य्यौ दृष्टवान्मधुसूदनः ॥ महावेगौ महाबाहू सूदयामास
तेजसा ॥ ३८ ॥ वेदांस्तत्राऽपि तोयस्थानानिनाय जगद्गुरुः ॥ चतुर्वक्त्राय देवायाददाच्चक्रविभूषितः ॥ ३९ ॥ ततः प्रहृष्टो भगवान्वेदाँल्लँब्ध्वा
पितामहः ॥ जनयामास निखिलं जगद्भूयश्चराचरम् ॥ ४० ॥ सा च देवी नदी पुण्या रुद्रस्य परिचारिका ॥ पावनी सर्वभूतानां प्रोवाह सलिलं
तदा ॥ ४१ ॥ तस्यास्तीरे ततो देवा ऋषयश्च तपोधनाः ॥ यजंति त्र्यंबकं देवं प्रहृष्टेनांऽतरात्मना ॥ ४२ ॥ एका मूर्त्तिर्महेशस्य कारणांतरमा
गता ॥ त्रैगुण्या कुरुते कर्म्म ब्रह्मचक्रीशरूपतः ॥ ४३ ॥ एतेषां तु पृथग्भावं ये कुर्वंति सुमोहिताः ॥ तेषां धर्म्मः कुतः सिद्धिर्जायते पाप
कर्मिणाम् ॥ ४४ ॥ एवमेता महानद्यस्तिस्रो रुद्रसमुद्भवाः ॥ एका एव त्रिधा भूता गङ्गा रेवा सरस्वती ॥ ४५ ॥ गङ्गा तु वैष्णवी मूर्त्तिः सर्व
पापप्रणाशिनी ॥ रुद्रदेहसमुद्भूता नर्मदा चैवमेव तु ॥ ४६ ॥ ब्राह्मी सरस्वती मूर्त्तिस्त्रिषु लोकेषु विश्रुता ॥ दिव्या कामगमा देवी वाग्विभूत्यै तु
संस्थिता ॥ ४७ ॥ नर्मदा परमा काचिन्मर्त्यमूर्त्तिकला शिवा ॥ दिव्या कामगमा देवी सर्वत्र सुरपूजिता ॥ ४८ ॥ व्यापिनी सर्वभूतानां सूक्ष्मा
त्सूक्ष्मतरा स्मृता ॥ अक्षया ह्यमृता ह्येषा स्वर्गसोपानमुत्तमा ॥ ४९ ॥ सृष्टा रुद्रेण लोकानां संसारार्णवतारिणी ॥ ५० ॥ सरिज्जलं येऽपि पिबंति
लोके मुच्यंति ते पापविशेषसंघैः ॥ व्रजंति संसारमनादिभावं त्यक्त्वा चिरं मोक्षपदं विशुद्धम् ॥ ५१ ॥ यथा गंगा तथा रेवा तथा चैव सर
स्वती ॥ समं पुण्यफलं प्रोक्तं स्नानदर्शनचिंतनैः ॥ ५२ ॥ वरदानान्महाभागा ह्यधिका चोच्यते बुधैः ॥ कारुण्यांतरभावेन न मृता समुपागता ॥
॥ ५३ ॥ मुच्यंते दर्शनात्तेन पातकैः स्नानमंगलैः ॥ नर्मदायां नृपश्रेष्ठ ये नमंति त्रिलोचनम् ॥ ५४ ॥ उमारुद्रांगसंभूता येन चैषा महानदी ॥

लोकान्प्रापयते स्वर्गं तेन पुण्यत्वमागता ॥ ९९ ॥ य एवमीशानवरस्य देहं विभज्य देवीमिह संशृणोति ॥ स याति रुद्रं महता रवेण गंधर्व्वयक्षैरिव गीयमानः ॥ ९६ ॥ इति श्रीस्कांदे महापुराण एकाशीतिसाहस्र्यां संहितायां पञ्चम आवंत्यखंडे रेवाखण्डे नर्मदा माहात्म्ये नर्मदोत्पत्तितत्स्नानफलादिकथनंनाम नवमोऽध्यायः ॥ ९ ॥ ॥ छ ॥ ॥ युधिष्ठिर उवाच ॥ ॥ कस्मिन्कल्पे महाभागा नर्म्मदेयं द्विजोत्तम ॥ विभक्ता ऋषिभिः सर्व्वैस्तपोयुक्तैर्महात्मभिः ॥ १ ॥ एतद्विस्तरतः सर्वं ब्रूहि मे वदतां वर ॥ कल्पांते यद्भवेत्कष्टं लोकानां तत्त्व मेव च ॥ २ ॥ अतीते तु पुरा कल्पे यथेयं वर्त्ततेऽनघ ॥ अस्यांत्यस्य च कल्पस्य व्यवस्थां कथय प्रभो ॥ एवमुक्तः सभामध्ये मार्कंडो वाक्यम ब्रवीत् ॥ ३ ॥ ॥ मार्कण्डेय उवाच ॥ ॥ वक्ष्येऽहं श्रूयतां सर्वैः कथेयं पूर्वतः श्रुता ॥ ४ ॥ महत्कथेयं वैशिष्टी कल्पादस्मात्परं तु या ॥ लोकक्षयकरो घोर आसीत्कालः सुदारुणः ॥ ५ ॥ तस्मिन्नपि महाघोरे यथेयं न मृता सती ॥ परितुष्टैर्विभक्ता च शृणुध्वं तां कथामिमाम् ॥ ६ ॥ युगांते समनुप्राप्ते पितामहदिनत्रये ॥ मानसा ब्रह्मणः पुत्राः साक्षाद्ब्रह्मेव सत्तमाः ॥ ७ ॥ सनकाद्या महात्मानो ये च वैमानिका गणाः ॥ यमेंद्र वरुणाद्याश्च लोकपाला दिनत्रये ॥ ८ ॥ कालापेक्षास्तु तिष्ठंति लोकवृत्तांततत्पराः ॥ ततः कल्पक्षये प्राप्ते तेषां ज्ञानमनुत्तमम् ॥ ९ ॥ सर्वेषां नश्यते चायुर्युगरूपाऽनुसारतः ॥ भूर्लोकं ते परित्यज्य अगमंश्च भुवं तदा ॥ १० ॥ स्वर्लोकं च महश्चैव जनश्चैव तपस्तदा ॥ आश्रयं सत्य लोकं च सर्वलोकमनुत्तमम् ॥ ११ ॥ कालं युगसहस्रांतं पुत्रपौत्रसमन्विताः ॥ सत्यलोके च तिष्ठंति यावत्संजायते जगत् ॥ १२ ॥ ब्रह्मपुत्राश्च ये केचित्कल्पादौ न भवंति ह ॥ त्रैलोक्यं ते परित्यज्य अनाधारं भवंति च ॥ १३ ॥ तैः सार्धं ये तु ते विप्रा अन्ये चापि तपोधनाः ॥ यक्षरक्षः पिशाचाश्च अन्ये वैमानिका गणाः ॥ १४ ॥ ऋषयश्च महाभागा वर्णाश्चान्ये पृथग्विधाः ॥ सीदंति भूम्यां सहिता ये चाऽन्ये तलवासिनः ॥ ॥ १५ ॥ अनावृष्टिरभूत्तत्र महती शतवार्षिकी ॥ लोकक्षयकरी रौद्रा वृक्षवीरुद्विनाशिनी ॥ १६ ॥ त्रैलोक्यसंक्षोभकरी सप्तार्णवविशोषणी ॥ ततो लोकाः क्षुधाविष्टा भ्रमंतीव दिशो दश ॥ १७ ॥ कंदैर्मूलैः फलैर्वापि वर्त्तयंते सुदुःखिताः ॥ सरितः सागराः कूपाः सेवंते पावनानि च ॥ १८ ॥ तत्राऽपि सर्वे शुष्यंति सरिद्भिः सह सागराः॥ ततो यान्यल्पसाराणि सत्त्वानि पृथिवीतले ॥ १९ ॥ तान्येवाग्रे प्रलीयंते भिन्नान्युरुजलेन वै ॥ अथ संक्षीयमाणासु सरित्सु सह सागरैः ॥ २० ॥ ऋषीणां षष्टिसाहस्रं कुरुक्षेत्रनिवासिनाम् ॥ ये च वैखानसा विप्रा दन्तोलूखलिनस्तथा ॥ २१ ॥

१ संप्रसूताम्–इ० पा० । २ वायुः–इ० पा० । ३ भिन्नानि–रहितानि–इत्यर्थः ।

हिमाचलगुहागुह्ये ये वसंति तपोधनाः ॥ सर्वे ते मामुपागम्य क्षुत्तृषार्त्तास्तपोधनाः ॥ २२ ॥ ऊचुः प्रांजलयः सर्वे सीदयामो महामुने ॥ सरित्सा
गरशैलांतं जगत्संशुष्यते द्विज ॥ २३ ॥ कुत्र यास्याम सहिता यावत्कालस्य पर्ययः ॥ दीर्घायुरसि विप्रेंद्र न मृतस्त्वं युगक्षये ॥ २४ ॥ भूतं
भव्यं भविष्यच्च सर्वं तव हृदि स्थितम् ॥ तस्मात्त्वं वेत्सि सर्व्वं च कथयस्व महाव्रत ॥ २५ ॥ कीदृक्कालं महाभाग क्षपिष्यामोऽथ सुव्रत ॥
अनावृष्टिहतं सर्वं सीदते सचराचरम् ॥ २६ ॥ परित्राहि महाभाग न यथा याम संक्षयम् ॥ ततः संचिंत्य मनसा त्वरन्विप्रानथाब्रवम् ॥ २७ ॥
कुरुक्षेत्रं त्यजध्वं च पुत्रदारसमन्विताः ॥ त्यक्त्वोदीचीं दिशं सर्वे यामो याम्यामनुत्तमाम् ॥ २८ ॥ नगरग्रामघोषाढ्यां पुरपत्तनशोभिताम् ॥ गच्छा
मो नर्मदातीरं बहुसिद्धनिषेवितम् ॥ २९ ॥ रुद्रांगीं तां महापुण्यां सर्वपापप्रणाशिनीम् ॥ पश्यामस्तां महाभागां न्यग्रोधावारसंकुलाम् ॥
॥ ३० ॥ तरंगावर्त्तसलिलां दर्दुरीमत्स्यसंकुलाम् ॥ नानाविहगसंघुष्टामृषिकोटिनिषेविताम् ॥ ३१ ॥ माहेश्वरैर्भागवतैः सांख्यैः सिद्धैः सुसे
विताम् ॥ अनावृष्टिभयाद्भीताः कूलयोरुभयोरपि ॥ ३२ ॥ आश्रमे ह्याश्रमान्दिव्यान्कारयामो जितव्रताः ॥ एवमुक्तास्तु ते सर्वे समेता
नुचरैः सह ॥ ३३ ॥ नर्म्मदातीरमासाद्य स्थिताः सर्वेऽकुतोभयाः ॥ किंचित्पूर्वमनुस्मृत्य पुरा कल्पादिभिर्भयम् ॥ ३४ ॥ प्राप्तास्तु
नर्मदातीरमादावेव कलौ युगे ॥ ततो वर्षशतं पूर्णं दिव्यं रेवातटेऽवसन् ॥ ३५ ॥ षड्विंशच्च सहस्राणि वर्षाणां मानुषाणि च ॥ तत्राश्चर्यं
मया दृष्टमृषीणां वसतां नृप ॥ ३६ ॥ अनावृष्टिहते लोके संशुष्के स्थावरे चरे ॥ भिन्ने युगादिकलने हाहाभूते विचेतने ॥ ३७ ॥ चातुर्वर्णे
प्रलीने तु नष्टे होमबलिक्रमे ॥ निःस्वाहे निर्वषट्कारे शौचाचारविवर्जिते ॥ ३८ ॥ इयमेका सरिच्छ्रेष्ठा ऋषिकोटिनिषेविता ॥ नान्या
काचित्त्रिलोकेऽपि रमणीया नरेश्वर ॥ ३९ ॥ यथेयं पुण्यसलिला इंद्रस्येवामरावती ॥ देवतायतनैः शुभ्रैराश्रमैश्च सुकल्पितैः ॥ ४० ॥
शोभते नर्मदा देवी स्वर्गे मंदाकिनी यथा ॥ यावद्वृक्षा महाशैला यावत्सागरसंभवा ॥ ४१ ॥ उभयोः कूलयोस्तावन्मंडितायतनैः
शुभैः ॥ हूयद्भिरग्निहोत्रैश्च हविर्धूमसमाकुला ॥ ४२ ॥ बभूव नर्मदा देवी प्रावृट्कालेव शर्वरी ॥ देवतायतनैर्नैकैः पूजासंस्कारशोभिता ॥ ४३ ॥
सरिद्भिर्भ्राजते श्रेष्ठा पुरी शाक्री च भास्करी ॥ केचित्पंचाग्नितपसः केचिदप्यग्निहोत्रिणः ॥ ४४ ॥ केचिद्भूमकमश्नंति तपस्युग्रे व्यवस्थिताः ॥
आत्मयज्ञरताः केचिदपरे भक्तिभागिनः ॥ ४५ ॥ वैष्णवज्ञानमासाद्य केचिच्छैवं व्रतं तथा ॥ एकरात्रं द्विरात्रं च केचित्षष्ठाहभोजनाः ॥ ४६ ॥

१ दुर्दिनीम्—इ० पा० । २ परस्मैपदित्वं [illegible] । ३ इवार्थे वशब्दः ।

चांद्रायणविधानैश्च कृच्छ्रैणश्चातिकृच्छ्रैणः ॥ एवंविधैस्तपोभिश्च नर्मदातीरशोभितैः ॥ ४७ ॥ यजद्भिः शंकरं देवं केशवं भाति नित्यदा ॥ एकत्वे च पृथक्त्वे च यजतां च महेश्वरम् ॥ ४८ ॥ कलौ युगे महाघोरे प्राप्ताः सिद्धिमनुत्तमाम् ॥ यस्ययस्य हि या भक्तिर्विज्ञानं यस्य याद्दशम् ॥ ॥ ४९ ॥ यस्मिन्यस्मिंश्च देवे तु तांतामीशोऽददात्प्रभुः ॥ स्वभावैकतया भक्त्या तामेत्यांतःप्रलीयते ॥ ५० ॥ संसारे परिवर्तंते ये पृथग्भाविनो नराः ॥ ये महावृक्षमीशानं त्यक्त्वा शाखावलंबिनः ॥ ५१ ॥ पुनरावर्त्तमानास्ते जायन्ते हि चतुर्युगे ॥ देवांते स्थावरांते च संसारे चाऽश्रमन्क्रमात् ॥ ५२ ॥ पुनर्जन्म पुनः स्वर्गे पुनर्घोरे च रौरवे ॥ ये पुनर्देवमीशानं भवं भक्तिसुसंस्थिताः ॥ ५३ ॥ यजंति नर्मदातीरे न पुनस्ते भवंति च ॥ आदेहपतनात्केचिदुपासंतः परं गताः ॥ ५४ ॥ केचिद्द्वादशभिर्वर्षैः षड्भिरन्ये तपोधनाः ॥ त्रिभिः संवत्सरैः केचित्केचित्संवत्सरेण तु ॥ ॥ ५५ ॥ षड्भिर्मासैस्तु संसिद्धास्त्रिभिर्मासैस्तथाऽपरे ॥ मुनयो देवमाश्रित्य नर्मदां च यशस्विनीम् ॥ ५६ ॥ छित्त्वा संसारदोषांश्च अगमन्ब्रह्म शाश्वतम् ॥ एवं कलियुगे घोरे शतशोऽथ सहस्रशः ॥ ५७ ॥ नर्मदातीरमाश्रित्य मुनयो रुद्रमाविशन् ॥ ५८ ॥ ये नर्मदातीरमुपेत्य विप्राः शैवे व्रते यत्नमुपप्रपन्नाः ॥ त्रिकालमंभः प्रविगाह्य भक्त्या देवं समभ्यर्च्य शिवं व्रजन्ति ॥ ५९ ॥ ध्यानाग्निनैर्जाप्यमहाव्रतैश्च नारायणं वा सततं स्मरंति ॥ ते धौतपांडुरपटा इव राजहंसाः संसारसागरजलस्य तरंति पारम् ॥ ६० ॥ सत्यं सत्यं पुनः सत्यमुत्क्षिप्य भुजमुच्यते ॥ इदमेकं सुनिष्पन्नं ध्येयो नारायणः सदा ॥ ६१ ॥ यो वा हरं पूजयते जितात्मा मासं च पक्षं च वसेन्नरेन्द्र ॥ रेवां समाश्रित्य महानुभावः स देवदेवोऽथ भवेत्पिनाकी ॥ ६२ ॥ कीटाः पतंगाश्च पिपीलिकाश्च ये वै म्रियन्तेऽम्भसि नर्मदायाः ॥ ते दिव्यरूपास्तु कुलप्रसूताः शतं समा धर्मपरा भवंति ॥ ६३ ॥ कालेन वृक्षाः प्रपतन्ति येऽपि महातरंगौघनिकृत्तमूलाः ॥ ते नर्मदांभोभिरपास्तपापा देदीप्यमानास्त्रिदिवं प्रयांति ॥ ६४ ॥ अकामकामाश्च तथा सकामा रेवांतमाश्रित्य म्रियंति तीरे ॥ जडांधमूकास्त्रिदिवं प्रयांति किमत्र विप्रा भवभावयुक्ताः ॥ ६५ ॥ मासोपवासैरपि शोषितांगा न तां गतिं यांति विमुक्तदेहाः ॥ म्रियंति रेवाजलपूतकायाः शिवार्चने केशवभावयुक्ताः ॥ ६६ ॥ ये नर्मदातीरमनुप्रपन्ना अभ्यर्च्ययित्वा शिवमव्ययाख्यम् ॥ नारायणं वा मनसा सुपूताः पिबंति मातुर्न पुनः स्तनं ते ॥ ६७ ॥ नीवारश्यामाकयवेंगुदाद्यैरन्यैर्मुनीन्द्रा इह वर्त्तयंति ॥ आश्रित्य कूलं त्रिदशानुगीतं ते नर्मदाया न विशंति मृत्युम् ॥ ६८ ॥ भ्रमंति ये तीरमुपेत्य देव्यास्त्रिकालदेवार्चनसत्यपूताः ॥ विण्मूत्रचर्मास्थिशिरोपधानाः कुक्षौ

१ तस्य ताद्दशम्–इ० पा० । २ रेवान्तम्–रेवासमीपम्–'अन्तः प्रांतन्तिके मध्ये' इति वचनम् ।

युवत्या न वसंति भूयः ॥ ६९ ॥ किं यज्ञदानैर्बहुभिश्च तेषां निषेवितैस्तीर्थवरैः समस्तैः ॥ रेवातटं दक्षिणमुत्तरं वा सेवंति ते रुद्रच ानुपूर्वम् ॥७०॥
ते वंचिताः पंगुजडांधभूता लोकेषु मर्त्त्याः पशुभिश्च तुल्याः ॥ ये नाऽऽश्रिता रुद्रशरीरभूतां सोपानपंक्तिं त्रिदिवस्य रेवाम् ॥ ७१ ॥ युगं कलिं
घोरमिमं य इच्छेद्द्रष्टुं कदाचिन्न पुनर्द्विजेंद्रः ॥ स नर्मदातीरमुपेत्य सर्वं संपूजयेत्सर्वविमुक्तसंगः ॥ ७२ ॥ विघ्नैरनेकैरतियोज्यमाना ये तीरमुज्झंति
न नर्मदायाः ॥ ते चैव सर्वस्य हितार्थभूता वंद्याश्च ते सर्वजनस्य मान्याः ॥ ७३ ॥ भृग्वत्रिगार्गेयवशिष्ठकंकाः शतैः समेतैर्नियतास्त्वसंख्यैः ॥
सिद्धिं परां ते हि जलप्लुतांगाः प्राप्तास्तु लोकान्मरुतां न चान्ये ॥ ७४ ॥ ज्ञानं महत्पुण्यतमं पवित्रं पठंत्यदो नित्यविशुद्धसत्त्वाः ॥ गतिं
परां यांति महानुभावा रुद्रस्य वाक्यं हि यथा प्रमाणम् ॥ ७५ ॥ इति श्रीस्कांदे महापुराण एकाशीतिसाहस्र्यां संहितायां पंचम
आवन्त्यखण्डे रेवाखण्डे नर्मदामाहात्म्ये नर्मदास्नानफलश्रुतिकथनंनाम दशमोऽध्यायः ॥ १० ॥ ॥ छ ॥ ॥ युधिष्ठिर उवाच ॥ ॥ अहो मह
त्पुण्यतमा विशिष्टा क्षयं न याता इह या युगांते ॥ तस्मात्सदा सेव्यतमा मुनीद्रैर्ध्यानार्चनस्नानपरायणैश्च ॥ १ ॥ यामाश्रित्य गता मोक्षमृषयो
धर्मवत्सलाः ॥ ये त्वयोक्तास्तु नियमा ऋषीणां वेदनिर्मिताः ॥ २ ॥ मोक्षावाप्तिर्भवेद्येषां नियमैश्च पृथग्विधैः ॥ दशद्वादशभिर्वाऽपि षड्भिरष्टाभिरेव
वा ॥ ३ ॥ त्रिभिस्तथा चतुर्भिर्वा वर्षैर्मासैस्तथैव च ॥ मुच्यंते कलिदोषैस्ते देवेशानसमर्चनात् ॥ ४ ॥ ब्रह्माणं वा सुरश्रेष्ठं केशवं वा जगद्गुरुम् ॥
अर्चयन्पापमखिलं जहात्येव न संशयः ॥ ५ ॥ एतद्विस्तरतः सर्वं कथयस्व ममाऽनघ ॥ यस्मिन्संसारगहने निमग्नाः सर्वजंतवः ॥ ते कथं त्रिदिवं
प्राप्ता इति मे संशयो वद ॥ ६ ॥ ॥ श्रीमार्कंडेय उवाच ॥ ॥ जन्मांतरैरनेकैस्तु मानुष्यमुपलभ्यते ॥ भक्तिरुत्पद्यते चाऽत्र कथं चिदपि
शंकरे ॥ ७ ॥ तीर्थदानोपवासानां यज्ञैर्देवद्विजार्चनैः ॥ अवाप्तिर्जायते पुंसां श्रद्धया परया नृप ॥ ८ ॥ तस्माच्छ्रद्धा प्रकर्त्तव्या मानवैर्धर्मवत्सलैः ॥
ईशोऽपि श्रद्धया साध्यस्तेन श्रद्धा विशिष्यते ॥९॥ अन्यथा निष्फलं सर्व्वं श्रद्धाहीनं तु भारत ॥ तस्मात्समाश्रयेद्भक्तिं रुद्रस्य परमेष्ठिनः॥ १० ॥
तेषांहि सफलं जन्म येषां भक्तिरचंचला ॥ सा चैव त्रिविधा भक्तिः सात्त्विकी राजसी तथा ॥ ११ ॥ तामसी सर्वलोकस्य त्रिविधं च फलं लभेत्॥
॥ १२ ॥ ते कर्मफलसंयोगादावर्त्तंति पुनःपुनः ॥ १२ ॥ जन्मांतरशतैस्तेषां ज्ञानिनां देवयाजिनाम् ॥ देवत्रये भवेद्भक्तिः क्षयात्पापस्य कर्म्मणः ॥१३॥ ईशा ॥१८६॥
नात्तु पुनर्मोक्षो जायते छिन्नसंशयः ॥ ये पुनर्नर्मदातीरमाश्रित्य द्विजपुंगवाः ॥ १४ ॥ त्रयीमार्गमसंदिग्धास्ते यांति परमां गतिम् ॥ एकाग्रम

१ [illegible]—पाठभेदः । २ [illegible]जिनाम्—इ० पा० । ३ देवत्रये—इ० पा० ।

नसो ये तु शंकरं शिवमव्ययम् ॥ १५ ॥ अर्च्चयंतीह निरताः क्षिप्रं सिद्ध्यंति ते जनाः ॥ कालेन महता सिद्धिर्जायतेऽन्यत्र देहिनाम् ॥ १६ ॥ नर्मदायाः पुनस्तीरे क्षिप्रं सिद्धिरवाप्यते ॥ षड्भिर्वर्षैस्तु सिध्यंति ये तु सांख्यविदो जनाः ॥ १७ ॥ वैष्णवा ज्ञानसंपन्नास्तेऽपि सिद्ध्यंति चाऽग्रतः ॥ सर्वयोगविदो ये च समुद्रमिव सिंधवः ॥ १८ ॥ एकीभवंति कल्पांते योगे माहेश्वरे गताः ॥ सर्वेषामेव योगानां योगो माहेश्वरो वरः ॥ १९ ॥ तमासाद्य विमुच्यंते येऽपि स्युः पापयोनयः ॥ शिवमर्च्य नदीकूले जायंते ते न योनिषु ॥ २० ॥ गतिरेषा दुरारोहा सर्वपापक्षयंकरी ॥ मुच्यंते मंक्षु संसाराद्देवामाश्रित्य जंतवः ॥ २१ ॥ तस्मात्स्नायी भवेन्नित्यं तथा भस्मविलेपनः ॥ नर्मदातीरमासाद्य क्षिप्रं सिद्धिमवाप्नुयात् ॥ २२ ॥ त्रिकालं पूजयेच्छांतो यो नरो लिंगमादरात् ॥ सर्वरोगविनिर्मुक्तः स याति परमां गतिम् ॥ २३ ॥ षड्भिः सिद्ध्यति मासैस्तु यद्यपि स्यात्स पाप कृत् ॥ ये पुनः शुद्धमनसो मासैः शुध्यंति ते त्रिभिः ॥ २४ ॥ यथा दिनकरस्पृष्टं हिमं शैलाद्विशीर्यते ॥ तद्वद्विलीयते पापं स्पृष्टं भस्मकणैः शुभैः ॥ २५ ॥ सद्योजातादियुक्तेन भस्मना ये समुक्षिताः ॥ सूर्यवद्विमला भांति द्विजा रुद्रपरायणाः ॥ २६ ॥ वैनतेयभयत्रस्ता यथा नश्यंति पन्नगाः॥ तद्वत्पापानि नश्यंति भस्मनाऽभ्युक्षितानि ह ॥ २७ ॥ नर्मदातोयपूतेन भस्मनोद्धूलयंति ये ॥ सद्यस्ते पापसंघाच्च मुच्यंते नाऽत्र संशयः ॥ ॥ २८ ॥ व्रतं पाशुपतं भक्त्या यथोक्तं पालयंति ये ॥ शूद्रान्नेन विहीनास्तु ते यांति परमां गतिम् ॥ २९ ॥ अमृतं ब्राह्मणस्याऽन्नं क्षत्रियान्नं पयः स्मृतम् ॥ वैश्यान्नमन्नमेव स्याच्छूद्रान्नं रुधिरं स्मृतम् ॥ ३० ॥ शूद्रान्नरससंपुष्टा ये म्रियंते द्विजोत्तमाः ॥ ते तपोज्ञानहीनास्तु काका गृध्रा भवंति ते ॥ ३१ ॥ दुष्कृतं हि मनुष्याणामन्नमाश्रित्य तिष्ठति ॥ यो यस्यान्नं समश्नाति स तस्याश्नाति किल्बिषम् ॥ ३२ ॥ विशेषाद्यतिधर्मेण तपोलौल्यं समाश्रिताः ॥ नरकं यान्त्यसंदिग्धमित्येवं शंकरोऽब्रवीत् ॥ ३३ ॥ ईदृग्रूपाश्च ये विप्राः पाशुपत्ये व्यवस्थिताः ॥ ते महत्पापसंघातं दहंत्येव न संशयः ॥ ३४ ॥ विडंबेन च संयुक्ता लौलुप्येन च पीडिताः ॥ असंभाष्या असंग्राह्या इत्येवं श्रुतिनोदना ॥ ३५ ॥ मातापितृकृतैर्दोषैरन्ये केचित्स्वकर्मजैः ॥ नष्टा ज्ञानावलेपेन अहंकारेण चाऽपरे ॥ ३६ ॥ शांकरे प्रस्थिता धर्मे ये स्मृत्यर्थबहिष्कृताः ॥ क्लिश्यमानास्तु कालेन ते यांति परमां गतिम् ॥ ३७ ॥ अश्रद्दधानाः पुरुषा मूर्खा दंभविवर्द्धिताः ॥ न सिद्ध्यंति दुरात्मानः कुदृष्टांतार्थकीर्तनाः ॥ ३८ ॥ महाभाग्येऽपि तीर्थस्य शांकरं व्रतमास्थिताः ॥ वियोनिं यांत्यसंदिग्धं लौलुप्येन समन्विताः॥३९॥न तीर्थैर्न च दानैश्च दुष्कृतं हि विलुप्यते॥ अज्ञानाच्च प्रमादाच्च कृतं पापं विन

१ उक्तम्—इ० पा० । २ ते च दृष्टाश्च दहंते भवंत्येके न संशयः—इ० पा० ।

श्यति ॥ ४० ॥ एवं ज्ञात्वा तु विधिना वर्तितव्यं द्विजातिभिः ॥ परं ब्रह्म जपद्भिश्च वर्त्तितव्यं मुहुर्मुहुः ॥४१॥ ऊर्ध्वरूपं विरूपाक्षं योधीते रुद्रमेव
च ॥ ईशानं पश्यते साक्षात्षण्मासात्संगवर्जितः ॥४२॥ संहिताया दशावृत्तीर्यः करोति सुसंयतः ॥ नर्मदातटमाश्रित्य स मुच्येत्सर्वपातकैः ॥ ४३॥
पुराणसंहितां वापि शैवीं वा वैष्णवीमपि ॥ यः पठेन्नर्मदातीरे शिवाग्रे स शिवात्मकः ॥ ४४ ॥ आभूतसंक्षयं यावत्स्वर्गलोके महीयते ॥ संसारव्य
सनं हातुं पुरा प्रोक्तं तु नंदिना ॥ ४५ ॥ देवर्षिसिद्धगंधर्वसमवाये शिवालये ॥ नंदिगीतामिमां राजञ्छृणुष्वैकमनाः शुभाम् ॥ ४६ ॥ स्वर्गमोक्ष
प्रदां पुण्यां संसारभयनाशिनीम् ॥ ४७ ॥ संसारगह्वरगुहां प्रविहातुमेतां चेदिच्छथ प्रतिपदं भवतापखिन्नाः ॥ नानाविधैर्निजकृतैर्बहुकर्मपाशैर्बद्धाः
सुखाय शृणुतैकहितं मयोक्तम् ॥ ४८ ॥ शक्र वक्रगतिं मा गा मा कृथा यम यातनाम् ॥ चेतः प्रचेतः शमय लौलुप्यं त्यज वित्तप ॥ ४९ ॥ दीना
नाथविशिष्टेभ्यो धनं सर्वं परित्यज ॥ यदि संसारजलधेर्वीचीप्रेंखोल्लनातुरः ॥ ५० ॥ जन्मोद्विग्नं मृतेस्त्रस्तं ग्रस्तं कामादिभिर्नरम् ॥ त्रस्तं यो न
यमादिभ्यः पिनाकी पाति पावनः ॥५१॥ मा धेहि गर्वं कीनाश हास्यं यास्यसि पीडयन् ॥ प्राणिनं सर्वशरणं तद्भावि शरणं तव ॥ ५२ ॥ कालः
करालको बालः को मृत्युः को यमाधमः ॥ शिवविष्णुपराणां हि नराणां किं भयं भवेत् ॥ ५३ ॥ भवभारार्तजंतूनां रेवातीरनिवासिनाम् ॥
भर्गश्च भगवांश्चैव भवभीतिविभेदनौ ॥ ५४ ॥ शिवं भज शिवं ध्याय शिवं स्तुहि शिवं यज ॥ शिवं नम वराक त्वं ज्ञानं मोक्षं यदीच्छसि ॥५५॥
पठ पंचाननं शास्त्रं मंत्रं पंचाक्षरं जप ॥ धेहि पंचात्मकं तत्त्वं यज पंचाननं परम् ॥ ५६ ॥ किं तैः कर्मगणैः शोच्यैर्नानाभावविशेषितैः ॥ यदि
पंचाननः श्रीमान्सेव्यते सर्वथा शिवः ॥ ५७ ॥ किं संसारगजोन्मत्तबृंहितैर्निभृतैरपि ॥ यदि पंचाननो देवो भावगंधोपसेवितः ॥ ५८ ॥ रे मूढ
किं विषादेन प्राप्य कर्मकदर्थनाम् ॥ भवानीवल्लभं भीमं जप त्वं भयनाशनम् ॥ ५९ ॥ नर्मदातीरनिलयं दुःखौघविलयंकरम् ॥ स्वर्गमोक्षप्रदं
भर्गं भज मूढ सुरेश्वरम् ॥ ६० ॥ विहाय रेवां सुरसिंधुसेव्यां तत्तीरसंस्थं च हरं हरिं च ॥ उन्मत्तवद्भावविवर्जितस्त्वं क यासि रे मूढ दिगंतराणि ॥
॥ ६१ ॥ भज रेवाजलं पुण्यं यज रुद्रं सनातनम् ॥ जप पंचाक्षरीं विद्यां व्रज स्थानं च वांछितम् ॥ ६२ ॥ क्लेशयित्वा निजं कायमुपायैर्बहुभि
॥ १३ ॥ स्तु किम् ॥ भज रेवां शिवं प्राप्य सुखसाध्यं परं पदम् ॥ ६३ ॥ एवं कैलासमासाद्य नंदी स शिवसन्निधौ ॥ जगौ यल्लोकपालानां तन्मयोक्तं ॥१८७॥
तवाधुना ॥ ६४ ॥ ॥ मार्कंडेय उवाच ॥ ॥ स्नानदानपरो यस्तु नित्यं धर्ममनुव्रतः ॥ नर्मदातीरमाश्रित्य मुच्यते सर्वपातकैः ॥ ६५ ॥

१ स्यातव्यं यतमानस्तैः—इ०पा० । २ सत्रः संसिध्यते—इ०पा० ।

विधिहीनो जपेन्नित्यं वेदान्सर्वाञ्छतं समाः ॥ मृत्युलाङ्गलजाप्येन समो योऽप्यधिको गुणैः ॥ ६६ ॥ बीजयोन्यविशुद्धस्तु यथा रुद्रं न विंदति ॥
तथा लाङ्गलमंत्रोऽपि न तिष्ठति गतायुषि ॥ ६७ ॥ गायत्रीजपसंयुक्तः संयमी ह्यधिको गुणैः॥ अग्निमीळे इषेत्वो वा अग्न आयाहि नित्यदा ॥६८॥
शन्नो देवीति कूलस्थो जपेन्मुच्येत किल्बिषैः ॥ ६९ ॥ सांगोपांगांस्तथा वेदाञ्जपन्नित्यं समाहितः ॥ न तत्फलमवाप्नोति गायत्र्या संयमी यथा
॥ ७० ॥ रुद्राध्यायं सकृज्जप्त्वा विप्रो वेदसमन्वितः ॥ मुच्यते सर्वपापेभ्यो विष्णुलोकं स गच्छति ॥ ७१ ॥ अन्यद्वै जप्य संस्थानं
सूक्तमारण्यकं तथा ॥ मुच्यते सर्वपापेभ्यो विष्णुलोकं स गच्छति ॥ ७२ ॥ यत्किंचित्क्रियते जाप्यं यच्च दानं प्रदीयते ॥ नर्म
दाजलमाश्रित्य तत्सर्वं चाक्षयं भवेत् ॥ ७३ ॥ एवंविधैर्व्रतैर्नित्यं नर्मदां ये समाश्रिताः ॥ ते मृता वैष्णवं यांति पदं वा शैवम
व्ययम् ॥ ७४ ॥ सत्यलोकं नराः केचित्सूर्यलोकं तथापरे ॥ अप्सरोगणसंवीता यावदाभूतसंप्लवम् ॥ ७५ ॥ एवं वै वर्तमाने
स्मिँल्लोके तु नृपपुंगव ॥ ऋषीणां दशकोट्यस्तु कुरुक्षेत्रनिवासिनाम् ॥ ७६ ॥ मया सह महाभाग नर्मदातटमाश्रिताः ॥
फलमूलकृताहारा अर्चयंतः स्थिताः शिवम् ॥ ७७ ॥ तत्र वर्षशतं दिव्यं कालसंख्यानुमानतः ॥ षड्विंशतिसहस्राणि तानि मानुषसंख्यया ॥
॥ ७८ ॥ ततस्तस्यामतीतायां संध्यायां नृपसत्तम ॥ शेषं मानुष्यमेकं तु काले वर्षशतं स्थितम् ॥ ७९ ॥ ततोऽभवदनावृष्टिर्लोकक्षयकरी
तदा ॥ यया यातं जगत्सर्वं क्षयं भूयो हि दारुणम् ॥ ८० ॥ ये पूर्वमिह संसिद्धा ऋषयो वेदपारगाः ॥ तेषां प्रभावाद्भगवान्ववर्ष बलवृत्रहा ॥ ८१ ॥
महती भूरिसलिला समंताद्वृष्टिराहिता ॥ ततो वृष्ट्यां तु तेषां वै वर्तनं समजायत ॥ ८२ ॥ श्यामाकेंगुदबिल्वाद्यैर्नर्मदातीरमाश्रितैः ॥ नीयते स
महान्कालो महासिद्धिमभीप्सुभिः ॥ ८३ ॥ पुनर्युगांते संप्राप्ते किंचिच्छेषे कलौ युगे॥ निःशेषमभवत्सर्वं शुष्कं स्थावरजंगमम् ॥ ८४ ॥
निर्वृक्षौषधगुल्मं च तृणवीरुद्विवर्जितम् ॥ अनावृष्टिहतं सर्वं भूमण्डलमभूत्कृशम् ॥ ८५ ॥ ततस्ते ऋषयः सर्वे क्षुत्तृषार्ताः सहस्रशः ॥ युगस्वभाव
माविष्टा हीनसत्त्वाभवन्नृप ॥ ८६ ॥ नष्टहोमस्वधाकारे युगांते समुपस्थिते ॥ किं कार्यं क्व नु यास्यामः कोऽस्माकं शरणं भवेत् ॥ ८७ ॥
तानहं प्रत्युवाचेदं मा भैष्टेति पुनःपुनः ॥ ईदृग्विधा मया दृष्टा बहवः कालपर्ययाः ॥ ८८ ॥ नर्मदातीरमाश्रित्य ते सर्वे गमिता मया ॥

१ कूलस्थः—रेवातीरस्थ—इत्यर्थः । जपयज्ञं कुर्वन् इति यावत् । २ पातकैः—इ० पा० । ३ नर्मदाजलसंस्थितः—इ० पा० । ४ समाशते व्यतीते तु वर्षे मानुष्यके तदा—इ० पा० । ५ येन तात जगत्सृष्टं भूयो याति सचराचरम्—इ० पा० । ६ चतुर्भिर्वा त्रिभिर्वापि वर्षैर्वा दृष्टिरागमी—इ० पा० । ७ तेन सिद्धिमुपागताः—इ०पा० । ८ हीनसत्त्वाः—अभवन्—इति पदच्छेदः । सन्धिरार्षः ।

एषा हि शरणं देवी संप्राप्ते हि युगक्षये ॥ ८९ ॥ नान्या गतिरिहास्माकं विद्यते द्विजसत्तमाः ॥ जनित्री सर्वभूतानां विशेषेण द्विजोत्तमाः ॥९०॥
पितामहा ये पितरो ये चान्ये प्रपितामहाः ॥ ते समस्ता गताः स्वर्गं समाश्रित्य महानदीम् ॥ ९१ ॥ भृग्वाद्याः सप्त ये त्वासन्मम पूर्वपिता
महाः ॥ धौमृणी च महाभागा मम भार्या शुचिस्मिता ॥ मनस्वती च या माता भार्गवोऽङ्गिरसस्तथा ॥ ९२ ॥ पुलस्त्यः पुलहश्चैव वसिष्ठा
त्रेयकाश्यपाः ॥ तथान्ये च महाभागा नियमव्रतचारिणः ॥ अन्ये च शतसाहस्रा अत्र सिद्धिं समागताः ॥ ९३ ॥ तस्मादियं महाभागा न
मोक्तव्या कदाचन ॥ नान्या काचिन्नदी शक्ता लोकत्रयफलप्रदा ॥ ९४ ॥ द्वंद्वैरनेकैर्बहुभिः क्षुत्तृषाद्यैर्महाभयैः ॥ मुच्यंते ते नराः सद्यो नर्मदा
तीरवासिनः ॥ ९५ ॥ तस्मात्सर्वप्रयत्नेन सेवितव्या सरिद्वरा ॥ वांछद्भिः परमं श्रेय इह लोके परत्र च ॥ ९६ ॥ इति श्रीस्कांदे महापुराण एका
शीतिसाहस्र्यां संहितायां पञ्चम आवन्त्यखण्डे रेवाखण्डे श्रीनर्मदामाहात्म्यवर्णनंनाम एकादशोऽध्यायः ॥ ११ ॥ ॥ छ ॥ ॥ श्रीमार्कंडेय
उवाच ॥ ॥ एतच्छ्रुत्वा वचो राजन्संहृष्टा ऋषयोऽभवन् ॥ नर्मदां स्तोतुमारब्धाः कृतांजलिपुटा द्विजाः ॥ १ ॥ नमोऽस्तु ते पुण्यजले नमो म
करगामिनि ॥ नमस्ते पापमोचिन्यै नमो देवि वरानने ॥२॥ नमोऽस्तु ते पुण्यजलाश्रये शुभे विशुद्धसत्त्वे सुरसिद्धसेविते ॥ नमोस्तु ते तीर्थगणै
र्निषेविते नमोऽस्तु रुद्रांगसमुद्भवे वरे ॥ ३ ॥ नमोऽस्तु ते देवि समुद्रगामिनि नमोस्तु ते देवि वरप्रदे शिवे ॥ नमोस्तु लोकद्वयसौख्यदायिनि
ह्यनेकभूतौघसमाश्रितेऽनघे ॥ ४ ॥ सरिद्वरे पापहरे विचित्रिते गन्धर्वयक्षोरगसेवितांगे ॥ सनातनि प्राणिगणानुकंपिनि मोक्षप्रदे देवि विधेहि
शं नः ॥५॥ महागजौघैर्महिषैर्वराहैः संसेविते देवि महोर्मिमाले ॥ नताः स्म सर्वे वरदे सुखप्रदे विमोचयास्मान्पशुपाशबन्धात् ॥ ६ ॥ पापैरनेकैर
शुभैर्विबद्धा भ्रमंति तावन्नरकेषु मर्त्याः ॥ महानिलोद्धूततरंगभूतं यावत्त्वांभो हि न संस्पृशंति ॥ ७ ॥ अनेकदुःखौघभयार्दितानां पापैरनेकैरभिवे
ष्टितानाम् ॥ गतिस्त्वमंभोजसमानवक्त्रे द्वंद्वैरनेकैरपि संवृतानाम् ॥ ८ ॥ नद्यश्च पूता विमला भवन्ति त्वां देवि संप्राप्य न संशयोऽत्र ॥ दुःखा
तुराणामभयं ददासि शिष्टैरनेकैरभिपूजितासि ॥ ९ ॥ स्पृष्टं करैश्चन्द्रमसो रवेश्च तदेव दद्यात्परमं पदं तु ॥ यत्रोपलाः पुण्यजलाप्लुतास्ते शिवत्व
मायांति किमत्र चित्रम् ॥ १० ॥ भ्रमंति तावन्नरकेषु मर्त्या दुःखातुराः पापपरीतदेहाः ॥ महानिलोद्धूततरंगभंगं यावत्त्वांभो न हि संश्रयंति ॥
॥११॥ म्लेच्छाः पुलिंदास्त्वथ यातुधानाः पिबंति येऽम्भस्तव देवि पुण्यम् ॥ मुक्ता भवन्तीह भयात्तु घोरान्निःसंशयं तेऽपि किमत्र चित्रम् ॥१२॥

१ देवी–इ० पा० ।

सरांसि नद्यः क्षयमभ्युपेता घोरे युगेस्मिन्हि कलौ प्रदूषिते ॥ त्वं भ्राजसे देवि जलौघपूर्णा दिवीव नक्षत्रपथे च गंगा ॥१३॥ तव प्रसादाद्वरदे वरिष्ठे कालं यथेमं परिपालयित्वा ॥ यामोऽथ रुद्रं तव सुप्रसादाद्वयं तथा त्वं कुरु वै प्रसादम् ॥१४॥ गतिस्त्वमंबेव पितेव पुत्रांस्त्वं पाहि नो यावदिमं युगांतम् ॥ काले त्वनावृष्टिहतं सुघोरं यावत्तरामस्तव सुप्रसादात् ॥ १५ ॥ पठंति ये स्तोत्रमिदं द्विजेंद्राः शृण्वंति ये चापि नराः प्रशांताः ॥ ते यांति रुद्रं वृषसंयुतेन यानेन दिव्याम्बरभूषिताश्च ॥ १६ ॥ ये स्तोत्रमेतत्सततं पठंति स्नात्वा तु तोये खलु नर्मदायाः ॥ अन्ते हि तेषां सरिदुत्तमेयं गतिं विशुद्धामचिराद्ददाति ॥ १७ ॥ प्रातः समुत्थाय तथा शयानो यः कीर्तयेतानुदिनं स्तवं च ॥ स मुक्तपापः सुविशुद्धदेहः समाश्रयं याति महेश्वरस्य ॥ १८ ॥ इति श्रीस्कांदे महापुराण एकाशीतिसाहस्र्यां संहितायां पंचम आवन्त्यखण्डे रेवाखण्डे श्रीनर्मदा माहात्म्ये नर्मदास्तोत्रकथनंनाम द्वादशोऽध्यायः ॥ १२ ॥ ॥ छ ॥ ॥ श्रीमार्कंडेय उवाच[1]॥ ॥ एवं भगवती पुण्या स्तुता सा मुनिपुंगवैः ॥ चिंतयामास सर्वेषां दास्यामि वरमुत्तमम् ॥ १ ॥ ततः प्रसुप्तांस्ताञ्ज्ञात्वा रात्रौ देवी जगाम ह ॥ एकैकस्य ऋषेः स्वप्ने दर्शनं चारुहासिनी ॥ ॥ २ ॥ ततोऽर्धरात्रे संप्राप्त उत्थिता जलमध्यतः ॥ विमलांबरसंवीता दिव्यमालाविभूषिता ॥ ३ ॥ धृतातपत्रा सुश्रोणी पद्मरागविभूषिता ॥ जगाद माभैरिति तानेकैकं तु पृथक्पृथक् ॥ ४ ॥ वसध्वं मम पार्श्वे तु भयं त्यक्त्वा क्षुधादिजम् ॥ ५ ॥ एवमुक्त्वा तदा देवी स्वप्नांते तान्महामुनीन् ॥ जगामादर्शनं पश्चात्प्रविश्य जलमात्मिकम् ॥ ६ ॥ ततः प्रभाते मुनयो मिथ ऊचुर्मुदान्विताः ॥ तथा दृष्टा मया दृष्टा स्वप्ने देवी सुदर्शना ॥७॥ अभयं दत्तमस्माकं सिद्धिश्चाप्यचिरेण तु ॥ प्रशस्तं दर्शनं तस्या नर्मदाया न[2]संशयः ॥८॥ अथान्यदिवसे राजन्मत्स्यानां रूपमुत्तमम्॥ पश्यंति सपरीवाराः स्वकीयाश्रमसन्निधौ ॥ ९ ॥ तान्दृष्ट्वा विस्मयाविष्टा मत्स्यांस्तत्र महर्षयः ॥ पूजयामासुरव्यग्रा हव्यकव्येन देवताः ॥ १० ॥ तांन्मत्स्यसंघान्संप्राप्य महादेव्याः प्रसादतः॥ सपुत्रदारभृत्यास्ते वर्तयन्ति पृथक्पृथक ॥ ११ ॥ दिनेदिने तथाप्येवमाश्रमेषु[3]द्विजातयः॥ मत्स्यानां संचयं दृष्ट्वा विस्मिताश्चाभवंस्तदा ॥ १२ ॥ मृतांस्तांस्तु सुपुष्टांगान्पाठीनांश्च विशेषतः ॥ द्वारेद्वारे चाश्रमाणां तापसानां युधिष्ठिर ॥ १३ ॥ हृष्टपुष्टास्तदा सर्वे नर्मदातीरवासिनः ॥ ऋषयस्ते भयं सर्वे तत्यजुः क्षुत्तृषोद्भवम् ॥१४॥ ते जपंतस्तपंतश्च तिष्ठंति भरतर्षभ ॥ अर्चयंति पितृन्देवान्नर्मदातटमाश्रिताः ॥१५॥ तैर्जपद्भिस्तपद्भिश्च सततं द्विजसत्तमैः॥ भ्राजते सा सरिच्छ्रेष्ठा ताराभिर्द्यौर्ग्रहैरिव ॥१६॥ तत्र तैर्बहुलैः शुभ्रैर्ब्राह्मणैर्वेदपारगैः॥

---

१ यास्याम मोक्षम्–इ० पा० । २ रात्रावशांतिः । ३ सा जलाशयात्–इ० पा० । ४ स्निग्धैस्तैर्मत्स्यशकलैः संसिद्धैः परितापितैः–इ०पा० ।

नर्मदा धर्मदा पूर्वं संविभक्ता यथाक्रमम् ॥ १७ ॥ ऋषिभिर्दशकोटीभिर्नर्मदातीरवासिभिः ॥ विभक्तेयं विभक्तांगी नर्मदा शर्मदा नृणाम् ॥ १८ ॥
यज्ञोपवीतैश्च शुभैरक्षसूत्रैश्च भारत ॥ कूलद्वये महापुण्या नर्मदोदधिगामिनी ॥१९॥ पृथगायतनैः शुभैर्लिंगैर्वालुकमृन्मयैः ॥ भ्राजते या सरिच्छ्रेष्ठा
नक्षत्रैरिव शर्वरी ॥ २० ॥ एवं त ऋषयः सर्वे तर्पयंतः सुरान्पितॄन् ॥ न्यवसन्नर्मदातीरे यावदाभूतसंप्लवम् ॥ २१ ॥ किंचिद्गते ततस्तस्मिन्घोरे वर्ष
शताधिके ॥ अर्धरात्रे तदा कन्या जलादुत्तीर्य भारत ॥ २२ ॥ विद्युत्पुंजसमाभासा व्यालयज्ञोपवीतिनी ॥ त्रिशूलाग्रकरा सौम्या तानुवाच
ऋषींस्तदा ॥ २३ ॥ आगच्छध्वं मुनिगणा विशध्वं मामयोनिजाम् ॥ समेताः पुत्रदारैश्च ततः सिद्धिमवाप्स्यथ ॥ २४ ॥ यस्ययस्य हि या
वांछा तस्य तां तां ददाम्यहम् ॥ विष्णुं ब्रह्माणमीशानमन्यं वा सुरसुत्तमम् ॥ २५ ॥ तत्र सर्वान्नयिष्यामि प्रसन्ना वरदा ह्यहम् ॥ प्राणायामपरा
भूत्वा मां विशध्वं समाहिताः ॥ २६ ॥ सह पुत्रैश्च दारैश्च त्यक्त्वाश्रमपदानि च ॥ कालक्षेपो न कर्तव्यः प्रलयोऽयमुपस्थितः ॥ २७ ॥ संहारः
सर्वभूतानां कल्पदाहः सुदारुणः ॥ एकाहमभवं पूर्वं महाघोरे जनक्षये ॥ २८ ॥ शेषा नद्यः समुद्राश्च सर्व एव क्षयंगताः ॥ वरदानान्महेशस्य
तेनाहं न क्षयं गता ॥ २९ ॥ अमृतः शाश्वतो देवः स्थाणुरीशः सनातनः ॥ स पूजितः प्रार्थितो वा किं न दद्याद्द्विजोत्तमाः ॥ ३० ॥
एवमुक्त्वा ऋषीन्देवा प्रविवेश जलं ततः ॥ करात्तशूला सा देवी व्यालयज्ञोपवीतिनी ॥ ३१ ॥ ततस्ते तद्वचः श्रुत्वा विस्मयापन्नमानसाः ॥
अभिवंद्य च मां सर्वे क्षामयंतः पुनःपुनः ॥ ३२ ॥ क्षम्यतां नो यदुक्तं हि वसतां तव संश्रये ॥ गृहांस्त्यक्त्वा महाभागाः सशिष्याः सह बांधवाः
॥ ३३ ॥ जप्त्वा चैकाक्षरं ब्रह्म हृदि ध्यात्वा महेश्वरम् ॥ स्नात्वा च मन्त्रपूताभिरथ चाद्भिर्जितव्रताः ॥३४॥ विविशुर्नर्मदातोयं सपक्षा इव पर्वताः ॥
द्योतयंतो दिशः सर्वाः कुशहस्ताः सहाग्नयः ॥ ३५ ॥ गतेषु तेषु राजेंद्र अहमेकः स्थितस्तदा ॥ अमरेशं समासाद्य पूजयन्नर्मदां नदीम् ॥ ३६ ॥
अनुभूताः सप्तकल्पा मायूराद्या मया नृप ॥ प्रसादाद्देवदेवस्य सर्वे रेवया सह भारत ॥३७॥ जन्मतोद्य दिनं यावन्न जानेऽस्याः पुरास्थितिम् ॥ ३८ ॥
इयं हि शांकरी शक्तिः कला शंभोरिलाह्वया ॥ नर्मदा दुरितध्वंसकारिणी भवतारिणी ॥ ३९ ॥ यदाहमपि नाभूवं पुराकल्पेषु पांडव ॥ चतुर्दशसु
कल्पेषु तेष्वियं सुखसंस्थिता ॥४०॥ चतुर्दश पुरा कल्पा न मृता येषु नर्मदा ॥ तानहं संप्रवक्ष्यामि देवी प्राह यथा मम ॥ ४१ ॥ कापिलं प्रथमं

१ उत्तरीयैः शुभैस्तत्र चाक्षसूत्रैश्च–इ० पा० । २ पश्चिमोदधिगामिनी–इ० पा० । ३ घोरैवाक्ता–इ० पा० । ४ एवं नर्मदातटं यावदर्चयन्तश्च देवताः–इ० पा० । ५ मम जले सर्वे च द्विजसत्तमाः–इ० पा० । ६ गताः सर्वे वसुंधराम्–इ० पा० । ७ वै महेश्वरम्–इ० पा० ।

विद्धि प्राजापत्यं द्वितीयकम् ॥ ब्राह्मं सौम्यं च सावित्रं बार्हस्पत्यं प्रभासकम् ॥ ४२ ॥ माहेंद्रमाग्निकल्पं च जयंतं मारुतं तथा ॥ वैष्णवं बहुरूपं च ज्योतिषं च चतुर्दशम् ॥ ४३ ॥ एते कल्पा मया ख्याता न मृता येषु नर्मदा ॥ माथुरं पंचदशमं कौर्मं चैवात्र षोडशम् ॥ ४४ ॥ बकं मात्स्यं च पाद्मं च वटकल्पं च भारत ॥ एकविंशतिमं चैतं वाराहं सांप्रतीनकम् ॥ ४५ ॥ इमे सप्त मया साकं रेवया परिशीलिताः ॥ एकविंशतिकल्पास्तु नर्मदायाः शिवांगतः ॥ ४६ ॥ संजातााया नृपश्रेष्ठ मया दृष्टा ह्यनेकशः ॥ कथिता नृपतिश्रेष्ठ भूयः किं कथयामि ते ॥ ४७ ॥ इति श्रीस्कांदे महापुराण एकाशीतिसाहस्र्यां संहितायां पञ्चम आवंत्यखंडे रेवाखण्डे नर्मदामाहात्म्य एकविंशतिकल्पकथानकवर्णनंनाम त्रयोदशोऽध्यायः ॥ १३ ॥

॥ छ ॥ ॥ युधिष्ठिर उवाच ॥ ॥ ततस्त ऋषयः सर्वे महाभागास्तपोधनाः ॥ गतास्तु परमं लोकं ततः किं जातमद्भुतम् ॥ १ ॥ ॥ श्रीमार्कंडेय उवाच ॥ ॥ ततस्तेषु प्रयातेषु नर्मदातीरवासिषु ॥ बभूव रौद्रसंहारः सर्वभूतक्षयंकरः ॥ २ ॥ कैलासशिखरस्थं तु महादेवं सनातनम् ॥ ब्रह्माद्याः प्रास्तुवन्देवमृग्यजुःसामभिः शिवम् ॥ ३ ॥ संहर त्वं जगद्देव सदेवासुरमानुषम् ॥ प्राप्तो युगसहस्रांतः कालः संहरणक्षमः ॥ ४ ॥ मद्रूपं तु समास्थाय त्वया चैतद्विनिर्मितम् ॥ वैष्णवीं मूर्तिमास्थाय त्वयैतत्परिपालितम् ॥ ५ ॥ एका मूर्तिस्त्रिधा जाता ब्राह्मी शैवी च वैष्णवी ॥ सृष्टिसंहाररक्षार्थं भवेदेवं महेश्वर ॥ ६ ॥ एतच्छ्रुत्वा वचस्तथ्यं विष्णोश्च परमेष्ठिनः ॥ सगणः सपरीवारः सह ताभ्यां सहोमया ॥ ७ ॥ स लोकान्विभिद्येमान्भगवान्नीललोहितः ॥ भूराद्यब्रह्मलोकांतं भित्त्वांडं परतः परम् ॥ ८ ॥ शैवं पदमजं दिव्यमाविशत्सह तैर्विभुः ॥ न तत्र वायुर्नाकाशं नाग्निस्तत्र न भूतलम् ॥९॥ यत्र संतिष्ठते देव उमया सह शंकरः ॥ न सूर्यो न ग्रहास्तत्र न ऋक्षाणि दिशस्तथा ॥१०॥ न लोकपाला न सुखं न च दुःखं नृपोत्तम ॥११॥ ब्राह्मं पदं यत्कवयो वदंति शैवं पदं यत्कवयो वदंति ॥ क्षेत्रज्ञमीशं प्रवदंति चान्ये सांख्याश्च गायंति किलादिमोक्षम् ॥ १२ ॥ यद्ब्रह्म आद्यं प्रवदंति केचिद्यं सर्वमीशानमजं पुराणम् ॥ तमेकरूपं तमनेकरूपमरूपमाद्यं परमव्ययाख्यम् ॥ १३ ॥ अवर्णमप्यर्थमनामगोत्रं तुर्यं पदं यत्कवयो वदंति ॥ ध्यानार्थविज्ञानमयं सुसूक्ष्ममात्मस्थमीशानवरं वरेण्यम् ॥१४॥ ततस्त्रयस्ते भगवन्तमीशं संप्राप्य संक्षिप्य भवंत्यथैकम् ॥ पृथक्स्वरूपैस्तु पुनस्त एव जगत्समस्तं परिपालयंति ॥ १५ ॥ संहारं सर्वभूतानां रुद्रत्वे कुरुते प्रभुः ॥ विष्णुत्वे पालयेल्लोकान्ब्रह्मत्वे सृष्टिकारकः ॥ १६ ॥ प्रकृत्या सह संयुक्तः कालो भूत्वा महेश्वरः ॥ विश्वरूपा महाभागा तस्य पार्श्वे व्यवस्थिता ॥ १७ ॥ यामाहुः प्रकृतिं तज्ज्ञाः

१ संहरस्व जनान्देवं देवासुरमहोरगान्–ह०पा० । १ एकं भवन्ति–एकरूपा भवन्ति–इत्यर्थः ।

पदार्थानां विचक्षणाः ॥ पुरुषत्वे प्रकृतित्वे च कारणं परमेश्वरः ॥ १८ ॥ तस्मादेतज्जगत्सर्वं समुद्भूतं चराचरम् ॥ तस्मिन्नेव लयं याति युगांते
समुपस्थिते ॥ १९ ॥ भगलिंगांकितं सर्वं व्याप्तं वै परमेष्ठिना ॥ भगरूपो भवेद्विष्णुर्लिंगरूपो महेश्वरः ॥ २० ॥ भाति सर्वेषु लोकेषु गीयते भूर्भुवा
दिषु ॥ प्रविष्टः सर्वभूतेषु तेन विष्णुर्भगः स्मृतः ॥ २१ ॥ विशनाद्विष्णुरित्युक्तः सर्वदेवमयो महान् ॥ भासनाद्गमनाच्चैव भगसंज्ञा प्रकीर्तिता ॥
॥ २२ ॥ ब्रह्मादिस्तंबपर्यंतं यस्मिन्नेति लयं जगत् ॥ एकभावं समापन्नं लिंगं तस्माद्विदुर्बुधाः ॥ २३ ॥ महादेवस्ततो देवीमाह पार्श्वे स्थितां
तदा ॥ संहरस्व जगत्सर्वं मा विलंबस्व शोभने ॥ २४ ॥ त्यज सौम्यमिदं रूपं सितचन्द्रांशुनिर्मलम् ॥ रौद्रं रूपं समास्थाय संहरस्व चराच
रम् ॥ २५ ॥ रौद्रैर्भूतगणैर्घोरैर्देवि त्वं परिवारिता ॥ जीवलोकमिमं सर्वं भक्षयस्वांबुजेक्षणे ॥ २६ ॥ ततोऽहं मर्दयिष्यामि प्लावयिष्ये
तथा जगत् ॥ कृत्वा चैकार्णवं भूयः सुखं स्वप्स्ये त्वया सह ॥ २७ ॥ ॥ श्रीदेव्युवाच ॥ ॥ नाहं देव जगच्चैतत्संहरामि महा
द्युते ॥ अंबा भूत्वा विचेष्टं न भक्षयामि भृशातुरम् ॥ २८ ॥ स्त्रीस्वभावेन कारुण्यं करोति हृदयं मम ॥ कथं वै निर्दहिष्यामि
जगदेतज्जगत्पते ॥ २९ ॥ तस्मात्त्वं स्वयमेवेदं जगत्संहर शंकर ॥ अथैवमुक्तस्तां देवीं धूर्जटिर्नीललोहितः ॥ ३० ॥ क्रुद्धो निर्भर्त्स
यामास हुंकारेण महेश्वरीम् ॥ ॐ हुंफट् त्वं स इत्याह कोपाविष्टैरथेक्षणैः ॥ ३१ ॥ हुंकारिता विशालाक्षी पीनोरुजघनस्थला ॥
तत्क्षणाच्चाभवद्रौद्रा कालरात्रीव भारत ॥ ३२ ॥ हुंकुर्वती महानादैर्नादयन्ती दिशो दश ॥ व्यवर्धत महारौद्रा विद्युत्सौदामिनी यथा ॥
॥ ३३ ॥ विद्युत्संपातदुष्प्रेक्ष्या विद्युत्संघातचंचला ॥ विद्युज्ज्वालाकुला रौद्रा विद्युदग्निनिभेक्षणा ॥ ३४ ॥ मुक्तकेशी [१]विशाला
क्षी कृशग्रीवा कृशोदरी ॥ व्याघ्रचर्माम्बरधरा व्यालयज्ञोपवीतिनी ॥ ३५ ॥ वृश्चिकैरग्निपुंजाभैर्गोनसैश्च विभूषिता ॥ त्रैलोक्यं पूरयामास
विस्तारेणोच्छ्रयेण च ॥ ३६ ॥ भासुरांगा तु संवृत्ता कृष्णसर्पैककुण्डला ॥ चित्रदण्डोद्यतकरा व्याघ्रचर्मोपसेविता ॥ ३७ ॥ व्यवर्धत महारौद्रा
जगत्संहारकारिणी ॥ सृक्किणी लेलिहाना च क्रूरफूत्कारकारिणी ॥ ३८ ॥ व्यात्तास्या घुर्घुरारावा जगत्संक्षोभकारिणी ॥ खेलद्भूतानुगा क्रूरा
निःश्वासोच्छ्वासकारिणी ॥ ३९ ॥ जाताट्टहासा दुर्नासा वह्निकुण्डसमेक्षणा ॥ प्रोद्यत्किलकिलारावा ददाह सकलं जगत् ॥ ४० ॥ दह्यमानाः

१ अक्षराधिक्यमर्थानुरोधात्सह्यम् । २ प्रददाह तदा घोरा कालरात्रिर्महाबला—इ०पा० ।

सुरास्तत्र पतंति धरणीतले ॥ पतंति यक्षगन्धर्वाः सकिन्नरमहोरगाः ॥ ४१ ॥ पतंति भूतसंघाश्च हाहाहेहेविराविणः ॥ झंझापातैः सनिर्घातै रुदितार्तस्वरैरपि ॥ ४२ ॥ व्याप्तमासीत्तदा विश्वं त्रैलोक्यं सचराचरम् ॥ संपतद्भिः पतद्भिश्च ज्वलद्भूतगणैर्मही ॥ ४३ ॥ जातैश्चटचटाशब्दैः पतद्भिर्गिरिसानुभिः ॥ तत्र रौद्रोत्सवे जाता रुद्रानंदविवर्धिनी ॥ ४४ ॥ विहिंसमाना भूतानि चर्वमाणाचरानपि ॥ तत्तद्गंधमुपादाय शिवाराव विराविणी ॥ ४५ ॥ गलच्छोणितधाराभिमुखा दिग्धकलेवरा ॥ चंडशीलाऽभवच्चण्डी जगत्संहारकर्मणि ॥ ४६ ॥ येऽपि प्राप्ता महर्लोकं भृग्वाद्याश्च महर्षयः ॥ तेऽपि नश्यंति शतशो ब्रह्मक्षत्रविशादयः ॥ ४७ ॥ देवासुरा भयत्रस्ताः सयक्षोरगराक्षसाः ॥ विशंति केपि पातालं लीयंते च गुहादिषु ॥ ४८ ॥ सा च देवी दिशः सर्वा व्याप्य मृत्युरिव स्थिता ॥ युगक्षयकरे काले देवेन विनियोजिता ॥ ४९ ॥ एकापि नवधा जाता दशधा दशधा तथा ॥ चतुःषष्टिस्वरूपा च शतरूपाट्टहासिनी ॥ ५० ॥ जज्ञे सहस्ररूपा च लक्षकोटितनुः शिवा ॥ नानारूपायुधाकारा नाना वादनचारिणी ॥ ५१ ॥ एवंरूपाऽभवद्देवी शिवस्याज्ञया नृप ॥ दिक्षु सर्वासु गगने विकटायुधशीलिनः ॥ ५२ ॥ रुंधंतो नश्यमानांस्ता न्गणा माहेश्वराः स्थिताः ॥ विचरंति तया सार्द्धं शूलपट्टिशपाणयः ॥ ५३ ॥ ततो मातृगणाः केचिद्विनायकगणैः सह ॥ व्यवर्धंत महारौद्रा जगत्संहारकारिणः ॥ ५४ ॥ ततस्तस्या व्यवर्धंत दंष्ट्राः कुन्देंदुसन्निभाः ॥ योजनानां सहस्राणि अयुतान्यर्बुदानि च ॥ ५५ ॥ दंष्ट्रावलिः कररुहाः क्रूरास्तीक्ष्णाश्च कर्कशाः ॥ वियद्दिशो लिखंत्येव सप्तद्वीपां वसुन्धराम् ॥ ५६ ॥ तस्या दंष्ट्राभिसंपातैश्चूर्णिता वनपर्वताः ॥ शिलासंचयसंघाता विशीर्यंते सहस्रशः ॥ ५७ ॥ हिमवान्हेमकूटश्च निषधो गंधमादनः ॥ माल्यवांश्चैव नीलश्च श्वेतश्चैव महागिरिः ॥ ५८ ॥ मेरुमध्यमिलापीठं सप्तद्वीपं च सार्णवम् ॥ लोकालोकेन सहितं प्राकंपत[1] नृपोत्तम ॥ ५९ ॥ दंष्ट्राशनिविस्पृष्टाश्च विशीर्यंते महाद्रुमाः ॥ उत्पातैश्च दिशो व्याप्ता घोररूपैः समंततः ॥ ६० ॥ तारा ग्रहगणाः सर्वे ये च वैमानिका गणाः ॥ शिवासहस्रैराकीर्णा महामातृगणैस्तथा ॥ ६१ ॥ सा चचार जगत्कृत्स्नं युगांते समुपस्थिते ॥ भ्रमद्भिश्च ब्रुवद्भिश्च क्रोशद्भिश्च समंततः ॥ ६२ ॥ प्रमथद्भिर्ज्वलद्भिश्च[2] रौद्रैर्व्याप्ता दिशो दश ॥ विस्तीर्णं शैलसंघातं विघूर्णित गिरिद्रुमम् ॥ ६३ ॥ प्रभिन्नगोपुरद्वारं केशशुष्कास्थिसंकुलम् ॥ प्रदग्धग्रामनगरं भस्मपुंजाभिसंवृतम् ॥ ६४ ॥ चिताधूमाकुलं सर्वं त्रैलोक्यं

१ प्राकंपन्त ततस्त्रस्ताः क्षुभिताश्च महार्णवाः—इ० पा० । २ धूमायद्भिः—इ० पा० ।

सचराचरम् ॥ हाहाकाराकुलं सर्वमहहस्वननिस्वनम् ॥ ६५ ॥ जगदेतदभूत्सर्वमशरण्यं निराश्रयम् ॥ ६६ ॥ इति श्रीस्कांदे महापुराण एका
शीतिसाहस्र्यां संहितायां पञ्चम आवंत्यखण्डे रेवाखण्डे नर्मदामाहात्म्ये कल्पानुकथने कालरात्रिकृतजगत्संहरणवर्णनंनाम चतुर्दशोऽध्या
यः ॥ १४ ॥ ॥ छ ॥ ॥ श्रीमार्कंडेय उवाच ॥ ॥ ततो मातृसहस्रैश्च रौद्रैश्च परिवारिता ॥ कालरात्रिर्जगत्सर्वं हरते दीप्तलोचना ॥ १ ॥
ततस्ता मातरो घोरा ब्रह्मविष्णुशिवात्मिकाः ॥ वार्ष्विंद्रानलकौबेरा यमतोयेशशक्तयः ॥ २ ॥ स्कन्दक्रोडनृसिंहानां विचरंत्यो भयानकाः ॥
चक्रशूलगदाखड्गवज्रशक्त्यृष्टिपट्टिशैः[1] ॥ ३ ॥ खट्वांगैरुल्मुकैर्दीप्तैर्व्यचरन्मातरः क्षये ॥ उमासंनोदिताः सर्वाः प्रधावंत्यो दिशो दश ॥ ४ ॥ तासां
चरणविक्षेपैर्हुंकारोद्गारनिस्वनैः ॥ त्रैलोक्यमेतत्सकलं विप्रदग्धं समंततः ॥ ५ ॥ हाहारवाक्रंदितनिस्वनैश्च प्रभिन्नरथ्यागृहगोपुरैश्च ॥ बभूव घोरा
धरणी समंतात्कपालकेशाकुलकर्बुरांगी[2] ॥ ६ ॥ यदेतच्छतसाहस्रं जंबूद्वीपं निगद्यते ॥ सर्वमेव तदुच्छन्नं समाधृष्य नृपोत्तम ॥ ७ ॥ जंबु शाकं
कुशं क्रौंचं गोमेदं शाल्मलिस्तथा ॥ पुष्करद्वीपसहिता ये च पर्वतवासिनः[3] ॥ ८ ॥ ते ग्रस्ता मृत्युना सर्वे भूतैर्मातृगणैस्तथा ॥ महा
सुरकपालैश्च मांसमेदोवसोत्कटैः ॥ ९ ॥ महानादपरैर्घोरैर्वारुणीगंधमोहितैः ॥ ज्वालासहस्रसंवीता विद्युज्ज्वलितकुण्डला ॥ १० ॥ रुधिरो
द्गारशोणांगी महामाया[4] सुभीषणा ॥ पिबंती रुधिरं तत्र महामांसवसाप्रिया ॥ ११ ॥ कपालहस्ता विकटा भक्षयन्ती सुरासु
रान् ॥ नृत्यन्ती च हसन्ती च विपरीता महारवा ॥ १२ ॥ त्रैलोक्यसंत्रासकरी विद्युत्संस्फोटहासिनी ॥ सप्तद्वीपसमुद्रांतां भक्षयित्वा च मेदि
नीम् ॥ १३ ॥ ततः स्वस्थानमगमद्यत्र देवो महेश्वरः ॥ नर्मदातीरमाश्रित्यावसन्मातृगणैः सह ॥ १४ ॥ अमराणां कटे तुंगे नृत्यन्ती हसिता
नना ॥ अमरा देवताः प्रोक्ताः शरीरं कटमुच्यते ॥ १५ ॥ तैः कटैरावृतो यस्मात्पर्वतोऽयं नृपोत्तम ॥ छिन्नभिन्नास्थिनिकरैर्वसामेदोस्रविप्लुतैः ॥
॥ १६ ॥ अमरंकट इत्येवं तेन प्रोक्तो मनीषिभिः ॥ महापवित्रो लोकेषु शंभुना स विनिर्मितः ॥ १७ ॥ नित्यं सन्निहितस्तत्र शंकरो ह्युमया
सह ॥ ततोऽहं नियतस्तत्र तस्य पादाग्रसंस्थितः ॥ १८ ॥ प्रह्वः प्रणतभावेन स्तौमि तं नीललोहितम् ॥ ततस्तालकसंपातैर्गणैर्मातृगणैः सह ॥
॥ १९ ॥ संप्रनृत्यति संहृष्टो मृत्युना सह शंकरः ॥ खट्वांगैरुल्मुकैश्चैव पट्टिशैः परिघैस्तथा ॥ २० ॥ मांसमेदोवसाहस्ता हृष्टा नृत्यन्ति संघशः ॥
वामना जटिला मुण्डा लंबग्रीवोष्ठमूर्द्धजाः ॥ २१ ॥ महाशिश्नोदरभुजा नृत्यन्ति च हसन्ति च ॥ विकृतैराननैर्घोरैर्भुजोल्बणमुखादिभिः ॥२२॥

१ तोमरैः—इ० पा० । २ कपालमालाकुलकेशमध्ये—इ० पा० । ३ पुष्करवासिनः—इ० पा० । ४ महाकाया—इ० पा० ।

अमरं कण्टकं चक्रुः प्राप्ते कालविपर्यये ॥ तेषां मध्ये महाघोरं जगत्सन्त्रासकारणम् ॥ २३ ॥ मृत्युं पश्यामि नृत्यन्तं तडित्पिंगलमूर्द्धजम् ॥ तस्य पार्श्वे स्थितां देवीं विमलांबरभूषिताम् ॥ २४ ॥ कुण्डलोद्घुष्टगंडां तां नागयज्ञोपवीतिनीम् ॥ विचित्रैरुपहारैश्च पूजयन्तीं महेश्वरम् ॥ २५ ॥ अपश्यं नर्मदां तत्र मातरं विश्ववंदिताम् ॥ नानातरंगां सावर्तां सुवेलार्णवसंनिभाम् ॥ २६ ॥ महासरः सरित्पातैरदृश्यां दृश्यरूपिणीम् ॥ वन्द्यमानां सुरैः सिद्धैर्मुनिसंघैश्च भारत ॥ २७ ॥ एतस्मिन्नन्तरे घोरां सप्तसप्तकसंज्ञिताम् ॥ महावीच्यौघफेनाढ्यां कुर्वन्तीं सजलं जगत् ॥ २८ ॥ दृष्टवान्नर्मदां देवीं मृगकृष्णांबरां पुनः ॥ सधूमाशनिनिर्ह्रादैर्वहंतीं सप्तधा तदा ॥ २९ ॥ इति संहारमतुलं दृष्टवान्राजसत्तम ॥ नष्टचंद्रार्ककिरणमभूदेतच्चराचरम् ॥ ३० ॥ महोत्पातसमुद्भूतं नष्टनक्षत्रमंडलम् ॥ अलातचक्रवत्तूर्णमशेषं भ्रामयंस्ततः ॥ ३१ ॥ विमानकोटिसंकीर्णः स किंनरमहोरगः ॥ महावातः सनिर्घातो येनाकंपच्चराचरम् ॥ ३२ ॥ रुद्रवक्त्रात्समुद्भूतः संवर्तोनाम विश्रुतः ॥ वायुः संशोषयामास विततन्सप्तसागरान् ॥ ३३ ॥ उज्वलितांगः कपिलाक्षमूर्द्धजो जटाकलापैरवबद्धमूर्द्धजः ॥ महारवो दीप्तविशालशूलधृक्स पातु युष्मांश्च दिनेदिने हरः ॥ ॥ ३४ ॥ शूली धनुष्मान्कवची किरीटी श्मशानभस्मोक्षितसर्वगात्रः ॥ कपालमालाकुलकण्ठनालो महाहिसूत्रैरवबद्धमौलिः ॥ ३५ ॥ स गोनसौघैः परिवेष्टितांगो त्रिशाग्निचन्द्रामरसिन्धुमौलिः ॥ पिनाकखट्वांगकरालपाणिः स कृत्तिवासा डमरुप्रणादः ॥ ३६ ॥ स सप्तलोकांतरनिःसृतात्मा महाभुजावेष्टितसर्वगात्रः ॥ नेत्रेण सूर्योदयसन्निभेन प्रवालकांकूरनिभोदरेण ॥ ३७ ॥ संध्याभ्ररक्तोत्पलपद्मरागसिन्दूरविद्युत्प्रकरारुणेन ॥ तप्तेन लिंगेन च लोचनेन चिक्रीडमानः स युगांतकाले ॥ ३८ ॥ हिरण्मयेनैव समुत्सृजन्स दण्डेन यद्वद्भगवान्समेरुः ॥ पादाग्रविक्षेपविशीर्णशैलः कुर्वञ्जगत्सोऽपि जगाम तत्र ॥ ३९ ॥ संहर्तुकामस्त्रिदिवं त्वशेषं प्रमुंचमानो विकृताट्टहासम् ॥ जहार सर्वं त्रिदिवं महात्मा संक्षोभयन्वै जगदीश एकः ॥ ४० ॥ तं देवमीशानमजं वरेण्यं दृष्ट्वा जगत्संहरणं महेशम् ॥ सा कालरात्रिः सह मातृभिश्च गणाश्च सर्वे शिवमर्चयन्ति ॥४१॥ नन्दी च भृंगी च गणादयश्च तं सर्वभूतं प्रणमंति देवम् ॥ जगद्धरं सर्वजनस्य कारणं हरं स्मराराातिमहर्निशं ते ॥ ४२ ॥ इति श्रीस्कांदे महापुराण एकाशीतिसाहस्र्यां पंचम आवन्त्यखण्डे रेवाखंडे नर्मदामाहात्म्ये सृष्टिसंहरणसंरंभवर्णनंनाम पंचदशोऽध्यायः ॥ १५ ॥ · ॥ छ ॥ ॥ श्रीमार्कंडेय उवाच ॥ ॥ समातृभिर्भूतगणैश्च घोरैर्वृतः समंतात्स ननर्त शूली ॥ गजेंद्रचर्मावरणे वसानः संहर्तुकामश्च जगत्समस्तम् ॥ १ ॥ मद

श्वरः सर्वसुरेश्वराणां मन्त्रैरनेकैरवबद्धमाली ॥ मेदोवसारक्तविचर्चितांगस्त्रैलोक्यदाहे प्रणनर्त शंभुः ॥ २ ॥ स कालरात्र्या सहितो महात्मा काले त्रिलोकीं सकलां जहार ॥ संवर्तकाख्यः सहभानुभावः शम्भुर्महात्मा जगतो वरिष्ठः ॥ ३ ॥ स विस्फुलिंगोत्करधूममिश्रं महोल्कवज्राशनिवाततुल्यम् ॥ ततोऽट्टहासं प्रमुमोच घोरं विवृत्य वक्त्रं वडवामुखाभम् ॥ ४ ॥ सहस्रवज्राशनिसंनिभेन तेनाट्टहासेन हरोद्गतेन ॥ आपूरितास्तत्र दिशो दशैव संक्षोभिताः सर्वमहार्णवाश्च ॥ ५ ॥ स ब्रह्मलोकं प्रजगाम शब्दो ब्रह्मांडभांडं प्रचचाल सर्वम् ॥ किमेतदित्याकुलचेतनास्ते वित्रस्तरूपा ऋषयो बभूवुः ॥ ६ ॥ प्रणम्य सर्वे सहसैव भीता ब्रह्माणमूचुः परमेश्वरेशम् ॥ भीताश्च सर्वे ऋषयस्ततस्ते सुरासुरैश्चैव महोरगैश्च ॥ ॥ ७ ॥ विद्युत्प्रभाभासुरभीषणांगः क एष चिक्रीडति भूतलस्थः ॥ कालानलं गात्रमिदं दधानो यस्याट्टहासेन जगद्विमूढम् ॥ ८ ॥ वित्रस्तरूपं प्रबभौ क्षणेन संहर्तुमिच्छेत्किमयं त्रिलोकीम् ॥ सार्धं त्वया सप्तभिरर्णवैश्च जनस्तपःसत्यमभिप्रयाति ॥ ९ ॥ संहर्तुकामो हि क एष देव एतत्समस्तं कथयाप्रमेय ॥ न दृष्टमेतद्विषमं कदापि जानासि तत्त्वं परमो मतो नः ॥ १० ॥ निशम्य तद्वाक्यमथाबभाषे ब्रह्मा समाश्वास्य सुरादिसंघान् ॥ ११ ॥ ॥ श्रीब्रह्मोवाच ॥ ॥ स एष[1] कालस्त्रिदिवं त्वशेषं संहर्तुकामो जगदक्षयात्मा ॥ पूर्णे च शेते परिवत्सराणां भविष्यतीशानविभुर्न चित्रम् ॥ १२ ॥ संवत्सरोऽयं परिवत्सरश्च उद्वत्सरो वत्सर एष देवः ॥ दृष्टोऽप्यदृष्टः प्रहुतः प्रकाशी स्थूलश्च सूक्ष्मः परमाणुरेषः ॥ १३ ॥ नातः परं किंचिदिहास्ति लोके परापरोऽयं प्रभुरात्मवादी ॥ तुष्येत मे कालसमानरूप इत्येवमुक्त्वा भगवान्सुरेशः ॥ १४ ॥ सनत्कुमारप्रमुखैः समेतः संतोषयामास ततो यतात्मा ॥ १५ ॥ ॥ ब्रह्मोवाच ॥ ॥ नमोऽस्तु सर्वाय सुशांतमूर्तये ह्यघोररूपाय नमोनमस्ते ॥ सर्वात्मने सर्व नमोनमस्ते महात्मने भूतपते नमस्ते ॥ १६ ॥ ओंकारहुंकारपरिष्कृताय स्वधावषट्कार नमोनमस्ते ॥ गुणत्रयेशाय महेश्वराय ते त्रयीमयाय त्रिगुणात्मने नमः ॥ १७ ॥ त्वं शंकरस्त्वं हि महेश्वरोसि प्रधानमग्र्यं त्वमसि प्रविष्टः ॥ त्वं विष्णुरीशः प्रपितामहश्च त्वं सप्तजिह्वस्त्वमनंतजिह्वः ॥ १८ ॥ स्रष्टासि सृष्टिश्च विभो त्वमेव विश्वस्य वेद्यं च

॥ १८ ॥ परं निधानम् ॥ आहुर्द्विजा वेदविदो वरेण्यं परात्परस्त्वं[3] परतः परोऽसि ॥ १९ ॥ सूक्ष्मातिसूक्ष्मं प्रवदन्ति यच्च वाचो निवर्तन्ति मनो यतश्च ॥ ॥१९२॥

॥ २० ॥ ॥ श्रीमहादेव उवाच ॥ ॥ त्वया स्तुतोहं विविधैश्च मंत्रैः पुष्णामि शांतिं तव पद्मयोने ॥ ईक्षस्व मां लोकमिमं ज्वलंतं वक्त्रैरनेकैः

१ महाहिसंवेष्टितसर्वगात्रः--इ०पा० । २ देवः परमेश्वरेश्वरः--इ०पा० । ३ परात्परं त्वं हि तथासि नूनम्--इ०पा० ।

प्रसभं हरंतम् ॥ २१ ॥ एवमुक्त्वा स देवेशो देव्या सह जगत्पतिः ॥ पितामहं समाश्वास्य तत्रैवांतरधीयत ॥ २२ ॥ इदं महत्पुण्यतमं वरिष्ठं स्तोत्रं निशम्येह गतिं लभंते ॥ पापैरनेकैः परिवेष्टिता ये प्रयांति रुद्रं विमलैर्विमानैः ॥ २३ ॥ भयं च तेषां न भवेत्कदाचित्पठन्ति ये तात इदं द्विजाग्र्याः ॥ संग्रामचौराग्निवने तथाब्धौ तेषां शिवस्त्राति न संशयोऽत्र ॥ २४ ॥ इति श्रीस्कांदे महापुराण एकाशीतिसाहस्र्यां संहितायां पञ्चम आवन्त्यखण्डे रेवाखण्डे नर्मदामाहात्म्ये ब्रह्मकृतशिवस्तुतिवर्णनंनाम षोडशोऽध्यायः ॥ १६ ॥ ॥ छ ॥ ॥ श्रीमार्कंडेय उवाच ॥ ॥ एवं संस्तूयमानस्तु ब्रह्माद्यैर्मुनिपुंगवैः ॥ ब्रह्मलोकगतैस्तत्र संजहार जगत्प्रभुः ॥ १ ॥ स तद्भीमं महारौद्रं दक्षिणं वक्त्रमव्ययम् ॥ महादंष्ट्रोत्कटारावं पातालतलसन्निभम् ॥ २ ॥ विद्युज्ज्वलनपिंगाक्षं भैरवं लोमहर्षणम् ॥ महाजिह्वं महादंष्ट्रं महासर्पशिरोधरम् ॥ ३ ॥ महासुरशिरोमालं महाप्रलयकारणम् ॥ ग्रसत्समुद्रनिहितवातवारिमयं हविः ॥ ४ ॥ वडवामुखसंकाशं महादेवस्य तन्मुखम् ॥ जिह्वाग्रेण जगत्सर्वं लेलिहानमपश्यत ॥ ॥ ५ ॥ योजनानां सहस्राणि सहस्राणां शतानि च ॥ दिशो दश महाघोरा मांसमेदोवसोत्कटाः ॥ ६ ॥ तस्य दंष्ट्रा व्यवर्धंत शतशोऽथ सहस्रशः ॥ सासुरान्सुरगंधर्वान्सयक्षोरगराक्षसान् ॥ ७ ॥ तस्य दंष्ट्राग्रसंलग्नान्स ददर्श पितामहः ॥ दंतयंत्रांतसंविष्टं विचूर्णितशिरोधरम् ॥ ८ ॥ जगत्पश्यामि राजेंद्र विशंतं व्यादिते मुखे ॥ नानातरंगभंगांगा महाफेनौघसंकुलाः ॥ यथा नद्यो लयं यांति समुद्रं प्राप्य सस्वनाः ॥ ९ ॥ तथा ततं विश्वमिदं समस्तमनेकजीवार्णवदुर्विगाह्यम् ॥ विवेश रुद्रस्य मुखं विशालं ज्वलत्तदुग्रं घननादघोरम् ॥ १० ॥ ज्वालास्ततस्तस्य मुखात्सुघोराः सविस्फुलिंगा बहुलाः सधूमाः ॥ अनेकरूपा ज्वलनप्रकाशाः प्रदीपयंतीव दिशोऽखिलाश्च ॥ ११ ॥ ततो रविज्वालसहस्रमालि बभूव वक्त्रं चलजिह्वदंष्ट्रम् ॥ महेश्वरस्याद्भुतरूपिणस्तदा स द्वादशात्मा प्रबभूव एकः ॥ १२ ॥ ततस्ते द्वादशादित्या रुद्रवक्त्राद्विनिर्गताः ॥ आश्रित्य दक्षिणामाशां निर्दहंतो वसुंधराम् ॥ १३ ॥ भौमं यज्जीवनं किंचिन्नानावृक्षतृणालयम् ॥ शुष्कं पूर्वमनावृष्ट्या संकलाकुलभूतलम् ॥ १४ ॥ तद्दीप्यमानं सहसा सूर्यैस्तै रुद्रसंभवैः ॥ धूमाकुलमभूत्सर्वं प्रणष्टग्रहतारकम् ॥ १५ ॥ जज्वाल सहसा दीप्तं भूमंडलमशेषतः ॥ ज्वालामालाकुलं सर्वमभूदेतच्चराचरम् ॥ १६ ॥ सप्तद्वीपसमुद्रेषु सरित्सु च सरस्सु च ॥ अग्निरत्ति जगत्सर्वमाज्याहुतिमिवाध्वरे ॥ १७ ॥ विशालतेजसा दीप्ता महाज्वालासमाकुलाः ॥ ददहुर्वै जगत्सर्वमादित्या रुद्रसंभवाः ॥ १८ ॥ आदित्यानां रश्मयश्च संस्पृष्टा वै परस्परम् ॥ एवं ददाह भगवान्

१ वडवामुखे–इ० पा० । २ यद्बेगं यत्र नैगते–इ० पा० ।

लोक्यं सचराचरम् ॥ १९ ॥ सप्तद्वीपप्रमाणस्तु सोऽग्निर्भूत्वा महेश्वरः ॥ सप्तद्वीपसमुद्रांतां निर्ददाह वसुंधराम् ॥ २० ॥ सुमेरुमंदरांतां च निर्दहु
र्वसुधां तदा ॥ भित्त्वा तु सप्तपातालं नागलोकं ततोऽदहत् ॥ २१ ॥ भूम्यधः सप्तपातालान्निर्दहंस्तारकैः सह ॥ चचाराग्निः समन्तात्तु निर्दहन्वै
युधिष्ठिर ॥ २२ ॥ धम्यमान इवांगारैर्लोहरात्रिरिव ज्वलन् ॥ तथा तत्प्राज्ज्वलत्सर्वं संवर्त्ताग्निप्रदीपितम् ॥ २३ ॥ निर्वृक्षा निस्तृणा भूमिर्निर्नि
र्झरसरःसरित् ॥ विशीर्णशैलशृंगौघा कूर्मपृष्ठोपमाऽभवत् ॥ २४ ॥ ज्वालामालाकुलं कृत्वा जगत्सर्वं चिदात्मकम् ॥ महारूपधरो रुद्रो व्यतिष्ठत
महेश्वरः ॥ २५ ॥ समातृगणभूयिष्ठा सयक्षोरगराक्षसा ॥ ततो देवी महादेवं विदेश हरिलोचना ॥ २६ ॥ निर्वाणं परमापन्ना शांतेव शिखिनः
शिखा ॥ जगत्सर्वं हि निर्दग्धं त्रिभिर्लोकैः सहानघ ॥ २७ ॥ रुद्रप्रसादान्मुक्त्वा मां नर्मदां चाप्ययोनिजाम् ॥ युगानामयुतं देवो मया चाद्य
बुभक्षणात् ॥ २८ ॥ पुरा ह्याराधितः शूली तेनाहमजरामरः ॥ अघमर्षणघोरं च वामदेवं च त्र्यंबकम् ॥ २९ ॥ ऋषभं त्रिसुपर्णं च दुर्गां सावित्र
मेव च ॥ बृहदारण्यकं चैव बृहत्साम तथोत्तरम् ॥ ३० ॥ रौद्रीं परमगायत्रीं शिवोपनिषदं तथा ॥ यथा प्रतिरथं सूक्तं जप्त्वा मृत्युंजयं तथा ॥
॥ ३१ ॥ सरित्सागरपर्यन्ता वसुधा भस्मसात्कृता ॥ वर्जयित्वा महाभागां नर्मदाममृतोपमाम् ॥ ३२ ॥ महेन्द्रो मलयः सह्यो हेमकूटोऽ
थ माल्यवान् ॥ विन्ध्यश्च पारियात्रश्च सप्तैते कुलपर्वताः ॥ ३३ ॥ द्वादशादित्यनिर्दग्धाः शैलाः शीर्णशिलाः पृथक् ॥ भस्मीभूतास्तु
दृश्यंते न नष्टा नर्मदा तदा ॥ ३४ ॥ हिमवान्हेमकूटश्च निषधो गंधमादनः ॥ माल्यवांश्च गिरिश्रेष्ठो नीलः श्वेतोऽथ शृङ्गवान् ॥ ३५ ॥ एते पर्वतरा
जानो देवगंधर्वसेविताः ॥ युगांताग्निविनिर्दग्धाः सर्वे शीर्णमहाशिलाः ॥ ३६ ॥ एवं मया पुरा दृष्टो युगांते सर्वसंक्षयः ॥ वर्जयित्वा महापुण्यां
नर्मदां नृपसत्तम ॥ ३७ ॥ इति श्रीस्कान्दे महापुराण एकाशीतिसाहस्र्यां संहितायां पञ्चम आवन्त्यखण्डे रेवाखण्डे श्रीनर्मदामाहात्म्ये द्वादशादि
त्यरूपेण जगत्संहरणवर्णनंनाम सप्तदशोऽध्यायः ॥ १७ ॥छ॥ ॥ श्रीमार्कंडेय उवाच ॥ ॥ निर्दग्धेऽस्मिंस्ततो लोके सूर्यैरीश्वरसंभवैः ॥ सप्तभि
श्चार्णवैः शुष्कैर्द्वीपैः सप्तभिरेव च ॥१॥ ततो मुखात्तस्य घना महोल्बणा निश्चेरुरिंद्रायुधतुल्यरूपाः ॥ घोराः पयोदा जगदंधकारं कुर्वंत ईशानवर
प्रयुक्ताः ॥ २ ॥ नीलोत्पलाभाः क्वचिदंजनाभा गोक्षीरकुंदेंदुनिभाश्च केचित् ॥ मयूरचंद्राकृतयस्तथाऽन्ये केचिद्विधूमानलसप्रभाश्च ॥ ३ ॥ केचि

१ महादेवः स संहरन्—इ० पा० । २ सप्तलोकैः—इ० पा० । ३ रेवका विमलोदका—इ० पा० । ४ सूर्यशुष्के जगत्यस्मिन्प्रदग्धे कालवह्निना ॥ ततो मुखान्महेशस्य निश्चेरुर्जलदाः पृथक्—इ० पा० ।

न्महापर्वतकल्परूपाः केचिन्महामीनकुलोपमाश्च ॥ केचिद्गजेन्द्राकृतयः सुरूपाः केचिन्महाकूटनिभाः पयोदाः ॥ ४ ॥ चलत्तरंगोर्मिसमानरूपा
महापुरोधाननिभाश्च केचित् ॥ सगोपुराट्टालकसन्निकाशाः सविद्युदुल्काशनिमंडितांताः ॥ ५ ॥ समावृतांगः स बभूव देवः संवर्तकोनाम गणः स
रौद्रः ॥ प्रवर्षमाणो जगदप्रमाणमेकार्णवं सर्वमिदं चकार ॥ ६ ॥ ततो महामेघविवर्द्धमानमीशानमिन्द्राशनिभिर्वृताङ्गम् ॥ ददर्श नाहं भयविह्व
लाङ्गो गङ्गाजलौघैश्च समावृताङ्गः ॥ ७ ॥ गजाः पुनश्चैव पुनः पिबन्तो जगत्समन्तात्परिदह्यमानम् ॥ आपूरितं चैव जगत्समंतात्सर्वैश्च तैर्जग्मुर
दर्शनं च ते ॥ ८ ॥ महार्णवाः सप्त सरांसि द्वीपा नद्योऽथ सर्वा अथ भूर्भुवश्च ॥ आपूर्यमाणाः सलिलौघजालैरेकार्णवं सर्वमिदं बभूव ॥ ९ ॥ न
दृश्यते किंचिदहो चराचरे निरग्निचंद्रार्कमयेपि लोके ॥ प्रणष्टनक्षत्रतमोंधकारे प्रशांतवातास्तमितैकनीडे ॥ १० ॥ महाजलौघेस्य विशुद्धसत्त्वा
स्तुतिर्मया भूप कृता तदानीम् ॥ ततोहमित्येव विचिंतयानः शरण्यमेकं क्व नु यामि शांतम् ॥ ११ ॥ स्मरामि देवं हृदि चिन्तयित्वा प्रभुं शरण्यं
जलसंनिविष्टः ॥ नमामि देवं शरणं प्रपद्ये ध्यानं च तस्येतिकृतं मया च ॥ १२ ॥ ध्यात्वा ततोऽहं सलिलं ततार तस्य प्रसादादविमूढचेताः ॥
ग्लानिः श्रमश्चैव मम प्रणष्टौ देव्याः प्रसादेन नरेन्द्रपुत्र ॥ १३ ॥ इति श्रीस्कान्दे महापुराण एकाशीतिसाहस्र्यां संहितायां पञ्चम आवन्त्यखण्डे
रेवाखण्डे नर्मदामाहात्म्यवर्णननामाष्टादशोऽध्यायः ॥ १८ ॥ ॥ छ ॥ ॥ श्रीमार्कंडेय उवाच ॥ ॥ ततस्त्वेकार्णवे तस्मिन्मुमूर्षुरहमा
तुरः ॥ काकुच्छ्वासस्तरंस्तोयं बाहुभ्यां नृपसत्तम ॥ १ ॥ शृणोम्यर्णवमध्यस्थो निःशब्दस्तिमिते तदा ॥ अंभोरवमनौपम्यं दिशो दश विनादिनम्
॥ २ ॥ हंसकुंदेंदुसंकाशां हारगोक्षीरपांडुराम् ॥ नानारत्नविचित्रांगीं स्वर्णशृंगां मनोरमाम् ॥ ३ ॥ खुरैः प्रवालकमयैर्लांगूलध्वजशोभिताम् ॥ प्रलं
बघोणां नर्दन्तीं खुरैरर्णवगाहिनीम् ॥ ४ ॥ गां ददर्शाहमुद्विग्नो मामेवाभिमुखीं स्थिताम् ॥ किंकिणीजालमुक्ताभिः स्वर्णघंटासमावृताम् ॥ ५ ॥
तस्याश्चरणविक्षेपैः सर्वमेकार्णवं जलम् ॥ विक्षिप्तफेनपुंजौघैर्नृत्यंतीव समंततः ॥ ६ ॥ ररास सलिलोत्क्षेपैः क्षोभयंती महार्णवम् ॥ सा मामाह महा
भाग श्लक्ष्णगम्भीरया गिरा ॥ ७ ॥ मा भैषीर्वत्सवत्सेति मृत्युस्तव न विद्यते ॥ महादेवप्रसादेन न मृत्युस्ते ममापि च ॥ ८ ॥ ममाश्रयस्व
लांगूलं त्वामतस्तारयाम्यहम् ॥ घोरादस्माद्भयाद्विप्र यावत्संप्लवते जगत ॥ ९ ॥ क्षुत्तृषाप्रतिघातार्थं स्तनौ मे त्वं पिबस्व ह ॥ पयोऽमृताश्रयं
दिव्यं तत्पीत्वा निर्वृतो भव ॥ १० ॥ तस्यास्तद्वचनं श्रुत्वा हर्षात्पीतो मया स्तनः ॥ न क्षुत्तृषा पीतमात्रे स्तने मह्यं तदाऽभवत् ॥ ११ ॥ दिव्यं

१ केचिन्महावर्णधरा विशालाः—इ० पा० ।

स्कां.म.पु. प्राणबलं जज्ञे समुद्रप्लवनक्षमम् ॥ ततस्तां प्रत्युवाचेदं का त्वमेकार्णवीकृते ॥ १२ ॥ भ्रमसे ब्रूहि तत्त्वेन विस्मयो मे महान्हृदि ॥ भ्रमतोऽत्र ममा आवं०खं०५
॥१९४॥ र्तस्य मुमूर्षोः प्रहतस्य ह ॥ १३ ॥ त्वं हि मे शरणं जाता भाग्यशेषेण सुव्रते ॥ १४ ॥ ॥ गौरुवाच ॥ ॥ किमहं विस्मृता तुभ्यं विश्वरूपा (रेवाखं०३)
महेश्वरी ॥ नर्मदा धर्मदा नृणां स्वर्गशर्मबलप्रदा ॥ १५ ॥ दृष्ट्वा त्वां सीदमानं तु रुद्रेणाहं विसर्जिता ॥ तं द्विजं तारयस्वार्ये मा प्राणांस्त्यजतां अ० १९
जले ॥ १६ ॥ गोरूपेण विभोर्वाक्यात्त्वत्सकाशमिहागता ॥ मा मृषावचनः शंभुर्भवेदिति च सत्वरा ॥ १७ ॥ एवमुक्तस्तयाहं तु इंद्रायुधनिभं
शुभम् ॥ लांगूलमव्ययं ज्ञात्वा भुजाभ्यामवलंबितः ॥ १८ ॥ ततोऽतरं तं जलधिं लांगूलध्वजमाश्रितः ॥ असौ देवो महादेव इति मां प्रत्यभाषत
॥ १९ ॥ ततो युगसहस्रांतमहं कालं तया सह ॥ व्यचरं वै तमीभूते सर्वतः सलिलावृते ॥२०॥ महार्णवे ततस्तस्मिन्भ्रमन्गोः पुच्छमाश्रितः ॥ नि
र्वाते चांधकारे च निरालोके निरामये॥२१॥अकस्मात्सलिले तस्मिन्नतसीपुष्पसन्निभम्॥विभिन्नांजनसंकाशमाकाशमिव निर्मलम्॥२२॥ नीलोत्प
लदलश्यामं पीतवाससमव्ययम्॥किरीटेनार्कवर्णेन विद्युद्विद्योतकारिणा॥२३॥भ्राजमानेन शिरसा खमिवात्यंतरूपिणम्॥ कुंडलोद्घृष्टगल्लं तु हारोद्द्यो
तितवक्षसम् ॥२४॥ जांबूनदमयैर्दिव्यैर्भूषणैरुपशोभितम् ॥ नागोपधानशयनं सहस्रादित्यवर्चसम् ॥ २५॥ अनेकबाहूरुधरं नैकवक्त्रं मनोरमम् ॥ सुप्त
मेकार्णवे वीरं सहस्राक्षशिरोधरम् ॥ २६ ॥ जटाजूटेन महता स्फुरद्विद्युत्समार्चिषा ॥ एकार्णवं जगत्सर्वं व्याप्य देवं व्यवस्थितम् ॥२७॥ ग्रसित्वा
शंकरः सर्वं सदेवासुरमानवम् ॥ प्रपश्याम्यहमीशानं सुप्तमेकार्णवे प्रभुम् ॥ २८ ॥ सर्वव्यापिनमव्यक्तमनन्तं विश्वतोमुखम् ॥ तस्य पादतला
भ्याशे स्वर्णकेयूरमंडिताम् ॥ २९ ॥ विश्वरूपां महाभागां विश्वमायावधारिणीम् ॥ श्रीमयीं ह्रीमयीं देवीं धीमयीं वाङ्मयीं शिवाम् ॥ ३० ॥
सिद्धिं कीर्तिं रतिं ब्राह्मीं कालरात्रिमयोनिजाम् ॥ तामेवाहं तदात्यन्तमीश्वरांतिकमास्थिताम् ॥ ३१ ॥ अद्राक्षं चन्द्रवदनां धृतिं सर्वेश्वरीमु
माम् ॥ ३२ ॥ शांतं प्रसुप्तं नवहेमवर्णमुमासहायं भगवन्तमीशम् ॥ तमोवृतं पुण्यतमं वरिष्ठं प्रदक्षिणीकृत्य नमस्करोमि ॥ ३३ ॥ ततः प्रसुप्तः
सहसा विबुद्धो रात्रिक्षये देववरः स्वभावात् ॥ विक्षोभयन्बाहुभिरर्णवांभो जगत्प्रणष्टं सलिले विमृश्य ॥ ३४ ॥ किं कार्यमित्येव विचिंतयित्वा
वाराहरूपोऽभवदद्भुतांगः ॥ महाघनांभोधरतुल्यवर्चाः प्रलंबमालांबरनिष्कमाली ॥ ३५ ॥ सशंखचक्रासिधरः किरीटी सवेदवेदांगमयो महात्मा ॥ ॥१९४॥
॥ २० ॥ त्रैलोक्यनिर्माणकरः पुराणो देवत्रयीरूपधरश्च कार्ये ॥ ३६ ॥ स एव रुद्रः स जगज्जहार सृष्ट्यर्थमीशः प्रपितामहोभूत् ॥ संरक्षणार्थं जगतः स

१ वत्स रेवा–इ० पा० । २ अक्षयान्–इ० पा० । ३ इहावृतम्–इ० पा० ।

एव हरिः सुचक्रासिगदाब्जपाणिः ॥ ३७ ॥ तेषां विभागो न हि कर्तुमर्हो महात्मनामेकशरीरभाजाम् ॥ मीमांसहेत्वर्थविशेषतर्कैर्यस्तेषु कुर्यात्प्रवि
भेदमज्ञः ॥ ३८ ॥ स याति घोरं नरकं क्रमेण विभागकृद्वेषमतिर्दुरात्मा ॥ या यस्य भक्तिः स तयैव नूनं देहं त्यजन्स्वं ह्यमृतत्वमेति ॥ ३९ ॥
संमोहयन्मूर्तिभिरत्र लोकं स्रष्टा च गोप्ता क्षयकृत्स देवः ॥ तस्मान्न मोहात्मकमाविशेत द्वेषं न कुर्यात्प्रविभिन्नमूर्तिः ॥ ४० ॥ वाराहमीशानवरोऽ
प्यतोऽसौ रूपं समास्थाय जगद्विधाता ॥ नष्टे त्रिलोकेऽर्णवतोयमग्ने विमार्गितोयौघमयेऽन्तरात्मा ॥ ४१ ॥ भित्त्वार्णवं तोयमथांतरस्थं विवेश
पातालतलं क्षणेन ॥ जले निमग्नां धरणीं समस्तां समस्पृशत्पंकजपत्रनेत्राम् ॥ ४२ ॥ विशीर्णशैलोपलशृङ्गकूटां वसुन्धरां तां प्रलये प्रलीनाम् ॥
दंष्ट्रैकया विष्णुरतुल्यसाहसः समुद्दधार स्वयमेव देवः ॥ ४३ ॥ सा तस्य दंष्ट्राग्रविलंबितांगी कैलासशृंगाग्रगतेव ज्योत्स्ना ॥ विभ्राजते साप्यसमा
नमूर्तिः शशांकशृंगे च तडिद्विलग्ना ॥ ४४ ॥ तामुज्जहारार्णवतोयमग्नां करी निमग्नामिव हस्तिनीं हठात् ॥ नावं विशीर्णामिव तोयमध्यादु
दीर्णसत्त्वोनुपमप्रभावः ॥ ४५ ॥ स तां समुत्तार्य महाजलौघात्समुद्रमार्यो व्यभजत्समस्तम् ॥ महार्णवेष्वेव महार्णवांभो निक्षेपयामास पुनर्नदीषु
॥ ४६ ॥ शीर्णांश्च शैलान्स चकार भूयो द्वीपान्समस्तांश्च तथार्णवांश्च ॥ शैलोपलैर्ये विचिताः समन्ताच्छिलोच्चयांस्तान्स चकार कल्पे ॥ ४७ ॥
अनेकरूपं प्रविभज्य देहं चकार देवेन्द्रगणान्समस्तान् ॥ मुखाच्च वह्निर्मनसश्च चन्द्रश्चक्षोश्च सूर्यः सहसा बभूव ॥ ४८ ॥ जज्ञेऽथ तस्येश्वरयोग
मूर्तेः प्रध्यायमानस्य सुरेन्द्रसंघः॥ वेदाश्च यज्ञाश्च तथैव वर्णास्तथा हि सर्वौषधयो रसाश्च ॥ ४९ ॥ जगत्समस्तं मनसा बभूव यत्स्थावरं किंचिदि
हांडजं वा ॥ जरायुजं स्वेदजमुद्भिजं वा यत्किंचिदाकीटपिपीलकाद्यम् ॥ ५० ॥ ततो विजज्ञे मनसा क्षणेन अनेकरूपाः सहसा महेश ॥
चकार यन्मूर्तिभिरव्ययात्मा अष्टाभिराविश्य पुनः स तत्र ॥ ५१ ॥ लीलां चकाराथ समृद्धतेजा अतोऽत्र मे पश्यत एव विप्राः ॥ तेषां मया
दर्शनमेव सर्वं यावन्मुहूर्तात्समकारि भूप ॥ ५२ ॥ कृत्वा त्वशेषं किल लीलयैव स देवदेवो जगतां विधाता ॥ सर्वत्रदृक्सर्वग एव
देवो जगाम चादर्शनमादिकर्ता ॥ ५३ ॥ यत्तन्मुहूर्तादिह नामरूपं तावत्प्रपश्यामि जगत्तथैव ॥ द्वीपैः समुद्रैरभिसंवृतं हि नक्षत्रता
रादिविमानकीर्णम् ॥ ५४ ॥ वियत्पयोदग्रहचक्रचित्रं नानाविधैः प्राणिगणैर्वृतं च ॥ तां वै न पश्यामि महानुभावां गोरूपिणीं सर्वसु
रेश्वरीं च ॥ ५५ ॥ क्व सांप्रतं सेति विचिंत्य राजन्विभ्रांतचित्तस्त्वभवं तदैव ॥ दिशो विभागानवलोकयान ऋते पुनस्तां कथमीश्वरांगीम् ॥
॥ ५६ ॥ पश्यामि तामत्र पुनश्च शुभ्रां महाभ्रनीलां शुचिशुभ्रतोयाम् ॥ वृक्षैरनेकैरुपशोभितांगीं गजैस्तुरंगैर्विहगैर्वृतां च ॥ ५७ ॥ यथा पुरा

तीरमुपेत्य देव्याः समास्थितश्चाप्यमरकण्टके तु ॥ तथैव पश्यामि सुखोपविष्ट आत्मानमव्यग्रमवाप्तसौख्यम् ॥ ५८॥ तथैव पुण्या
मलतोयवाहां दृष्ट्वा पुनः कल्पपरिक्षयेपि ॥ अम्बामिवार्यामनुकंपमानामक्षीणतोयां विरुजां विशोकः ॥ ५९ ॥ एवं महत्पुण्य
तमं च कल्पं पठंति शृण्वन्ति च ये द्विजेंद्राः ॥ महावराहस्य महेश्वरस्य दिनेदिने ते विमला भवन्ति ॥ ६० ॥ अशुभशतसहस्रं ते
विधूय प्रपन्नास्त्रिदिवममरजुष्टं सिद्धगंधर्वयुक्तम् ॥ विमलशशिनिभाभिः सर्व एवाप्सरोभिः सह विविधविलासैः स्वर्गसौख्यं लभन्ते ॥ ६१ ॥
इति श्रीस्कांदे महापुराण एकाशीतिसाहस्र्यां संहितायां पञ्चम आवन्त्यखंडे रेवाखण्डे श्रीनर्मदामाहात्म्ये वाराहकल्पवृत्तान्तवर्णनंनामैकोनविंशो
ऽध्यायः ॥ १९ ॥ छ ॥ ॥ युधिष्ठिर उवाच ॥ ॥ श्रुता मे विविधा धर्माः संहारास्त्वत्प्रसादतः ॥ कृता देवेन सर्वेण ये च दृष्टास्त्वयानघ ॥
॥ १ ॥ सांप्रतं श्रोतुमिच्छामि प्रभावं शार्ङ्गधन्वनः ॥ त्वयानुभूतं विप्रेंद्र तन्मे त्वं वक्तुमर्हसि ॥ २ ॥ ॥ श्रीमार्कंडेय उवाच ॥ ॥ अतः परं
प्रवक्ष्यामि प्रजासंहारलक्षणम् ॥ यच्चिह्नं दृश्यते तत्र यथा कल्पो विधीयते ॥ ३ ॥ उल्कापाताः सनिर्घाता भूमिकंपस्तथैव च ॥ पतते पांशुवर्षं
च निर्घोषश्चैव दारुणः ॥ ४ ॥ यक्षकिन्नरगंधर्वाः पिशाचोरगराक्षसाः ॥ सर्वे ते प्रलयं यांति युगांते समुपस्थिते ॥ ५ ॥ पर्वताः सागरा नद्यः
सरांसि विविधानि च ॥ वृक्षाः शोषं समायांति वल्लीजातं तृणानि च ॥ ६ ॥ एवं हि व्याकुलीभूते सर्वौषधिजलोज्झिते ॥ काष्ठभूते तु संजाते
त्रैलोक्ये सचराचरे ॥ ७ ॥ यावत्पश्यामि मध्याह्ने स्नानकाल उपस्थिते ॥ त्रैलोक्यं ज्वलनाकारं दुर्निरीक्षं दुरासदम् ॥ ८ ॥ द्वौ सूर्यौ पूर्वत
स्तात पश्चिमोत्तरयोस्तथा ॥ तथैव दक्षिणे द्वौ च सूर्यौ दृष्टौ प्रतापिनौ ॥ ९ ॥ द्वौ सूर्यौ नागलोकस्थौ मध्ये द्वौ गगनस्य च ॥ इत्येते द्वादशा
दित्यास्तपन्ते सर्वतो दिशम् ॥ १० ॥ पृथिवीमदहन्सर्वां सशैलवनकाननाम् ॥ नादग्धं दृश्यते किंचिदृते रेवां च मां तथा ॥ ११ ॥ पृथिव्यां
दह्यमानायां हविर्गंधश्च जायते ॥ ततो मे शुष्यते गात्रं तृषाप्येवं दुरासदा ॥ १२ ॥ न हि विंदामि पानीयं शोषितं च दिवाकरैः ॥ यावत्कमण्डलुं
वीक्षे शुष्कं तत्रापि तज्जलम् ॥ १३ ॥ ततोऽहं शोकसंतप्तो विशेषात्क्षुत्तृषार्दितः॥ उत्पपात क्षितेरूर्ध्वं पश्यमानो दिवं प्रति ॥ १४ ॥ तावत्पश्यामि
गगने गृहं शृंगारभूषितम् ॥ ततस्तज्ज्ञातुकामोऽहं प्रस्थितो राजसत्तम ॥ १५ ॥ प्राकारेण विचित्रेण कपाटार्गलभूषितम् ॥ विचित्रशिखरोपेतं
द्वारदेशमुपागतः ॥ १६ ॥ षडशीतिसहस्राणि योजनानां समुच्छ्रये ॥ तदर्धं तु पृथक्त्वेन कांचनं रत्नभूषितम् ॥ १७ ॥ तत्र मध्ये परां शय्यां

१ शकलितकलिपापा रुद्रलोकं प्रयान्ति–इ० पा० ।

पश्यामि नृपसत्तम ॥ शय्योपरि शयानं तु पुरुषं दिव्यभूषणम् ॥ १८ ॥ विकुंचिताग्रकेशांतं समस्तं योजनायतम् ॥ मुकुटेन विचित्रेण दीप्ति
कांतेन शोभितम् ॥ १९ ॥ श्यामं कमलपत्राभं सुभ्रुवं च सुनासिकम् ॥ सिंहास्यमायतभुजं गल्लश्मश्रुवरांकितम् ॥ २० ॥ त्रिवलीभंगसुभगं कर्ण
कुण्डलभूषितम् ॥ विशालाभं सुपीनांगं पार्श्वस्वावर्तभूषितम् ॥ २१ ॥ शोभितं कटिभागेन विभक्तं जानुजंघयोः ॥ पद्मांकिततलं देवमाताम्रसुनखां
गुलिम् ॥ २२ ॥ मेघनादसुगंभीरं सर्वावयवसुन्दरम् ॥ शय्यामध्यगतं देवमपश्यं पुरुषोत्तमम् ॥ २३ ॥ शंखचक्रगदापाणिं शयानं दक्षिणेन तु ॥
अक्षसूत्रोद्यतकरं सूर्यायुतसमप्रभम् ॥ २४ ॥ तं दृष्ट्वा भक्तिमान्देवं स्तोतुकामो व्यवस्थितः ॥ जयेश जय वागीश जय दिव्यांगभूषण ॥
॥ २५ ॥ जय देवपते श्रीमन्साक्षाद्ब्रह्म सनातन ॥ तव लोकाः शरीरस्थास्त्वं गतिः परमेश्वर ॥ २६ ॥ त्वदाधारा हि देवेश सर्वे लोका व्यव
स्थिताः ॥ त्वं श्रेष्ठः सर्वसत्त्वानां त्वं कर्ता धरणीधरः ॥ २७ ॥ त्वं हौत्रमग्निहोत्राणां सूत्रमन्त्रस्त्वमेव च ॥ गोकर्णं भद्रकर्णं च त्वं च माहेश्वरं
पदम् ॥ २८ ॥ त्वं कीर्तिः सर्वकीर्तीनां दैन्यपापप्रणाशिनी ॥ त्वं नैमिषं कुरुक्षेत्रं त्वं च विष्णुपदं परम् ॥ २९ ॥ त्वया तु लीलया देव पदा
क्रांता च मेदिनी ॥ त्वया बद्धो बलिर्देव त्वयेंद्रस्य पदं कृतम् ॥ ३० ॥ त्वं कलिर्द्वापरं देव त्रेता कृतयुगं तथा ॥ प्रलंबदमनश्च त्वं त्वष्टा त्वं च
विनाशकृत् ॥ ३१ ॥ त्वया वै धार्यते लोकास्त्वं कालः सर्वसंक्षयः ॥ त्वया हि देव सृष्टास्ताः सर्वा वै देवयोनयः ॥ ३२ ॥ त्वं पन्थाः सर्व
लोकानां त्वं च मोक्षः परा गतिः ॥ ब्रह्मा त्वदुद्भवो देवो रजोरूपः सनातनः ॥ रुद्रः क्रोधोद्भवोऽप्येवं त्वं च सत्त्वे व्यवस्थितः ॥ ३३ ॥ एतच्चराचरं
देव क्रीडनार्थं त्वया कृतम् ॥ एवं संतप्तदेहेन स्तुतो देवो मया प्रभुः ॥ ३४ ॥ भक्त्या परमया राजन्सर्वभूतपतिः प्रभुः ॥ स्तुवन्वै तत्र पश्यामि
वारिपूर्णास्ततो घटान् ॥ ३५ ॥ ततो मया विस्मृता या तृषा सा वर्द्धिता पुनः ॥ उपासर्पं ततस्तस्य पार्श्वे वै पुरुषस्य हि ॥ ३६ ॥ पानीयं पातुका
मेन चिंतितं च मया पुनः ॥ नापश्यत हि मां चैष सुप्तोऽपि न च बुध्यते ॥३७॥ यस्तु पापेन संमूढः सुखं सुप्तं प्रबोधयेत् ॥ जायते तस्य पापस्य
ब्रह्महत्याफलं महत् ॥३८॥ एवं संचिंत्यमाने तु द्वितीयो ह्यागतः पुमान् ॥ नेक्षते जल्पते किंचिद्वामस्कन्धे मृगाजिनी ॥३९॥ जटी कमण्डलुधरो
दण्डी मेखलया वृतः ॥ भस्मोन्मृदितसर्वांगो महातेजास्त्रिलोचनः ॥ ४० ॥ यावत्तं स्तोतुकामोऽहमपश्यं स्वच्छचक्षुषा ॥ तावत्सर्वांगसंभूत्या
महत्या रूपसंपदा ॥ ४१ ॥ अपश्यं संवृतां नारीं सर्वाभरणभूषिताम् ॥ दृष्ट्वा तां पतितो भूमौ जयस्वेति ब्रुवंस्ततः ॥ ४२ ॥ जय रुद्रांगसंभूते जय

१ सुप्रभेण समन्वितम्--इ० पा० । २ सनातनः--इ० पा० । ३ त्वं यमस्तथा--इ० पा० । ४ अन्ये सुराश्च साध्याश्च क्रीडया चैव ते कृताः--इ० पा० ।

त्राह्मि सनातनि ॥ जय कौमारि माहेंद्रि वैष्णवी वारुणी तथा ॥ ४३ ॥ जयकौबेरि सावित्रि जय धात्रि वरानने ॥ तृष्णया तप्तदे
हस्य रक्षां कुरु चराचरे ॥ ४४ ॥ ॥ श्रीदेव्युवाच ॥ ॥ प्रसन्ना विप्रशार्दूल तव वाक्यैः सुशोभनैः ॥ वर्त्तते मानसे यत्ते मया ज्ञातं द्विजो
त्तम ॥ ४५ ॥ शृणु विप्र ममाप्यस्ति व्रतमेतत्सुदारुणम् ॥ स्त्रीलघुत्वान्मयारब्धं दुष्करं मंदमेधया ॥ ४६ ॥ यदि भावी च मे पुत्रो धर्मिष्ठो
लोकविश्रुतः ॥ विप्रस्य तु स्तनं दत्त्वा पश्चाद्दास्यामि बालके ॥ ४७ ॥ स मे पुत्रः समुत्पन्नो यथोक्तो मे महामुने ॥ स्तनं पिब त्वं विप्रेंद्र यदि
जीवितुमिच्छसि ॥ ४८ ॥ ॥ श्रीमार्कंडेय उवाच ॥ ॥ अकार्यमेतद्विप्राणां यस्त्विमं पिबते स्तनम् ॥ पुनश्चैवोपनयनं व्रतसिद्धिः न गच्छति
॥ ४९ ॥ ब्राह्मणत्वं त्रिभिर्लोकैर्दुर्लभं पद्मलोचने ॥ संस्कारैः संस्कृतो विप्रो यैश्च जायेत तच्छृणु ॥५०॥ प्रथमं चैव नारीषु संस्कारैर्बीजवापनम्॥
बीजप्रक्षेपणादेव बीजक्षेपः स उच्यते ॥ ५१ ॥ तदंते च महाभागे गर्भाधानं द्वितीयकम् ॥ पुंसवनं तृतीयं तु सीमंतं च चतुर्थकम् ॥ ५२ ॥ पंचमं
जातकर्म स्यान्नाम वै षष्ठमुच्यते ॥ निष्कामः सप्तमश्चैव ह्यन्नप्राशनमष्टमम् ॥ ५३ ॥ नवमं वै चूडकर्म्म दशमं मौंजिबंधनम् ॥ ऐषिकं दार्विकं
चैव सौमिकं भौमिकं तथा ॥ ५४ ॥ पत्नीसंयोजनं चान्यद्दैवंकर्म्म ततः परम् ॥ मानुष्यं पितृकर्म स्याद्दशमाष्टासु शोभने ॥ ५५ ॥ भूतं भव्यं
तथेष्टं च पार्वणं च ततः परम् ॥५६॥ श्राद्धं श्रावण्यामाग्रयणं च चैत्राश्वयुज्यां दशपौर्णमास्याम् ॥ निरूढपशुसवनसौत्रामण्यग्निष्टोमात्यग्निष्टोमाः
॥ ५७॥ षोडशीवाजपेयातिरात्राप्तोर्यामोदशवाजपेयाः ॥ सर्वभूतेषु क्षांतिरनसूया शौचमंगलमकार्पण्यमस्पृहेति ॥ ५८ ॥ एभिरष्टचत्वारिंशद्भिः
संस्कारैः संस्कृतो ब्राह्मणो भवति ॥ ५९ ॥ एवं ज्ञात्वा महाभागे न तु मां पातुमर्हसि ॥ शिशुपेयं स्तनं भद्रे कथं वै मद्विधः पिबेत् ॥ ६० ॥
ममैतद्वचनं श्रुत्वा नारी वचनमब्रवीत् ॥ ६१ ॥ यदि त्वं न पिबेः स्तन्यं पयो बालो मरिष्यति ॥ श्रूयते त्रिषु लोकेषु वेदेषु च स्मृतिष्वपि ॥
मुच्यते सर्वपापेभ्यो भ्रूणहत्या न मुंचति ॥ ६२ ॥ भवित्री तव हत्या च महाभागवतः पुनः ॥ जन्मानि च शतान्यष्टौ क्लिश्यते भ्रूणहत्यया ॥
॥ ६३ ॥ मृतः शुनत्वं चाप्नोति वर्षाणां तु शतत्रयम् ॥ ततस्तस्य क्षये जाते काकयोनिं व्रजेत्पुनः ॥ ६४ ॥ तत्रापि च शतान्यष्टौ क्लिश्यते पाप
॥ २२ ॥ कर्मणि ॥ वराहो दश जन्मानि तदंते जायते कृमिः ॥ ६५ ॥ ततश्चारोहिणीं प्राप्य गोगजाश्वनृजन्मभाक् ॥ श्रूयते श्रुतिशास्त्रेषु वेदेषु च परंतप ॥ 
॥६६॥ सर्वपापाधिकं पापं बालहत्या द्विजोत्तम ॥ बालहत्यायुतो विप्रः पच्यते नरके ध्रुवम् ॥६७॥ वर्षाणि च शतान्यष्टौ प्राप्नोति यमयातनाम् ॥

१ ससंदेहं मां परिपाहि महेश्वरि—इ० पा० । २ पुनः संस्कारमाप्नोति पातित्यं चैव गच्छति—इ०पा० । ३ दिनकर्म—इ०पा० । ४ पयत्रयंत्वेतद्व्रतमयन् ।

तस्मादल्पतरो दोषः पिबतो मे स्तनं तव ॥ ६८ ॥ तथैवापिबतः पापं जायते बहुवार्षिकम् ॥ क्षुधातृषाविरामस्ते पुण्यं च पिबतः स्तनम् ॥६९॥
अतो न चेतः संदिग्धं कर्तव्यमिह कर्हिचित् ॥ एहि विप्र यथाकामं बालार्थे पिब मे स्तनम् ॥ ७० ॥ ततोऽहं वचनं श्रुत्वा स्तनं पातुं समुद्यतः ॥
न च तृप्तिं विजानामि पिबतः स्तनमुत्तमम् ॥ ७१ ॥ त्रिंशद्वर्षसहस्राणि भारतैवं शतानि च ॥ ततः प्रबुद्धोत्संगेहं मायानिद्राविमोहितः ॥ ७२ ॥
निद्राविगतमोहोहं यावत्पश्यामि पांडव ॥ तावत्सुतं न पश्यामि न च तं बालकं विभो ॥ ७३ ॥ चतुरस्तांश्च वै कुंभान्पश्यामि तत्र भारत ॥
न च पश्यामि तां देवीं गता वै कुत्रचिच्च ते ॥ ७४ ॥ एवं विमृश्यमानस्य चिंतयानस्य तिष्ठतः ॥ ईषद्धसितया वाचा देवी वचनमब्रवीत् ॥
॥ ७५ ॥ ॥ श्रीदेव्युवाच ॥ ॥ कृष्णः स पुरुषः सुप्तो द्वितीयोऽप्यागतो हरः ॥ ये चत्वारश्च ते कुंभाः समुद्रास्ते द्विजोत्तम ॥ ७६ ॥ यश्च
बालस्त्वया दृष्टो ब्रह्मा लोकपितामहः ॥ अहं च पृथिवी ज्ञेया सप्तद्वीपा सर्वता ॥ ७७ ॥ या गता त्वां परित्यज्य भूतले सुप्रतिष्ठिता ॥ इमां
च प्रेक्षसे विप्र नर्मदां सरितां वराम् ॥ ७८ ॥ सर्वसत्त्वोपकाराय वृहते पुण्यलक्षणा ॥ रेवानदी तु विख्याता न मृता तेन नर्मदा ॥ ७९ ॥
एवं ज्ञात्वा शमं गच्छ स्वस्थो भव महामुने ॥ इत्युक्त्वा मां तदा देवी तत्रैवान्तरधीयत ॥ ८० ॥ एवं हि शेते भगवान्सत्त्वस्थः प्रलये
सदा ॥ सत्त्वरूपो महादेवो यदाधारे जगत्स्थितम् ॥ ८१ ॥ एवं मयानुभूतं तु दृष्टमाश्चर्यमुत्तमम् ॥ सर्वपापहरं पुण्यं कथितं ते न
रोत्तम ॥ ८२ ॥ विष्णोश्चरितमित्युक्तं यत्त्वया परिपृच्छितम् ॥ भूय एव महाबाहो किमन्यच्छ्रोतुमिच्छसि ॥ ८३ ॥ इति श्रीस्कांदे महापुराण
एकाशीतिसाहस्र्यां संहितायां पञ्चम आवंत्यखण्डे रेवाखण्डे वाराहकल्पवृत्तान्तवर्णनंनाम विंशोऽध्यायः ॥ २० ॥ ॥छ॥ ॥ युधिष्ठिर उवाच ॥ ॥
श्रुतं मे विविधाश्चर्यं त्वत्प्रसादाद्द्विजोत्तम ॥ भूयश्च श्रोतुमिच्छामि तन्मे कथय सुव्रत ॥ १ ॥ कथमेषा नदी पुण्या सर्वनदीषु चोत्तमा ॥
नर्मदानाम विख्याता भूयो मे कथयानघ ॥ २ ॥ ॥ श्रीमार्कंडेय उवाच ॥ ॥ नर्मदा सरितां श्रेष्ठा सर्वपापप्रणाशिनी ॥ तारयेत्सर्वभूतानि
स्थावराणि चराणि च ॥ ३ ॥ नर्मदायास्तु माहात्म्यं यत्पूर्वेण मया श्रुतम् ॥ तत्तेऽहं संप्रवक्ष्यामि शृणुष्वैकमना नृप ॥ ४ ॥ गंगा कनखले पुण्या
कुरुक्षेत्रे सरस्वती ॥ ग्रामे वा यदि वारण्ये पुण्या सर्वत्र नर्मदा ॥५॥ त्रिभिः सारस्वतं तोयं सप्ताहेन तु यामुनम् ॥ सद्यः पुनाति गांगेयं दर्शनादेव
नार्मदम् ॥ ६ ॥ कलिंगदेशात्पश्चार्द्धे पर्वतेऽमरकंटके ॥ पुण्या च त्रिषु लोकेषु रमणीया पदेपदे ॥ ७ ॥ तत्र देवाश्च गंधर्वा ऋषयश्च तपोधनाः ॥

१ सर्वलोकेषु विख्याता महापापप्रणाशिनी—इ० पा० ।

तपस्तस्वा महाराज सिद्धिं परमिकां गताः ॥ ८ ॥ तत्र स्नात्वा नरो राजन्नियमस्थो जितेंद्रियः ॥ उपोष्य रजनीमेकां कुलानां तारयेच्छतम् ॥
॥ ९ ॥ सिद्धिक्षेत्रं परं तात पर्वतो ह्यमरंकटः ॥ सर्वदेवाश्रितो यस्मादृषिभिः परिसेवितः ॥१०॥ सिद्धविद्याधरा भूतगंधर्वाः स्थानमुत्तमम् ॥ दृश्या
दृश्याश्च राजेंद्र सेवंते सिद्धिकांक्षिणः ॥ ११ ॥ अहं च परमं स्थानं ततः प्रभृति संश्रितः ॥ अत्र प्रणवरूपो वै स्थाने तिष्ठत्युमापतिः ॥ १२ ॥
श्रीकंठः सगणः सर्वभूतसंघैर्निषेवितः ॥ अस्माद्गिरिवराद्भूप वक्ष्ये तीर्थस्य विस्तरम् ॥ १३ ॥ यानि संतीह तीर्थानि पुण्यानि नृपसत्तम ॥ यानि
यानीह तीर्थानि नर्मदायास्तटद्वये ॥ १४ ॥ न तेषां विस्तरं वक्तुं शक्तो ब्रह्मापि भूपते ॥ योजनानां शतं साग्रं श्रूयते सरिदुत्तमा ॥ १५ ॥ विस्त
रेण तु राजेंद्र अर्धयोजनमायता ॥ षष्टितीर्थं सहस्राणि षष्टिकोट्यस्तथैव च ॥ १६ ॥ पर्वतादुदधिं यावदुभे कूले न संशयः ॥ १७ ॥ सप्तषष्टि
सहस्राणि सप्तषष्टिशतानि च ॥ सप्तषष्टिस्तथा कोट्यो वायुस्तीर्थानि चाब्रवीत् ॥ १८ ॥ परं कृतयुगे तानि यांति प्रत्यक्षतां नृप ॥ पश्यंति मानवाः
सर्वे सततं धर्मबुद्धयः ॥ १९ ॥ यथायथा कलिर्घोरो वर्तते दारुणो नृप ॥ तथातथाल्पतां यांति हीनसत्त्वा यतो नराः ॥ २० ॥ जालेश्वरादिती
र्थानि पर्वतेस्मिन्नराधिप ॥ पितृतृप्तिप्रदान्याहुः स्वर्गमोक्षप्रदानि च ॥ २१ ॥ श्रेष्ठं दारुवनं तत्र चरुकासंगमः शुभः ॥ उत्तरे नर्मदायास्तु चरुके
श्वरमुत्तममम् ॥ २२ ॥ दारुकेश्वरतीर्थं च व्यतीपातेश्वरं तथा ॥ पातालेश्वरतीर्थं च कोटियज्ञं तथैव च ॥ २३ ॥ इति चैवोत्तरे कूले रेवाया नृपस
त्तम ॥ अमरेश्वरपार्श्वे च लिंगान्यष्टोत्तरं शतम् ॥ २४ ॥ वरुणेश्वरमुख्यानि सर्वपापहराणि च ॥ २५ ॥ मांधातृपुरपार्श्वे च सिद्धेश्वरयमेश्वरौ ॥
ॐकारात्पूर्वभागे च केदारं तीर्थमुत्तमम् ॥ २६ ॥ तत्समीपे महाराज स्वर्गद्वारमघापहम् ॥ नाम्ना ब्रह्मेश्वरं पुण्यं सप्तसारस्वतं पुरः ॥ २७ ॥ रुद्रा
ष्टकं च सावित्रं सोमतीर्थं तथैव च ॥ एतानि दक्षिणे तीरे रेवाया भरतर्षभ ॥ २८ ॥ अस्मिंस्तु पर्वते तात रुद्राणां कोटयः स्थिताः ॥ स्नानैस्तु
ष्टिर्भवेत्तेषां गंधमाल्यानुलेपनैः ॥ २९ ॥ प्रीतास्तेऽपि भवंत्यत्र रुद्रा राजन्न संशयः ॥ जपेन पापसंशुद्धिर्ध्यानेनानंत्यमश्नुते ॥ ३० ॥ दानेन भोगा
नाप्नोति इत्येवं शंकरोऽब्रवीत् ॥ पर्वतात्पश्चिमे देशे स्वयं देवो महेश्वरः ॥ स्थितः प्रणवरूपोसौ जगदादिः सनातनः ॥ ३१ ॥ तत्र स्नात्वा शुचिर्भू
त्वा ब्रह्मचारी जितेंद्रियः ॥ पितृकार्यं प्रकुर्व्वीत विधिदृष्टेन कर्मणा ॥ ३२ ॥ तिलोदकेन तत्रैव तर्पयेत्पितृदेवताः ॥ आसप्तमं कुलं तस्य स्वर्गे
मोदति पांडव ॥ ३३ ॥ आत्मना सह भोगांश्च विविधाँल्लभते सुखी ॥ षष्टिवर्षसहस्राणि क्रीडते सुरपूजितः ॥ ३४ ॥ मोदते सुचिरं कालं पितृपू
जाफलधितः ॥ ततः स्वर्गात्परिभ्रष्टो जायते विमले कुले ॥३५॥ धनवान्दानशीलश्च नीरोगो लोकपूजितः ॥ पुनः स्मरति तत्तीर्थं गमनं कुरुते

पुनः ॥ ३६ ॥ द्वितीये जन्मनि भवेद्रुद्रस्यानुचरोत्कटः ॥ तथैव ब्रह्मचर्येण सोपवासो जितेंद्रियः ॥ ३७ ॥ सर्वहिंसानिवृत्तस्तु लभते फलमुत्तमम् ॥ एवं धर्मसमाचारो यस्तु प्राणान्परित्यजेत् ॥ ३८ ॥ तस्य पुण्यफलं यद्वै तन्निबोध नराधिप ॥ शतं वर्षसहस्राणि स्वर्गे मोदति पांडव ॥ ॥ ३९ ॥ अप्सरोगणसंकीर्णे दिव्यशब्दानुनादिते ॥ दिव्यगंधानुलिप्तांगो दिव्यालंकारभूषितः ॥ ४० ॥ क्रीडते दैवतैः सार्द्धं सिद्धगंधर्वसंस्तुतः ॥ ततः स्वर्गात्परिभ्रष्टो राजा भवति वीर्यवान् ॥ ४१ ॥ हस्त्यश्वरथयानैश्च धर्मज्ञः शास्त्रतत्परः ॥ गृहे स्तंभशताकीर्णे सौवर्णे रजतान्विते ॥ ४२ ॥ सप्ताष्टभूमिसुद्वारे दासीदाससमाकुले ॥ मत्तमातंगनिःश्वासैर्वाजिहेषितनादितैः ॥ ४३ ॥ क्षुभ्यते तस्य तद्वारमिंद्रस्य भुवनं यथा ॥ राजराजेश्वरः श्रीमान्सर्वस्त्रीजनवल्लभः ॥ ४४ ॥ तस्मिन्गृहे वसित्वा तु क्रीडाभोगसमन्वितः ॥ जीवेद्वर्षशतं साग्रं सर्वव्याधिविवर्जितः ॥ ४५ ॥ एवं तेषां भवेत्सर्वं ये मृता ह्यमरेश्वरे ॥ अग्निप्रवेशं यः कुर्याद्भक्त्या ह्यमरकंटके ॥ ४६ ॥ स मृतः स्वर्गमाप्नोति यास्यते परमां गतिम् ॥ स्नानं दानं जपो होमः शुभं वा यदि वाऽशुभम् ॥ ४७ ॥ पुराणे श्रूयते राजन्सर्वं कोटिगुणं भवेत् ॥ तस्यास्तीरे तु ये वृक्षाः पतिताः कालपर्यये ॥ ४८ ॥ नर्मदातोयसंस्पृष्टास्ते यांति परमां गतिम् ॥ अनिवृत्तिका गतिस्तस्य पवनस्यांबरे यथा ॥ ४९ ॥ पतनं कुरुते यस्तु तस्मिंस्तीर्थे नराधिप ॥ कन्यास्त्रीणि सहस्राणि पाताले भोगभागिनः ॥ ५० ॥ तिष्ठंति भवने तस्य प्रेषणे प्रार्थयंति च ॥ दिव्यभोगैः सुसंपन्नः क्रीडते कालमीप्सितम् ॥ ५१ ॥ पृथिव्यां ह्यासमुद्रायां तादृशो नैव जायते ॥ यादृशोऽयं नरश्रेष्ठ पर्वतोऽमरकंटकः ॥ ५२ ॥ तत्र तीर्थं तु विज्ञेयं पर्वतस्यानु पश्चिमे ॥ ह्रदो जालेश्वरोनाम त्रिषु लोकेषु विश्रुतः ॥ ५३ ॥ तत्र पिंडप्रदानेन संध्योपासनकेन तु ॥ पितरो द्वादशाब्दानि तर्पितास्तु भवंति वै ॥ ५४ ॥ दक्षिणे नर्मदातीरे कपिला तु महानदी ॥ सरलार्जुनसंच्छन्ना खदिरैरुपशोभिता ॥ ५५ ॥ माधवीमल्लकीभिश्च वल्लीभिश्चाप्यलंकृता ॥ श्वापदैर्गर्जमानैश्च गोमायुवानरादिभिः ॥ ५६ ॥ पक्षिजातिविशेषैश्च नित्यं प्रमुदिता नृप ॥ साग्रं कोटिशतं तत्र ऋषीणामिति शुश्रुम ॥ ५७ ॥ तपस्तप्त्वा गतं मोक्षं येषां जन्म न चागमः ॥ येन तत्र तपस्तप्तं कपिलेन महात्मना ॥ ५८ ॥ तत्र तद्वा भवत्तीर्थं पुण्यं सिद्धनिषेवितम् ॥ येन सा कापिलैस्तात सेविता ऋषिभिः पुरा ॥ ५९ ॥ तेन सा कपिलानाम गीता पापक्षयंकरी ॥ तत्र कोटिशतं साग्रं तीर्थानाममरेश्वरे ॥ ६० ॥ अहोरात्रोषितो भूत्वा मुच्यते सर्वकिल्बिषैः ॥ दानं च विधिवद्दत्त्वा यथाशक्त्या द्विजोत्तमे ॥ ६१ ॥ ईश्व

---

१ तीर्थं त्वंतरं—इ० पा० । २ जायते विमले कुले—इ० पा० । ३ दीर्घायुः—इ० पा० ।

रानुग्रहात्सर्वं तत्र कोटिगुणं भवेत् ॥ यस्मादनक्षरं रूपं प्रणवस्येह भारत ॥ ६२ ॥ शिवस्वरूपस्य ततः कृतमात्राक्षरं भवेत् ॥ तिर्यंचः पशवश्चैव वृक्षा गुल्मलतादयः ॥६३॥ तेऽपि तत्र क्षयं याताः स्वर्गं यांति न संशयः ॥ विशल्या तत्र या प्रोक्ता तत्रैव तु महानदी ॥६४॥ स्नात्वा दत्त्वा यथा न्यायं तत्रापि सुकृती भवेत् ॥ तत्र देवगणाः सर्व्वे सकिन्नरमहोरगाः ॥ ६५ ॥ यक्षराक्षसगंधर्व्वा ऋषयश्च तपोधनाः ॥ सर्व्वे समागतास्तां वै पश्यन्ति ह्यमरेश्वरे ॥ ६६ ॥ तैश्च सर्वैः समागम्य वन्दितौ तौ शुभौ कटौ ॥ पुरा युगे महाघोरे सर्वलोकभयंकरे ॥ ६७ ॥ नर्मदायाः सुतस्तत्र सशल्यो विशलीकृतः ॥ सर्वदेवैश्च ऋषिभिर्विशल्या तेन सा स्मृता ॥ ६८ ॥ ॥ युधिष्ठिर उवाच ॥ ॥ उत्पन्ना तु कथं तात विशल्या कपिला कथम् ॥ कथं वा नर्मदापुत्रः शल्ययुक्तोऽभवन्मुने ॥ ६९ ॥ आश्चर्यभूतं लोकस्य श्रोतुमिच्छामि सुव्रत ॥ ७० ॥ ॥ श्रीमार्कंडेय उवाच ॥ ॥ पुरा दाक्षायणीनाम सहिता शूलपाणिना ॥ क्रीडित्वा नर्मदातोये परया च मुदा नृप ॥७१॥ जलादुत्तीर्य सहसा वस्त्रमन्यत्समाहरत्॥ देव्यास्तु स्नानवस्त्रं तत्पीडितं लीलया नृप ॥ ७२ ॥ सहितानुचरीभिस्तु इन्द्रायुधनिभं भृशम् ॥ तस्मिन्निष्पीड्यमाने तु वारि यन्निःसृतं तदा ॥ ॥ ७३ ॥ तस्मादियं सरिज्जज्ञे कपिलाख्या महानदी ॥ संयोगादंगरागस्य वस्त्रोद्यत्कपिलं जलम् ॥ ७४ ॥ गलितं तेन कपिला वर्णतो नामतोऽभवत् ॥ तथा गन्धरसैर्युक्तं नानापुष्पैस्तु वासितम् ॥ ७५ ॥ नानावर्णारुणं शुभ्रं वस्त्राद्यद्वारि निःसृतम् ॥ पीड्यमानं करैः शुभ्रैस्तैस्तु पल्लवकोमलैः ॥ ७६ ॥ कपिलं जलमिश्रैस्तु तस्मादेषा सरिद्वरा ॥ कपिला चोच्यते तज्ज्ञैः पुराणार्थविशारदैः ॥ ७७ ॥ एषा वै वस्त्रसंभूता नर्मदातोयसंभवा ॥ महापुण्यतमा ज्ञेया कपिलाँ सरिदुत्तमा ॥ ७८ ॥ इति श्रीस्कांदे महापुराण एकाशीतिसाहस्र्यां संहितायां पञ्चम आवंत्यखण्डे रेवाखण्डे नर्मदामाहात्म्ये कपिलासरित्सम्भववर्णनंनामैकविंशोऽध्यायः ॥ २१ ॥ ॥ छ ॥ ॥ श्रीमार्कंडेय उवाच ॥ ॥ अतः परं प्रवक्ष्यामि सा विशल्या ह्यभूद्यथा ॥ आश्चर्यभूता लोकस्य सर्वपापक्षयंकरी ॥ १ ॥ ब्रह्मणो मानसः पुत्रो मुख्यो ह्यग्निरजायत ॥ मुख्यो वह्निरितिप्रोक्त ऋषिः परमधार्म्मिकः ॥ २ ॥ तस्य स्वाहाभवत्पत्नी स्मृता दाक्षायणी तु सा ॥ तस्यां मुख्या महाराज त्रयः पुत्रास्तदाऽभवन् ॥ ३ ॥ अग्निराहवनीयस्तु दक्षिणाग्निस्तथैव च ॥ गार्हपत्यस्तृतीयस्तु त्रैलोक्यं यैश्च धार्यते ॥ ४ ॥ तथा वै गार्हपत्योग्निर्जज्ञे पुत्रद्वयं शुभम् ॥ पेन्मकः शंकुनामा च तावुभावग्निसत्तमौ ॥ ५ ॥ वसन्नग्निर्नदीतीरे समाश्रित्य महत्तपः ॥ रुद्रमाराधयामास जितात्मा सुसमाहितः ॥ ६ ॥ दशवर्षसहस्राणि चचार

१ युद्धे—इ० पा० । २ शल्योऽयं दृढकल्कः—इ० पा० । ३ तस्करः—इ० पा० । ४ तथा पापक्षयंकरी—इ० पा० । ५ शर्वाकः—इ० पा० ।

विपुलं तपः ॥ तमुवाच महादेवः प्रसन्नो वृषभध्वजः ॥ ७ ॥ भोभो ब्रूहि महाभाग यत्ते मनसि वर्तते ॥ दाता ह्यहमसन्देहो यद्यपि स्यात्सुदुर्ल्ल
भम् ॥ ८ ॥ ॥ अग्निरुवाच ॥ ॥ नर्मदेयं महाभागा सरितो याश्च षोडश ॥ भवन्तु मम पत्न्यस्तास्त्वत्प्रसादान्महेश्वर ॥ ९ ॥ तासु वै
चिंतितान्पुत्रानग्र्यानुत्पादयाम्यहम् ॥ एष एव वरो देव दीयतां मे महेश्वर ॥ १० ॥ ॥ ईश्वर उवाच ॥ ॥ एतास्तु धिष्णिनाम्न्यो वै भवि
ष्यन्ति सरिद्वराः ॥ पत्न्यस्तव विशालाक्ष्यो वेदे' ख्याता न संशयः ॥ ११ ॥ तासां पुत्रा भविष्यन्ति ह्यग्नयो येऽध्वरे स्मृताः ॥ धिष्ण्यानाम
सुविख्याता यावदाभूतसंप्लवम् ॥ १२ ॥ एवमुक्त्वा महादेवस्तत्रैवांतरधीयत ॥ नर्मदा च सरिच्छ्रेष्ठा तस्य भार्य्या बभूव ह ॥ १३ ॥
कावेरी कृष्णवेणी च रेवा च यमुना तथा ॥ गोदावरी वितस्ता च चन्द्रभागा इरावती ॥ १४ ॥ विपाशा कौशिकी चैव सरयूः शतरुद्रिका ॥
शिप्रा सरस्वती चैव ह्लादिनी पावनी तथा ॥ १५ ॥ एताः षोडश नद्यो वै भार्यार्थं संव्यवस्थिताः ॥ तदात्मानं विभज्याशु
धिष्णीषु स महाद्युतिः ॥ १६ ॥ व्यभिचारात्तु भर्त्तुर्वै नर्मदाद्यासु धिष्णिषु ॥ उत्पन्नाः शुचयः पुत्राः सर्वे ते धिष्ण्यपाः स्मृताः ॥ १७ ॥
तस्याश्च नर्मदायास्तु धिष्णीन्द्रोनाम विश्रुतः ॥ बभूव पुत्रो बलवान्रूपेणाप्रतिमो नृप ॥ १८ ॥ ततो देवासुरं युद्धमभवल्लोमहर्षणम् ॥ मयतार
क मित्येवं त्रिषु लोकेषु विश्रुतम् ॥ १९ ॥ तत्र दैत्यैर्महाघोरैर्मयतारपुरोगमैः ॥ तांडितास्ते सुरास्त्रस्ता विष्णुं वै शरणं ययुः ॥ २० ॥ त्रा
यस्व नो हृषीकेश घोरादस्मान्महाभयात् ॥ दैत्यान्सर्वान्संहरस्व मयतारपुरोगमान् ॥ २१ ॥ एवमुक्तः स भगवान्दिशो दश व्यलोकयत् ॥
ततो भगवता दृष्टौ रणे पावकमारुतौ ॥ २२ ॥ आहूतौ विष्णुना तौ तु सकाशं जग्मतुः क्षणात् ॥ स्थितौ तौ प्रणतौ चाग्रे देवदेवस्य धीमतः ॥
॥ २३ ॥ ततो धिष्णिः पावकेंद्रो देवेनोक्तो महात्मना ॥ निर्दहेमान्महाघोरान्नार्मदेय महासुरान् ॥ २४ ॥ अथैवमुक्तौ तौ देवौ रणे पावक
मारुतौ ॥ दैत्यान्ददहतुः सर्व्वान्मयतारपुरोगमान् ॥ २५ ॥ दह्यमानास्तु ते सर्वे शस्त्रैरग्निं त्ववेष्टयन् ॥ दिव्यैरग्न्यर्कसंकाशैः शतशोऽथ
सहस्रशः ॥ २६ ॥ तांश्चाग्निः शस्त्रनिकरैर्निर्ददाह महासुरान् ॥ ज्वालामालाकुलं सर्वं वायुनानिर्मितं तदा ॥ २७ ॥ दह्यमानास्ततो दैत्या अग्नि
ज्वालासमावृताः ॥ प्रविश्य पातालतलं जले लीनाः सहस्रशः ॥ २८ ॥ ततः कुमारमग्निं तु नर्मदापुत्रमव्ययम् ॥ पूजयित्वा सुराः सर्वे जग्मुस्ते
त्रिदशालयम् ॥ २९ ॥ सशल्यस्तु महातेजा रेवापुत्रो वृतोऽग्निभिः ॥ नर्मदामागतः क्षिप्रं मातरं द्रष्टुमुत्सुकः ॥ ३० ॥ तं दृष्ट्वा पुत्रमायांतं शस्त्रौ

१ लोके–इ०पा० । २ कृष्णवर्णा च–इ०पा० । ३ जाह्नवी–इ०पा० । ४ मयग्रस्ता महात्मानो विष्णुमीशानन्वयुः–इ०पा० ।

घेण परिक्षतम् ॥ नर्मदा पुण्यसलिला अभ्युत्थाय सुविस्मिता ॥ ३१ ॥ पर्यष्वजत बाहुभ्यां प्रस्नवापीडितस्तनी ॥ सशल्यं पुत्रमादाय कापिलं
ह्रदमाविशत् ॥ ३२ ॥ प्रविष्टमात्रे तु ह्रदे कापिले पापनाशिनि ॥ सशल्यं तं विशल्यं च क्षणात्कृतवती तदा ॥३३॥ स विशल्योऽभवद्यस्मात्प्राप्य
तस्याः शिवं जलम् ॥ कपिला नामतस्तेन विशल्या चोच्यते बुधैः ॥ ३४ ॥ अन्येपि तत्र ये स्नाताः शुचयस्तु समाहिताः ॥ पापशल्यैः प्रमुच्यंते
मृता यांति सुरालयम् ॥ ३५ ॥ एतत्ते सर्वमाख्यातं यत्पृष्टोऽहं पुरा त्वया ॥ उत्पत्तिकारणं तात विशल्याया नरेश्वर ॥ ३६ ॥ इति श्रीस्कांदे
महापुराण एकाशीतिसाहस्र्यां संहितायां पञ्चम आवंत्यखण्डे रेवाखण्डे नर्मदामाहात्म्ये विशल्यासंभवोनाम द्वाविंशोऽध्यायः ॥ २२ ॥
॥ ॥ छ ॥ ॥ मार्कण्डेय उवाच ॥ ॥ तत्रैव संगमे राजन्भक्त्या परमया नृप ॥ प्राणांस्त्यजंति ये मर्त्यास्ते यांति परमां गतिम् ॥ १ ॥
संन्यस्तसर्वसंकल्पो यस्तु प्राणान्परित्यजेत् ॥ अमरेश्वरमासाद्य स स्वर्गे नियतं वसेत् ॥ २ ॥ शैलेंद्रं यः समासाद्य आत्मानं मुंचते नरः ॥
विमानेनार्कवर्णेन स गच्छेदमरावतीम् ॥ ३ ॥ नरं पतंतमालोक्य नगादमरकन्टकात् ॥ ब्रुवंत्यप्सरसः सर्वा मम भर्त्ता भवेदिति ॥ ४ ॥ समं
जलं धर्मविदो वदंति सारस्वतं गांगमिति प्रबुद्धाः ॥ तस्योपरिष्टात्प्रवदंति तज्ज्ञा रेवाजलं नात्र विचारणास्ति ॥ ५ ॥ अनेकविद्याधरकिन्नराद्यैर
ध्यासितं पुण्यतमाधिवासैः ॥ रेवाजलं धारयतो हि मूर्ध्नां स्थानं सुरेंद्राधिपतेः समीपे ॥ ६ ॥ नर्मदा सर्वदा सेव्या बहुनोक्तेन किं नृप ॥ यदी
च्छेन्न पुनर्द्रष्टुं घोरं संसारसागरम् ॥ ७ ॥ त्रयाणामपि लोकानां महती पावनी स्मृता ॥ यत्र तत्र मृतस्यापि ध्रुवं गाणेश्वरी गतिः ॥ ८ ॥ अनेक
यज्ञायतनैर्वृतांगी न ह्यत्र किंचिद्यदतीर्थमस्ति ॥ तस्यास्तु तीरे भवता यदुक्तं तपस्विनो वाप्यतपस्विनो वा ॥ ९ ॥ म्रियंति ये पापकृतो
मनुष्यास्ते स्वर्गमायांति यथाऽमरेंद्राः ॥ १० ॥ एवं तु कपिला चैव विशल्या राजसत्तम ॥ ईश्वरेण पुरा सृष्टा लोकानां हितकाम्यया ॥ ११ ॥
तत्र स्नात्वा नरो राजन्सोपवासो जितेंद्रियः ॥ अश्वमेधस्य महतोऽसंशयं फलमाप्नुयात् ॥ १२ ॥ अनाशकं च यः कुर्य्यात्तस्मिंस्तीर्थे नराधिप ॥
सर्वपापविनिर्मुक्तो याति वै शिवमंदिरम्ः ॥ १३ ॥ पृथिव्यां सागरांतायां स्नानदानेन यत्फलम् ॥ विशल्यासंगमे स्नात्वा सकृत्तत्फलमश्नुते ॥
॥ २९ ॥ ॥ १४ ॥ एवं पुण्या पवित्रा च कथिता तव भूपते ॥ भूयो मां पृच्छसि च यत्तच्चैव कथयाम्यहम् ॥ १५ ॥ इति श्रीस्कान्दे महापुराण एका
शीतिसाहस्र्यां संहितायां पञ्चम आवन्त्यखण्डे रेवाखण्डे विशल्यासंगममाहात्म्यवर्णनंनाम त्रयोविंशोऽध्यायः ॥ २३ ॥ ॥ छ ॥ ॥

१ स्वल्पभुक्—इ० पा० ।

॥ ॥ श्रीमार्कंडेय उवाच ॥ ॥ संगमः करनर्मदयोः पुरे मांधातृसंज्ञिते ॥ गत्वा स्नात्वा तपयित्वा पितॄन्विष्णुपुरं नयेत् ॥ १ ॥ मर्दयित्वा करौ पूर्वं विष्णुर्दैत्यजिघांसया ॥ चक्रं जग्राह तत्रैव स्वेदाज्जाता सरिद्वरा ॥ २ ॥ संगता रेवया तत्र स्नात्वा पापैः प्रमुच्यते ॥ ३ ॥ इति श्रीस्कांदे महापुराण एकाशीतिसाहस्र्यां संहितायां पंचम आवन्त्यखण्डे रेवाखण्डे नर्मदामाहात्म्ये करनर्मदासंगममाहात्म्यवर्णनंनाम चतुर्विंशोऽध्यायः ॥ २४ ॥ ॥ छ ॥ ॥ श्रीमार्कंडेय उवाच ॥ ॥ ॐकारात्पूर्वभागे वै संगमो लोकविश्रुतः ॥ रेवया संगता यत्र नीलगंगा नृपोत्तम ॥ १ ॥ तत्र स्नात्वा जपित्वा च कोऽर्थोऽलभ्यो भवेद्भुवि ॥ षष्टिवर्षसहस्राणि नीलकण्ठपुरे वसेत् ॥ २ ॥ तर्पयित्वा पितॄञ्छ्राद्धे तिलमिश्रैर्जलैरपि ॥ उद्धरेदात्मना सार्द्धं पुरुषानेकविंशतिम् ॥ ३ ॥ इति श्रीस्कांदे महापुराण एकाशीतिसाहस्र्यां संहितायां पञ्चम आवन्त्यखण्डे रेवाखण्डे नर्मदामाहात्म्ये नीलगंगायाः संगममाहात्म्यवर्णनंनाम पंचविंशोऽध्यायः ॥ २५ ॥ ॥ छ ॥ ॥ युधिष्ठिर उवाच ॥ ॥ जालेश्वरेपि यत्प्रोक्तं त्वया पूर्वं द्विजोत्तम ॥ तत्कथं तु भवेत्पुण्यमृषिसिद्धनिषेवितम् ॥ १ ॥ ॥ श्रीमार्कंडेय उवाच ॥ ॥ जालेश्वरात्परं तीर्थं न भूतं न भविष्यति ॥ तस्योत्पत्तिं कथयतः शृणु त्वं पांडुनंदन ॥ २ ॥ पुरा ऋषिगणाः सर्वे सेन्द्राश्चैव मरुद्गणाः ॥ तापिता असुरैः सर्वैः क्षयं नीता ह्यनेकशः ॥ ३ ॥ बाणासुरप्रभृतिभिर्जंभशुम्भपुरोगमैः[1] ॥ वध्यमाना ह्यनेकैश्च ब्रह्माणं शरणं गताः ॥ ४ ॥ विमानैः पर्वताकारैर्हयैश्चैव गजोपमैः ॥ स्यंदनैर्नगराकारैः सिंहशार्दूलयोजितैः ॥ ५ ॥ कच्छपैर्मकरैश्चान्ये जग्मुरन्ये पदातयः ॥ प्राप्य ते परमं स्थानमशक्यं यदधार्मिकैः ॥ ६ ॥ दृष्ट्वा पद्मोद्भवं देवं सर्वलोकस्य शंकरम्[3] ॥ ते सर्वे तत्र गत्वा तु स्तुतिं[2] चक्रुः समाहिताः ॥ ७ ॥ ॥ ॥ देवा ऊचुः ॥ ॥ जयामेय जयाभेद जय संभूतिकारक ॥ पद्मयोने सुरश्रेष्ठ त्वां वयं शरणं गताः ॥ ८ ॥ तच्छ्रुत्वा तु वचो देवो देवानां भावितात्मनाम् ॥ मेघगंभीरया वाचा प्रत्युवाच पितामहः ॥ ९ ॥ किं वो ह्यागमनं देवाः सर्वेषां च विवर्णता ॥ केनावमानिताः सर्वे शीघ्रं कथयतामराः ॥ १० ॥ ॥ देवा ऊचुः ॥ ॥ बाणोनाम महावीर्य्यो दानवो बलदर्पितः ॥ तेनास्माकं हृतं सर्वं धनरत्नैर्वियोजिताः ॥ ११ ॥ देवानां वचनं श्रुत्वा ब्रह्मा लोकपितामहः ॥ चिंतयामास देवेशस्तस्य नाशाय या क्रिया ॥ १२ ॥ अवध्यो दानवः पापः सर्वेषां वै दिवौकसाम् ॥ मुक्त्वा तु शंकरं देवं न मया न च विष्णुना ॥ १३ ॥ तत्रैव सर्वे गच्छामो यत्र देवो महेश्वरः ॥ स

१ जंभशुंभनिशुंभैश्च कूष्मांडकुहकादिभिः—इ० पा० । २ स्तुतिभिः प्रणताः सुराः—इ० पा० । ३ सर्वलोकस्य शंकरम्—इ०पा० ।

गतिश्चैव सर्वेषां विद्यतेऽन्यो न कश्चन ॥ १४ ॥ एवमुक्त्वा सुरैः सर्वैर्ब्रह्मा वेदविदांवरः ॥ ब्राह्मणैः सह विद्वद्भिर्गतो यत्र महेश्वरः ॥ १५ ॥
स्तुतिभिश्च सुपुष्टाभिस्तुष्टाव परमेश्वरम् ॥ १६ ॥ ॥ देवा ऊचुः ॥ ॥ जय त्वं देवदेवेश जयोमार्द्धशरीरधृक् ॥ वृषासन महाबाहो शशां
ककृतभूषण ॥ १७ ॥ नमः शूलाग्रहस्ताय नमः खट्वांगधारिणे ॥ जय भूतपते देव दक्षयज्ञविनाशन ॥ १८ ॥ पञ्चाक्षर नमो देव पंचभूतात्म
विग्रह ॥ पञ्चवक्त्रमयेशान वेदैस्त्वं तु प्रगीयसे ॥ १९ ॥ सृष्टिपालनसंहारांस्त्वं सदा कुरुषे नमः ॥ अष्टमूर्ते स्मरहर स्मर सत्यं यथा स्तुतः ॥ २० ॥
पञ्चात्मिका तनुर्देव ब्राह्मणैस्ते प्रगीयते ॥ सद्यो वामे तथाऽघोरे ईशे तत्पुरुषे तथा ॥ २१ ॥ हेमजाले सुविस्तीर्णे हंसवत्कूजसे हर ॥ एवं स्तुतो
मुनिगणैर्ब्रह्माद्यैश्च सुरासुरैः ॥ २२ ॥ प्रहृष्टः सुमना भूत्वा सुरसंघानुवाच ह ॥ २३ ॥ ॥ ईश्वर उवाच ॥ ॥ स्वागतं देवविप्राणां सुप्रभाताद्य
शर्ववरी ॥ किं कुर्मो वदत क्षिप्रं कोन्यः सेव्यः सुरासुरैः ॥ २४ ॥ किं दुःखं को नु संतापः कुतो वो भयमागतम् ॥ कथयध्वं महाभागाः
कारणं यन्मनोगतम् ॥ २५ ॥ एवमुक्तास्तु रुद्रेण प्रत्यवोचन्सुरर्षभाः ॥ स्वान्स्वान्देहान्दर्शयंतो लब्धमाना अधोमुखाः ॥ २६ ॥ अस्ति
घोरो महावीर्यो दानवो बलदर्पितः ॥ बाणोनामेति विख्यातो यस्य तत्रिपुरं महत् ॥ २७ ॥ तेन वै सुतपस्तप्तं दशवर्षशतानि हि ॥ तस्य तुष्टो
ऽभवद्ब्रह्मा नियमेन दमेन च ॥ २८ ॥ पुराणि तान्यभेद्यानि ददौ कामगमानि वै ॥ आयसं राजतं चैव सौवर्णं च तथा परम् ॥ २९ ॥ त्रिपुरं
ब्रह्मणा सृष्टं भ्रमत्तत्कामगामि च ॥ तस्यैव तु बलोत्कृष्टात्त्रिपुरे दानवाः स्थिताः ॥ ३० ॥ त्रैलोक्यं सकलं देव पीडयंति महासुराः ॥ दंडपा
शासिशस्त्राणि अविकारे विकुर्वते ॥ त्रिपुरं दानवैर्जुष्टं भ्रमत्तच्चक्रसंनिभम् ॥ ३१ ॥ क्वचिद्दृश्यमदृश्यं वा मृगतृष्णेव लक्ष्यते ॥ ३२ ॥ यस्मिन्पतति
तद्दिव्यं दृत्तस्य त्रिपुरं महत् ॥ न तत्र ब्राह्मणा देवा गावो नैव तु जंतवः ॥ ३३ ॥ न तत्र दृश्यते किंचित्पतेद्यत्र पुरत्रयम् ॥ नद्यो ग्रामाश्च देशाश्च
बहवो भस्मसात्कृताः ॥ ३४ ॥ सुवर्णं रजतं चैव मणिमौक्तिकमेव च ॥ स्त्रीरत्नं शोभनं यच्च तत्सर्वं कर्षते बलात् ॥ ३५ ॥ न शस्त्रेण न
चास्त्रेण न दिवा निशि वा हर ॥ शक्यते देवसंघैश्च निहंतुं स कथंचन ॥ ३६ ॥ तद्दहस्व महादेव त्वं हि नः परमा गतिः ॥ एवं प्रसादं देवेशो
सर्वेषां कर्तुमर्हसि ॥ ३७ ॥ येन देवाश्च गंधर्वा ऋषयश्च तपोधनाः ॥ परां धृतिं समायांति तत्प्रभो कर्तुमर्हसि ॥ ३८ ॥ ॥ ईश्वर उवाच ॥ ॥
॥ २६ ॥ एतत्सर्वं करिष्यामि मा विषादं गमिष्यथ ॥ अचिरेणैव कालेन कुर्यां युष्मत्सुखावहम् ॥ ३९ ॥ आश्वासयित्वा तान्देवान्सर्वानिंद्रपुरोगमान् ॥ ॥२००॥

१ नान्यस्त्राता भविष्यति—इ०पा० । २ लोकपितामहः—इ०पा० । ३ सुप्रभाञ्जर्जरीकृतान्—इ०पा० । ४ गिरिश—इ०पा० ।

चिंतयामास देवेशस्त्रिपुरस्य वधं प्रति ॥ ४० ॥ कथं केन प्रकारेण हंतव्यं त्रिपुरं मया ॥ तमेकं नारदं मुक्त्वा नान्योपायो विधीयते ॥ ४१ ॥
एवं संस्तभ्य चात्मानं ततो ध्यातः स नारदः ॥ तत्क्षणादेव संप्राप्तो वायुभूतो महातपाः ॥ ४२ ॥ कमंडलुधरो देवस्त्रिदंडी ज्ञानकोविदः ॥
योगपट्टाक्षसूत्रेण च्छत्रेणैव विराजितः ॥ ४३ ॥ जटाजूटाबद्धशिरा ज्वलनार्क्कसमप्रभः ॥ त्रिधा प्रदक्षिणीकृत्य दंडवत्पतितो भुवि ॥ ४४ ॥
कृतांजलिपुटो भूत्वा नारदो भगवान्मुनिः ॥ स्तोत्रेण महता शर्वः स्तुतो भक्त्या महामनाः ॥ ४५ ॥ ॥ नारद उवाच ॥ ॥ जय शंभो
विरूपाक्ष जय देव त्रिलोचन ॥ जय शंकर ईशान रुद्रेश्वर नमोऽस्तु ते ॥ ४६ ॥ त्वं पतिस्त्वं जगत्कर्ता त्वमेव लयकृद्विभो ॥ त्वमेव जगतां नाथो
दुष्टांतकनिषूदनः ॥ ४७ ॥ त्वं नः पाहि सुरेशान त्रयीमूर्ते सनातन ॥ भवमूर्ते भवारे त्वं भजतामभयो भव ॥ ४८ ॥ भवभावविनाशार्थं भव त्वां
शरणं भजे ॥ किमर्थं चिंतितो देव आज्ञा मे दीयतां प्रभो ॥ ४९ ॥ कस्य संक्षोभये चित्तं को वाद्य पततु क्षितौ ॥ कमद्य कलहेनाहं योजये जय
तांवर ॥ ५० ॥ नारदस्य वचः श्रुत्वा देवदेवो महेश्वरः ॥ उत्फुल्लनयनो भूत्वा इदं वचनमब्रवीत् ॥ ५१ ॥ स्वागतं ते मुनिश्रेष्ठ सदैव कलह
प्रिय ॥ वीणावादनतत्त्वज्ञ ब्रह्मपुत्र सनातन ॥ ५२ ॥ गच्छ नारद शीघ्रं त्वं यत्र तत्त्रिपुरं महत् ॥ बाणस्य दानवेंद्रस्य सर्वलोकभयावहम् ॥ ५३ ॥
भर्त्तारो देवतातुल्याः स्त्रियस्तत्राप्सरः समाः ॥ तासां वै तेजसा चैव भ्रमते त्रिपुरं महत् ॥ ५४ ॥ न शक्यते कथं भेत्तुं सर्वोपायैर्द्विजो
त्तम ॥ गत्वा त्वं मोहय क्षिप्रं पृथग्धर्मैरनेकधा ॥ ५५ ॥ . ॥ नारद उवाच ॥ ॥ तव वाक्येन देवेश भेदयामि पुरोत्तमम् ॥ अभेद्यं बहु
धोपायैर्यत्तु देवैः सवासवैः ॥ ५६ ॥ एवमुक्त्वा गतो भूप शतयोजनमायतम् ॥ बाणस्य तत्पुरश्रेष्ठमृद्धिवृद्धिसमायुतम् ॥ ५७ ॥ कृतकौतुकसंबाधं
नानाधातुविचित्रितम् ॥ अनेकहर्म्यसंछन्नमनेकायतनोज्ज्वलम् ॥ ५८ ॥ द्वारतोरणसंयुक्तं कपाटार्गलभूषितम् ॥ बहुयंत्रसमोपेतं प्राकारपरिखोज्ज्व
लम् ॥ ५९ ॥ वापीकूपतडागैश्च देवतायतनैर्युतम् ॥ हंसकारंडवाकीर्णं पद्मिनीखंडमंडितम् ॥ ६० ॥ अनेकवनशोभाढ्यं नानाविहगमंडितम् ॥
एवंगुणगणाकीर्णं बाणस्य पुरमुत्तमम् ॥ ६१ ॥ तस्य मध्ये महाकायं सप्तकक्षं सुशोभितम् ॥ बाणस्य भवनं दिव्यं सर्वं कांचनभूषितम् ॥ ६२ ॥
मौक्तिकादामशोभाढ्यं वज्रवैडूर्यभूषितम् ॥ रुक्मपट्टतलाकीर्णं रत्नभूम्या सुशोभितम् ॥ ६३ ॥ मत्तमातंगनिःश्वासैः स्यंदनैः संकुलीकृतम् ॥ हय
हेषितशब्दैश्च नारीणां नूपुरस्वनैः ॥ ६४ ॥ खड्गतोमरहस्तैश्च वज्रांकुशशरायुधैः ॥ रक्षितं घोररूपैश्च दानवैर्बलदर्पितैः ॥ ६५ ॥ एवं गुणगणाकीर्णं

१. जगत्त्वं नः—ह०पा० । २ साधयामि—ह०पा० ।

बाणस्य भवनोत्तमम् ॥ कैलासशिखरप्रख्यं महेन्द्रभवनोपमम् ॥ ६६ ॥ नारदो गगने शीघ्रमगमत्पुरसन्मुखः ॥ द्वारदेशं समासाद्य क्षत्तारं वाक्यम
ब्रवीत् ॥ ६७ ॥ भोभोः क्षत्तर्महाबुद्धे राजकार्यविशारद ॥ शीघ्रं बाणाय चाचक्ष्व नारदो द्वारि तिष्ठति ॥ ६८ ॥ स वंदयित्वा चरणौ नारदस्य त्व
रान्वितः ॥ सभामध्यगतं बाणं विज्ञप्तुमुपचक्रमे ॥ ६९ ॥ वेपमानांगयष्टिस्तु करेणापिहिताननः ॥ शृण्वतां सर्वयोधानामिदं वचनमब्रवीत् ॥
॥ ७० ॥ वंदितो देवगन्धर्वैर्यक्षकिन्नरदानवैः ॥ कलिप्रियो दुराराध्यो नारदो द्वारि तिष्ठति ॥ ७१ ॥ द्वारपालस्य तद्वाक्यं श्रुत्वा बाणस्त्वरान्वितः ॥
द्वाःस्थमाह महादैत्यः सविस्मयमिदं तदा ॥ ७२ ॥ ॥ बाण उवाच ॥ ॥ ब्रह्मपुत्रं सतेजस्कं दुःसहं दुरतिक्रमम् ॥ प्रवेशय महाभागं किमर्थं
वारितो बहिः ॥ ७३ ॥ श्रुत्वा प्रभोर्वचस्तस्य प्रावेशयदुदीरितम् ॥ गत्वा वेगेन महता नारदं गृहमागतम् ॥ ७४ ॥ दृष्ट्वा देवर्षिमायांतं नारदं
सुरपूजितम् ॥ सहसोत्थाय संहृष्टो ववंदे चरणौ मुनेः ॥ ७५ ॥ ददौ चासनमर्घ्यं च पाद्यं पूजां यथाविधि ॥ न्यवेदयच्च तद्राज्यमात्मानं बांधवैः
सह ॥ ७६ ॥ पप्रच्छ कुशलं चापि मुनिं बाणासुरः स्वयम् ॥[१] ७७ ॥ ॥ नारद उवाच ॥ ॥ साधुसाधु महाबाहो दनोर्वंशविवर्द्धन ॥ कोऽन्य
स्त्रिभुवने श्लाघ्यस्त्वां मुक्त्वा दनुपुंगव ॥ ७८ ॥ पूजितोऽहं दनुश्रेष्ठ धनरत्नैः सुशोभनैः ॥ राज्येन चात्मना वापि ह्येवं कः पूजयेत्परः ॥ ७९ ॥ न
मे कार्यं हि भोगेन भुंक्ष्व राज्यमनामयम् ॥ त्वद्दर्शनोत्सुकः प्राप्तो दृष्ट्वा देवं महेश्वरम् ॥ ८० ॥ भ्रमते त्रिपुरं लोके स्त्रीसतीत्वान्मया श्रुतम् ॥
तान्द्रष्टुकामः संप्राप्तस्त्वद्दारान्दानवेश्वर ॥ ८१ ॥ मन्यसे यदि मे शीघ्रं दर्शयस्व च मा चिरम् ॥ नारदस्य वचः श्रुत्वा कंचुकिं समुदीक्ष्य वै ॥
॥ ८२ ॥ अंतःपुरचरं वृद्धं दंडपाणिं गुणान्वितम् ॥ उवाच राजा हृष्टात्मा शब्देनापूरयन्दिशः ॥८३॥ नारदाय महादेवीं दर्शयस्वेह कंचुकिन् ॥
अंतःपुरचरैः सर्वैः समेतामविशंकितः ॥ ८४ ॥ नाथस्याज्ञां पुरस्कृत्य गृहीत्वा नारदं करे ॥ प्रविश्याकथयद्देव्यै नारदोऽयं समागतः ॥ ८५ ॥
दृष्ट्वा देवी मुनिश्रेष्ठं कृत्वा पादाभिवंदनम् ॥ आसनं कांचनं शुभ्रमर्घ्यपाद्यादिकं ददौ ॥ ८६ ॥ तस्यै स भगवांस्तुष्टो ह्याशीर्वादमदात्परम् ॥ नान्या
देवि त्रिलोकेपि त्वत्समा दृश्यतेऽङ्गना ॥ ८७ ॥ पतिव्रता शुभाचारा सत्यशौचसमन्विता ॥ यस्याः प्रभावात्त्रिपुरं भ्रमते चक्रवत्सदा ॥ ८८ ॥
॥ २७ ॥ तच्छ्रुत्वा वचनं देवी नारदस्य मुदान्वितम् ॥ पर्यपृच्छदृषिं भक्त्या धर्मं धर्मभृतांवरा ॥ ८९ ॥ ॥ राज्ञ्युवाच ॥ ॥ भगवन्मानुषे लोके देवास्तु
ष्यंति कैर्व्रतैः ॥ कानि दानानि दीयंते येषां च स्यान्महत्फलम् ॥ ९० ॥ उपवासाश्च ये केचित्स्त्रीधर्मे कथिता बुधैः ॥ यैः कृतैः स्वर्गमायांति

१ कास्मीरपुस्तकद्वये—अनुपमांशाच—इति पाठो दृश्यते ।

सुकृतिन्यः स्त्रियो यथा ॥ ९१ ॥ एतत्सर्वं महाभाग कथयस्व यथातथम् ॥ श्रोतुमिच्छाम्यहं सर्वं कथयस्वाविशंकितः ॥ ९२ ॥ ॥ नारद उवाच ॥ ॥ साधुसाधु महाभागे प्रश्नोऽयं वेदितस्त्वया ॥ यं श्रुत्वा सर्वनारीणां धर्मवृद्धिस्तु जायते ॥ ९३ ॥ उपवासैश्च दानैश्च पतिपुत्रौ वशानुगौ ॥ बांधवैः पूज्यते नित्यं यैः कृतैः कथयामि ते ॥ ९४ ॥ दुर्भगा सुभगा यैस्तु सुभगा दुर्भगा भवेत् ॥ पुत्रिणी पुत्ररहिता ह्यपुत्रा पुत्रिणी तथा ॥ ९५ ॥ भर्त्तारं लभते कन्या तथान्या भर्तृवर्जिता ॥ कृताकृतैश्च जायंते तन्निबोधस्व सुन्दरि ॥ ९६ ॥ तिलधेनुं सुवर्णं च रूप्यं गा वाससी तथा ॥ पानीयं भूमिदानं च गंधधूपानुलेपनम् ॥ ९७ ॥ पादुकोपानहौ छत्रं पुण्यानि व्यजनानि च ॥ पादाभ्यंगं शिरोभ्यंगं स्नानं शय्यासनानि च ॥ ९८ ॥ एतानि ये प्रयच्छंति नोपसर्पंति ते यमम् ॥ मधु माषं पयः सर्पिर्लवणं गुडमौषधम् ॥ ९९ ॥ पानीयं भूमिदानं च शालीनिक्षुरसांस्तथा ॥ आरक्तवाससी श्लक्ष्णे दंपत्योर्ललितादिने ॥ १०० ॥ सौभाग्यं जायते चैव इह लोके परत्र च ॥ ब्राह्मणे वृत्तसंपन्ने सुरूपे च गुणान्विते ॥ १ ॥ तिथौ यस्यामिदं देयं तत्ते राज्ञि वदाम्यहम् ॥ प्रतिपत्सु च या नारी पूर्वाह्ले च शुचिव्रता ॥ २ ॥ इंधनं ब्राह्मणे दद्यात्प्रीयतां मे हुताशनः ॥ तस्या जन्मानि षड्त्रिंशदंगप्रत्यंगसंधिषु ॥ ३ ॥ न रजो नैव संतापो जायते राजवल्लभे ॥ द्वितीयायां तु या नारी नवनीतं गुदान्विता ॥ ४ ॥ ददाति द्विजमुख्याय सुकुमारतनुर्भवेत् ॥ लवणं विप्रवर्याय तृतीयायां प्रयच्छति ॥ ५ ॥ गौरी मे प्रीयतां देवी तस्याः पुण्यफलं शृणु ॥ कौमारिका पतिं प्राप्य तेन सार्द्धमुमा यथा ॥ ६ ॥ क्रीडत्यविधवा चापि लभते सा महद्यशः ॥ नक्तं कृत्वा चतुर्थ्यां वै दद्याद्विप्राय मोदकान् ॥ ७ ॥ प्रीयतां मम देवेशो गणनाथो विनायकः ॥ तस्यास्तेन फलेनाशु सर्वकर्मसु भामिनि ॥ ८ ॥ विघ्नं न जायते क्वापि एवमाह पितामहः ॥ पञ्चमीं तु ततः प्राप्य ब्राह्मणे तिलदा तु या ॥ ९ ॥ सा भवेद्रूपसंपन्ना यथा चैव तिलोत्तमा ॥ षष्ठ्यां तु या मधूकस्य फलदा तु भवेत्सदा ॥ ११० ॥ उद्दिश्य चाग्निजं देवं ब्राह्मणे वेदपारगे ॥ तस्याः पुत्रो यथा स्कन्दो देवसंघेषु चोत्तमः ॥ ११ ॥ उत्पद्यते महाराजः सर्वलोकेषु पूजितः ॥ सप्तम्यां या द्विजश्रेष्ठं सुवर्णेन प्रपूजयेत् ॥ १२ ॥ उद्दिश्य जगतो नाथं देवदेवं दिवाकरम् ॥ तस्य पुण्यफलं यद्वै कथितं द्विजसत्तमैः ॥ १३ ॥ तत्ते राज्ञि प्रवक्ष्यामि शृणुष्वैकमनाः सति ॥ दद्रुचित्रककुष्ठानि मण्डलानि विचर्चिका ॥ १४ ॥ न भवन्तीह चांगेषु पूर्वकर्मार्जितान्यपि ॥ कृष्णां धेनुं तथाष्टम्यां या प्रयच्छति भामिनी ॥ १५ ॥ ब्राह्मणे वृत्तसंपन्ने प्रीयतां मे महेश्वरः ॥ तस्या जन्मार्जितं पापं नश्यते

१ नान्–धर्मान्–इत्यर्थः । २ अग्निजम्–कार्त्तिकेयस्वामिनम्–इत्यर्थः ।

विभवान्विता ॥ १६ ॥ जायते नात्र सन्देहो यस्माद्दानमनुत्तमम् ॥ गन्धधूपं तु या नारी भक्त्या विप्राय दापयेत् ॥ १७ ॥ कात्यायनीं समु
द्दिश्य नवम्यां शृणु यत्फलम् ॥ तस्या भ्राता पिता पुत्रः पतिर्वा रणमुत्तमम् ॥ १८ ॥ प्राप्यते नैव सीदन्ति तेन दानेन रक्षिताः ॥ इक्षुदंडरसं
देवि दशम्यां या प्रयच्छति ॥ १९ ॥ लोकपालान्समुद्दिश्य ब्राह्मणे व्यंगवर्जिते ॥ तेन दानेन सा नित्यं सर्वलोकस्य वल्लभा ॥ १२० ॥ जायते
नात्र सन्देह इत्येवं शंकरोऽब्रवीत् ॥ एकादश्यामुपोष्याथ द्वादश्यामुदकप्रदा ॥ २१ ॥ नारायणं समुद्दिश्य ब्राह्मणे विष्णुतत्परे ॥ सा सदा स्पर्श
संभाषैर्द्रावयेद्द्रावयेज्जनम् ॥ २२ ॥ यस्माद्दानं महल्लोंके ह्यनन्तमुदके भवेत् ॥ पादाभ्यंगं शिरोभ्यंगं काममुद्दिश्य वै द्विजे ॥ २३ ॥ ददाति च
त्रयोदश्यां भक्त्या परमयांगना ॥ यस्यांयस्यां मृता जायेद्भूयो योन्यां तु जन्मनि ॥ २४ ॥ तस्यां तस्यां तु सा भर्तुर्न वियुज्येत कर्हिचित् ॥ तथा
प्येवं चतुर्दश्यां दद्यात्पात्रमुपानहौ ॥ २५ ॥ ब्राह्मणे धर्ममुद्दिश्य तस्या लोका ह्यनामयाः ॥ एवं च पक्षपक्षांते श्राद्धे तर्पेद्द्विजोत्तमान् ॥ २६ ॥
अव्युच्छिन्ना सदा राज्ञि संततिर्जायते भुवि ॥ एवं ते तिथिमाहात्म्यं दानयोगेन भाषितम् ॥ २७ ॥ तथा वनस्पतीनां तु आराधनविधिं शृणु ॥
जम्बूं निम्बतरुं चैव तिंदुकं मधुकं तथा ॥२८॥ आम्रं चामलकं चैव शाल्मलिं वटपिप्पलौ ॥ शमीबिल्वामलीवृक्षं कदलीं पाटलीं तथा ॥ २९ ॥
अन्यान्पुण्यतमान्वृक्षानुपेत्य स्वर्गमाप्नुयात् ॥ १३० ॥ ॥ नारद उवाच ॥ ॥ चैत्रे मासे तु या नारी कुर्याद्व्रतमनुत्तमम् ॥ तस्य व्रतस्य चान्यानि
कलां नार्हंति षोडशीम् ॥ ३१ ॥ श्रुतेन येन सुभगे दुर्भगत्वं न पश्यति ॥ यथा हिमं रविं प्राप्य विलयं याति भूतले ॥ ३२ ॥ तथा दुःखं च
दौर्भाग्यं व्रतादस्माद्विलीयते ॥ मधुकाख्यां तु ललितामाराधयति येन वै ॥ ३३ ॥ विधिं तं शृणु सुभगे कथ्यमानं सुखावहम् ॥ चैत्रे शुक्लतृती
यायां सुस्नाता शुद्धमानसा ॥ ३४ ॥ प्रतिमां मधुवृक्षस्य शांकरीमुमया सह ॥ कारयित्वा द्विजवरैः प्रतिष्ठाप्य यथाविधि ॥ ३५ ॥ सुगंधिकुसुमै
र्धूपैस्तथा कर्पूरकुंकुमैः ॥ पूजयेद्विधिना देवं मन्त्रयुक्तेन भामिनी ॥ ३६ ॥ पादौ नमः शिवायेति मेढ्रे वै मन्मथाय च ॥ कालोदरायेत्युदरं नील
कंठाय कंठकम् ॥३७॥ शिरः सर्वात्मने पूज्य उमां पश्चात्प्रपूजयेत्॥ क्षामोदरायै ह्युदरं सुकंठायै च कंठकम् ॥३८॥ शिरः सौभाग्यदायिन्यै पश्चादर्घ्यं
प्रदापयेत्॥३९॥नमस्ते देवदेवेश उमावर जगत्पते॥अर्घ्येणानेन मे सर्वं दौर्भाग्यं नाशय प्रभो ॥१४०॥ इति अर्घ्यमंत्रः ॥ अर्घ्यं दत्त्वा ततः पश्चात्करकं
वारिपूरितम्॥मधूकपात्रोपभृतं सहिरण्यं तु शक्तितः॥४१॥करकं वारिसंपूर्णं सौभाग्येन तु संयुतम् ॥ दत्तं तु ललिते तुभ्यं सौभाग्यादिविवर्धनम् ॥४२॥

१ तमालकं चैव—इ० पा० ।

॥ ॥ इति करकदानमंत्रः ॥ ॥ मंत्रेणानेन विप्राय दद्यात्करकमुत्तमम् ॥ लवणं वर्जयेच्छुक्लां यावदन्यां तृतीयिकाम् ॥४३॥ क्षमाप्य देवीं देवेशं नक्तमद्या
त्स्वयंहविः ॥ अनेन विधिना सार्धं मासि मासि व्रपक्रमेत् ॥ ४४ ॥ फाल्गुनस्य तृतीयायां शुक्लायां तु समाप्यते ॥ वैशाखे लवणं देयं ज्येष्ठे चाज्यं
प्रदीयते ॥ ४५ ॥ आषाढे मासि निष्पावाः पयो देयं तु श्रावणे ॥ मुद्गा देया नभस्ये तु शालिमाश्वयुजे तथा ॥ ४६ ॥ कार्त्तिके शर्करापात्रं करकं
रससंभृतम् ॥ मार्गशीर्षे तु कार्पासं करकं घृतसंयुतम् ॥ ४७ ॥ पौषे तु कुंकुमं देयं माघे पात्रं तिलैर्भृतम् ॥ फाल्गुने मासि संप्राप्ते पात्रं मोदकसं
भृतम् ॥ ४८ ॥ पश्चात्तृतीयादेयं यत्तत्पूर्वस्यां विवर्जयेत् ॥ विधानमासां सर्वासां सामान्यं मनसः प्रिये ॥ ४९ ॥ प्रतिमां मधुवृक्षस्य तामेव प्रति
पूजयेत् ॥ तस्मै सर्वं तु विप्राय आचार्याय प्रदीयते ॥ १५० ॥ ततः संवत्सरस्यांते उद्यापनविधिं शृणु ॥ मधुवृक्षं ततो गत्वा बहुसंभारसंवृतः ॥
॥ ५१ ॥ निखनेत्प्रतिमां मध्ये माधूकीं मधुकस्य च ॥ तत्रस्थं पूजयेत्सर्वमुमादेहार्द्धधारिणम् ॥ ५२ ॥ पूजोपहारैर्विपुलैः कुंकुमेन पुनःपुनः ॥
श्लक्ष्णाभिः पुष्पमालाभिः कौसुंभैः केसरेण च ॥५३॥ कौसुंभे वाससी शुभ्रे अतसीपुष्पसन्निभे ॥ परिधाप्य तां प्रतिमां दंपती रविसंख्यया ॥५४॥
उपानद्युगलैश्छत्रैः कंठसूत्रैः सकंठिकैः ॥ कटकैरंगुलीयैश्च शयनीयैः शुभास्तृतैः ॥ ५५ ॥ कुंकुमेन विलिप्तांगौ बहुपुष्पैश्च पूजितौ ॥ भोजयेद्वि
विधैरन्नैर्मधूकावासके स्थितौ ॥ ५६ ॥ भुक्तोत्थितौ तु विश्राम्य शय्यासु च क्षमापयेत् ॥ गुरुमूलं यतः सर्वं गुरुर्ज्ञेयो महेश्वरः ॥ ५७ ॥ प्रीते
गुरौ ततः सर्वं जगत्प्रीतं सुरासुरम् ॥ यद्यदिष्टतमं लोके यत्किंचिद्दयितं गृहे ॥ ५८ ॥ तत्सर्वं गुरवे देयमात्मनः श्रेय इच्छता ॥ इदं तु धनिभि
र्देयमन्यैर्देयं यथोच्यते ॥ ५९ ॥ दांपत्यमेकं विधिवत्प्रतिपूज्य शुभव्रतैः ॥ द्वितीयं गुरुदांपत्यं वित्तशाठ्यं विवर्जयेत् ॥ १६० ॥ ततः क्षमापयेद्देवीं
देवं च ब्राह्मणं गुरुम् ॥ यथा त्वं देवि ललिते न वियुक्तासि शंभुना ॥ ६१ ॥ तथा मे पतिपुत्राणामवियोगः प्रदीयताम् ॥ अनेन विधिना कृत्वा
तृतीयां मधुसंज्ञिकाम् ॥ ६२ ॥ इन्द्राणी चेंद्रपत्नीत्वमवाप सुतमुत्तमम् ॥ सौभाग्यं सर्वलोकेषु सर्वर्द्धिसुखमुत्तमम् ॥ ६३ ॥ अनेन विधिना या
तु कुमारी व्रतमाचरेत् ॥ शोभनं पतिमाप्नोति यथेंद्राण्या शतक्रतुः ॥ ६४ ॥ दुर्भगा सुभगत्वं च सुभगा पुत्रिणी भवेत् ॥ पुत्रिण्यक्षयमाप्नोति
न शोकं पश्यति क्वचित ॥ ६५ ॥ अनेकजन्मजनितं दौर्भाग्यं नश्यति ध्रुवम ॥ मृता तु त्रिदिवं प्राप्य उमया सह मोदते ॥ ६६ ॥ कल्पकोटि
शतं साग्रं भुक्त्वा भोगान्यथेप्सितान् ॥ पुनस्तु संभवे लोके पार्थिवं पतिमाप्नुयात् ॥ ६७ ॥ सुभगा रूपसंपन्ना पार्थिवं जनयेत्सुतम् ॥ ६८ ॥

१ माषाः--इ० पा० । २ दंपती रविसंख्यया--द्वादश ब्राह्मणमिथुनानि--इत्यर्थः । ३ त्रिषु लोकेषु--इ०पा० । ४ पतिः आप्तः--इति शेषः ।

एतत्ते कथितं सर्वं व्रतानामुत्तमं व्रतम् ॥ अन्यत्पृच्छस्व सुभगे वांछितं यद्धृदि स्थितम् ॥ १६९ ॥ इति श्रीस्कांदे महापुराण एकाशीतिसाहस्र्यां संहितायां पञ्चम आवंत्यखंडे रेवाखंडे नर्मदामाहात्म्ये मधूकतृतीयाव्रतविधानमाहात्म्यवर्णनंनाम पञ्चविंशोऽध्यायः ॥ २६ ॥ ॥ छ ॥ ॥ श्रीमार्कंडेय उवाच ॥ ॥ नारदस्य वचः श्रुत्वा राज्ञी वचनमब्रवीत् ॥ प्रसादं कुरु विप्रेंद्र गृह्ण दानं यथेप्सितम् ॥ १ ॥ सुवर्णमणिरत्नानि वस्त्राणि विविधानि च ॥ तत्ते दारयामि विप्रेंद्र यच्चान्यदपि दुर्लभम् ॥ २ ॥ राज्ञ्यास्तु वचनं श्रुत्वा नारदो वाक्यमब्रवीत् ॥ अन्येषां दीयतां भद्रे ये द्विजाः क्षीणवृत्तयः ॥ ३ ॥ वयं तु सर्वसंपन्ना भक्तिग्राह्याः सदैव हि ॥ इत्युक्ता सा तदा राज्ञी वेदवेदाङ्गपारगान् ॥ ४ ॥ आहूय ब्राह्मणान्निःस्वान्दातुं समुपचक्रमे ॥ यत्किंचिन्नारदेनोक्तं दानं सौभाग्यवर्द्धनम् ॥ ५ ॥ तेन दानेन मे नित्यं प्रीयेतां हरिशंकरौ ॥ ततो राज्ञीच सा प्राह नारदं मुनिपुंगवम् ॥ ६ ॥ ॥ राज्ञ्युवाच ॥ ॥ दानं दत्तं त्वयोक्तं यद्भर्तृकर्म्मपरं हि तत् ॥ आजन्मजन्म मे भर्ता भवेद्बाणो द्विजोत्तम ॥ ७ ॥ नान्यो हि दैवतं तात मुक्त्वा बाणं द्विजोत्तम ॥ तेन सत्येन मे भर्त्ता जीवेच्च शरदां शतम् ॥ ८ ॥ नान्यो धर्म्मो भवेत्स्त्रीणां दैवतं हि पतिर्यथा ॥ तथापि तव वाक्येन दानं दत्तं यथाविधि ॥ ९ ॥ स्वकं कर्म करिष्यामो भर्त्तारं प्रति मानद ॥ ब्रह्मर्षे गच्छ चेदानीं त्वमाशीर्वादः प्रदीयताम् ॥ १० ॥ तथेति तामनुज्ञाप्य नारदो नृपसत्तम ॥ सर्वासां मानसं हृत्वा अन्यतः कृतमानसः ॥ ११ ॥ जगामादर्शनं विप्रः पूज्यमानस्तु खेचरैः ॥ ततो गतमनस्कास्ता भर्त्तारं प्रति भारत ॥ १२ ॥ विवर्णा निष्प्रभा जाता नारदेन विमोहिताः ॥ १३ ॥ इति श्रीस्कांदे महापुराण एकाशीतिसाहस्र्यां संहितायां पंचम आवन्त्यखण्डे रेवाखण्डे नर्मदामाहात्म्ये त्रिपुरक्षोभणवर्णनंनाम सप्तविंशोऽध्यायः ॥ २७ ॥ ॥ छ ॥ ॥ मार्कंडेय उवाच ॥ ॥ एतस्मिन्नंतरे रुद्रो नर्मदातटमास्थितः ॥ क्रीडते ह्युमया सार्द्धं नारदस्तत्र चागतः ॥ १ ॥ प्रणम्य देवदेवेशमुमया सह शंकरम् ॥ व्यज्ञापयत्तदा देवं यद्वृत्तं त्रिपुरे तदा ॥ २ ॥ गतोऽहं स्वामिनिर्देशाद्यत्र तद्बाणमंदिरम् ॥ दृष्ट्वा बाणं यथान्यायं गतो ह्यंतःपुरं महत् ॥ ३ ॥ तत्र भार्यासहस्राणि दृष्ट्वा बाणस्य धीमतः ॥ यथायोग्यं यथाकाममागतः क्षोभ्य तत्पुरम् ॥ ४ ॥ नारदस्य वचः श्रुत्वा साधुसाध्विति पूयजन् ॥ चिंतयामास देवेशो भ्रमणं त्रिपुरस्य हि ॥ ५ ॥ करमुक्तं यथा चक्रं विष्णुना प्रभविष्णुना ॥ महावेगं महायामं रक्षितं तेजसा मम ॥ ६ ॥ स च मे भक्तिनिरतो बाणो लोके च विश्रुतः ॥ भारती च मया दत्ता ब्राह्मणानां विशेषतः ॥ ७ ॥ एवं स सुचिरं कालं देवदेवो महेश्वरः ॥

१ अनुपमोयाच–इ० पा० । २ प्रतिपन्नं च देवानां त्रिपुरस्य वधं प्रति–इ० पा० ।

चिंतयित्वा सुनिर्वाणं कार्यं प्रति जनेश्वरः ॥ ८ ॥ ततोऽसौ मंदरं ध्यात्वा चापे कृत्वा गुणे महीम ॥ विष्णुं सनातनं देवं बाणे ध्यात्वा त्रिलो
चनः ॥ ९ ॥ फले हुताशनं देवं ज्वलंतं सर्वतोमुखम् ॥ सुपर्णं पुंखयोर्मध्ये जवे वायुं प्रकल्प्य च ॥ १० ॥ रथं महीमयं कृत्वा धुरि तावश्विना
वुभौ ॥ अक्षे सुरेश्वरं देवमग्रकील्यां धनाधिपम् ॥ ११ ॥ यमं तु दक्षिणे पार्श्वे वामे कालं सुदारुणम् ॥ आदित्यचंद्रौ चक्रे तु गंधर्वानारका
दिषु ॥ १२ ॥ यन्तारं च सुरज्येष्ठं वेदान्कृत्वा हयोत्तमान् ॥ खलीनादिषु चाङ्गानि रश्मींश्छंदांसि चाकरोत् ॥ १३ ॥ कृत्वा प्रतोदमोंकारं
मुखग्राह्यं महेश्वरः ॥ धातारं चाग्रतः कृत्वा विधातारं च पृष्ठतः ॥ १४ ॥ मारुतात्सर्वतो दिग्भ्य ऊर्ध्वयंत्रे तथैव च ॥ महोरगपिशाचांश्च सिद्ध
विद्याधरांस्तथा ॥ १५ ॥ गणांश्च भूतसंघांश्च सर्व्वे सर्व्वांगसंधिषु ॥ युगमध्ये स्थितो मेरुर्युगस्याधो महागिरिः ॥ १६ ॥ सर्पा यन्त्रस्थिता घोराः
शम्ये वरुणनैर्ऋतौ ॥ गायत्रीचैव सावित्री स्थिते ते रश्मिबंधने ॥ १७ ॥ सत्यं रथध्वजे शौचं दमं रक्षां समंततः ॥ रथं देवमयं कृत्वा देवदेवो
महेश्वरः ॥ १८ ॥ सन्नद्धः कवची खड्गी बद्धगोधांगुलित्रवान् ॥ बद्धा परिकरं गाढं जटाजूटं नियम्य च ॥ १९ ॥ सज्जं कृत्वा धनुर्दिव्यं योज
यित्वा रथोत्तमम् ॥ रथमध्ये स्थितो देवः शुशुभे च युधिष्ठिर ॥ २० ॥ धनुषः शब्दनादेनाकम्पयच्च जगत्त्रयम् ॥ स्थानं कृत्वा तु वैशाखं
निभृतं संस्थितो हरः ॥ २१ ॥ निरीक्ष्य सुचिरं कालं कोपसंरक्तलोचनः ॥ ध्यात्वा तं परमं मंत्रमात्मानं च निरुध्य सः ॥ २२ ॥ मुमोच
सहसा बाणं पुरस्य वधकांक्षया ॥ यदा त्रीणि समेतानि अंतरिक्षस्थितानि तु ॥ २३ ॥ ततः कालनिमेषार्धं दृष्ट्वैक्यं त्रिपुरस्य च ॥ त्रिपर्वणा
त्रिशल्येन ततस्तान्यवसादयत् ॥ २४ ॥ ततो लोका भयत्रस्ता त्रिपुरे भरतोत्तम ॥ सर्वासुरविनाशाय कालरूपा भयावहाः ॥ २५ ॥
अट्टहासान्प्रमुंचंति कष्टरूपा नरास्तदा ॥ निमेषोन्मेषणं चैव कुर्वंति लिपिकर्मसु ॥ २६ ॥ निष्पंदनयना मर्त्याश्चित्रेष्वालिखिता इव ॥ देवायत
नगा देवा रटंति प्रहसंति च ॥ स्वप्ने पश्यंति चात्मानं रक्तांबरविभूषितम् ॥ २७ ॥ रक्तमाल्योत्तमांगाश्च पतंतः कार्दमे ह्रदे ॥ पश्यंति नाम
चात्मानं सतैलाभ्यंगमस्तकम् ॥ २८ ॥ पश्यंति यानमारूढं रासभैश्च नृपोत्तम ॥ संवर्त्तको महावायुर्युगांतप्रतिमो महान् ॥ २९ ॥ गृहानुन्मूल
यामास वृक्षजातीननेकशः ॥ भूमिकम्पाः सनिर्घाता उल्कापाताः सहस्रशः ॥ ३० ॥ रुधिरं वर्षते देवो मिश्रितं कर्करैर्बहु ॥ अग्निकुण्डेषु
विप्राणां हुतः सम्यग्घुताशनः ॥ ३१ ॥ ज्वलते धूमसंयुक्तो विस्फुलिंगकणैः सह ॥ कुंजरा विमदा जातास्तुरगाः सत्त्ववर्जिताः ॥ ३२ ॥

१ आरकादिषु—अरादिषु—इत्यर्थः ।

अवादितानि वाद्यंते वादित्राणि सहस्रशः ॥ ध्वजा ह्यकंपिताः पेतुश्छत्राणि विविधानि च ॥ ३३ ॥ ज्वलंति पादपास्तत्र पर्णानि च समं
ततः ॥ सर्व्वं तद्भयाकुलीभूतं हाहाकारसमन्वितम् ॥ ३४ ॥ उद्यानानि विचित्राणि प्रबभंज प्रभंजनः ॥ तेन संप्रेरिताः सर्वे ज्वलंति
विशिखाः शिखाः ॥ ३५ ॥ वृक्षगुल्मलतावल्ल्यो गृहाणि च समंततः ॥ दिग्विभागैश्च सर्वैश्च प्रवृत्तो हव्यवाहनः ॥ ३६ ॥ सर्वं किंशुकपर्णाभं
प्रज्वलच्चैव दृश्यते ॥ गृहाद्गृहं तदा गन्तुं नैव धूमेन शक्यते ॥ ३७ ॥ हरकोपाग्निनिर्दग्धाः क्रन्दंते त्रिपुरे जनाः ॥ प्रदीप्तं सर्वतो दिक्षु
दह्यते त्रिपुरं परम् ॥ ३८ ॥ पतंति शिखराग्राणि विशीर्णानि सहस्रशः ॥ पावको धूमसंपृक्तो दह्यमानः समंततः ॥ ३९ ॥ नृत्यन्वै व्याप्तदिग्देशः
कांतारेष्वभिधावति ॥ देवागारेषु सर्वेषु गृहेष्वट्टालकेषु च ॥ ४० ॥ प्रवृत्तो हुतभुक्तत्र पुरे कालप्रचोदितः ॥ ददाह लोकान्सर्वत्र हरकोप
प्रकोपितः ॥ ४१ ॥ दहते त्रैपुरं लोकं बालवृद्धसमन्वितम् ॥ सपुरं सगृहद्वारं सवाहनवनं नृप ॥ ४२ ॥ केचिद्भोजनसक्ताश्च पानासक्तास्तथा
परे ॥ अपरा नृत्यगीतेषु संसक्ता वारयोषितः ॥ ४३ ॥ अन्योन्यं च परिष्वज्य हुताशनशिखार्दिताः ॥ दह्यमाना नृपश्रेष्ठ सर्वे गच्छंत्य
चेतनाः ॥ ४४ ॥ अथान्ये दानवास्तत्र दह्यंतेग्निविमोहिताः ॥ न शक्ताश्चान्यतो गन्तुं धूमेनाकुलिताननाः ॥ हंसकारंडवाकीर्णा नलिन्यो
हेमपंकजाः ॥४५॥ दह्यन्ते विविधास्तत्र वाप्यः कूपाश्च भारत ॥ दृश्यन्तेऽनलदग्धानि पुरोद्यानानि दीर्घिकाः ॥ अम्लानैः पंकजैश्छन्ना विस्तीर्णा
वसुयोजनाः ॥ ४६ ॥ गिरिकूटनिभास्तत्र प्रासादा रत्नशोभिताः ॥ दृश्यंतेऽनलसंदग्धा विशीर्णा धरणीतले ॥ ४७ ॥ नरस्त्रीबालवृद्धेषु दह्यमानेषु
सर्वतः ॥ निर्दयं ज्वलते वह्निर्हाहाकारो महानभूत्॥ काचिच्च सुखसंसुप्ताप्र मत्तान्या नृपोत्तम ॥४८॥ क्रीडित्वा च सुविस्तीर्णशयनस्था वरांगना ॥
काचित्सुप्ता विशालाक्षी हारावलिविभूषिता ॥ धूमेनाकुलिता दीना न्यपतद्धव्यवाहने ॥ ४९ ॥ काचित्तस्मिन्पुरे दीप्ते पुत्रस्नेहानुलालसा ॥ पुत्रमा
लिंगते गाढं दह्यते त्रिपुरेऽग्निना ॥ ५० ॥ काचित्कनकवर्णाभा इंद्रनीलविभूषिता ॥ भर्त्तारं पतितं दृष्ट्वा पतिता तस्य चोपरि ॥ ५१ ॥ काचिदा
दित्यवर्णाभा प्रसुप्ता तु प्रियोपरि ॥ अग्निज्वालाहता गाढं कंठमालिंगते नृप ॥ ५२ ॥ मेघवर्णा परा नारी चलत्कनकमेखला ॥ श्वेतवस्त्रोत्तरीया तु
पपात धरणीतले ॥ ५३ ॥ काचित्कुंदेंदुवर्णाभा नीलरत्नविभूषिता ॥ शिरसा प्रांजलिर्भूत्वा विज्ञापयति पावकम् ॥ ५४ ॥ कस्याश्चिज्ज्वलते वस्त्रं
केशाः कस्याश्च भारत ॥ ज्वलज्ज्वलनसंकाशैर्हेमभांडैस्त्रसंति च ॥ ५५ ॥ काचित्प्रभूतदुःखार्ता विललाप वरांगना ॥ भस्मीभूतं पतिं दृष्ट्वा क्रंदंती

१ शस्त्राणि विविधानि च—इ० पा० । २ त्रिपुरे हरनोदितः—इ० पा० ।

कुररी यथा ॥ ५६ ॥ आलिंग्य गाढं सहसा पतिता तस्य मूर्द्धनि ॥ काचिच्च बहुदुःखार्त्ता व्यलपत्स्त्री स्ववेश्मनि ॥ ५७ ॥ भस्मसाच्च कृतं दृष्ट्वा
क्रंदते कुररी यथा ॥ मातरं पितरं काचिद्दृष्ट्वा विगतचेतनम् ॥ ५८ ॥ वेपते पतिता भूमौ खेदिता वडवा यथा ॥ इतश्चेतश्च काचिच्च दह्यमाना
वरांगना ॥ ५९ ॥ नापश्यद्बालमुत्संगे विपरीतमुखी स्थिता ॥ कुंभिलस्य गृहं दग्धं पतितं धरणीतले ॥६०॥ कूष्मांडस्य च धूम्रस्य कुहकस्य बक
स्य च ॥ विरूपनयनस्यापि विरूपाक्षस्य चैव हि ॥ ६१ ॥ शुंभो डिंभश्च रौद्रश्च प्रह्लादश्चासुरोत्तमः ॥ दंडपाणिर्विपाणिश्च सिंहवक्त्रस्तथाऽनघ ॥
॥ ६२ ॥ दुंदुभश्चैव संह्रादो डिंडिर्मुंडिस्तथैव च ॥ बाणभ्राता च बाणश्च क्रव्यादव्याघ्रवक्त्रकौ ॥ ६३ ॥ एवमन्येपि ये केचिद्दानवा बलदर्पिताः ॥
तेषां गृहे तथा वह्निर्ज्वलते निर्दयो नृप ॥ दह्यमानाः स्त्रियस्तात विलपंति गृहेगृहे ॥ ६४ ॥ करुणाक्षरवादिन्यो निराधारा गताः शिवम् ॥ यदि
वैरं सुरारेश्च पुरुषोपारि पावक ॥ ६५ ॥ स्त्रियः किमपराध्यंति गृहपंजरकोकिलाः ॥ अनिर्दयो नृशंसस्त्वं कस्ते कोपः स्त्रियं प्रति ॥ ६६ ॥ किं
त्वया न श्रुतं लोके अवध्याः सर्वथा स्त्रियः ॥ किं तु तुभ्यं गुणो ह्यस्ति दहने पवनेरितः॥ ६७ ॥ न कारुण्यं त्वया किंचिद्दाक्षिण्यं च स्त्रियं प्रति ॥
दयां म्लेच्छा हि कुर्वंति वचनं वीक्ष्य योषिताम् ॥ ६८ ॥ म्लेच्छानामपि च म्लेच्छो दुर्निवार्य्यो ह्यचेतनः ॥ एवं विलपमानानां स्त्रीणां तत्रैव
भारत ॥ ६९ ॥ ज्वालाकलापबहुलः प्रज्वलत्येव पावकः ॥ एवं दृष्ट्वा ततो बाणो दह्यमान उवाच ह ॥ ७० ॥ अवज्ञाय विनष्टोऽहं पापात्मा हर
मंजसा ॥ मया पापेन मूर्खेण ये लोका नाशिता ध्रुवम् ॥ ७१ ॥ गोब्राह्मणा हता नित्यमिह लोके परत्र च ॥ नाशितान्यन्नपानानि मठारामाश्र
मास्तथा ॥ ७२ ॥ ऋषीणामाश्रमाश्चैव देवारामा गणालयाः ॥ तेन पापेन मे ध्वंसस्तपसश्च बलस्य च ॥ ७३ ॥ किं धनेन करिष्यामि राज्येणां
तःपुरेण च ॥ ७४ ॥ वरं शंकरपादौ च शरणं यामि मूढधीः ॥ न माता न पिता चैव न बंधुर्नापरो जनः ॥ ७५ ॥ मुक्त्वा चैव महेशानं परमार्ति
हरं परम् ॥ आत्मना च कृतं पापमात्मनैव तु भुज्यते ॥ ७६ ॥ अहं पुनः समस्तैश्च दह्यामि सह साधुभिः ॥ एवमुक्त्वा शिवं लिंगं कृत्वा तन्मस्त
कोपरि ॥ ७७ ॥ निर्जगाम गृहाच्छीघ्रं पावकेनावगुंठितः ॥ स खिन्नः स्विन्नगात्रस्तु प्रस्खलंस्तु मुहुर्मुहुः ॥७८॥ हरं गद्गदया वाचा स्तुवन्वै शरणं
ययौ ॥ त्वत्कोपानलनिर्दग्धो यदि वध्योस्मि शंकर ॥ ७९ ॥ त्वत्प्रसादान्महादेव मा मे लिंगं प्रणश्यतु ॥ अर्चितं मे सुरश्रेष्ठ ध्यातं भक्त्या मया
विभो ॥ ८० ॥ प्राणादिष्टतमं देव तस्माद्रक्षितुमर्हसि ॥ यदि तेऽहमनुग्राह्यो वध्यो वा सुरसत्तम ॥ ८१ ॥ प्रतिजन्म महादेव त्वद्भक्तिरचलास्तु मे ॥

१ विललाप तु दुःखिता-इ० पा० । २ दिव्यम्-इ० पा० ।

पशुकीटपतंगेषु तिर्यग्योनिगतेषु च ॥ स्वकर्मणा महादेव त्वद्भक्तिरचलास्तु मे ॥ ८२ ॥ एवमुक्त्वा महाभागो बाणो भक्तिमतां वरः ॥ स्तोत्रेण
देवदेवेशं च्छन्दयामास भारत ॥ ८३ ॥ ॥ बाण उवाच ॥ ॥ शिव शंकर सर्वहराय नमो भवभीतभयार्तिहराय नमः ॥ कुसुमायुधदेहविना
शंकर प्रमदाप्रियकामक देव नमः ॥ ८४ ॥ जय पार्वतीश परमार्थसार जय विरचितभीमभुजंगहार ॥ जय निर्मलभस्मविलिप्तगात्र जय मंत्रमू
ल जगदेकपात्र ॥ ८५ ॥ जय विषधरकपिलजटाकलाप जय भैरवविधृतपिनाकचाप ॥ जय विषमनयनपरिमुक्तसंग जय शंकर धृत
गांगतरंग ॥ ८६ ॥ जय भीमरूप खट्वांगहस्त शशिशेखर जय जगतां प्रशस्त ॥ जय सुरवरेश सुरलोकसार जय सर्वसकलनिर्दग्ध
सार ॥ ८७ ॥ जय कीर्त्तनीय जगतां पवित्र जय वृषांक बहुविधचरित्र ॥ जय विरचितनरकंकालमाल अंधासुरदेहकंकालकाल ॥ ८८ ॥
जय नीलकंठ वरवृषभगमन जय सकललोकदुरितानुशमन ॥ जय सिद्धसुरासुरविनतचरण जय रुद्र रौद्रभवजलधितरण ॥ ८९ ॥
जय गिरिश सुरेश्वरमाननीय जय सूक्ष्मरूप संचिंतनीय ॥ जय दग्धत्रिपुर विश्वसत्त्व जय सकलशास्त्रपरमार्थतत्त्व ॥ ९० ॥ जय बुधबोध
संसारतार कलिकलुषमहार्णवघोरतार ॥ जय सुरासुरदेवगणेश नमो हयवानरसिंहगजेंद्रमुख ॥ ९१ ॥ अतिह्रस्वस्थूलसुदीर्घतम उपलब्धिर्न
शक्यते ते ह्यमरैः ॥ प्रणतोऽस्मि निरंजन ते चरणौ जय सांब सुलोचनकांतिहर ॥ ९२ ॥ अप्राप्य त्वां किमत्यन्तसुच्छ्रयी न विनाशयेत् ॥
अतिप्रमाथि च तदा तपो महत्सुदारुणम् ॥ ९३ ॥ न पुत्रबांधवा दारा न समस्तः सुहृज्जनः ॥ संकटेऽभ्युपगच्छंति व्रजंतमेकगामिनम् ॥ ९४ ॥
यदेव कर्म कैवल्यं कृतं तेन शुभाशुभम् ॥ तदेव सार्थवत्तस्य भवत्यग्रे तु गच्छतः ॥ ९५ ॥ निर्द्धनस्यैव चरतो न भयं विद्यते क्वचित् ॥ धनी
भयैर्न मुच्येत धनं तस्मात्त्यजाम्यहम् ॥ ९६ ॥ लुब्धाः पापानि कुर्वंति शुद्धांशा नेव मानवाः ॥ श्रुत्वा धर्मस्य सर्वस्वं श्रुत्वा चैवावधार्य तत् ॥
॥ ९७ ॥ त्वं विष्णुस्त्वं जगन्नाथो ब्रह्मरूपः सनातनः ॥ इंद्रस्त्वं देवदेवेश सुरनाथ नमोस्तु ते ॥ ९८ ॥ त्वं क्षितिर्वरुणश्चैव पवनस्त्वं हुता
शनः ॥ त्वं दीक्षा यजमानश्च आकाशं सोम एव च ॥ ९९ ॥ त्वं सूर्यस्त्वं तु वित्तेशो यमस्त्वं गुरुरेव च ॥ त्वया व्याप्तं जगत्सर्वं त्रैलोक्यं
॥ ३१ ॥ भास्वता यथा ॥ १०० ॥ एतद्बाणकृतं स्तोत्रं श्रुत्वा देवो महेश्वरः ॥ क्रोधं मुक्त्वा प्रसन्नात्मा तदा वचनमब्रवीत् ॥ १०१ ॥ ॥ ईश्वर ॥२०५॥
उवाच ॥ ॥ न भेतव्यं न भेतव्यमद्यप्रभृति दानव ॥ सौवर्णे भवने तिष्ठ मम पार्श्वेऽथवा पुनः ॥ १०२ ॥ पुत्रपौत्रप्रपौत्रैश्च बांधवैः सह

१ स्तोतुं समुपचक्रमे–इ० पा० । २ बाणं वीक्ष्यार्त्तादिभिः–इ०पा० ।

भार्यया ॥ अद्यप्रभृति वत्स त्वमवध्यः सर्वशत्रुषु ॥ १०३ ॥ ॥ मार्कंडेय उवाच ॥ ॥ भूयस्तस्य वरो दत्तो देवदेवेन भारत ॥ स्वर्गे मर्त्ये च पाताले पूजितःससुरासुरैः ॥ १०४ ॥ अक्षयश्चाव्ययश्चैव वस त्वं वै यथासुखम् ॥ ततो निवारयामास रुद्रः सप्तशिखं तदा ॥ १०५ ॥ तृतीयं रक्षितं तस्य पुरं देवेन शम्भुना ॥ ज्वालामालाकुलं चान्यत्पतितं धरणीतले ॥१०६॥ अर्द्धेन प्रस्थितादूर्द्ध्वं तस्य ज्वाला दिवं गताः ॥ हाहाकारो महांस्तत्र ऋषिसंघैरुदीरितः॥१०७॥देवतैश्च महाभागैः सिद्धविद्याधरादिभिः ॥ एकं तु पतितं तत्र श्रीशैले खण्डमुत्तरम् ॥१०८॥ द्वितीयं पतितं राजञ्छैले ह्यमरकण्टके ॥ प्रज्वलत्पतितं तत्र तेन ज्वालेश्वरं स्मृतम् ॥ १०९ ॥ दग्धे तु त्रिपुरे राजन्पतिते खंड उत्तमे ॥ रुद्रो देवः स्थितस्तत्र ज्वालामालानिवारकः ॥ ११० ॥ हाहाकारपराणां तु ऋषीणां रक्षणाय च ॥ स्वयंमूर्तिर्महेशान उमावृषभसंयुतः ॥ १११ ॥ मनसापि स्मरेद्यस्तु भक्त्या ह्यमरकण्टकम् ॥ चांद्रायणाधिकं पुण्यं स लभेन्नात्र संशयः ॥ ११२ ॥ अतिपुण्यो गिरिश्रेष्ठो यस्माद्भरतसत्तम ॥ अस्मान्नित्यं भवेद्राजन्सर्वपापक्षयंकरः ॥ ११३ ॥ नानाद्रुमलताकीर्णो नानापुष्पोपशोभितः ॥ नानागुल्मलताकीर्णो नानावल्लीभिरावृतः ॥ ११४ ॥ सिंहव्याघ्रसमाकीर्णोमृगयूथैरलंकृतः ॥ श्वापदानां च घोषेण नित्यं प्रमुदितोऽभवत् ॥ ११५ ॥ ब्रह्मेंद्रविष्णुप्रमुखैर्ब्रह्मरैश्च सहस्रशः ॥ सेव्यते देवदेवेशः शंकरस्तत्र पर्वते ॥११६॥ पतनं कुरुते योऽस्मिन्पर्वतेऽमरकण्टके ॥ क्रीडते क्रमशो राजन्भुवनानि चतुर्दश ॥११७॥ ऐन्द्रं वाह्नं च कौबेरं वायव्यं याम्यमेव च ॥ नैर्ऋत्यं वारुणं चैव सौम्यं सौरं तथैव च ॥ ११८ ॥ ब्राह्मं च पदमक्लिष्टं वैष्णवं तदनन्तरम् ॥ उमारुद्रं महाभाग ऐश्वरं तदनन्तरम् ॥११९॥ परं सदाशिवं शांतं सूक्ष्मं ज्योतिरतींद्रियम् ॥ तस्मिन्याति लयं धीरो विधिना नात्र संशयः ॥ १२० ॥ ॥ युधिष्ठिर उवाच ॥ ॥ कोऽप्यत्र विधिरुद्दिष्टः पतने ऋषिसत्तम ॥ एतन्मे सर्वमाचक्ष्व संशयोऽस्ति महामुने ॥ १२१ ॥ ॥ श्रीमार्कण्डेय उवाच ॥ ॥ ॥ शृणुष्व कथयिष्यामि तं विधिं पाण्डुनन्दन ॥ यत्कृत्वा प्रथमं कर्म्म निपतेत्तदनन्तरम् ॥ १२२ ॥ कृत्वा कृच्छ्रत्रयं पूर्वं जप्त्वा लक्षं दशैव तु ॥ शाकयावकभुक्चैव शुचिस्त्रिषवणो नृप ॥ १२३ ॥ त्रिकालमर्चयेदीशं देवदेवं त्रिलोचनम् ॥ दशांशेन तु राजेंद्र होमं तत्रैव कारयेत् ॥ १२४ ॥ लक्षवारं जपेद्देवं गंधमाल्यैश्च पूजयेत् ॥ रात्रौ स्वप्ने तदा पश्येद्विमानस्थं ततः क्षिपेत् ॥ १२५ ॥ अनेनैव विधानेन आत्मानं यस्तु निक्षिपेत् ॥ स्वर्गलोकमनुप्राप्य क्रीडते त्रिदशैः सह ॥१२६॥ त्रिंशद्वर्षसहस्राणि त्रिंशत्कोट्यस्तथैव च ॥ भुक्त्वा मनोरमान्भोगांस्तदागच्छेन्महीतलम् ॥१२७॥ पृथिवीमेकच्छत्रेण भुनक्ति लोकपूजितः॥व्याधिशोकविनिर्मुक्तो जीवेच्च शरदां शतम् ॥१२८॥ ज्वालेश्वरं तु तत्तीर्थं त्रिषु लोकेषु विश्रुतम् ॥ तत्र ज्वाला नदी पार्थ प्रसुता शिवनि

मिता॥१२९॥निर्वाप्य तद्बाणपुरं रेवया सह संगता॥तत्र स्नात्वा महाराज विधिना मंत्रसंयुतः॥१३०॥तिलसंमिश्रतोयेन तर्पयेत्पितृदेवताः॥पिंडदानेन
च पितॄन्पौंडरीकफलं लभेत् ॥१३१॥ अनाशकं तु यः कुर्यात्तस्मिंस्तीर्थे नराधिप ॥ मुच्यते सर्वपापेभ्यो रुद्रलोकं स गच्छति ॥१३२॥ अमराणां
शतैश्चैव सेवितो ह्यमरेश्वरः ॥ तथैव ऋषिसंघैश्च तेन पुण्यतमो महान् ॥ १३३ ॥ समंताद्योजनं तीर्थं पुण्यं ह्यमरकंटकम् ॥ रुद्रकोटिसमोपेतं
तेन तत्पुण्यमुत्तमम् ॥ १३४ ॥ तस्य पर्वतराजस्य यः करोति प्रदक्षिणम् ॥ प्रदक्षिर्णाकृता तेन पृथिवी नात्र संशयः ॥ १३५ ॥ वाचिकं
मानसं चैव कायिकं त्रिविधं च यत् ॥ नश्यते पातकं सर्वमित्येवं शंकरोऽब्रवीत् ॥ १३६ ॥ अमरेश्वरपार्श्वे च तीर्थं शक्रेश्वरं नृप ॥ तपस्तप्त्वा
पुरा तत्र शक्रेण स्थापितं किल ॥ १३७ ॥ कुशावर्तनाम तीर्थं ब्रह्मणा च कृतं शुभम् ॥ ब्रह्मकुंडमिति ख्यातं हंसतीर्थं तथा परम् ॥ १३८ ॥
अंबरीषस्य तीर्थं च महाकालेश्वरं तथा ॥ कावेर्याः पूर्वभागे च तीर्थं वै मातृकेश्वरम् ॥ १३९ ॥ एतानि दक्षिणे तीरे रेवाया भरतर्षभ ॥ संसेवन
स्नानदानैः पापसंघहराणि च ॥ १४० ॥ भृगुतुंगे महाराज प्रसिद्धो भैरवः शिवः ॥ तस्य याम्यविभागे च तीर्थं वै चपलेश्वरम् १४१ ॥ एतौ
स्थितौ दुःखहरौ रेवाया उत्तरे तटे ॥ तावभ्यर्च्य तथा नत्वा सम्यग्यात्राफलं भवेत् ॥ अदृष्टपूजितौ तौ हि नराणां विघ्नकारकौ ॥ १४२ ॥
इति श्रीस्कांदे महापुराण एकाशीतिसाहस्र्यां संहितायां पञ्चम आवंत्यखंडे रेवाखण्डे त्रिपुरविध्वंसने ज्वालेश्वरतीर्थामरेश्वतीर्थमाहात्म्यवर्णनंनामाष्टा
विंशोऽध्यायः ॥ २८ ॥ ॥ छ ॥ ॥ युधिष्ठिर उवाच ॥ ॥ कावेरीति च विख्याताःत्रिषु लोकेषु सत्तम ॥ माहात्म्यं श्रोतुमिच्छामि तस्या मार्कंड
तत्त्वतः ॥ १ ॥ कीदृशं दर्शनं तस्याः फलं स्पर्शेऽथवा विभो ॥ स्नाने जाप्येऽथवा दान उपवासे तथा मुने ॥ २ ॥ कथयस्व महाभाग कावेरीसंगमे
फलम् ॥ धर्म्मः श्रुतोऽथ दृष्टो वा कथितो वा कृतोपि वा ॥ ३ ॥ अनुमोदितो वा विप्रेंद्र पुनातीति श्रुतं मया ॥ यथा धर्मप्रसंगे तु मुने धर्म्मोपि
जायते ॥ ४ ॥ स्वर्गश्च नरकश्चैव इत्येवं वैदिकी श्रुतिः ॥ ५ ॥ ॥ श्रीमार्कंडेय उवाच ॥ ॥ साधुसाधु महाभाग यत्पृष्टोहं त्वयाऽधुना ॥
शृणुष्वैकमना भूत्वा कावेरीफलमुत्तमम् ॥ ६ ॥ अस्ति यक्षो महासत्त्वः कुबेरोनाम विश्रुतः ॥ सोऽपि तीर्थप्रभावेन राजन्यक्षाधिपोऽभवत् ॥ ७ ॥
तच्छृणुष्व विधानेन भक्त्या परमया नृप ॥ सिद्धिं प्राप्तो महाभाग कावेरीसंगमेन तु ॥ ८ ॥ कावेर्या नर्म्मदायास्तु संगमे लोकविश्रुते ॥ तत्र
स्नात्वा शुचिर्भूत्वा कुबेरः सत्यविक्रमः ॥ ९ ॥ विधिवन्नियमं कृत्वा शास्त्रयुक्त्या नरोत्तम ॥ आराधयन्महादेवमेकचित्तः सनातनम् ॥ १० ॥
एकाहारो वसन्मासं तथा षष्ठाह्नकालिकः ॥ पक्षोपवासी न्यवसत्कंचित्कालं नृपोत्तम ॥ ११ ॥ मूलशाकफलैश्चान्यं कालं नयति बुद्धिमान् ॥

किंचित्कालं वसंस्तत्र तीर्थे शैवालभोजनः ॥ १२ ॥ पराकेणानयत्कालं कृच्छ्रेणापि च मानव ॥ चांद्रायणेन चाप्यन्यमन्यं वाय्वंबुभोजनः ॥
॥ १३ ॥ एवं तत्र नरश्रेष्ठ कामरागविवर्जितः ॥ स्थितो वर्षशतं साग्रं कर्षयन्स्वं तथा वपुः ॥ १४ ॥ ततो वर्षशतस्यांते देवदेवो महेश्वरः ॥
तुष्टस्तु परया भक्त्या तमुवाच हसन्निव ॥ १५ ॥ भोभो यक्ष महासत्त्व वरं वरय सुव्रत ॥ परितुष्टोऽस्मि ते भक्त्या तव दास्ये यथेप्सितम् ॥
॥ १६ ॥ ॥ यक्ष उवाच ॥ ॥ यदि तुष्टोसि देवेश उमया सह शंकर ॥ अद्यप्रभृति सर्वेषां यक्षाणामधिपो भवे ॥ १७ ॥ अक्षयश्चाव्ययश्चैव
तव भक्तिपुरस्सरः ॥ धर्मे मतिं च मे नित्यं दद॑स्व परमेश्वर ॥ १८ ॥ ॥ ईश्वर उवाच ॥ ॥ यत्त्वया प्रार्थितं सर्वं फलं धर्म्मस्य तत्तथा ॥ इत्ये
वमुक्त्वा तं तत्र जगामादर्शनं हरः ॥ १९ ॥ सोऽपि स्नात्वा विधानेन संतर्प्य पितृदेवताः ॥ आमंत्रयित्वा तत्तीर्थं कृतार्थश्च गृहं ययौ ॥ २० ॥
पूजितस्तत्र यक्षैस्तु सोऽभिषिक्तो विधानतः ॥ चकार विपुलं तत्र राज्यमीप्सितमुत्तमम्॑ ॥ २१ ॥ तत्र चान्ये सुराः सिद्धा यक्षगंधर्वकिंनराः ॥
गणाश्चाप्सरसां तत्र ऋषयश्च तथाऽनघ ॥ २२ ॥ कावेरीसंगमं तेन सर्वपापहरं विदुः ॥ स्वर्गाणामपि सर्वेषां द्वारमेतद्युधिष्ठिर ॥ २३ ॥ ते धन्यास्ते
महात्मानस्तेषां जन्म सुजीवितम् ॥ कावेरीसंगमे स्नात्वा यैर्दत्तं हि तिलोदकम् ॥ २४ ॥ दश पूर्वे परे तात मातृतः पितृतस्तथा ॥ पितरः पिताम
हास्तेन उद्धृता नरकार्णवात् ॥ २५ ॥ तस्मात्सर्वप्रयत्नेन तत्र स्नायीत मानवः ॥ अर्चयेदीश्वरं देवं यदीच्छेच्छाश्वतीं गतिम् ॥ २६ ॥ कावेरीसंगमे
राजन्स्नानदानार्चनं नरैः ॥ कृतं भक्त्या नरश्रेष्ठ अश्वमेधाधिकं फलम् ॥ २७ ॥ होमेन चाक्षयः स्वर्गो जपादायुर्विवर्धते ॥ ध्यानतो नित्यमा
याति पदं शिवकलात्मकम् ॥ २८ ॥ अग्निप्रवेशं यः कुर्य्यात्तस्मिंस्तीर्थे नरेश्वर ॥ अग्निलोके वसेत्तावद्यावदाभूतसंप्लवम् ॥ २९ ॥ अनाशकं॑ तु
यः कुर्यात्तस्मिंस्तीर्थे नराधिप ॥ तस्य पुण्यफलं यद्वै तच्छृणुष्व नरोत्तम ॥ ३० ॥ गंधर्वाप्सरसंकीर्णे विमाने सूर्यसन्निभे ॥ वीज्यमानो वरस्त्रीभिर्वृ
तैः सह मोदते ॥ ३१ ॥ षष्टिवर्षसहस्राणि षष्टिवर्षशतानि च ॥ क्रीडते रुद्रलोकस्थस्तदंते भुवि चागतः ॥ ३२ ॥ भोगवान्दानशीलश्च जायते
पृथिवीपतिः ॥ आधिशोकविनिर्मुक्तो जीवेच्च शरदां शतम् ॥ ३३ ॥ एवंगुणगणाकीर्णा कावेरी सा सरिन्नृप ॥ त्रिषु लोकेषु विख्याता नर्मदासं
गमे सदा ॥ ३४ ॥ जितवाक्कायचित्ताश्च ध्येयध्यानरतास्तथा ॥ कावेरीसंगमे तात तेऽपि मोक्षमवाप्नुयुः ॥ ३५ ॥ शृणु तेऽन्यत्प्रवक्ष्यामि आश्चर्यं
नृपसत्तम ॥ त्रिषु लोकेषु का त्वन्या दृश्यते सरिता॑ समा ॥ ३६ ॥ लब्धं येनर्मदातोयं ये च कुर्युः प्रदक्षिणम् ॥ ये पिबंति जलं तत्र ते पुण्या नात्र

१ परितुष्टो न संदेहस्तथाद्य उमया सह–इ० पा० । २ राजराज्यं च शाश्वतम्–इ० पा० । ३ अनाशकम्–निरशनव्रतम्–इत्यर्थः । ४ सारिता–कावेरीनद्या–इत्यर्थः ।

संशयः ॥ ३७ ॥ न तेषां संततिच्छेदो दश जन्मानि पंच च ॥ तेषां पापं विलीयेत हिमं सूर्योदये यथा ॥ ३८ ॥ गंगायमुनसंगे वै यत्फलं लभते
नरः ॥ तत्फलं लभते मर्त्यः कावेरीस्नानमाचरन् ॥३९॥ भौमे तु भूतजायोगे व्यतीपाते च संक्रमे ॥ राहुसोमसमायोगे तदेवाष्टगुणं स्मृतम् ॥४०॥
अशीतिश्च यवाः प्रोक्ता गंगायामुनसंगमे ॥ कावेरीनर्मदायोगे तदेवाष्टगुणं स्मृतम् ॥ ४१ ॥ गंगा षष्टिसहस्रैस्तु क्षेत्रपालैः प्रपूज्यते ॥ तदर्द्धैरन्य
तीर्थानि रक्षंते नात्र संशयः ॥ ४२ ॥ अमरेश्वरे तु सरितां ये योगाः परिकीर्तिताः ॥ ते त्वशीतिसहस्रैस्तु क्षेत्रपालैस्तु रक्षिताः ॥ ४३ ॥ तथामरे
श्वरे याम्ये लिंगं वै चपलेश्वरम् ॥ द्वितीयं चंडहस्ताख्यं द्वे लिंगे तीर्थरक्षके ॥ ४४ ॥ शिवेन स्थापिते पूर्वं कावेर्याद्यभिरक्षके ॥ लक्षेण रक्षिता
देवी नर्मदा बहुकल्पगा ॥ ४५ ॥ धनुषां षष्टचभियुतैः पुरुषैरीशयोजितैः ॥ ॐकारशतसाहस्रैः पर्वतश्चाभिरक्षितः ॥ ४६ ॥ अन्यदेशकृतं पापम
स्मिन्क्षेत्रे विनश्यति ॥ अस्मिंस्तीर्थे कृतं पापं वज्रलेपो भविष्यति ॥ ४७ ॥ एषा ते कथिता तात कावेरी सरितां वरा ॥ रुद्रदेहसमुत्पन्ना
तेन पुण्या सरिद्वरा ॥ ४८ ॥ इति श्रीस्कांदे महापुराण एकाशीतिसाहस्र्यां संहितायां पञ्चम आवन्त्यखण्डे रेवाखण्डे नर्मदामाहात्म्ये कावेरी
संगममाहात्म्यवर्णनंनामैकोनत्रिंशोऽध्यायः ॥ २९ ॥ ॥ ७ ॥ ॥ श्रीमार्कंडेय उवाच ॥ ॥ नर्मदोत्तरकूले तु दारुतीर्थमनुत्तमम् ॥ यत्र सिद्धो
महाभाग तपस्तप्त्वा द्विजोत्तमः ॥ १ ॥ ॥ युधिष्ठिर उवाच ॥ ॥ कोऽसौ द्विजवरश्रेष्ठः सिद्धस्तत्र महामुने ॥ दारुकेति सुतः कस्य एतन्मे
वक्तुमर्हसि ॥ २ ॥ ॥ श्रीमार्कंडेय उवाच ॥ ॥ भार्गवे विपुले वंशे धीमतो देवशर्म्मणः ॥ दारुर्नाम महाभागो वेदवेदांगपारगः ॥ ३ ॥
ब्रह्मचारी गृहस्थश्च वानप्रस्थो विधिक्रमात् ॥ यतिधर्म्मविधानेन चचार विपुलं तपः ॥४॥ ध्यायन्वै स महादेवं निराहारो युधिष्ठिर ॥ उवास तीर्थे
तस्मिन्वै यावत्प्राणपरिक्षयम् ॥ ५ ॥ तस्य नाम्ना तु तत्तीर्थं त्रिषु लोकेषु विश्रुतम् ॥ तत्र स्नात्वा विधानेन अर्चयेत्पितृदेवताः ॥ ६ ॥ सत्यवादी
जितक्रोधः सर्वभूतहिते रतः ॥ सर्वान्कामानवाप्नोति राजन्नत्रैव सर्वथा ॥ ७ ॥ यः कुर्यादुपवासं च सत्यशौचपरायणः ॥ सौत्रामणिफलं चास्य
संभवत्यविचारितम् ॥ ८ ॥ ऋग्वेदजापी ऋग्वेदी साम वा सामपारगः ॥ यजुर्वेदी यजुर्जप्त्वा लभते फलमुत्तमम् ॥ ९ ॥ प्राणांस्त्यजति
यो मर्त्यस्तस्मिंस्तीर्थे विधानतः ॥ अनिवर्त्तिका गतिस्तस्य इत्येवं शंकरोऽब्रवीत् ॥ १० ॥ इति श्रीस्कांदे महापुराण एकाशीतिसाहस्र्यां ॥२०७॥
॥ ३३ ॥ संहितायां पञ्चम आवंत्यखण्डे रेवाखण्डे दारुतीर्थमाहात्म्यवर्णनंनाम त्रिंशोऽध्यायः ॥ ३० ॥ ॥ ७ ॥ ॥ श्रीमार्कंडेय उवाच ॥ ॥ ततो गच्छेन्न
राजेंद्र तीर्थं त्रैलोक्यविश्रुतम् ॥ ब्रह्मावर्त्तमिति ख्यातं सर्वपापप्रणाशनम् ॥ १ ॥ तत्र सन्निहितो ब्रह्मा नित्यसेवी युधिष्ठिर ॥ ऊर्ध्वबाहुर्निरालंब

श्वकार भ्रमणं सदा ॥ २ ॥ एकाहारवशोऽतिष्ठद्द्वादशाब्दं महाव्रती ॥ अत्र तीर्थे विधानेन चिंतयन्वै महेश्वरम् ॥ ३ ॥ तेन तत्पुण्यमाख्यातं ब्रह्मा
वर्त्तमिति प्रभो ॥ तत्र स्नात्वा विधानेन तर्पयेत्पितृदेवताः ॥ ४ ॥ अर्चयेद्देवमीशानं विष्णुं वा परमेश्वरम् ॥ यत्फलं सर्वयज्ञानां विधिवद्दक्षिणा
वताम् ॥ ५ ॥ तत्फलं समवाप्नोति तत्तीर्थस्य प्रभावतः ॥ यस्मिंस्तीर्थे तु यो देवो दानवो वा द्विजोऽथ वा ॥ ६ ॥ सिद्धस्तेनैव तन्नाम्ना ख्यातं लोके
महत्त्व तत् ॥ न जलं न स्थलं नाम क्षेत्रं वा पुराणि च ॥ ७ ॥ पवित्रत्वं लभंत्येते पौरुषेण विना नृणाम् ॥ सामर्थ्यान्निश्चयाद्धैर्यात्सिध्यंति
पुरुषा नृप ॥ ८ ॥ प्रमादात्तस्य लोभेन पतंति नरके ध्रुवम् ॥ ९ ॥ सन्निरुध्येंद्रियग्रामं यत्रयत्र वसेन्मुनिः ॥ तत्रतत्र कुरुक्षेत्रं नैमिषंपुष्कराणि
च ॥ १० ॥ इति श्रीस्कांदे महापुराण एकाशीतिसाहस्र्यां संहितायां पञ्चम आवंत्यखंडे रेवाखण्डे ब्रह्मावर्त्ततीर्थमाहात्म्यवर्णनं नामैकत्रिंशोऽ
ध्यायः ॥ ३१ ॥ ॥ छ ॥ ॥ श्रीमार्कंडेय उवाच ॥ ॥ पत्रेश्वरं ततो गच्छेत्सर्वपापप्रणाशनम् ॥ यत्र सिद्धो महाभागश्चित्रसेनसुतो
बली ॥ १ ॥ ॥ युधिष्ठिर उवाच ॥ ॥ कोऽसौ सिद्धस्तदा ब्रह्मंस्तस्मिंस्तीर्थे महातपाः ॥ पुत्रः कस्य तु को हेतुरेतदिच्छामि वेदितुम् ॥ २ ॥
॥ ॥ श्रीमार्कंडेय उवाच ॥ ॥ चित्रोनाम महातेजा इन्द्रस्य दयितः पुरा ॥ तस्य पुत्रो नृपश्रेष्ठ पत्रेश्वर इति श्रुतः ॥ ३ ॥ रूपवान्सुभगश्चैव
सर्वशत्रुभयंकरः ॥ इंद्रस्य दयितोऽत्यर्थं जय इत्येव चापरः ॥ ४ ॥ स कदाचित्सभामध्ये सर्वदेवसमागमे ॥ मेनकानृत्यगीतेन मोहितः सुचिरं
किल ॥ ५ ॥ तिष्ठते गतमर्यादो गतप्राण इव क्षणात् ॥ तावत्सुरपतिर्देवः शशापाथाजितेंद्रियम् ॥ ६ ॥ यस्मात्त्वं स्वर्गसंस्थोपि मर्त्यधर्ममुपेयि
वान् ॥ तस्मान्मर्त्ये चिरं कालं क्षपयिष्यस्यसंशयम् ॥ ७ ॥ एवमुक्तः सुरेंद्रेण चित्रसेनसुतो युवा ॥ वेपमानः सुरश्रेष्ठं कृतांजलिरुवाच ह ॥ ८ ॥
॥ ॥ पत्रेश्वर उवाच ॥ ॥ मया पापेन मूढेन अजितेंद्रियचेतसा ॥ प्राप्तं वै यत्फलं तस्य प्रसादं कर्त्तुमर्हसि ॥ ९ ॥ ॥ शक्र उवाच ॥ ॥
नर्मदातटमाश्रित्य द्वादशाब्दं जितेंद्रियः ॥ आराधय शिवं शांतं पुनः प्राप्स्यसि सद्गतिम् ॥ १० ॥ सत्यशौचरतानां च धर्मिष्ठानां जितात्म
नाम् ॥ लोकोऽयं पापिनां नैव इति शास्त्रस्य निश्चयः ॥ ११ ॥ एवमुक्ते महाराज सहस्राक्षेण धीमता ॥ गंधर्वतनयो धीमान्प्रणम्यागात्तु भूतलम् ॥
॥ १२ ॥ रेवाया विमले तोये ब्रह्मावर्त्तसमीपतः ॥ स्नात्वा जप्त्वा विधानेन अर्चयित्वा च शंकरम् ॥ १३ ॥ वाय्वंबुपिण्याकफलैश्च पुष्पैः पर्णैश्च
मूलाशनयावकेन ॥ तताप पंचाग्नितपोभिरुग्रैस्ततश्च तोषं समगात्स देवः ॥ १४ ॥ पिनाकपाणिं वरदं त्रिशूलिनमुमापतिं ह्यंधकना
शनं च ॥ चंद्रार्धमौलिं गजकृत्तिवाससं दृष्ट्वा पपाताग्रगतं समीक्ष्य ॥ १५ ॥ ॥ ईश्वर उवाच ॥ ॥ वरं वृणीष्व भद्रं ते वरदो

ऽहं तवानघ ॥ यमिच्छसि ददाम्यद्य नात्र कार्या विचारणा ॥ १६ ॥ ॥ पत्रेश्वर उवाच ॥ ॥ यदि तुष्टोसि देवेश यदि देयो
वरो मम ॥ अत्र त्वं सततं तीर्थे मम नाम्ना भव प्रभो ॥ १७ ॥ एतच्छ्रुत्वा महादेवो हर्षगद्गदया गिरा ॥ तथेत्युक्त्वा ययौ हृष्ट उमया सह शंकरः ॥
॥ १८ ॥ सोऽपि तत्तीर्थमाप्लुत्य गते देवे दिवं प्रति ॥ स्नात्वा जाप्यविधानेन तर्पयित्वा पितॄन्पुनः ॥ १९ ॥ स्थापयामास देवेशं तस्मिंस्तीर्थे विधा
नतः ॥ पत्रेश्वरं तु विख्यातं त्रिषु लोकेषु भारत ॥ २० ॥ इंद्रलोकं गतः शापान्मुक्तः सोऽपि नरेश्वर ॥ हृष्टः प्रमुदितो रम्यं जयशब्दादिमंगलैः ॥
॥ २१ ॥ एष ते कथितः प्रश्नः पृष्टो यो वै युधिष्ठिर ॥ तत्र स्नानेन चैकेन सर्वपापैः प्रमुच्यते ॥ २२ ॥ यस्त्व र्चयेन्महादेवं तस्मिंस्तीर्थे युधिष्ठिर ॥
स्नात्वाऽभ्यर्च्य पितॄन्देवान्सोऽश्वमेधफलं लभेत् ॥ २३ ॥ मृतो वर्षशतं साग्रं क्रीडित्वा च शिवे पुरे ॥ राजा वा राजतुल्यो वा पश्चान्मर्त्येषु जायते ॥
॥ २४ ॥ वेदवेदांगतत्त्वज्ञो जीवेच्च शरदः शतम् ॥ व्याधिशोकविनिर्मुक्तः पुनः स्मरति तज्जलम् ॥ २५ ॥ इति श्रीस्कांदे महापुराण एकाशीति
साहस्र्यां संहितायां पञ्चम आवंत्यखंडे रेवाखण्डे पत्रेश्वरतीर्थमाहात्म्यवर्णनंनाम द्वात्रिंशोऽध्यायः ॥ ३२ ॥ ॥ छ ॥ ॥ श्रीमार्कंडेय
उवाच ॥ ॥ ततो गच्छेत्तु राजेंद्र अग्नितीर्थमनुत्तमम् ॥ यत्र संनिहितो ह्यग्निर्गतः कामेन मोहितः ॥ १ ॥ ॥ युधिष्ठिर उवाच ॥ ॥ कथं देवो
जगद्धाता कामेन कलुषीकृतः ॥ कथं च नित्यदा वास एकस्थानेषु जायते ॥ २ ॥ एतत्त्वाश्चर्यमतुलं सर्वलोकेष्वनुत्तमम् ॥ कथयस्व महाभाग
परं कौतूहलं मम ॥ ३ ॥ ॥ श्रीमार्कंडेय उवाच ॥ ॥ साधुसाधु महाप्राज्ञ पृष्टः प्रश्नस्त्वयाऽनघ ॥ कथयामि यथापूर्वं श्रुतमेतन्महेश्वरात् ॥
॥ ४ ॥ आसीत्कृतयुगे राजा नाम्ना दुर्योधनो महान् ॥ हस्त्यश्वरथसंपूर्णो मेदिनीपरिपालकः ॥५॥ रूपयौवनसंपन्नं दृष्ट्वा तं पृथिवीपतिम् ॥ दिव्यो
पभोगसंपन्नं प्रार्थयामास नर्मदा ॥ ६ ॥ स तु तां चकमे कन्यां त्यक्त्वाऽन्यं प्रमदाजनम् ॥ मुदा परमया युक्तो माहिष्मत्याः पतिर्नृप ॥ ७ ॥
रमते स तया सार्द्धं काले वै नृपसत्तम ॥ नर्मदा जनयामास कन्यां पद्मदलेक्षणाम् ॥ ८ ॥ अंगप्रत्यंगसंपन्ना यस्माल्लोकेषु विश्रुता ॥ तस्यां पिता
च माता च चक्रतुः प्रेमबंधनम् ॥ ९ ॥ कालेनाऽतिसुदीर्घेण यौवनस्था वरांगना ॥ प्रार्थ्यमानाऽपि राजन्यै नात्मानं दातुमिच्छति ॥ १० ॥
॥ ३४ ॥ ततोऽन्यदिवसे वह्निर्द्विजरूपो महातपाः ॥ राजानं प्रार्थयामास रहो गत्वा शनैः शनैः ॥ ११ ॥ भोभो रघुकुलश्रेष्ठ द्विजोऽहं मंदसंततिः ॥ दरिद्रो ॥२०८॥
ह्यसहायश्च भार्यार्थे वरयामि ताम् ॥ १२ ॥ कन्या सुदर्शना नाम रूपेणाप्रतिमा भुवि ॥ तां ददस्व महाभाग वर्द्धते तव मंदिरे ॥ १३ ॥ ब्रह्मचर्येण

१ भवत्विति–इ० पा० ।

निर्विण्ण एकाकी कामपीडितः ॥ याचमानस्य मे तात प्रसादं कर्तुमर्हसि ॥ १४ ॥ ॥ राजोवाच ॥ ॥ नाहं द्रव्यविहीनस्य असवर्णस्य कर्हिचित् ॥ दास्यामि स्वां सुतां शुभ्रां गम्यतां द्विजपुंगव ॥१५॥ एवमुक्तस्तदा वह्निः परां पीडामुपागतः ॥ न किंचिदुक्त्वा राजानं तत्रैवांतरधीयत ॥ ॥ १६ ॥ गते चादर्शनं विप्रे राजा मंत्रिपुरोहितैः ॥ मंत्रयित्वाथ काले तु तुष्टो मखमुखे स्थितः ॥ १७ ॥ यजतश्च मखे भक्त्या ब्राह्मणैः सह भारत ॥ ततश्चादर्शनं वह्निः सर्वेषां पश्यतामगात् ॥ १८ ॥ विप्रा दुर्मनसो भूत्वा गता राज्ञो हि मंदिरम् ॥ वह्निनाशं विमनसो राजानमिदमब्रुवन् ॥ ॥ १९ ॥ ब्राह्मणा ऊचुः ॥ दुर्योधन महाराज श्रूयतां महदद्भुतम् ॥ न श्रुतं न च दृष्टं वा कौतुकं नृपपुंगव ॥२०॥ अग्निकार्यप्रवृत्तानां सर्वेषां विधिवन्नृप ॥ केनापि हेतुना वह्निर्दृश्यते न ज्वलत्युत ॥ २१ ॥ तच्छ्रुत्वा विप्रियं घोरं राजा विप्रमुखाच्च्युतम् ॥ आसनात्पतितो भूमौ छिन्नमूल इव द्रुमः ॥ २२ ॥ आश्वस्य च मुहूर्तेन उन्मत्त इव संस्तदा ॥ निरीक्ष्य च दिशः सर्वा इदं वचनमब्रवीत् ॥ २३ ॥ किमेतदाश्चर्यपरमिति भोभो द्विजोत्तमाः ॥ कथ्यतां कारणं सर्वं शास्त्रदृष्ट्या विभाव्य च ॥ २४ ॥ मम वा दुष्कृतं किंचिदुताहो भवतामिह ॥ येन नष्टोग्निशालायां हुतभुक्केन हेतुना ॥ २५ ॥ मंत्रच्छिद्रमथान्यद्वा नैव किंचिददक्षिणम् ॥ क्रियाहीनं कृतं वाथ केन वह्निर्न दृश्यते ॥ २६ ॥ अन्नहीनो दहेद्राष्ट्रं मंत्रहीनस्तु ऋत्विजः ॥ दातारं दक्षिणाहीनो नास्ति यज्ञसमो रिपुः ॥ २७ ॥ ॥ ब्राह्मणा ऊचुः ॥ ॥ न मंत्रहीना हि वयं न च राजन्व्रतैस्तथा ॥ द्रव्येण च न हीनस्त्वमन्यत्पापं विचिंत्यताम् ॥ २८ ॥ ॥ राजोवाच ॥ ॥ तथापि यूयं सहिता उपायं चिंतयंत्विति ॥ येन श्रेयो भवेन्नित्यमिह लोके परत्र च ॥ २९ ॥ एवमुक्तास्ततः सर्वे ब्राह्मणाः कृतनिश्चयाः ॥ निराहाराः स्थिताः सर्व्वे यत्र नष्टो हुताशनः ॥ ३० ॥ ततः स्वप्ने महातेजा हुतभुग्ब्राह्मणांस्तदा ॥ उवाच श्रूयतां सर्व्वैर्मम नाशस्य कारणम् ॥ ३१ ॥ प्रार्थितोऽयं मया राजा सुतां दातुं न चेच्छति ॥ तेन नष्टोऽग्निशरणादहं भो द्विजसत्तमाः ॥ ३२ ॥ यदि मे स्वसुतां राजा ददाति परमार्चिताम् ॥ तदास्य ज्वलमानोऽहं गृहेतिष्ठामि नान्यथा ॥ ३३ ॥ तच्छ्रुत्वा वचनं विप्रा वैश्वानरमुखोद्गतम् ॥ विस्मयोत्फुल्लनयना राजानमिदमब्रुवन् ॥ ३४ ॥ भवतो मतमाज्ञाय सर्वे गत्वाग्निमन्दिरम् ॥ निराहाराः स्थिता रात्रौ पश्यामो जातवेदसम् ॥ ३५ ॥ तेनोक्ताः स्वसुतां चेत्तु राजा मे दातुमिच्छति ॥ ततोऽस्य भूयोऽपि गृहे ज्वलेऽहं नान्यथा द्विजाः ॥ ॥ ३६ ॥ एवं ज्ञात्वा महाराज स्वसुतां दातुमर्हसि ॥ ३७ ॥ ॥ राजोवाच ॥ ॥ भवतां तस्य वा कार्यं देवस्य वचनं हृदि ॥ समयं कर्तुमिच्छामि कन्यादाने ह्यनुत्तमम् ॥ ३८ ॥ मम संनिहितो नित्यं गृहे तिष्ठतु पावकः ॥ ददामि रुचिरापांगीं नान्यथा करवाणि वै ॥ ३९ ॥ एवं

ते ब्राह्मणाः श्रुत्वा तथाग्निं प्राप्य सत्वरम् ॥ कथयित्वा विवाहेन योजयामासुराशु वै ॥ ४० ॥ सुदर्शनाया लाभेन परितुष्टो हुताशनः ॥ ज्वलते
सन्निधौ नित्यं माहिष्मत्यां युधिष्ठिर ॥ ४१ ॥ ततः प्रभृति तत्तीर्थमग्नितीर्थं प्रचक्षते ॥ ये तत्र पक्षसन्धौ तु स्नानदानैस्तु भाविताः ॥ ४२ ॥ तर्प
यन्ति पितन्देवांस्तेऽश्वमेधफलैर्युताः ॥ सुवर्णं ये प्रयच्छन्ति तस्मिंस्तीर्थे नराधिप ॥ ४३ ॥ पृथ्वीदानफलं तत्र जायते नात्र संशयः ॥ अनाशकं
तु यः कुर्यात्तस्मिंस्तीर्थे नराधिप ॥ ४४ ॥ स मृतो ह्यग्निलोके तु क्रीडते सुरपूजितः ॥ एष ते ह्यग्नितीर्थस्य संभवः कथितो मया ॥ ४५ ॥
सर्वपापहरः पुण्यः श्रुतमात्रो नरोत्तम ॥ धन्यः पापहरो नित्यमित्येवं शंकरोऽब्रवीत् ॥ ४६ ॥ इति श्रीस्कांदे महापुराण एकाशीतिसाहस्र्यां संहि
तायां पञ्चम आवंत्यखण्डे रेवाखण्डेऽग्नितीर्थमाहात्म्यवर्णनंनाम त्रयस्त्रिंशोऽध्यायः ॥ ३३ ॥ ॥ श्रीमार्कंडेय उवाच ॥ ॥ तत्रैव तु भवेदन्य
दादित्यस्य महात्मनः ॥ कीर्त्तयामि नरश्रेष्ठ यदि ते श्रवणे मतिः ॥ १ ॥ ॥ युधिष्ठिर उवाच ॥ ॥ एतदाश्चर्यमतुलं श्रुत्वा तव मुखोद्गतम् ॥
विस्मयाद्धृष्टरोमाहं जातोस्मि मुनिसत्तम ॥ २ ॥ सहस्रकिरणो देवो हर्ता कर्ता निरञ्जनः ॥ अवतारेण लोकानामुद्धर्ता नर्मदातटे ॥ ३ ॥ पुरुषा
कारो भगवानुताहो तपसः फलात् ॥ कस्य गोत्रे समुत्पन्नः कस्य देवोऽभवद्वशी ॥ ४ ॥ ॥ श्रीमार्कंडेय उवाच ॥ ॥ कुलिकान्वयसंभूतो
ब्राह्मणो भक्तिमाञ्छुचिः ॥ ईक्ष्योमीति रविं तत्र तीर्थे यात्राकृतोद्यमः ॥ ५ ॥ योजनानां शतं साग्रं निराहारो गतोदकः ॥ प्रस्थितो देवदेवेन
स्वप्नांते वारितः किल ॥ ६ ॥ भोभो मुने महासत्त्व अलं ते व्रतमीदृशम् ॥ सर्वं व्याप्य स्थितं पश्य स्थावरं जंगमं च माम् ॥ ७ ॥ तपाम्यहं
ततो वर्षं निगृह्णाम्युत्सृजामि च ॥ न मृतं चैव मृत्युं च यः पश्यति स पश्यति ॥ ८ ॥ वरं वरय भद्रं त्वमात्मनो यस्तवेप्सितम् ॥ ९ ॥ ॥ ब्राह्मण
उवाच ॥ ॥ यदि तुष्टोसि मे देव देयो यदि वरो मम ॥ उत्तरे नर्मदाकूले सदा सन्निहितो भव ॥ १० ॥ ये भक्त्या परया देव योजनानां शते
स्थिताः ॥ स्मरिष्यंति जितात्मानस्तेषां त्वं वरदो भव ॥ ११ ॥ कुब्जांधबधिरा मूका ये केचिद्विकलेन्द्रियाः ॥ तव पादौ नमस्यंति तेषां त्वं
वरदो भव ॥ १२ ॥ शीर्णघ्राणा गतधियो ह्यस्थिचर्मावशेषिताः ॥ तेषां त्वं करुणां देव अचिरेण कुरुष्व ह ॥ १३ ॥ येऽपि त्वां नर्मदातोये
स्नात्वा तत्र दिनेदिने ॥ अर्चयंति जगन्नाथ तेषां त्वं वरदो भव ॥ १४ ॥ प्रभाते ये स्तविष्यंति स्तवैर्वैदिकलौकिकैः ॥ अभिप्रेतं वरं देव तेषां त्वं
दद मोच्युत ॥ १५ ॥ तवाग्रे वपनं देव कारयंति नरा भुवि ॥ स्वामिंस्तेषां वरो देय एष मे परमो वरः ॥ १६ ॥ एवमस्त्विति तं चोक्त्वा मुनिं

१ तीर्थम्-इति शेषः । २ अनुदात्तेत्त्वलक्षणस्यात्मनेपदित्वस्यानित्यत्वाद्दीक्षितैः परस्मैपदित्वमत्र बोद्धव्यम् ।

करुणया पुनः ॥ शतभागेन राजेंद्र स्थित्वा चादर्शनं गतः ॥ १७ ॥ तत्र तीर्थे नरो भक्त्या गत्वा स्नानं समाचरेत् ॥ तर्पयेत्पितृदेवांश्च सोऽग्नि ष्टोमफलं लभेत् ॥ १८ ॥ अग्निप्रवेशं यः कुर्यात्तस्मिंस्तीर्थे नराधिप ॥ द्योतयन्वै दिशः सर्वा अग्निलोकं स गच्छति ॥ १९ ॥ यस्तत्तीर्थं समासाद्य त्यजतीह कलेवरम् ॥ स गतो वारुणं लोकमित्येवं शंकरोऽब्रवीत् ॥२०॥ तत्र तीर्थे तु यः कश्चित्संन्यासेन तनुं त्यजेत् ॥ षष्टिवर्षसहस्राणि स्वर्गलोके महीयते ॥ २१ ॥ अप्सरोगणसंकीर्णे दिव्यशब्दानुनादिते ॥ उषित्वाऽऽयाति मर्त्ये वै वेदवेदांगविद्भवेत् ॥ २२ ॥ व्याधिशोकविनिर्मुक्तो धनकोटिपतिर्भवेत् ॥ पुत्रदारसमोपेतो जीवेच्च शरदः शतम् ॥ २३ ॥ प्रातरुत्थाय यस्तत्र स्मरते भास्करं तदा ॥ आजन्मजनितात्पापान्मुच्यते नात्र संशयः ॥ २४ ॥ इति श्रीस्कांदे महापुराण एकाशीतिसाहस्र्यां संहितायां पञ्चम आवन्त्यखण्डे रेवाखण्डे रवितीर्थवर्णनंनाम चतुर्स्त्रिंशोऽध्यायः ॥ ३४ ॥ ॥ छ ॥ ॥ युधिष्ठिर उवाच ॥ ॥ जलमध्ये महादेवः केन तिष्ठति हेतुना ॥ उत्तरं दक्षिणं कूलं वर्जयित्वा द्विजोत्तम ॥ ॥ १ ॥ ॥ श्रीमार्कंडेय उवाच ॥ ॥ एतदाख्यानमतुलं पुण्यं श्रुतिसुखावहम् ॥ पुराणे यच्छ्रुतं तात तत्ते वक्ष्याम्यशेषतः ॥ २ ॥ त्रेतायुगे महाभाग रावणो देवकण्टकः ॥ त्रैलोक्यविजयी रौद्रः सुरासुरभयंकरः ॥ ३ ॥ देवदानवगंधर्वैर्ऋषिभिश्च तपोधनैः ॥ अवध्योऽथ विमानेन याव त्पर्यटते महीम् ॥ ४ ॥ तावद्विंध्यगिरेर्मध्ये दानवो बलदर्पितः ॥ मयो नामेति विख्यातो गुहावासी तपश्चरन् ॥ ५ ॥ तस्य पार्श्वगतो रक्षो विनया दवनिंगतः ॥ पूजितो दानसन्मानैरिदं वचनब्रवीत् ॥ ६ ॥ कस्येयं पद्मपत्राक्षी पूर्णचंद्रनिभानना ॥ किंनामधेया तपति तप उग्रं कथं विभो ॥ ॥ ७ ॥ ॥ मय उवाच ॥ ॥ दानवानां पतिः श्रेष्ठो मयोऽहं नाम नामतः ॥ भार्या तेजोवती नाम तस्यास्तु तनया शुभा ॥ ८ ॥ मन्दोदरीति विख्याता तपते भर्तृकारणात् ॥ आराधयंती भर्त्तारमुमाया दयितं शुभम् ॥ ९ ॥ तच्छ्रुत्वा वचनं तस्य रावणो मदमोहितः ॥ प्रहृतः प्रणतो भूत्वा मयं वचनमब्रवीत् ॥ १० ॥ पौलस्त्यान्वयसंजातो देवदानवदर्पहा ॥ प्रार्थयामि महाभाग सुतां त्वं दातुमर्हसि ॥ ११ ॥ ज्ञात्वा पैतामहं वृत्तं मयेनाऽपि महात्मना ॥ रावणाय सुता दत्ता पूजयित्वा विधानतः ॥ १२ ॥ गृहीत्वा तां तदा रक्षोऽभ्यर्च्यमानो निशाचरैः ॥ देवोद्याने विमानेश्च क्रीडते स तया सह ॥ १३ ॥ केनचित्त्वथ कालेन रावणो लोकरावणः ॥ पुत्रं पुत्रवतां श्रेष्ठो जनयामास भारत ॥ १४ ॥ तेनैव जातमात्रेण रावो मुक्तो महात्मना ॥ संवर्त्तकस्य मेघस्य तेन लोका जडीकृताः ॥ १५ ॥ श्रुत्वा तन्नर्दितं घोरं ब्रह्मा लोकपितामहः ॥ नाम चक्रे तदा तस्य मेघनादो भविष्यति ॥ १६ ॥ एवंनामा कृतः सोऽपि परमं व्रतमास्थितः ॥ तोषयामास देवेशमुमया सह शंकरम् ॥ १७ ॥ व्रतैर्नियमदानैश्च

होमजाप्यविधानतः ॥ कृच्छ्रचांद्रायणैर्नित्यं कृशं कुर्वन्कलेवरम् ॥ १८ ॥ एवमन्यदिने तात कैलासं धरणीधरम् ॥ गत्वा लिंगद्वयं गृह्य प्रस्थितो
दक्षिणामुखः ॥ १९ ॥ नर्मदातटमाश्रित्य स्नातुकामो महाबलः ॥ निक्षिप्य पूजयन्देवं कृतजाप्यो नरेश्वर ॥ २० ॥ तत्रायतनमध्येन स्नातो
हुतहुताशनः ॥ कृतकृत्यमिवात्मानं मानयित्वा निशाचरः ॥ २१ ॥ गंतुकामः परं मार्गं लंकायां नृपसत्तम ॥ एकमुद्धरतो लिंगं प्रणतः सव्य
पाणिना ॥ २२ ॥ द्वितीयं तु द्वितीयेन भक्त्या पौलस्त्यनंदनः ॥ तावदेव महालिंगं पतितं नर्मदाऽम्भसि ॥ २३ ॥ याहियाहीति चेत्युक्त्वा जलमध्ये
प्रतिष्ठितः ॥ नमित्वा रावणिस्तस्य देवस्य परमेष्ठिनः ॥ २४ ॥ जगामाकाशमाविश्य पूज्यमानो निशाचरैः ॥ तदाप्रभृति तत्तीर्थं मेघनादेति
विश्रुतम् ॥२५॥ पूर्वं तु गर्जनं नाम सर्वपापक्षयंकरम् ॥ तस्मिंस्तीर्थे तु राजेंद्र यस्तु स्नानं समाचरेत् ॥ २६ ॥ अहोरात्रोषितो भूत्वा अश्वमेधफलं
लभेत् ॥ पिंडदानं तु यः कुर्यात्तस्मिंस्तीर्थे नराधिप ॥ २७ ॥ यत्फलं सन्नयज्ञेन तद्भवेन्नाऽत्र संशयः ॥ तेन द्वादशवर्षाणि पितरः संप्रतर्पिताः ॥
॥ २८ ॥ यस्तु भोजयते विप्रं षड्रसाऽन्नेन भारत ॥ अक्षयं पुण्यमाप्नोति तत्र तीर्थे नरोत्तम ॥ २९ ॥ प्राणत्यागं तु यः कुर्याद्भावितो भावि
तात्मना ॥ स वसेच्छांकरे लोके यावदाभूतसंप्लवम् ॥ ३० ॥ एषा ते नरशार्दूल गर्जनोत्पत्तिरुत्तमा ॥ कथिता स्नेहबंधेन सर्वपापक्षयंकरी ॥
॥३१॥ इति श्रीस्कांदे महापुराण एकाशीतिसाहस्र्यां संहितायां पञ्चम आवंत्यखंडे रेवाखण्डे मेघनादतीर्थमाहात्म्यवर्णनंनाम पंचत्रिंशोऽध्यायः ॥
॥ ३५ ॥ ॥ छ ॥ ॥ मार्कंडेय उवाच ॥ ॥ ततो गच्छेच्च राजेंद्र दारुतीर्थमनुत्तमम् ॥ दारुको यत्र संसिद्ध इंद्रस्य दयितः पुरा ॥ १ ॥
॥ ॥ युधिष्ठिर उवाच ॥ ॥ दारुकेण कथं तात तपश्चीर्णं पुराऽनघ ॥ विधानं श्रोतुमिच्छामि त्वत्सकाशाद्विजोत्तम ॥ २ ॥ ॥ श्रीमार्कंडेय
उवाच ॥ हंत ते कथयिष्यामि विचित्रं यत्पुरातनम् ॥ वृत्तं स्वर्गसभामध्ये ऋषीणां भावितात्मनाम्॥३॥सूतो वज्रधरस्येष्टो मातलिर्नाम नामतः ॥
स पुत्रं शप्तवान्पूर्वं कस्मिंश्चित्कारणांतरे ॥ ४ ॥ शापाहतो वेपमान इन्द्रस्य चरणौ शुभौ ॥ प्रपीड्य मूर्ध्ना देवेशं विज्ञापयति भारत ॥५॥ तमुवाचा
भिशप्तं चाप्यनाथं च सुरेश्वरः ॥ कर्मणा केन शापस्य घोरस्यांतो भविष्यति ॥६॥ नर्मदातटमाश्रित्य तोषयन्वै महेश्वरम् ॥ तिष्ठ यावद्युगस्यांतं
पुनर्जन्म ह्यवाप्स्यसि॥७॥ पुनर्भूत्वा तु पूतस्त्वं दारुकोनाम विश्रुतः॥ संसेव्य परमं देवं शंखचक्रगदाधरम् ॥८॥ मानुषं भावमापन्नस्ततः सिद्धिमवा
प्स्यसि ॥ एवमुक्तस्तु देवेन सहस्राक्षेण धीमता ॥ ९ ॥ प्रणम्य शिरसा भूमिमागतोसौ सचेतनः ॥ नर्मदातटमाश्रित्य कर्षयन्निजविग्रहम् ॥ १० ॥
व्रतोपवाससंखिन्नो जपहोमरतः सदा ॥ महादेवं महात्मानं वरदं शूलपाणिनम् ॥ ११ ॥ भक्त्या तु परया राजन्यावदाभूतसंप्लवम् ॥ अंशावतरणा

द्विष्णोः सूतो भूत्वा महामतिः ॥ १२ ॥ तोषयन्वै जगन्नाथं ततो यातो हि सद्गतिम् ॥ १३ ॥ एष तत्संभवस्तात दारुतीर्थस्य सुव्रत॥ कथितोऽयं
मया पूर्वं यथा मे शंकरोऽब्रवीत् ॥ १४ ॥ ततो युधिष्ठिरः श्रुत्वा विस्मयं परमं गतः ॥ भ्रातॄन्विलोकयामास हृष्टरोमा मुहुर्मुहुः ॥ १५ ॥
॥ ॥ श्रीमार्कंडेय उवाच ॥ ॥ तस्मिंस्तीर्थे नरः स्नात्वा विधिपूर्वं नरेश्वर ॥ उपास्य संध्यां देवेशमर्चयेच्च शंकरम् ॥ १६ ॥ वेदाऽभ्यासं
तु तत्रैव यः करोति समाहितः ॥ सोऽश्वमेधफलं राजँल्लभते नाऽत्र संशयः ॥ १७ ॥ तस्मिंस्तीर्थे तु यो भक्त्या भोजयेद्ब्राह्मणाञ्छुचिः ॥ स तु
विप्रसहस्रस्य लभते फलमुत्तमम् ॥ १८ ॥ स्नानं दानं जपो होमः स्वाध्यायो देवतार्चनम् ॥ यत्कृतं शुद्धभावेन तत्सर्वं सफलं भवेत् ॥१९॥ इति
श्रीस्कांदे महापुराण एकाशीतिसाहस्र्यां संहितायां पञ्चम आवन्त्यखण्डे रेवाखण्डे दारुकतीर्थमाहात्म्यवर्णनंनाम षट्त्रिंशोऽध्यायः ॥ ३६ ॥
॥ छ ॥ श्रीमार्कंडेय उवाच ॥ ॥ ततो गच्छेत राजेंद्र देवतीर्थमनुत्तमम् ॥ येन देवास्त्रयस्त्रिंशत्स्नात्वा सिद्धिं परां गताः ॥ १ ॥ ॥ युधिष्ठिर
उवाच ॥ ॥ कथं तात सुराः सर्व्वे दानवैर्बलवत्तरैः ॥ निर्जितास्तत्र तीर्थे च स्नात्वा सिद्धिं परां गताः ॥ २ ॥ ॥ मार्कंडेय उवाच ॥ ॥ पुरा
दैत्यगणैरुग्रैर्युद्धेऽतिबलवत्तरैः ॥ इन्द्रो देवगणैः सार्द्धं स्वराज्याच्च्यावितो नृप ॥ ३ ॥ हस्त्यश्वरथयानौघैर्मर्दयित्वा वरूथिनीम् ॥ विध्वस्ता भेजिरे
मार्गं प्रहारैर्जर्जरीकृताः ॥ ४ ॥ जंभशुंभनिशुंभैश्च कूष्मांडकुहकादिभिः ॥ वेपमानार्दिताः सर्व्वे ब्रह्माणमुपतस्थिरे ॥ ५ ॥ प्रणम्य शिरसा देवं
ब्रह्माणं परमेष्ठिनम् ॥ तदा विज्ञापयामासुर्देवा वह्निपुरोगमाः॥६॥पश्यपश्य महाभाग दानवैः शकलीकृताः॥ वियोजिताः पुत्रदारैस्त्वामेव शरणं गताः
॥ ७ ॥ परित्रायस्व देवेश सर्वलोकपितामह ॥ नाऽन्या गतिः सुरेशान त्वां मुक्त्वा परमेश्वर ॥ ८ ॥ ॥ ब्रह्मोवाच ॥ ॥ दानवानां विघातार्थं
नर्मदातटमास्थिताः ॥ तपः कुरुध्वं स्वस्थाः स्थ तपो हि परमं बलम् ॥ ९ ॥ नाऽन्योपायो न वै मंत्रो विद्यते न च मे क्रिया ॥ विना रेवाजलं
पुण्यं सर्वपापक्षयंकरम् ॥ १० ॥ दारिद्र्यव्याधिमरणबंधनव्यसनानि च ॥ एतानि चैव पापस्य फलानीति मतिर्मम ॥ ११ ॥ एवं ज्ञात्वा तत
श्चैव तपः कुरुत दुष्करम् ॥ तथा चैव सुराः सर्वे देवा ह्यग्निपुरोगमाः ॥ १२ ॥ तच्छ्रुत्वा वचनं तथ्यं ब्रह्मणः परमेष्ठिनः ॥ नर्मदामागताः सर्वे देवा
ह्यग्निपुरोगमाः ॥ १३ ॥ चेरुर्वै तत्र विपुलं तपः सिद्धिमवाप्नुवन् ॥ तदाप्रभृति तत्तीर्थं देवतीर्थमनुत्तमम् ॥ १४ ॥ गीयते त्रिषु लोकेषु सर्वपाप
क्षयंकरम् ॥ तत्र गत्वा च यो मर्त्यो विधिना संयतेंद्रियः ॥१५॥ स्नानं समाचरेद्भक्त्या स लभेन्मौक्तिकं फलम् ॥ यस्तु भोजयते विप्रां स्तस्मिंस्ती
र्थे नराधिप ॥ १६ ॥ स लभेन्मुख्यविप्राणां फलं साहस्रिकं नृप ॥ तत्र देवशिला रम्या महापुण्यविवर्द्धिनी ॥ १७ ॥ संन्यासेन मृता ये तु तेषां

स्यादक्षया गतिः ॥ अग्निप्रदेशं यः कुर्यात्तस्मिंस्तीर्थे नराधिप ॥ १८ ॥ रुद्रलोके वसेत्तावद्यावदाभूतसंप्लवम् ॥ एवं स्नानं जपो होमः स्वाध्यायो
देवतार्चनम् ॥१९॥ सुकृतं दुष्कृतं वाऽपि तत्र तीर्थेऽक्षयं भवेत् ॥ एष ते विधिरुद्दिष्ट उत्पत्तिश्चैव भारत ॥२०॥ देवतीर्थस्य निखिलं यथा वै शंक
राच्छ्रुता ॥ पठंति ये पापहरं सर्वदुःखविमोचनम् ॥ २१ ॥ देवतीर्थस्य चरितं देवलोकं व्रजन्ति ते ॥२२॥ इति श्रीस्कांदे महापुराण एकाशीतिसाह
स्र्यां संहितायां पञ्चम आवन्त्यखंडे रेवाखंडे देवतीर्थमाहात्म्यवर्णनंनाम सप्तत्रिंशोऽध्यायः ॥३७॥ ॥ श्रीमार्कंडेय उवाच ॥ ॥ ततो गच्छेत राजेंद्र
गुहाऽऽवासीति चोत्तमम् ॥ यत्र सिद्धो महादेवो गुहावासी समार्बुदम् ॥ १ ॥ ॥ युधिष्ठिर उवाच ॥ केन कार्येण भो तात महादेवो जगद्गुरुः ॥
गुहायामनयत्कालं सुदीर्घं द्विजसत्तम ॥ २ ॥ एतद्विस्तरतः सर्वं कथयस्व ममानघ ॥ श्रोतुमिच्छाम्यहं सर्वं परं कौतूहलं हि मे ॥ ३ ॥ ॥ मार्कंडेय
उवाच ॥ ॥ साधु प्रश्नो महाराज पृष्टो यो वै त्वयोत्तमः ॥ पुराणे विस्तरो ह्यस्य न शक्यो हि मयाऽधुना ॥ ४ ॥ कथितुं वृद्धभाव
त्वादतीतो बहुकालिकः ॥ संक्षेपात्तेन ते तात कथयामि निबोध मे ॥ ५ ॥ पुरा कृतयुगे राजन्नासीद्दारुवनं महत् ॥ नानाद्रुमलताकीर्णं नाना
वल्ल्युपशोभितम् ॥ ६ ॥ सिंहव्याघ्रवराहैश्च गजैः खड्गैर्निषेवितम् ॥ बहुपक्षियुतं दिव्यं यथा चैत्ररथं वनम् ॥ ७ ॥ तत्र केचिन्महा
प्राज्ञा वसंति संशितव्रताः ॥ वसंति परया भक्त्या चतुराश्रमभाविताः ॥ ८ ॥ ब्रह्मचारी गृहस्थश्च वानप्रस्थो यतिस्तथा ॥ स्वधर्मनिरताः
सर्वे वांछंतः परमं पदम् ॥ ९ ॥ तावद्वसंतसमये कस्मिंश्चित्कारणांतरे ॥ विमानस्थो महादेवो गच्छन्वै ह्युमया सह ॥ १० ॥ ददर्श तोय आवासम्
वसामयजुर्नादितम् ॥ अलक्ष्यागतनिर्गम्यं सर्वपापक्षयंकरम् ॥ ११ ॥ तं दृष्ट्वा मुदिता देवी हर्षगद्गदया गिरा ॥ पप्रच्छ देवदेवेशं शशांककृतभूष
णम् ॥ १२ ॥ ॥ देव्युवाच ॥ ॥ कस्यायमाश्रमो देव वेदध्वनिनिनादितः ॥ यं दृष्ट्वा क्षुत्पिपासाद्यैः श्रमैश्च परिहीयते ॥ १३ ॥ ॥ महेश्वर
उवाच ॥ ॥ किं त्वया न श्रुतं देवि महादारुवनं महत् ॥ बहुविप्रजनो यत्र गृहधर्मेण वर्त्तते ॥ १४ ॥ अत्र यः स्त्रीजनः कश्चित्पतिशुश्रूषणे
रतः ॥ नान्यो देवो न वै धर्मो ज्ञायते शैलनंदिनि ॥ १५ ॥ एतच्छ्रुत्वा परं वाक्यं देवदेवेन भाषितम् ॥ कौतूहलसमाविष्टा शंकरं पुनरब्रवीत् ॥
॥ १६ ॥ यत्त्वयोक्तं महादेव पतिधर्मरताः स्त्रियः ॥ तासां त्वं मदनो भूत्वा चारित्रं क्षोभय प्रभो ॥ १७ ॥ ॥ ईश्वर उवाच ॥ ॥ यत्त्वयोक्तं च

१ शंसितव्रताः—इत्यपि पाठः—तदा श्लाघनीयव्रताः—इत्यर्थः । संशितव्रताः—अतितीक्ष्णव्रताः—इत्यर्थः । २ अलक्ष्यागमनिर्गम्यम्–अलक्षितगमननिर्गमनमार्गम्–इत्यर्थः ।

वचनं न हि मे रोचते प्रिये ॥ ब्राह्मणा हि महद्भूतं न चैषां विप्रियं चरेत् ॥ १८ ॥ मन्युप्रहरणा विप्राश्चक्रप्रहरणो हरिः ॥ चक्रात्क्रूरतरो मन्युस्त स्माद्विप्रं न कोपयेत् ॥ १९ ॥ न ते देवा न ते लोका न ते नागा न चासुराः ॥ दृश्यन्ते त्रिषु लोकेषु ये तैर्दृष्टैर्न नाशिताः ॥ २० ॥ तेषां मोक्षस्तथा स्वर्गो भूमिर्मर्त्ये फलानि च ॥ येषां तुष्टा महाभागा ब्राह्मणाः क्षितिदेवताः ॥ २१ ॥ एवं ज्ञात्वा महाभागे असद्ग्राहं परित्यज ॥ तत्र लोके विरुद्धं वै कुप्यन्ते येन वै द्विजाः ॥ २२ ॥ ॥ देव्युवाच ॥ ॥ नाहं ते दयिता देव नाऽहं ते वशवर्त्तिनी ॥ अकृत्वाऽधश्च वै तासां मानं सुरसुपूजितम् ॥ २३ ॥ लोकालोके महादेव अशक्यं नास्ति ते प्रभो ॥ क्रियतां मम चैवैकमेतत्कार्यं सुरोत्तम ॥ २४ ॥ एवमुक्तो महादेवो देव्या वाक्यहिते रतः ॥ कृत्वा कापालिकं रूपं ययौ दारुवनं प्रति ॥ २५ ॥ महाहितजटाजूटं नियम्य शशिभूषणम् ॥ कण्ठत्राणं परं कृत्वा धार यन्कर्णकुण्डले ॥ २६ ॥ व्याघ्रचर्मपरीधानो मेखलाहारभूषितः ॥ नूपुरध्वनिनिर्घोषैः कम्पयन्वै वसुन्धराम् ॥ २७ ॥ महानूर्द्धजटामाली कृत्तिभ स्मानुलेपनः ॥ कृत्वा हस्ते कपालं तु ब्रह्मणश्च महात्मनः ॥ २८ ॥ महाडमरुघोषेण कम्पयन्वै वसुन्धराम् ॥ प्रभातसमये प्राप्तो महादारुवनं प्रति ॥ २९ ॥ तावत्पुण्यजनः सर्वपुष्पपत्रफलार्थिकः ॥ निर्गतो बहुभिः सार्द्धं पवमानः समन्ततः ॥ ३० ॥ तद्दृष्ट्वा महदाश्चर्यं रूपं देवस्य भारत ॥ युवतीनां मनस्तासां कामेन कलुषीकृतम् ॥ ३१ ॥ शोभनं पुरुषं दृष्ट्वा सर्वा अपि वरांगनाः ॥ क्लेदभावं ततो जग्मुर्मुदा दारुवनस्त्रियः ॥ ॥ ३२ ॥ विकारा बहवस्तासां देवं दृष्ट्वा महाद्भुतम् ॥ संजाता विप्रपत्नीनां तदा तासु नरोत्तम ॥ ३३ ॥ परिधानं न जानंति काश्चिद्दृष्ट्वा वरां गनाः ॥ उत्तरीयं तथा चान्या महामोहसमन्विताः ॥ ३४ ॥ केशभारपरिभ्रष्टा काचिदेवासनोत्थिता ॥ दातुकामा तदा भैक्ष्यं चेष्टितुं नैव चाश कत् ॥ ३५ ॥ काचिद्दृष्ट्वा महादेवं रूपयौवनगर्विता ॥ उत्संगे संस्थितं बालं विस्मृता पायितुं स्तनम् ॥ ३६ ॥ कामबाणहता चाऽन्या बाहुभ्यां पीड्य सुस्तनौ ॥ निःश्वसन्ती तदा चोष्णं न किंचित्प्रतिजल्पति ॥ ३७ ॥ एवं संक्षोभ्य तं सर्वं स्त्रीजनं परमेश्वरः ॥ जगाम तत्र वै तासां क्षोभं कृत्वा महाद्भुतम् ॥ ३८ ॥ तावत्ते ब्राह्मणाः सर्वे भ्रमित्वा काननं महत् ॥ आगताः स्वगृहे दारान्ददृशुश्च हतौजसः ॥ ३९ ॥ यासां पूर्वतरा भक्तिः पाति व्रत्ये पतीन्प्रति ॥ चलितास्ता विदित्वाशु निर्जग्मुर्द्विजसत्तमाः ॥ ४० ॥ संविदं परमां कृत्वा ज्ञात्वा देवं महेश्वरम् ॥ क्षोभयित्वा मनस्तासां ततश्चादर्शनं गतम् ॥ ४१ ॥ क्रोधाविष्टो द्विजः कश्चिद्दण्डमुद्यम्य धावति ॥ कल्माषयष्टिमन्ये च तथान्ये दर्भमुष्टिकाम् ॥ ४२ ॥ इतश्चेतश्च ते सर्वे भ्रमित्वा काननं नृप ॥ एकीभूत्वा महात्मानो व्याजह्रुश्च रुषा गिरम् ॥ ४३ ॥ यदिदं च हुतं किंचिद्दुरवस्तोषिता यदि ॥ तेन सत्येन देवस्य लिंगं

पततु चोत्तमम् ॥४४॥ आश्रमादाश्रमं सर्वे न त्यजामो विधिक्रमात् ॥ तेन सत्येन देवस्य लिंगं पततु भूतले ॥ ४५ ॥ एवं सत्यप्रभावेन त्रिरुक्तेन
द्विजन्मनाम् ॥ शिवस्य पश्यतो लिंगं पतितं धरणीतले ॥ ४६ ॥ हाहाकारो महानासील्लोकालोकेऽपि भारत ॥ देवस्य पतिते लिंगे जगतश्च
महाक्षये ॥ ४७ ॥ पतमानस्य लिंगस्य शब्दोभूच्च सुदारुणः ॥ उल्कापाता दिशां दाहा भूमिकम्पाश्च दारुणाः ॥ ४८ ॥ पतंति पर्वताग्राणि
शोषं यांति च सागराः॥ देवस्य पतिते लिंगे देवा विमनसोऽभवन् ॥ ४९ ॥ समेत्य सहिताः सर्वे ब्रह्माणं परमेष्ठिनम् ॥ कृतांजलिपुटाः सर्वे स्तु
वन्ति विविधैः स्तवैः ॥ ५० ॥ ततस्तुष्टो जगन्नाथश्चतुर्वदनपंकजः ॥ आर्त्तान्प्राह सुरान्सर्वान्मा विषादं गमिष्यथ ॥ ५१ ॥ ब्रह्मशापाभिभूतोऽसौ
देवदेवस्त्रिलोचनः ॥ तुष्टैस्तैस्तपसा युक्तैः पुनर्मोक्षं गमिष्यति ॥ ५२ ॥ एतच्छ्रुत्वा ययुर्देवा यथागतमरिंदम ॥ भावयित्वा ततः सर्वे मुनयश्चैव भा
रत ॥ ५३ ॥ विश्वामित्रवसिष्ठाद्या जाबालिरथ कश्यपः ॥ समेत्य सहिताः सर्वे तमूचुस्त्रिपुरांतकम् ॥५४॥ ब्रह्मतेजो हि बलवद्द्विजानां हि सुरेश्वर ॥
क्षांतियुक्तस्तपस्तप्त्वा भविष्यसि गतक्लमः ॥ ५५ ॥ यतः क्षोभादृषीणां च तदेवं लिंगमुत्तमम् ॥ पतितं ते महादेव न तत्पूज्यं भविष्यति ॥ ५६ ॥
न तच्छ्रेयोऽग्निहोत्रेण नाग्निष्टोमेन लभ्यते ॥ प्राप्नुवंति च यच्छ्रेयो मानवा लिंगपूजने ॥ ५७ ॥ देवदानवयक्षाणां गंधर्वोरगरक्षसाम् ॥ वचनेन
तु विप्राणामेतत्पूज्यं भविष्यति ॥ ५८ ॥ ब्रह्मविष्ण्विन्द्रचंद्राणामेतत्पूज्यं भविष्यति ॥ यत्फलं तव लिंगस्य इह लोके परत्र च ॥ ५९ ॥ एवमुक्तो
जगन्नाथः प्रणिपत्य द्विजोत्तमान् ॥ मुदा परमया युक्तः कृतांजलिरभाषत ॥ ६० ॥ ब्राह्मणा जंगमं तीर्थं निर्जलं सार्वकामिकम् ॥ येषां वाक्यो
दकेनैव शुद्ध्यंति मलिनो जनाः ॥ ६१ ॥ न तत्क्षेत्रं न तत्तीर्थमूषरं पुष्कराणि च ॥ ब्राह्मणे मन्युमुत्पाद्य यत्र गत्वा स शुद्ध्यति ॥ ६२ ॥
न तच्छास्त्रं यन्न विप्रप्रणीतं न तद्दानं यन्न विप्रप्रदेयम् ॥ न तत्सौख्यं यन्नविप्रप्रसादान्न तद्दुःखं यन्न विप्रप्रकोपात् ॥ ६३ ॥ पृथिव्यां यानि
तीर्थानि गंगाद्याः सरितस्तथा ॥ एकस्य विप्रवाक्यस्य कलां नार्हंति षोडशीम् ॥ ६४ ॥ अभिनंद्य द्विजान्सर्वाननुज्ञातो महर्षिभिः ॥ ततोऽगम
त्सदा देवो नर्मदातटमुत्तमम् ॥ ६५ ॥ परमं व्रतमास्थाय गुहावासी समार्बुदम् ॥ तपश्चचार भगवाञ्जपध्यानरतः सदा ॥ ६६ ॥ समाप्ते नियमे
तात स्थापयित्वा महेश्वरम् ॥ वंद्यमानः सुरैः सार्द्धं कैलासमगमत्प्रभुः ॥ ६७ ॥ नर्मदायास्तटे तेन स्थापितः परमेश्वरः ॥ तेनैव कारणेनासौ
नर्मदेश्वर उच्यते ॥ ६८ ॥ योऽर्चयेन्नर्मदेशानं यतिर्वै संजितेंद्रियः ॥ स्नात्वा चैव महादेवमश्वमेधफलं लभेत् ॥ ६९ ॥ ददाति यः पितृभ्यस्तु

१ मलिनः-मलवन्तः-इत्यर्थः ।

तिलपुष्पकुशोदकम् ॥ त्रिःसप्तपूर्वजास्तस्य स्वर्गे मोदंति पांडव ॥ ७० ॥ यस्तु भोजयते विप्रांस्तस्मिंस्तीर्थे नराधिप ॥ पायसं घृतमिश्रं तु स
लभेत्कोटिजं फलम् ॥ ७१ ॥ सुवर्णं रजतं वापि ब्राह्मणेभ्यो युधिष्ठिर ॥ ददाति तोयमध्यस्थः सोऽग्निष्टोमफलं लभेत् ॥ ७२ ॥ अष्टम्यां
वा चतुर्दश्यां निराहारो वसेत्तु यः ॥ नर्मदेश्वरमासाद्य प्राप्नुयाज्जन्मनः फलम् ॥ ७३ ॥ अग्निप्रवेशं यः कुर्यात्तस्मिंस्तीर्थे नराधिप ॥ तस्य
व्याधिभयं न स्यात्सप्तजन्मसु भारत ॥ ७४ ॥ अनाशकं तु यः कुर्यात्तस्मिंस्तीर्थे नराधिप ॥ अनिवर्तिका गतिस्तस्य रुद्रलोके भविष्यति ॥
॥ ७५ ॥ एष ते विधिरुद्दिष्टस्तस्योत्पत्तिर्नरोत्तम ॥ पुराणे विहिता तात संज्ञा तस्य तु विस्तरात् ॥ ७६ ॥ एतं कीर्तयते यस्तु नर्मदेश्वरसंभवम् ॥
भक्त्या शृणोति च नरः सोऽपि स्नानफलं लभेत् ॥ ७७ ॥ इति श्रीस्कांदे महापुराण एकाशीतिसाहस्र्यां संहितायां पञ्चम आवंत्यखण्डे रेवा
खण्डे नर्मदामाहात्म्ये नर्मदेश्वरतीर्थमाहात्म्यवर्णनंनामाष्टत्रिंशोऽध्यायः ॥ ३८ ॥ ॥ छ ॥ ॥ श्रीमार्कंडेय उवाच ॥ ॥ ततो गच्छेत्तु राजेंद्र
कपिलातीर्थमुत्तमम् ॥ स्नानमात्रान्नरो भक्त्या मुच्यते सर्वकिल्बिषैः ॥ १ ॥ ॥ युधिष्ठिर उवाच ॥ ॥ आश्चर्यभूतं लोकेषु कथितं द्विज
सत्तम ॥ नर्मदेश्वरमाहात्म्यं कापिलं कथयस्व मे ॥ २ ॥ यस्मिन्कालेऽथ संबन्धे उत्पन्नं तीर्थमुत्तमम् ॥ सर्वपापहरं पुण्यं तीर्थं जातं कथं
प्रभो ॥ ३ ॥ ॥ मार्कंडेय उवाच ॥ ॥ शृणु वक्ष्येऽद्य ते राजन्कपिलातीर्थमुत्तमम् ॥ येन ते विस्मयः सर्वः श्रुत्वा गच्छति भारत ॥ ४ ॥
पुरा कृतयुगस्यादौ ब्रह्मा लोकपितामहः ॥ उत्पादयित्वा सकलं भूतग्रामं चतुर्विधम् ॥ ५ ॥ जपहोमपरो भक्त्या क्षणं ध्यात्वा च तिष्ठति ॥ ज्वल
मानात्तु कपिला तावत्कुण्डात्समुत्थिता ॥६॥ अग्निज्वालोज्वलैः शृंगैस्त्रिनेत्रा सुपयस्विनी ॥ अग्निपूर्णा ह्यग्निमुखा अग्निप्राणाग्निलोचना ॥७॥
अग्निखुरा ह्यग्निपृष्ठा अग्निसर्वांगसंस्थितिः ॥ सर्वलक्षणसंपूर्णा घंटाललितनिःस्वना ॥८॥ दृष्ट्वा तु तां महाभागां कपिलां कुण्डमध्यगाम् ॥ ब्रह्मा
लोकगुरुस्तात प्रणम्येदमुवाच ह॥९॥नमस्ते कपिले पुण्ये सर्वलोकनमस्कृते ॥ मंगल्ये मंगले देवि त्रिषु लोकेष्वनूपमे ॥१०॥ त्वं लक्ष्मीस्त्वं स्मृति
र्मेधा त्वं धृतिस्त्वं वरानने ॥ उमादेवीति विख्याता त्वं सती नात्र संशयः ॥११॥ वैष्णवी त्वं महादेवी ब्रह्माणी त्वं वरानने ॥ कुमारी त्वं महाभागे
भक्तिः श्रद्धा तथैव च ॥१२॥ कालरात्रिस्तु भूतानां कुमारी परमेश्वरी ॥ त्वं लवस्त्वं त्रुटिश्चैव मुहूर्तं लक्षमेव च ॥१३॥ संवत्सरस्त्वं मासस्त्वं काल
स्त्वं च क्षणस्तथा ॥ नास्ति किंचित्त्वया हीनं त्रैलोक्ये सचराचरे ॥ १४ ॥ एवं स्तुता तु मानेन कपिला परमेष्ठिना ॥ तमुवाच महाभागं प्रहृष्य

१ दृष्टि–इ०पा०।

पद्मसंभवम् ॥ १५ ॥ प्रसन्ना तव वाक्येन देवदेव जगद्गुरो ॥ किं करोमि प्रियं तेऽद्य ब्रूहि सर्वं पितामह ॥ १६ ॥ ॥ ब्रह्मोवाच ॥ ॥ जग
द्धिताय जनिता मया त्वं परमेश्वरि ॥ स्वर्गान्मर्त्यं ततो याहि लोकानां हितकाम्यया ॥ १७ ॥ सर्वदेवमयी त्वं तु सर्वलोकमयी तथा ॥
विधिना ये प्रदास्यंति तेषां वासस्त्रिविष्टपे ॥ १८ ॥ एवमुक्ता ततो देवी ब्रह्माणं परमेश्वरी ॥ वंद्यमाना सुरैः सिद्धैराजगाम धरातलम् ॥ १९ ॥
॥ ॥ युधिष्ठिर उवाच ॥ ॥ यदायातेह सा तात ब्राह्मणो वचनाच्छुभा ॥ तदा देवाश्च लोकाश्च कथमंगेषु संस्थिताः ॥ २० ॥ कथं वा संस्थि
तागत्य कपिला सा द्विजोत्तम ॥ तीर्थे वा ह्युपरे क्षेत्र एतन्मे कथय द्विज ॥ २१ ॥ ॥ मार्कंडेय उवाच ॥ ॥ सा तदा ब्रह्मणा चोक्ता धात्रा
लोकस्य भारत ॥ ब्रह्मलोकाद्गता पुण्यां नर्मदां लोकपावनीम् ॥ २२ ॥ तपः कृत्वा सुविपुलं नर्मदातटमाश्रिता ॥ चचार पृथिवीं सर्वां सशैल
वनकाननाम् ॥ २३ ॥ तदाप्रभृति राजेंद्र कपिलातीर्थमुत्तमम् ॥ सर्वपापहरं ख्यातमृषिसंघैर्निषेवितम् ॥ २४ ॥ तत्तीर्थे विधिवत्स्नात्वा कपिला
यः प्रयच्छति ॥ पृथ्वी तेन भवेद्दत्ता सशैलवनकानना ॥ २५ ॥ तां तु पश्यति यो भक्त्या दीयमानां द्विजोत्तमे ॥ तस्य वर्षशतं पापं नश्यते
नात्र संशयः ॥ २६ ॥ भूर्भुवः स्वर्महश्चैव जनः सत्यं तपस्तथा ॥ ते तत्पृष्ठं समाश्रित्य स्थिता लोका नृपोत्तम ॥ २७ ॥ मुखे ह्यग्निः
स्थितो देवो दंतेषु च भुजंगमाः ॥ धाता विधाता ह्योष्ठौ च जिह्वायां तु सरस्वती ॥ २८ ॥ सहस्रकिरणौ देवौ चन्द्रादित्यौ सुलोचनौ ॥
नासिकामध्यगश्चैव मारुतो नृपसत्तम ॥ २९ ॥ ललाटे तु महादेवो ह्यश्विनौ कर्णसंस्थितौ ॥ नरनारायणौ शृंगे शृंगमध्ये पितामहः ॥ ३० ॥
कंबलोधिगतस्तात पाशधृग्वरुणस्तथा ॥ यमश्च भगवान्देव आश्रित्य चोदरं श्रितः ॥ ३१ ॥ खुरेषु पन्नगाश्चैवं पुच्छाग्रे सूर्यरश्मयः ॥ एवंभूतां
हि कपिलां सर्वदेवमयीं नृप ॥ ३२ ॥ ये धारयंति च गृहे धन्यास्ते नात्र संशयः ॥ प्रातरुत्थाय यस्तस्याः कुरुते तु प्रदक्षिणाम् ॥ ३३ ॥ प्रदक्षि
णा कृता तेन सशैलवनकानना ॥ कपिलापंचगव्येन यः स्नापयति शंकरम् ॥ ३४ ॥ उपवासपरो यस्तु तस्मिंस्तीर्थे नराधिप ॥ स्नात्वा युक्त
विधानेन तर्पयेत्पितृदेवताः ॥ ३५ ॥ तस्य ते वंशजाः सर्वे दश पूर्वे दशापरे ॥ तृप्ता रोहंति वै स्वर्गे ध्यायंतोऽस्य मनोरथान् ॥ ३६ ॥ एष ते
॥ ३९ ॥ विधिरुदिष्टः संभवो नृपसत्तम ॥ तीर्थस्य च फलं पुण्यं किमन्यत्परिपृच्छसि ॥ ३७ ॥ धन्यं यशस्यमायुष्यं सर्वदुःखघ्नमुत्तमम् ॥ यच्छ्रुत्वा

१ भूः—इति शेषः ।

सर्वपापेभ्यो मुच्यते नात्र संशयः ॥ ३८ ॥ इति श्रीस्कांदे महापुराण एकाशीतिसाहस्र्यां संहितायां पंचम आवन्त्यखण्डे रेवाखण्डे श्रीनर्मदा माहात्म्ये कपिलातीर्थमाहात्म्यवर्णनंनामैकोनचत्वारिंशोऽध्यायः ॥ ३९ ॥ ॥ छ ॥ ॥ श्रीमार्कंडेय उवाच ॥ ॥ ततो गच्छेत्तु राजेंद्र करं जेश्वरमुत्तमम् ॥ यत्र सिद्धो महाभागो दैत्यो लोकेषु विश्रुतः ॥ १ ॥ ॥ युधिष्ठिर उवाच ॥ ॥ योऽसौ सिद्धो महाभाग तत्र तीर्थे महातपाः ॥ कस्य पुत्रः कथं सिद्धः कस्मिन्काले वद द्विज ॥ २ ॥ ॥ मार्कंडेय उवाच ॥ ॥ पुरा कृतयुगे राजन्मानसो ब्रह्मणः सुतः ॥ वेदवेदांगतत्त्वज्ञो मरीचिर्नाम नामतः ॥ ३ ॥ तस्यापि तपसो राशेः कालेन महतानघ ॥ पुत्रोऽथ मानसो जातः साक्षाद्ब्रह्मेव चापरः ॥ ४ ॥ क्षमा दमो दया दानं सत्यं शौचमथार्जवम् ॥ मरीचेश्च गुणा ह्येते संति तस्य च भारत ॥ ५ ॥ एवं गुणगणाकीर्णं कश्यपं द्विजसत्तमम् ॥ ज्ञात्वा प्रजापतिर्दक्षो भार्यार्थे स्वसुतां ददौ ॥ ६ ॥ अदितिर्दितिर्दनुश्चैव तथाप्येवं दशापराः ॥ यासां पुत्राश्च संजाताः पौत्राश्च भरतर्षभ ॥ ७ ॥ अदितिर्जनयामास पुत्रानिन्द्र पुरोगमान् ॥ जातास्तस्य महाबाहो कश्यपस्य प्रजापतेः ॥ ८ ॥ यैस्तु लोकत्रयं व्याप्तं स्थावरं जंगमं महत् ॥ तथान्यस्य महा भागो दनोः पुत्रो व्यजायत ॥ ९ ॥ सर्वलक्षणसंपन्नः करंजो नाम नामतः ॥ बाल एव महाभाग चचार स महत्तपः ॥ १० ॥ नर्मदातटमाश्रित्य चातिघोरमनुत्तमम् ॥ दिव्यं वर्षसहस्रं च कृच्छ्रचान्द्रायणं नृप ॥ ११ ॥ शाकमूलफलाहारः स्नानहोमपरायणः ॥ ततस्तुष्टो महादेव उमया सहितः किल ॥ १२ ॥ वरेण च्छन्दयामास त्रिपुरांतकरः प्रभुः ॥ भोः करंज महासत्त्व परितुष्टोऽस्मि तेऽनघ ॥ १३ ॥ वरं वृणीष्व ते दद्मि ह्यमरत्वमृते मम ॥ १४ ॥ ॥ करंज उवाच ॥ ॥ यदि तुष्टो महादेव यदि देयो वरो मम ॥ तर्हि पुत्राश्च पौत्राश्च संतु मे धर्मवत्सलाः ॥ १५ ॥ तथेत्युक्त्वा महादेव उमया सहितस्तदा ॥ वृषारूढो गणैः सार्द्धं तत्रैवांतरधीयत ॥ १६ ॥ गते चादर्शनं देवे सोऽपि दैत्यो मुदान्वितः ॥ स्वनाम्नात्र महादेवं स्थापयित्वा ययौ गृहम् ॥ १७ ॥ तदाप्रभृति तत्तीर्थं सर्वतीर्थेष्वनुत्तमम् ॥ स्नान मात्रान्नरस्तत्र मुच्यते सर्वपातकैः ॥ १८ ॥ तत्र तीर्थे तु यः स्नात्वा तर्पयेत्पितृदेवताः ॥ सोऽग्निष्टोमस्य यज्ञस्य फलं प्राप्नोत्यसंशयम् ॥ १९ ॥ अनाशकं तु यः कुर्यात्तस्मिंस्तीर्थे नराधिप ॥ अनिवर्त्या गतिस्तस्य रुद्रलोकं स गच्छति ॥ २० ॥ अथवाग्निजले प्राणान्यस्त्यजेद्धर्म नंदन ॥ अयुतद्वितयं वसते वर्षाणां शिवमंदिरे ॥ २१ ॥ ततश्चैव क्षये जाते जायते विमले कुले ॥ वेदवेदांगतत्त्वज्ञः सर्वशास्त्रविशारदः ॥ २२ ॥ राजा वा राजतुल्यो वा जीवेच्च शरदः शतम् ॥ पुत्रपौत्रसमोपेतः सर्वव्याधिविवर्जितः ॥ २३ ॥ एवं ते सर्वमाख्यातं पृष्टं यद्यत्त्वयाऽनघ ॥

तीर्थस्य तु फलं तस्य स्नानदानेषु भारत ॥ २४ ॥ एतत्पुण्यं पापहरं धन्यं दुःस्वप्ननाशनम् ॥ पठतां शृण्वतां चैव तीर्थमाहात्म्यमुत्तमम् ॥
॥ २५ ॥ यस्तु श्रावयते श्राद्धे पठेत्पितृपरायणः ॥ अक्षयं जायते पुण्यमित्येवं शंकरोऽब्रवीत् ॥ २६ ॥ इति श्रीस्कांदे महापुराण एकाशीतिसा
हस्र्यां संहितायां पंचम आवन्त्यखण्डे रेवाखंडे नर्मदामाहात्म्ये करञ्जेश्वरतीर्थमाहात्म्यवर्णनंनाम चत्वारिंशोऽध्यायः ॥ ४० ॥ ॥ छ ॥
॥ ॥ श्रीमार्कंडेय उवाच ॥ ॥ ततो गच्छेच्च राजेन्द्र कुण्डलेश्वरमुत्तमम् ॥ यत्र सिद्धो महायक्षः कुण्डधारो नृपोत्तम ॥ १ ॥ तपः कृत्वा सुवि
पुलं सुरासुरभयंकरम् ॥ पौलस्त्यमंदिरे चैव चिक्रीड नृपसत्तम ॥ २ ॥ ॥ युधिष्ठिर उवाच ॥ ॥ कस्मिन्युगे समुत्पन्नः कस्य पुत्रो महा
मतिः ॥ तपस्तप्त्वा सुविपुलं तोषितो येन शंकरः ॥ ३ ॥ एतद्विस्तरतस्तात कथयस्व ममानघ ॥ शृण्वतश्च न तृप्तिर्मे कथामृतमनुत्तमम् ॥ ४ ॥
॥ ॥ श्रीमार्कंडेय उवाच ॥ ॥ त्रेतायुगे ब्रह्मसमः पौलस्त्योनाम विश्रवाः ॥ तपः कृत्वा सुविपुलं भरद्वाजसुतोद्भवः ॥ ५ ॥ पुत्रं पौत्रगणैर्युक्तं
पत्न्यां[1] भक्त्या सुतोषितः ॥ धनदं जनयामास सर्वलक्षणलक्षितम् ॥ ६ ॥ जातमात्रं तु तं ज्ञात्वा ब्रह्मा लोकपितामहः ॥ चकार नाम सुप्रीत ऋषि
देवसमन्वितः ॥ ७ ॥ यस्माद्विश्रवसो जातो मम पौत्रत्वमागतः ॥ तस्माद्वैश्रवणो नाम तव दत्तं मयाऽनघ ॥ ८ ॥ तथा त्वं सर्वदेवानां धनगोप्ता
भविष्यसि ॥ चतुर्थो लोकपालानामक्षयश्चाव्ययो भुवि ॥ ९ ॥ तस्य भार्या महाराज ईश्वरीति च विश्रुता ॥ यक्षो यक्षाधिपः श्रेष्ठस्तस्य कुण्डोऽ
भवत्सुतः ॥ १० ॥ स च रूपं परं प्राप्य मातापित्रोरनुज्ञया ॥ तपश्चचार विपुलं नर्मदातटमाश्रितः ॥ ११ ॥ ग्रीष्मे पंचाग्निसंतप्तो वर्षासु स्थण्डि
लेशयः ॥ हेमंते जलमध्यस्थो वायुभक्षः शतं समाः ॥ १२ ॥ एवं वर्षशते पूर्णे एकांगुष्ठेऽभवन्नृप ॥ अस्थिभूतः परं तात ऊर्ध्वबाहुस्ततः परम् ॥
॥ १३ ॥ अतपच्च धृतश्वासः कुण्डलो भरतर्षभ ॥ चतुर्थे वर्षशतके तुतोष वृषवाहनः ॥ १४ ॥ वरं वृणीष्व भो वत्स यत्ते मनसि रोचते ॥
ददामि ते न संदेहस्तपसा तोषितो ह्यहम् ॥ १५ ॥ ॥ कुण्डल उवाच ॥ ॥ यक्षाधिपप्रसादेन तस्यैवानुचरः पुरे ॥ विचरामि यथाकाममव
ध्यः सर्वशत्रुषु ॥ १६ ॥ तथेत्युक्त्वा महादेवः सर्वलोकनमस्कृतः ॥ जगामाकाशमाविश्य कैलासं धरणीधरम् ॥ १७ ॥ गते चादर्शनं देवे
सोऽपि यक्षो मुदान्वितः ॥ स्थापयामास देवेशं कुण्डलेश्वरमुत्तमम् ॥ १८ ॥ अलंकृत्वा जगन्नाथं पुष्पधूपानुलेपनैः ॥ विमानैश्चामरैश्छत्रैस्तथा
वै लिंगपूरणैः ॥ १९ ॥ तर्पयित्वा द्विजान्सम्यगन्नपानादिभूषणैः ॥ प्रीणयित्वा महदेवं ततः स्वभवनं ययौ ॥ २० ॥ तदाप्रभृति तत्तीर्थं त्रिषु

१ पत्न्या—तृणबिन्दुराजर्षिकन्यया—इत्यध्यात्मरामायणाद्बोद्धव्यम् ।

लोकेषु विश्रुतम् ॥ उत्तमं परमं पुण्यं कुण्डलेश्वरनामतः ॥ २१ ॥ तत्र तीर्थे तु यः कश्चिदुपवासपरायणः ॥ अर्चयेद्देवमीशानं सर्वपापैः प्रमु
च्यते ॥ २२ ॥ सुवर्णं रजतं वापि मणिं मौक्तिकमेव च ॥ दद्याद्भोज्यं ब्राह्मणेभ्य स सुखी मोदते दिवि ॥ २३ ॥ तत्र तीर्थे तु यः स्नात्वा ऋग्यजुः
सामगोऽपि वा ॥ ऋचमेकां जपित्वा तु सकलं फलमश्नुते ॥ २४ ॥ गां प्रयच्छति विप्रेभ्यस्तत्फलं शृणु पांडव ॥ यावंति
तस्या रोमाणि तत्प्रसूतिकुलेषु च ॥ २५ ॥ तावद्वर्षसहस्राणि स्वर्गलोके महीयते ॥ स्वर्गे वासो भवेत्तस्य पुत्रपौत्रैः समन्वितः ॥
॥ २६ ॥ तावन्ति वर्षाणि महानुभावः स्वर्गे वसेत्पुत्रपौत्रैश्च सार्द्धम् ॥ तत्रान्नदो याति महेशलोकमसंख्यवर्षाणि न संशयोऽत्र ॥ २७ ॥
स वै सुखी मोदते स्वर्गलोके गंधर्वसिद्धाप्सरःसंप्रगीते ॥ एवं तु ते धर्मसुत प्रभावस्तीर्थस्य सर्वः कथितश्च पार्थ॥२८॥श्रुत्वा स्तुवन्मुच्यते सर्वपापैः
पुनस्त्रिलोकीमिह तत्प्रभावात् ॥ २९ ॥ इति श्रीस्कांदे महापुराण एकाशीतिसाहस्र्यां संहितायां पञ्चम आवन्त्यखंडे रेवाखण्डे नर्मदामाहात्म्ये
कुंडलेश्वरतीर्थमाहात्म्यवर्णनंनामैकचत्वारिंशोऽध्यायः ॥ ४१ ॥ ॥ छ ॥ ॥ श्रीमार्कंडेय उवाच ॥ ॥ ततो गच्छेत्तु राजेंद्र पिप्पलेश्वर
मुत्तमम् ॥ यत्र सिद्धो महायोगी पिप्पलादो महातपाः ॥ १ ॥ ॥ युधिष्ठिर उवाच ॥ ॥ पिप्पलादस्य चरितं श्रोतुमिच्छाम्यहं विभो ॥ माहा
त्म्यं तस्य तीर्थस्य यत्र सिद्धो महातपाः ॥ २ ॥ कस्य पुत्रो महाभाग किमर्थं कृतवांस्तपः ॥ एतद्विस्तरतः सर्वं कथयस्व ममानघ ॥ ३ ॥
॥ ॥ मार्कंडेय उवाच ॥ ॥ मिथिलास्थो महाभागो वेदवेदांगपारगः ॥ याज्ञवल्क्यः पुरा तात चचार विपुलं तपः ॥ ४ ॥ तापसी तस्य
भगिनी याज्ञवल्क्यस्य धीमतः ॥ सा सप्तमेपि वर्षे च वैधव्यं प्राप दैवतः ॥ ५ ॥ पूर्वकर्मविपाकेन हीनाऽभूत्पितृमातृतः ॥ नाभूत्तत्पतिपक्षेऽपि
कोपीत्येकाकिनी स्थिता ॥ ६ ॥ भूमौ भ्रमंती भ्रातुः सा समीपमगमच्छनैः ॥ चचार च तपः सोऽपि परलोकसुखेप्सया ॥ ७॥ चचार सापि तत्र
स्था शुश्रूषंती महत्तपः ॥ कस्मिंश्चित्समये साऽथ स्नाताहनि रजस्वला ॥ ८ ॥ अंतर्वासो धृतवती दृष्ट्वा कर्पटकं रहः ॥ याज्ञवल्क्योपि तद्रात्रौ सुप्तो
यत्र सुसंवृतः ॥ ९ ॥ स्वप्नं दृष्ट्वाऽत्यजच्छुक्रं कौपीने रक्तबिंदुवत् ॥ विराजितेन तपसा सिद्धं तदनलप्रभम् ॥ १० ॥ यावत्प्रबुद्धो विप्रोसौ वीक्ष्यो
च्छिष्टं तदंशुकम् ॥ चिक्षेप दूरतोऽस्पृश्यं शौचं कृत्वा विधानतः ॥ ११ ॥ निषिद्धं तु निशि स्नानमिति सुष्वाप स द्विजः ॥ निशीथे सापि
तद्वस्त्रं भगस्यावरणं व्यधात् ॥ १२ ॥ प्रातरन्वेषयामास मुनिर्वस्त्रमितस्ततः ॥ ततः सा ब्राह्मणी प्राह किमन्वेषयसे प्रभो ॥ केन कार्यं तव तथा
वदस्व मम तत्त्वतः ॥ १३ ॥ ॥ याज्ञवल्क्य उवाच ॥ ॥ अपवित्रो मया भद्रे स्वप्नो दृष्टोऽद्य वै निशि ॥ सक्लेदं तत्र मे वस्त्रं निक्षिप्तं तत्र दृश्य

ते ॥ १४ ॥ तच्छ्रुत्वा ब्राह्मणी वाक्यं भीतभीताऽवदन्नृप ॥ तद्व्रतं तु मया विप्र ज्ञात्वा ह्यंतःकृतं महत् ॥ १५ ॥ तस्यास्तद्वचनं श्रुत्वा हाहेत्युक्त्वा
महामुनिः ॥ निपपात तदा भूमौ च्छिन्नमूल इव द्रुमः॥१६॥ किमेतदिति सेत्युक्त्वा ह्याकाशमिव निर्मला ॥ आश्वासयन्ती तं विप्रं प्रोवाच वचनं
तदा ॥ १७ ॥ वदस्व कारणं तात मुखाद्गुह्यतरं यदि ॥ प्रतीकारोऽस्य येनैव विमृश्य क्रियते त्वरा ॥ १८ ॥ ततः स सुचिरं ध्यात्वा लब्धवाग्वै ततः
क्षणम् ॥ प्रोवाच साध्वसमना यत्तच्छृणु नरेश्वर ॥ १९ ॥ नात्र दोषोस्ति ते कश्चिन्मम चैव शुभव्रते ॥ तवोदरे तु गर्भो यस्तत्र दैवं परायणम् ॥
॥ २० ॥ तस्य तत्त्वेन रक्षा च त्वया कार्यो सदैव हि ॥ विनाशी नैव कर्त्तव्यो यावत्कालस्य पर्ययः ॥ २१ ॥ तथेति व्रीडिता साध्वी दूयमानेन
चेतसा ॥ अपालयच्च तं गर्भं यावत्पुत्रो ह्यजायत ॥ २२ ॥ जातमात्रं च तं गर्भं गृहीत्वा ब्राह्मणी च सा ॥ अश्वत्थच्छायामाश्रित्य तमुत्सृज्य
वचोऽब्रवीत् ॥ २३ ॥ यानि सत्त्वानि लोकेषु स्थावराणि चराणि च ॥ तानि सर्वाणि रक्षंतु त्यक्तं वै बालकं मया ॥ २४ ॥ एवमुक्त्वा गता सा
तु ब्राह्मणी नृपसत्तम ॥ तथागतः स तु शिशुस्तत्र स्थित्वा मुहूर्त्तकम् ॥ २५ ॥ पाणिपादौ विनिक्षिप्य निकुंच्य नयने शुभे ॥ आस्यं तु विवृतं
कृत्वा रुरोद विकृतैः स्वरैः ॥ २६ ॥ तेन शब्देन वित्रस्ताः स्थावरा जंगमाश्च ये ॥ आकंपिता महोत्पातैः सशैलवनकानना ॥२७॥ ततो ज्ञात्वा
महद्भूतं क्षुधाविष्टं द्विजर्षभम् ॥ न जहाति नगश्छायां पानार्थाय ततः परम् ॥ अपिबच्च सुतं तस्मादमृतं चैव भारत ॥ २८ ॥ एवं स वर्द्धितस्तत्र
कुमारो निजचेतसि ॥ चिंतयामास विश्रब्धः किं मम ग्रहगोचरम् ॥२९॥ ततः क्रूरसमाचारः क्रूरं दृष्ट्वा निरीक्षितः ॥ पपात सहसा भूमौ शनैश्चारी
शनैश्चरः ॥३०॥ उवाच च भयत्रस्तः कृतांजलिपुटस्तदा ॥ किं मयापकृतं विप्र पिप्पलाद महामुने ॥३१॥ चरन्वै गगनाद्येन पातितो धरणीतले॥
सौरिणा ह्येवमुक्तस्तु पिप्पलादो महामुनिः ॥ ३२ ॥ क्रोधरूपोऽब्रवीद्वाक्यं तच्छृणुष्व नराधिप ॥ पितृमातृविहीनस्य मम बालस्य दुर्मते ॥ पीडां
करोषि कस्मात्त्वं सौरे ब्रूहि ह्यशेषतः ॥ ३३ ॥ ॥ शनैश्चर उवाच ॥ ॥ क्रूरस्वभावः सहजो मम दृष्टिस्तथेदृशी ॥ मुंचस्व मां तथा कर्त्ता[1] यद्ब्र
वीषि न संशयः ॥ ३४ ॥ ॥ पिप्पलाद उवाच ॥ ॥ अद्यप्रभृति बालानां वर्षादाषोडशाद्बह ॥ पीडा त्वया न कर्त्तव्या एष
ते समयः कृतः ॥ ३५ ॥ एवमस्त्विति चोक्त्वा स जगाम पुनरागतः ॥ देवमार्गं शनैश्चारी प्रणम्य ऋषिसत्तमम् ॥
॥ ३६ ॥ गते चादर्शनं तत्र सोऽपि बालो महाग्रहः ॥ विचिंतयन्वै पितरं क्रोधेन कलुषीकृतः ॥ ३७ ॥ आग्नेयीं धारणां ध्यात्वा जन

१ कर्ता—करिष्यामि—इत्यर्थः । लुटो रूपमिदम् ।

यामासपावकम् ॥ कृत्यामंत्रैर्हुतावाग्नौ कृत्या वै संभवत्विति ॥ ३८ ॥ तावज्झटिति सा कन्या ज्वालामालाविभूषिता ॥ हुतभुक्सदृशाकारा किं करोमीति चाब्रवीत् ॥ ३९ ॥ शोषयामि समुद्रान्किं चूर्णयामि च पर्वतान् ॥ अवनिं वेष्टयामीति पातये किं नभस्तलम् ॥ ४० ॥ कस्य मूर्ध्नि पतिष्यामि घातयामि च कं द्विज ॥ शीघ्रमादिश्यतां कार्यं मा मे कालात्ययो भवेत् ॥ ४१ ॥ तस्यास्तद्वचनं श्रुत्वा पिप्पलादो महातपाः ॥ क्रोधसंरक्तनयन इदं वचनमब्रवीत् ॥ ४२ ॥ महता क्रोधवेगेन मया त्वं चिंतिता शुभे ॥ पिता मे याज्ञवल्क्यश्च तस्य त्वं पत मा चिरम् ॥ ४३ ॥ एवमुक्त्वाऽगमच्छीघ्रं स्फोटयन्ती नभस्तलम् ॥ मिथिलास्थो महाप्राज्ञस्तपस्तेपे महामनाः ॥ ४४ ॥ यावत्पश्यति दिग्भागं ज्वलनार्कसमप्रभम् ॥ याज्ञवल्क्यो महातेजा महद्भूतमुपस्थितम् ॥ ४५ ॥ तद्दृष्ट्वा सहसायांतं भीतभीतो महामुनिः ॥ अनुयुक्तोऽथ भूतेन जनकं शरणं ययौ ॥ ४६ ॥ शरण्यं[1] मामनुप्राप्तं विद्धि त्वं नृपसत्तम ॥ महद्भूतभयाद्रक्ष यदि शक्नोषि पार्थिव ॥ ४७ ॥ ब्रह्मतेजोभवं भूतमनिवार्यं दुरासदम् ॥ न च शक्नोम्यहं त्रातुं राजा वचनमब्रवीत् ॥ ४८ ॥ ततश्चान्यं नृपश्रेष्ठं शरणार्थी महातपाः ॥ जगाम तेन मुक्तोऽसौ चेन्द्रस्य सदनं भयात् ॥४९॥ देवराज नमस्तेऽस्तु महाभूतभयान्नृप ॥ कम्पमानोऽब्रवीद्विप्रो रक्षस्वेति पुनःपुनः ॥ ५० ॥ तस्य तद्वचनं श्रुत्वा देवराजोऽब्रवीदिदम् ॥ न शक्नोमि परित्रातुं ब्रह्मकोपादहं मुने ॥ ५१ ॥ ततः स ब्रह्मभवनं ब्राह्मणो ब्रह्मवित्तमः ॥ जगाम विष्णुलोकं च तेनापीत्युक्त एव सः ॥ ५२ ॥ ततः स मुनिरुद्विग्नो निराशो जीविते नृप ॥ अनुगम्यमानो भूतेन अगच्छच्छंकरालयम् ॥ ५३ ॥ तस्य योगबलोपेतो महादेवस्य पांडव ॥ नखमांसांतरे गुप्तो यथा देवो न पश्यति ॥ ५४ ॥ तदंते चागमद्भूतं ज्वलनार्कसमप्रभम् ॥ मुंचमुंचेति पुरुषं देवदेवं महेश्वरम् ॥ ५५ ॥ एवमुक्तो महादेवस्तेन भूतेन भारत ॥ योगींद्रं दर्शयामास नखमांसांतरे तदा ॥ ५६ ॥ संस्थाप्य भूतं भूतेशः परमापद्गतं मुनिम् ॥ उवाच मा भैस्त्वं विप्र निर्गच्छस्व महामुने ॥५७॥ ततः सुसूक्ष्मदेहस्थं भूतं दृष्ट्वाब्रवीदिदम् ॥ किमस्य त्वं महाभूत करिष्यसि वदस्व मे ॥ ५८ ॥ ॥ कृत्योवाच ॥ ॥ क्रोधाविष्टेन देवेश पिप्पलादेन चिंतिता ॥ अस्य देहं हनिष्यामि हिंसार्थं विद्धि मां प्रभो ॥ ५९ ॥ एतच्छ्रुत्वा महादेवो भूतस्य वदनाच्युतम् ॥ कटिस्थं याज्ञवल्क्यं च मंत्रयामास मंत्रवित् ॥ ६० ॥ योगीश्वरेति विप्रस्य कृत्वा नाम युधिष्ठिर ॥ विसर्जयित्वा देवेशस्तत्रैवांतरधीयत ॥ ६१ ॥ प्रेषयित्वा तु तं भूतं पिप्पलादोपि दुर्मनाः ॥ पितृमातृसमुद्विग्नो नर्मदातटमाश्रितः ॥ ६२ ॥ एकांगुष्ठो निराहारो वर्षाद्दाषोडशान्नृप ॥ तोषयामास देवेशमुमया

१ शरण्यम्—शरणे साधुम्—रक्षणकर्तारम्—इत्यर्थः ।

सह शंकरम् ॥ ६३ ॥ ततस्तत्तपसा तुष्टः शंकरो वाक्यमब्रवीत् ॥ ६४ ॥ ॥ ईश्वर उवाच ॥ ॥ परितुष्टोस्मि ते विप्र तपसानेन सुव्रत ॥ वरं वृणीष्व ते दद्मि मनसा चेप्सितं शुभम् ॥ ६५ ॥ ॥ पिप्पलाद उवाच ॥ ॥ यदि मे भगवांस्तुष्टो यदि देयो वरो मम ॥ अत्र संनिहितो देव तीर्थे भव महेश्वर ॥ ६६ ॥ एवमुक्तस्तथेत्युक्त्वा पिप्पलादं महामुनिम् ॥ जगामादर्शनं देवो भूतसंघसमन्वितः ॥ ६७ ॥ पिप्पलादो गते देवे स्नात्वा तत्र महांभसि ॥ स्थापयित्वा महादेवं जगामोत्तरपर्वतम् ॥ ६८ ॥ तत्र तीर्थे नरो भक्त्या स्नात्वा मंत्रयुतं नृप ॥ तर्पयित्वा पितॄन्देवान्पूजयेच्च महेश्वरम् ॥ ६९ ॥ अश्वमेधस्य यज्ञस्य फलं प्राप्नोत्यनुत्तमम् ॥ मृतो रुद्रपुरं याति नात्र कार्या विचारणा ॥ ७० ॥ अथ यो भोजयेद्विप्रान्पितॄनुद्दिश्य भारत ॥ तस्य ते द्वादशाब्दानि मोदंते दिवि तर्पिताः ॥ ७१ ॥ संन्यासेन तु यः कश्चित्तत्र तीर्थे तनुं त्यजेत् ॥ अनिवर्त्तिका गतिस्तस्य रुद्रलोकात्कदाचन ॥ ७२ ॥ एतत्सर्वं समाख्यातं यत्पृष्टं हि त्वयाऽनघ ॥ माहात्म्यं पिप्पलादस्य तीर्थस्योत्पत्तिरेव च ॥ ७३ ॥ एतत्पुण्यं पापहरं धन्यं दुःस्वप्ननाशनम् ॥ पठतां शृण्वतां चैव सर्वपापक्षयो भवेत् ॥ ७४ ॥ इति श्रीस्कांदे महापुराण एकाशीतिसाहस्र्यां संहितायां पञ्चम आवंत्यखण्डे रेवाखण्डे नर्मदामाहात्म्ये पिप्पलादतीर्थमाहात्म्यवर्णनंनाम द्विचत्वारिंशोऽध्यायः ॥ ४२ ॥ ॥ छ ॥ ॥

॥ ॥ श्रीमार्कंडेय उवाच ॥ ॥ ततो गच्छेत्तु राजेंद्र विमलेश्वरमुत्तमम् ॥ तत्र देवशिला रम्या स्वयं देवैर्विनिर्मिता ॥ १ ॥ तत्र स्नात्वा तु यो भक्त्या ब्राह्मणान्पूजयेन्नृप ॥ स्वल्पेनापि हि दानेन तस्य चांतो न विद्यते ॥२॥ ॥ युधिष्ठिर उवाच ॥ ॥ कानि दानानि विप्रेंद्र शस्तानि धरणीतले ॥ यानि दत्त्वा नरो भक्त्या मुच्यते सर्वपातकैः ॥ ३ ॥ ॥ श्रीमार्कंडेय उवाच ॥ ॥ सुवर्णं रजतं ताम्रं मणिमौक्तिकमेव च ॥ भूमिदानं च गोदानं मोचयत्यशुभान्नरम् ॥ ४ ॥ तत्र तीर्थे तु यः कश्चित्कुरुते प्राणसंक्षयम् ॥ रुद्रलोके वसेत्तावद्यावदाभूतसंप्लवम् ॥ ५ ॥ ततः पुष्करिणीं गच्छेत्सर्वपापक्षयंकरीम् ॥ तत्र स्नात्वार्चयेद्देवं तेजोराशिं दिवाकरम् ॥६॥ ऋचमेकां जपेत्साम्नः सामवेदफलं लभेत् ॥ यजुर्वेदस्य जपनादृग्वेदस्य तथैव च ॥ ७॥ अक्षरं वा जपेन्मंत्रं ध्यायमानो दिवाकरम् ॥ आदित्यहृदयं जप्त्वा मुच्यते सर्वकिल्बिषैः ॥८॥ तत्र तीर्थे तु यः स्नात्वा विधिना



जयेद्द्विजान् ॥ तस्य कोटिगुणं पुण्यं जायते नात्र संशयः ॥ ९ ॥ अनाशकेनाग्निगत्या जले वा देहपातनात् ॥ तस्मिंस्तीर्थे मृतो यस्तु स याति परमां गतिम् ॥ १० ॥ ब्राह्मणः क्षत्रियो वैश्यः शूद्रो वा नृपसत्तम ॥ विहितं कर्म कुर्वाणः स गच्छेत्परमां गतिम् ॥ ११ ॥ ॥ युधिष्ठिर उवाच ॥ ॥ व्याधिं सत्त्वक्षयं मोहं ज्ञात्वा वर्णा द्विजोत्तम ॥ पापेभ्यो विप्रमुच्यंते केन तत्साधनं वद ॥१२॥ ॥ श्रीमार्कंडेय उवाच ॥ ॥ तिलो

दकी तिलस्नायी कामक्रोधविवर्जितः ॥ ब्राह्मणोऽनशनैः प्राणांस्त्यजल्लँभति सद्गतिम् ॥१३॥ संग्रामे सद्गतिं तात क्षत्रियो निधने लभेत् ॥ तदभा
वान्महाप्राज्ञ सेवमानो लभेदिति ॥ १४ ॥ व्याधिग्रहगृहीतो वा वृद्धो वा विकलेंद्रियः ॥ आत्मानं दाहयित्वाग्नौ विधिना सद्गतिं लभेत् ॥ १५ ॥
वैश्योपि हि त्यजन्प्राणानेवं वै शुभभाग्भवेत् ॥ जले वा शुद्धभावेन त्यक्त्वा प्राणाञ्छिवो भवेत् ॥१६॥ शूद्रोऽपि द्विजशुश्रूषुस्तोषयित्वा महेश्वरम् ॥
विमुच्य नान्यथा पापः पतते नरके ध्रुवम् ॥ १७ ॥ अथवा प्रणवाशक्तो द्विजेभ्यो गुरवे तथा ॥ पंचाग्नौ शोषयेद्देहमापृच्छ्य द्विजसत्तमान् ॥
॥ १८ ॥ शांतदांतजितक्रोधाञ्छास्त्रयुक्तान्विचक्षणान् ॥ तेषां चैवोपदेशेन करीषाग्निं प्रसाधयेत् ॥ १९ ॥ एवं वर्णायथात्वेन मूढाहंकारमो
हिताः ॥ पतंति नरके घोरे यथांधो गिरिगह्वरे ॥२०॥ ये शास्त्रविधिमुत्सृज्य वर्त्तंते कामचारतः ॥ कृमियोनिं प्रपद्यंते तेषां पिंडो न च क्रिया ॥
॥२१॥ श्रुतिस्मृत्युदितं धर्मं त्यक्त्वा यथेच्छाचार सेविनः ॥ अष्टाविंशतिर्वै कोट्यो नरकाणां युधिष्ठिर ॥२२॥ प्रत्येकं वा पतंत्येते मग्ना नरकसागरे ॥
दुर्लभं मानुषं जन्म बहुधर्मार्जितं नृप ॥ २३ ॥ तल्लब्ध्वा मदमात्सर्यं यो वै त्यजति मानवः ॥ संनियम्य सदात्मानं ज्ञानचक्षुर्नरो हि सः ॥ २४ ॥
अज्ञानतिमिरांधस्य ज्ञानांजनशलाकया ॥ २५ ॥ यस्य नोन्मीलितं चक्षुर्ज्ञेयो जात्यंध एव सः ॥ एतत्ते कथितं सर्व्वं यत्पृष्टं नृपसत्तम ॥ २६ ॥
तथानिष्टतराणां हि रुद्रस्य वचनं यथा ॥ नर्मदा सरितां श्रेष्ठा रुद्रदेहाद्विनिःसृता ॥ २७ ॥ तारयेत्सर्वभूतानि स्थावराणि चराणि च ॥ सर्वदेवा
धिदेवेन ईश्वरेण महात्मना ॥ २८ ॥ लोकानां च हितार्थाय महापुण्यावतारिता ॥ मानसं वाचिकं पापं स्नानान्नश्यति कर्मजम् ॥ २९ ॥ रुद्रदेहा
द्विनिष्क्रांता तेन पुण्यतमा हि सा ॥ प्रातरुत्थाय यो नित्यं भूमिमाक्रम्य भक्तितः ॥ ३० ॥ एतन्मंत्रं जपेत्तात स्नानस्य लभते फलम् ॥ नमः
पुण्यजले देवि नमः सागरगामिनि ॥ ३१ ॥ नमोस्तु पापनिर्मोचे नमो देवि वरानने ॥ ३२ ॥ नमोस्तु ते ऋषिवरसंघसेविते नमोऽस्तु ते त्रिन
यनदेहनिःसृते ॥ नमोऽस्तु ते सुकृतवतां सदा वरे नमोऽस्तु ते सततपवित्रपावनि ॥ ३३ ॥ इति श्रीस्कांदे महापुराण एकाशीतिसाहस्र्यां
संहितायां पञ्चम आवंत्यखण्डे रेवाखण्डे विमलेश्वरतीर्थमाहात्म्यवर्णनंनाम त्रिचत्वारिंशोऽध्यायः ॥ ४३ ॥ ॥ छ ॥ ॥ श्रीमार्कंडेय
उवाच ॥ ॥ तीर्थानां परमं तीर्थं तच्छृणुष्व नराधिप ॥ रेवाया दक्षिणे कूले निर्मितं शूलपाणिना ॥ १ ॥ मोक्षार्थं मानवेंद्राणां निर्मितं नृपस
त्तम ॥ ॥ युधिष्ठिर उवाच ॥ ॥ श्रुता मे विविधा धर्मास्तीर्थानि विविधानि च ॥ दानधर्माः समस्ताश्च त्वत्प्रसादाद्द्विजोत्तम ॥ २ ॥ अन्यच्च

१ मूढाः—अहंकारमोहिताः—इति पदच्छेदः ।

श्रोतुमिच्छामि संसारश्छिद्यते यथा ॥ पुनरागमनं नास्ति मोक्षप्राप्तिर्भवेद्यथा ॥ ३ ॥ एतदाख्याहि मे सर्वं प्रसादाद्द्विजसत्तम ॥ ४ ॥
॥ ॥ मार्कंडेय उवाच ॥ ॥ शृणुष्वैकमना भूत्वा तीर्थात्तीर्थांतरं महत् ॥ श्रुते यस्य प्रभावे तु मुच्यते चाब्दिकादघात् ॥ ५ ॥ वाचिकै
र्मानसैर्वापि शारीरैश्च विशेषतः ॥ कीर्त्तनात्तस्य तीर्थस्य मुच्यते सर्वपातकैः ॥ ६ ॥ पंचक्रोशप्रमाणं तु तच्च तीर्थं महीपते ॥ भुक्ति
मुक्तिप्रदं दिव्यं प्राणिनां पापकर्मिणाम् ॥ ७ ॥ रेवाया दक्षिणे कूले पर्वतो भृगुसंज्ञितः ॥ तस्य मूर्ध्नि च तत्तीर्थं स्थापितं चैव
शंभुना॥८॥शूलभेदेति विख्यातं त्रिषु लोकेषु भूपते ॥तत्र स्थिताश्च ये वृक्षास्तीर्थाच्चैव चतुर्दिशम्॥९॥पतिता निलयं यांति रुद्रस्य नात्र संशयः॥
मृतास्तत्रैव ये केचिज्जन्तवो भुवि पक्षिणः ॥ १० ॥ ते यांति परमं लोकं तत्र तीर्थे न संशयः ॥ पातालान्निःसृता गंगा भोगवतीतिसंज्ञिता ॥११॥
निष्क्रांता शूलभेदाच्च सर्वपापक्षयंकरी ॥ या सा गीर्वाणनाम्न्यन्या वहेत्पुण्या महानदी ॥ १२ ॥ पतिता कुण्डमध्ये तु यत्र भिन्नं त्रिशूलिना ॥ शंभु
ना च पुरा तात उत्पाद्य[3] च सरस्वती ॥ १३ ॥ सा तत्र पतिता राजन्प्राचीनाघविमोचिनी ॥ भास्वत्या त्रितयं यत्र शिला गीर्वाणसंज्ञिता ॥ १४ ॥
तत्र तीर्थे च तत्तीर्थं न भूतं न भविष्यति ॥ केदारं च प्रयागं च कुरुक्षेत्रं गया तथा ॥ १५ ॥ अन्यानि च सुतीर्थानि कलां नार्हंति षोडशीम् ॥
पंच स्थानानि तीर्थानि पृथग्भूतानि यानि च ॥ १६ ॥ वक्ष्यामि च समासेन एकैकं च पृथक्पृथक् ॥ गया नाभ्यां यथा पुण्या चक्रतीर्थं च
तत्समम् ॥ १७ ॥ धर्मारण्ये यथा कूपं शूलभेदं च तत्समम् ॥ ब्रह्मयूपं यथा पुण्यं देवनद्यास्तथैव च ॥ १८ ॥ यथा गयाशिरः पुण्यं सुराणां
च यथा शिला ॥ यथा च पुष्करं स्थानं मार्कंडह्रद एव च ॥ १९॥ दत्त्वा पिंडोदकं तत्र पि णां च तथाक्षयम् ॥ यस्तत्र कुरुते श्राद्धं तोयं पिबति
नित्यशः ॥ मुच्यते सर्वपापैस्तु उरगः कंचुकैरिव ॥ अनिंद्यान्पूजयेद्विप्रान्दंभक्रोधविवर्जितान् ॥ २० ॥ त्रयोदशदिनं दानं त्रयोदशगुणं भवेत् ॥
अभ्यर्चितं सुरं दृष्ट्वा गणनाथं गजाननम् ॥ २१ ॥ सर्व्वे विघ्ना विनश्यंति दृष्ट्वा कम्बलक्षेत्रपम् ॥२२॥ पूजयेत्परया भक्त्या शूलपाणिं महेश्वरम् ॥
॥ २३ ॥ देवस्य पूर्वभागे तु उमा पूज्या प्रयत्नतः ॥ मार्कंडेशं ततो भक्त्या पूजयेद्ध्रदवासिनम् ॥ २४ ॥ मुच्यंते पातकैः सर्व्वैरज्ञानज्ञानसंचितैः ॥
॥ ४३ ॥ गुहामध्ये प्रविष्टस्तु जपेत्सूक्तं तु त्र्यक्षरम् ॥ २५ ॥ नीलपर्वतजं पुण्यं षष्ठांशेन लभेत सः ॥ त्रिनरास्तत्र तिष्ठन्ति सादित्यमरुतैः सह ॥ २६ ॥ ॥२१७॥
सर्वदेवमयं स्थानं कोटिलिंगमनुत्तमम् ॥ यथा नदीनदाः सर्वे सागरे यांति संक्षयम् ॥ २७ ॥ तथा पापानि नश्यंति शूलभेदस्य दर्शनात् ॥

१ स्वयं देवेन–इ॰ पा॰ । २ वचनं यथा–इ॰ पा॰ । ३ उत्पाद्य–उत्पन्ना भूत्वा–इत्यर्थः ।

प्रत्यक्षो दृश्यतेऽद्यापि प्रत्ययो ह्यवनीपते ॥ २८ ॥ विस्फुलिंगा लिंगमध्ये स्पंदंते स्नानयोगतः ॥ द्वितीयः प्रत्ययस्तत्र तैलबिंदुर्न सर्पति ॥ ॥ २९ ॥ एवं हि प्रत्ययस्तत्र शूलभेदप्रभावजः ॥ यः स्मरेच्छूलभेदं तु त्रिकालं नित्यमेव च ॥ ३० ॥ स पूतश्च भवेत्साक्षात्सबाह्याभ्यंतरो नृप ॥ न कस्यचिन्मया ख्यातं पृष्टोऽहं त्रिदशैरपि ॥ ३१ ॥ गुह्याद्गुह्यतरं तीर्थं सदा गोप्यं कृतं मया ॥ सर्वपापहरं पुण्यं सर्वदोषप्रमुत्तमम् ॥ ३२ ॥ सर्वतीर्थमयं तीर्थं शूलभेदं जनेश्वर ॥ श्रुते यस्य प्रभावे तु मुच्यते सर्वपातकैः ॥ ३३ ॥ शूलभेदं मया तात संक्षेपात्कथितं तव ॥ यः शृणोति नरो भक्त्या मुच्यते सर्वपातकैः ॥ ३४ ॥ इति श्रीस्कान्दे महापुराण एकाशीतिसाहस्र्यां संहितायां पञ्चम आवन्त्यखण्डे रेवाखण्डे शूलभेद प्रशंसावर्णनंनाम चतुश्चत्वारिंशोऽध्यायः ॥ ४४ ॥ ॥ छ ॥ ॥ श्रीमार्कंडेय उवाच ॥ ॥ एष एव पुरा प्रश्नः परिपृष्टो महेश्वरम् ॥ राज्ञा चोत्तानपादेन ऋषिदेवसमागमे ॥ १ ॥ ॥ उत्तानपाद उवाच ॥ ॥ इदं तीर्थं महापुण्यं सर्वदेवमयं परम् ॥ गुह्याद्गुह्यतरं स्थानं न दृष्टं न श्रुतं हर ॥२॥ शूलभेदं कथं जातं केनैवोत्पादितं पुरा ॥ माहात्म्यं तस्य तीर्थस्य विस्तराच्छंस मे प्रभो ॥ ३ ॥ ॥ ईश्वर उवाच ॥ ॥ आसीत्पुरा महावीर्यो दानवो बलदर्पितः ॥ मर्त्ये न तादृशः कश्चिद्विक्रमेण बलेन वा ॥ ४ ॥ सूनुर्ब्रह्मसुतस्याऽयमंधकोनाम दुर्मदः ॥ निजस्थाने वसन्पापः कुर्वन्राज्य मकण्टकम् ॥ ५ ॥ हृष्टपुष्टो वसन्मर्त्ये स सुरैर्नाभिभूयते ॥ भवनं तस्य पापस्य वह्निरुपवनं यथा ॥ ६ ॥ एतस्मिन्नंधकः काले चिंतयामास भारत ॥ तोषयामि महादेवं येन सानुग्रहो भवेत् ॥ ७ ॥ प्रार्थयामि वरं दिव्यं यो मे मनसि वर्त्तते ॥ परं स निश्चयं कृत्वा सोंऽधको निर्गतो गृहात् ॥ ८ ॥ रेवातटं समासाद्य दानवस्तपसि स्थितः ॥ उग्रं तपश्चचाराऽसौ दारुणं लोमहर्षणम् ॥ ९ ॥ दिव्यं वर्षसहस्रं स निराहारोऽ भवत्ततः ॥ द्वितीयं तु सहस्रं स न्यवसद्वारिभोजनः ॥१०॥ तृतीयं तु सहस्रं स धूमपानरतोऽभवत् ॥ चतुर्थं वर्षसाहस्रं योगाभ्यासेन संस्थितः ॥ ॥ ११ ॥ कोपीह नेदृशं चक्रे तपः परमदारुणम् ॥ अस्थिचर्माऽवशेषोऽसौ यावत्तिष्ठति भारत ॥ १२ ॥ तस्य मूर्ध्नि ततो राजन्धूमवर्त्तिर्विनिः सृता ॥ देवलोकमतीत्याऽसौ कैलासं व्याप्य संस्थिता ॥ १३ ॥ तावद्देवसमीपस्था उमा वचनमब्रवीत् ॥ कोऽस्त्ययं मानुषे लोके तपसोग्रेण संस्थितः ॥ १४ ॥ चतुर्वर्षसहस्राणि व्यतीयुः परमेश्वर ॥ न केनाऽपीदृशं तप्तं तपो दृष्टं श्रुतं तथा ॥ १५ ॥ अवज्ञां कुरुषे देव किमत्र निय माऽन्विते ॥ सर्वस्य दत्से शीघ्रं त्वमल्पेन तपसा विभो ॥ १६ ॥ नाक्षक्रीडां करिष्येऽद्य त्वया सह महेश्वर ॥ यावन्नोत्थाप्यते ह्येष दानवो भक्तवत्सल ॥ १७ ॥ ॥ ईश्वर उवाच ॥ ॥ साधुसाधु महादेवि सर्वलक्षणलक्षिते ॥ अहं तं न विजानामि क्लिश्यंतं दानवेश्वरम ॥ १८ ॥ योग

भ्यासे स्थितो भद्रे ध्यायंस्तत्परमं पदम् ॥ तत्रागच्छ मया सार्द्धं यत्र तप्यत्यसौ तपः ॥ १९ ॥ उमया सहितो देवो गतस्तत्र महेश्वरः ॥ अस्थि
चर्मावशेषस्तु दृष्टो देवेन शम्भुना ॥ २० ॥ प्रत्युवाच प्रसन्नोऽसौ देवदेवो महेश्वरः ॥ भोभोः कष्टं कृतं भीमं दारुणं लोमहर्षणम् ॥ २१ ॥ ईदृशं
च तपो घोरं कस्माद्वत्स त्वया कृतम् ॥ वरं दास्याम्यहं वत्स यस्ते मनसि वर्त्तते ॥ २२ ॥ ॥ अंधक उवाच ॥ ॥ यदि तुष्टोऽसि मे देव वरदो
यदि शंकर ॥ सुरान्सर्वान्विजेष्यामि त्वत्प्रसादान्महेश्वर ॥ २३ ॥ ॥ ईश्वर उवाच ॥ ॥ स्वप्नेऽपि त्रिदशाः सर्व्वे न योद्धव्याः कदाचन ॥
असंभाव्यं न वक्तव्यं मनसो यन्न रोचते ॥ २४ ॥ अन्यं किमपि याचस्व यस्ते मनसि वर्त्तते ॥ स्वर्गे वा यदि वा मर्त्ये पातालेषु च संस्थि
तान् ॥ २५ ॥ मर्त्येषु विविधान्भोगान्भोक्ष्यसि त्वं यथेप्सितान् ॥ कुरु निष्कण्टकं राज्यं स्वर्गे देवपतिर्यथा ॥ २६ ॥ देवस्य वचनं श्रुत्वा
सोंऽधको विमनाः स्थितः ॥ वृथा क्लेशश्च मे जातो न किंचित्साधितं मया ॥ २७ ॥ निश्वासं परमं मुक्त्वा निपपात धरातले ॥ मूलच्छिन्नो
यथा वृक्षो निरुच्छ्वासस्तदाभवत् ॥ २८ ॥ मूर्च्छापन्नं ततो दृष्ट्वा देवी वचनमब्रवीत् ॥ यं कामं कामयत्येष तमस्मै देहि शंकर ॥ २९ ॥ भक्तानुपेक्ष
माणस्य तवाकीर्त्तिर्भविष्यति ॥ ३० ॥ ॥ ईश्वर उवाच ॥ ॥ ॥ यदि दास्ये वरं देवि इच्छाभूतं कदाचन ॥ ततो न मंस्यते विष्णुं न
ब्रह्माणं न मामपि ॥ ३१ ॥ उच्चत्वमाप्तो देवेशिअ न्यानपि सुरासुरान् ॥ ३२ ॥ ॥ देव्युवाच ॥ ॥ कमप्युपायमाश्रित्य उत्थापय महे
श्वर ॥ विष्णुवर्जं सुरान्सर्वाञ्जयस्वेति वरं वद ॥ ३३ ॥ ॥ ईश्वर उवाच ॥ ॥ उपायः शोभनो देवि यो मे मनसि वर्त्तते ॥ तमेवास्मै प्रदा
स्यामि यस्त्वया कथितो वरः ॥ ३४ ॥ ततोऽमृतेन संसिक्तः स्वस्थोऽभूत्तत्क्षणादयम् ॥ तथा पुनर्नवो जातः सर्वाऽवयवशोभितः ॥ ३५ ॥ शृणु
त्वेकमना भूत्वा गृहाण वरमुत्तमम् ॥ विष्णुवर्जं प्रदास्यामि यत्तवाभिमतं प्रियम् ॥ ३६ ॥ सर्वं च सफलं तुभ्यं मा धर्मस्तेऽन्यथा भवेत् ॥ ददा
मीति वरं तुभ्यं मन्यसे यदि चासुर ॥ ३७ ॥ विष्णुवर्जं सुरान्सर्वाञ्जेष्यसि त्वं च मां विना ॥ ३८ ॥ ॥ अन्धक उवाच ॥ ॥ भवत्वेव
मिति प्राह बलमास्थाय केवलम् ॥ विष्णुवर्जं विजेष्येहं स्वबलेन महेश्वर ॥ ३९ ॥ कृतार्थोऽहं हि संजात इत्युक्त्वा प्रणतिं गतः ॥ गच्छ देवोमया
सार्द्धं कैलासशिखरं वरम् ॥ ४० ॥ वृषपुंगवमारुह्य देवोसावुमया सह ॥ वरं दत्त्वा स तस्यैवं तत्रैवांतरधीयत ॥ ४१ ॥ इति श्रीस्कांदे महापुराण
एकाशीतिसाहस्र्यां संहितायां पंचम आवन्त्यखण्डे रेवाखण्डे अंधकवरप्रदानवर्णनंनाम पंचचत्वारिंशोऽध्यायः ॥ ४५ ॥ ॥ छ ॥ ॥

१ इत्युक्त्वा—इत्यध्याहारः ।

॥ ॥ श्रीमार्कंडेय उवाच ॥ ॥ स दानवो वरं लब्ध्वा जगाम स्वपुरं प्रति ॥ ददर्श स्वपुरं राजञ्छोभितं चित्रचत्वरैः ॥ १ ॥ उद्यानैश्चैव विविधैः कदलीखंडमंडितैः ॥ पनसैर्बकुलैश्चैवाम्रातैराम्रैश्च चंपकैः ॥ २ ॥ अशोकैर्नालिकेरैश्च मातुलिंगैः सदाडिमैः ॥ नानावृक्षैश्च शोभाढ्यं तडागैरुपशोभितम् ॥ ३ ॥ देवतायतनैर्दिव्यैर्ध्वजमालासुशोभितैः ॥ वेदाध्ययननिर्घोषैर्मंगलाद्यैर्विनादितम् ॥ ४ ॥ प्राविशद्भवने दिव्ये कांचने रुक्ममालिनि ॥ अपश्यत्स सुतान्भार्याममात्यान्दासभृत्यकान् ॥ ५ ॥ ततो जयप्रदान्सर्वान्नितश्चेतश्च धावतः ॥ हृच्छोभां च प्रकुर्वाणान्वैजयंतीभिरुच्चकैः ॥ ६ ॥ केचित्तोरणमाबद्ध्य केचित्पुष्पाण्यवाकिरन् ॥ मातुलिंगकराश्चान्ये धावंति ह्यंधकं प्रति ॥ ७ ॥ पुरे जनाश्च दृश्यंते भाजनैरन्नपूरितैः ॥ पूर्णहस्ताः प्रदृश्यंते तत्रैव बहवो जनाः ॥ ८ ॥ साक्षतैर्भाजनैस्तत्र शतसाहस्रयोषितः ॥ मंत्रान्पठंति विप्राश्च मंगलान्यपि योषितः ॥ ॥ ९ ॥ अमात्याश्चैव भृत्याश्च गजांश्चाढौकयंति च ॥ वर्धापयंति ते सर्वे येःकेचित्पुरवासिनः ॥ १० ॥ हृष्टस्तुष्टोऽवसत्तत्र सचिवैः सह सोंऽधकः ॥ ददर्श स जगत्सर्वं तुरंगांश्च पदातिकान् ॥ ११ ॥ तथैव विविधान्कोशांस्तत्र कांचनपूरितान् ॥ महिषीर्गा वृषांश्चैवापश्यच्छत्राण्यनेकधा ॥ १२ ॥ स एवमंधकस्तत्र कियंतं कालमावसत् ॥ हृष्टस्तुष्टो वसन्मर्त्ये स सुरैर्नाभ्यभूयत ॥ १३ ॥ वरं लब्धं तु तं ज्ञात्वा शंकिताः स्वर्गवासिनः ॥ एकीभूताश्च ते सर्वे वासवं शरणं गताः ॥ १४ ॥ ॥ शक्र उवाच ॥ ॥ कथमागमनं वोऽत्र सर्वेषामपि नाकिनाम् ॥ कस्माद्वो भयमुत्पन्नमागताः शरणं कथम् ॥ १५ ॥ ततस्ते ह्यमराः सर्वे शक्रमेतद्वचोऽब्रुवन् ॥ १६ ॥ ॥ देवा ऊचुः ॥ ॥ सुरनाथांधकोनाम दैत्यः शंभुवरोर्जितः ॥ अजेयः सर्वदेवानां किं नु कार्यमतः परम् ॥ १७ ॥ तत्त्वं चिंतय देवेश क उपायो विधीयताम् ॥ इत्थं वदन्ति ते देवाः शक्राग्रे मन्त्रणोद्यताः ॥ १८ ॥ मन्त्रयन्ति च यावद्वै तावच्चारमुखेरितम् ॥ ज्ञात्वा तत्र स देवौघं दानवो निर्गतो गृहात् ॥ १९ ॥ एकाकी स्यंदनाऽऽरूढ आयुधैर्बहुभिर्वृतः ॥ दुर्गमं मेरुपृष्ठं स लीलयैव गतो नृप ॥ २० ॥ स्वर्णप्राकारसंयुक्तं शोभितं विविधाश्रमैः ॥ दुर्गमंःशत्रुवर्गस्य तदा पार्थिवसत्तम ॥ २१ ॥ प्रविवेशाऽऽसुरस्तत्र लीलया स्वगृहे यथा ॥ वृत्रहा भयमापन्नः स्वकीयं चासनं ददौ ॥ २२ ॥ उपविष्टोंऽधकस्तत्र शक्रस्यैवाऽऽसने शुभे ॥ आस्थानं कलयामास सर्वतस्त्रिदशावृतम् ॥ २३ ॥ ॥ शक्र उवाच ॥ किं तवाऽऽगमनं चाऽत्र किं कार्यं कथयस्व मे ॥ यदस्मदीयं वित्तं हि तत्ते दास्यामिःदानव ॥ २४ ॥ ॥ अंधक उवाच ॥ ॥ नाऽहं वै कामयेकोशं

न गजांश्च सुरेश्वर ॥ स्वकीयं दर्शयस्वाऽद्य स्वर्गश्रृंगारभूषितम् ॥ २५ ॥ ऐरावतं महानागं तं चैवोच्चैःश्रवोहयम् ॥ उर्वश्यादीनि रत्नानि मम दर्शय
गोपते[1] ॥ २६ ॥ पारिजातकपुष्पाणि वृक्षजातीननेकशः ॥ वादित्राणि च सर्वाणि दर्शयस्व शचीपते ॥ २७ ॥ तस्य तद्वचनं श्रुत्वा शक्रश्चिंति
तवानिदम् ॥ योऽमुं निहंति पाप्मानं न तं पश्यामि कर्हिचित् ॥ २८ ॥ नास्ति रक्षाप्रदः कश्चित्स्वर्गलोकस्य दुःखिनः ॥ भयत्रस्तो ददावन्यद्वादि
त्राद्यप्सरोगणैः ॥ २९ ॥ रंगभूमावुपाविश्य कारयामास तांडवम् ॥ उपविष्टाः सुराः सर्वे यममारुतकिन्नराः ॥ ३० ॥ उर्वश्याद्या अप्सरसो गीतवा
दित्रयोगतः ॥ ननृतुः पुरतस्तस्य सर्वा एकैकशो नृप ॥ ३१ ॥ न व्यश्राम्यत तच्चित्तं दृष्ट्वा चाप्सरसस्तदा ॥ शचीं प्रति मनस्तस्य सकाममभव
न्नृप ॥ ३२ ॥ गृहीत्वा शक्रभार्यां स प्रस्थितः स्वपुरं प्रति ॥ ततः प्रववृते युद्धमंधकस्य सुरैः सह ॥ ३३ ॥ तेन देवागणाः सर्व्वे ध्वस्ताः पार्थिवस
त्तम ॥ संग्रामे विविधैः शस्त्रैश्चक्रवज्रादिभिर्घनैः ॥ ३४ ॥ संतापिताः सुराः सर्व्वे क्षयं नीता ह्यनेकशः ॥ सर्व्वेऽपि मरुतस्तेन भग्नाः संग्राममूर्द्धनि
॥ ३५ ॥ यथा सिंहोगजान्सर्वान्निचित्य विचरेद्वनम् ॥ तद्वदेकेन ते देवा जिताः सर्वे पराङ्मुखाः ॥ ३६ ॥ बालोऽधिपो यथा ग्रामे स्वेच्छया पीड
येज्जनान् ॥ स्वैरमाक्रम्य गृह्णाति कोशवासांसि चाऽसकृत् ॥ ३७ ॥ गतं न पश्यत्यात्मानं प्रजासंतापनेन च ॥ गृहीत्वा शक्रभार्यां स गतो वै
दानवोत्तमः ॥ ३८ ॥ इति श्रीस्कान्दे महापुराण एकाशीतिसाहस्र्यां संहितायां पञ्चम आवन्त्यखण्डे रेवाखण्ड शूलभेदमाहात्म्ये शचीहरण
वर्णनंनाम षट्चत्वारिंशोऽध्यायः ॥ ४६ ॥ ॥ छ ॥ ॥ श्रीमार्कंडेय उवाच ॥ ॥ गीर्वाणाश्च ततः सर्वे ब्रह्माणं शरणं गताः ॥ गजैर्गि
रिवराकारैर्हयैश्चैव गजोपमैः ॥ १ ॥ स्यंदनैर्नगराकारैः सिंहशार्दूलयोजितैः ॥ कच्छपैर्महिषैश्चान्यैर्मकरैश्च तथाऽपरे ॥ २ ॥ ब्रह्मलोकमनुप्राप्ता
देवाः शक्रपुरोगमाः॥ दृष्ट्वा पद्मोद्भवं देवं साष्टांगं प्रणताः सुराः ॥ ३ ॥ ॥ देवा ऊचुः ॥ ॥ जय देव जगद्वंद्य जय संसृतिकारक ॥ पद्मयोने सुर
श्रेष्ठ त्वामेव शरणं गताः ॥ ४ ॥ सोद्वेगं भाषितं श्रुत्वा देवानां भावितात्मनाम् ॥ मेघगंभीरया वाचा देवराजमुवाच ह ॥ ५ ॥ किमत्राऽऽगमनं
देवाः सर्वेषां वै विवर्णता ॥ केनापमानिताः सर्वे शीघ्रं मे कथ्यतां स्वयम् ॥ ६ ॥ ॥ देवा ऊचुः ॥ ॥ अंधकाख्यो महादैत्यो बलवान्पद्मसंभव ॥
तेन देवगणाः सर्वे धनरत्नैर्वियोजिताः ॥ ७ ॥ हत्वा देवगणांस्तावदसिचक्रपरद्विश्वधैः ॥ गृहीत्वा शक्रभार्यां स दानवोऽपि गतो बलात् ॥ ८ ॥
देवानां वचनं श्रुत्वा ब्रह्मा लोकपितामहः ॥ चिंतयामास राजेंद्र वधार्थं दानवस्य ह ॥ ९ ॥ अवध्यो दानवः पापः सर्वेषां वो दिवौकसाम् ॥

१ गोपते—स्वर्गपते—इत्यर्थः ।

विविधैः स्तोत्रैर्ब्रह्माद्याश्चक्रपाणिनम् ॥ ११ ॥ ॥ देवा ऊचुः ॥ ॥ जय त्वं देवदेवेश लक्ष्म्या वक्षस्थलाऽऽश्रितः ॥ असुरक्षय देवेश वयं ते
शरणं गताः ॥ १२ ॥ स्तूयमानः सुरैः सर्वैर्ब्रह्माद्यैश्च जनार्दनः ॥ संप्रहृष्टमना भूत्वा सुरसंघमुवाच ह ॥ १३ ॥ ॥ श्रीवासुदेव उवाच ॥ ॥
स्वागतं देवविप्राणां सुप्रभाताऽद्य शर्वरी ॥ किं कार्यं प्रोच्यतां क्षिप्रं कस्य रुष्टा दिवौकसः ॥१४॥ किं दुःखं कश्च संतापः कुतो वा भयामागतम् ॥
कथयंतु महाभागाः कारणं यन्मनोगतम् ॥ १५ ॥ पराभवः कृतो येन सोऽद्य यातु यमालयम् ॥ एवमुक्तास्तु कृष्णेन कथयामासुरस्य तत् ॥
॥ १६ ॥ दर्शयंतः स्वकान्देहाँल्लज्जमाना ह्यधोमुखाः ॥ हृतराज्या ह्यंधकेन कृता निस्तेजसः प्रभो ॥ १७ ॥ पितेव पुत्रं परिरक्ष देव जहींद्र
शत्रुं सह पुत्रपौत्रैः ॥ तथेति चोक्तः कमलासनेन सुरासुरैर्वंदितपादपद्मः ॥ १८ ॥ शंखं चक्रं गदां चापं संगृह्य परमेश्वरः ॥ उत्थितो भोगपर्यंका
देवानां पुरतस्तदा ॥ १९ ॥ ॥ श्रीवासुदेव उवाच ॥ ॥ पाताले यदि वा मर्त्ये नाके वा यदि तिष्ठति ॥ तं हनिष्याम्यहं पापं
येन संतापिताः सुराः ॥ २० ॥ स्वं स्थानं यांतु गीर्वाणाः संतुष्टा भावितौजसः ॥ विष्णोस्तद्वचनं श्रुत्वा ब्रह्माद्यास्ते सवासवाः ॥ २१ ॥
स्वयानैस्तु हरिं नत्वा हृदि तुष्टा दिवं ययुः ॥२२॥ इति श्रीस्कांदे महापुराण एकाशीतिसाहस्र्यां संहितायां पंचम आवन्त्यखण्डे रेवाखण्डे गीर्वाण
स्वर्गमनवर्णनंनाम सप्तचत्वारिंशोऽध्यायः ॥ ४७ ॥ ॥ छ ॥ ॥ उत्तानपाद उवाच ॥ ॥ कस्मिन्स्थानेऽवसद्देव सोंऽधको दैत्यपुंगवः ॥
सर्वान्देवांश्च निर्जित्य कस्मिन्स्थाने समास्थितः ॥ १ ॥ ॥ श्रीमहेश उवाच ॥ ॥ प्रविष्टो दानवो यत्र कथयामि नराधिप ॥ पाताललोकमा
श्रित्य कन्याविध्वंसते तु सः ॥ २ ॥ तत्र स्थितं तं विज्ञाय चापमादाय केशवः ॥ व्यसृजद्बाणमाग्नेयं दह्यतामिति चिंतयन् ॥ ३ ॥ दह्यमानोऽ
ग्निना सोऽपि वारुणास्त्रं स संदधे ॥ वारुणास्त्रेण महता आग्नेयं शमितं तदा ॥ ४ ॥ ततोऽसौ चिंतयामास केन बाणो विसर्जितः ॥ कस्यैषा
पौरुषी शक्तिः को यास्यति यमालयम् ॥ ५ ॥ ततोंऽधको मृधे क्रुद्धो बाणमार्गेण निर्गतः ॥ स दृष्ट्वा बाणमार्गेण चापहस्तं जनार्दनम् ॥ ६ ॥
॥ ॥ अंधक उवाच ॥ ॥ न शर्म्म लप्स्यसे ह्यद्य मया दृष्ट्याऽभिवीक्षितः ॥ न शक्नोषि तथा गन्तुं नागः शार्दूलदर्शनात् ॥ ७ ॥ अगाच्छति
यथा भक्ष्यं मार्जारस्य च मूषिकः ॥ न शक्नोषि तथा यातुं संस्थितस्त्वं ममाऽग्रतः ॥ ८ ॥ अहं त्वां प्रेषयिष्यामि यममार्गे सुदारुणे ॥ अहमन्वे
षयिष्यामि किल यास्यामि ते गृहम् ॥ ९ ॥ उपनीतोऽसि कालेन संग्रामे मम केशव ॥ ये त्वया निर्जिताः पूर्वं दानवा अप्यनेकशः ॥१०॥ न

भवंति पुमांसस्ते स्त्रियस्ताश्चैव केशव ॥ परं न शस्त्रसंग्रामं करिष्यामि त्वया सह ॥ ११ ॥ वदतो दानवेंद्रस्य न चुकोप स केशवः ॥ अयुध्यमानं तं दृष्ट्वा चिंतयामास दानवः ॥ १२ ॥ द्वंद्वयुद्धं करिष्यामि निश्चित्य युयुधे नृप ॥ स कृष्णेन पदाक्षिप्तः पतितः पृथिवीतले ॥ १३ ॥ मुहूर्तात्स समाश्वस्य उत्थायेदं व्यचिंतयत् ॥ अशक्तो द्वंद्वयुद्धाय ततः साम प्रयुक्तवान् ॥ पाणिभ्यां संपुटं कृत्वा साष्टांगं प्रणतः शुचिः ॥ १४ ॥ अन्धक उवाच॥ ॥ जय कृष्णाय हरये विष्णवे जिष्णवे नमः ॥ हृषीकेश जगद्धात्रे अच्युताय महात्मने ॥१५॥ नमः पंकजनाभाय नमः पंकजमालिने॥ जनार्दनाय श्रीशाय श्रीपते पीतवाससे ॥ १६ ॥ गोविंदाय नमो नित्यं नमो जलधिशायिने ॥ नमः करालवक्त्राय नरसिंहाय नादिने ॥ १७ ॥ शार्ङ्गिणे सितवर्णाय[1] शंखचक्रगदाभृते ॥ नमो वामनरूपाय यज्ञरूपाय ते नमः ॥ १८ ॥ नमो वराहरूपाय क्रांतलोकत्रयाय च ॥ व्याप्ताशेषदिगंताय केशवाय नमोनमः ॥ १९ ॥ वासुदेव नमस्तुभ्यं नमः कैटभनाशिने ॥ लक्ष्म्यालय सुरश्रेष्ठ नमस्ते सुरनायक ॥ २० ॥ विष्णोर्देवाधिदेवस्य प्रमाणं येऽपि कुर्वते ॥ प्रजापतेर्जगद्धातुस्तेषामपि नमाम्यहम् ॥ २१ ॥ समस्तभूतदेवस्य वासुदेवस्य धीमतः ॥ प्रणामं ये प्रकुर्वंति तेषामपि नमाम्यहम् ॥ २२ ॥ तस्य यज्ञवराहस्य विष्णोरमिततेजसः ॥ प्रणामं ये प्रकुर्वंति तेषामपि नमाम्यहम् ॥ २३ ॥ गुणानां हि निधानाय नमस्तेऽस्तु पुनःपुनः ॥ कारुण्यांबुनिधे देव सर्वभक्तिप्रियाय च ॥ २४ ॥ ॥ श्रीभगवानुवाच ॥ ॥ तुष्टस्ते दानवेंद्राहं वरं वृणु यथेप्सितम् ॥ ददामि ते वरं नूनमपि त्रैलोक्यदुर्लभम् ॥ २५ ॥ ॥ अन्धक उवाच ॥ ॥ यदि तुष्टोऽसि मे देव वरं दास्यसि चेप्सितम् ॥ तदा ददस्व मे देव युद्धं परमशोभनम् ॥ त्वद्धस्तपूतो येनाहं लोकान्गंताऽस्मि शोभनान् ॥ २६ ॥ ॥ श्रीभगवानुवाच ॥ ॥ कथं ददामि ते युद्धं तोषितोऽहं त्वया पुनः ॥ न त्वां तु प्रभवेत्कोपः कथं युध्यामि तेंऽधक ॥ २७ ॥ यदि ते वर्त्तते बुद्धिर्युद्धं प्रति न संशयः ॥ ततो गच्छस्व युद्धाय देवं प्रति महेश्वरम् ॥ २८ ॥ ॥ अन्धक उवाच ॥ ॥ न तत्र सिद्ध्यते कार्यं देवं प्रति महेश्वरम् ॥ २९ ॥ ॥ ॥ श्रीभगवानुवाच ॥ ॥ पुत्र त्वं शिखरं गत्वा धूनयस्व बलेन च ॥ ३० ॥ विधूते तत्र देवेशः कोपं कर्त्ता सुदारुणम् ॥ कोपितः शंकरो रौद्रं युद्धं दास्यति दानव ॥ ३१ ॥ विष्णुवाक्यादसौ पापो गतो यत्र महेश्वरः ॥ कैलासशिखरं प्राप्य धुनोति स्म मुहुर्मुहुः ॥ ३२ ॥ धूनिते तत्र शिखरे कंपितं भुवनत्रयम् ॥ निपेतुः शिखराग्राणि कंपमानान्यनेकशः ॥ ३३ ॥ चत्वारः सागराः क्षिप्रमेकीभूता महीपते ॥ निपेतुरुल्कापाताश्च

[1] सितवर्णाय—असितवर्णाय—इत्यपि पदच्छेदो भवितुमर्हति ।

पापपा अप्यनेकशः ॥ २४ ॥ उमया सहितो देवो विस्मयं परमं गतः ॥ गाढमालिंग्य गिरिजा देवं वचनमब्रवीत् ॥ २५ ॥ किमर्थं कम्पते शैलः किमर्थं कम्पते धरा ॥ किमर्थं कंपते नागो मर्त्यः पातालमेव च ॥ किं वा युगक्षयो देव तन्ममाख्यातुमर्हसि ॥ २६ ॥ ॥ ईश्वर उवाच ॥ ॥ कस्यैषा दुर्मतिर्जाता क्षितेः सर्पमुखे करः ॥ ललाटे च कृतं वर्म्म स यास्यति यमालयम् ॥ २७ ॥ कैलासमाश्रितो येन सुप्तोऽहं येन बोधितः ॥ तं वधिष्ये न संदेहः सम्मुखो वा भवेद्यदि ॥ २८ ॥ चिन्तयामास देवेशो ह्यंधकोऽयं न संशयः ॥ उपायं चिंतयामास येनाऽसौ वध्यते क्षणात् ॥ २९ ॥ आगताश्च सुराः सर्वे ब्रह्माद्या वसुभिः सह ॥ रथं देवमयं कृत्वा सर्वलक्षणसंयुतम् ॥ ४० ॥ केचिद्देवाः स्थिताश्चक्रे केचि त्तुण्डाग्रपार्श्वयोः ॥ केचिन्नाभ्यां स्थिता देवाः केचिद्धुर्येषु संस्थिताः ॥ ४१ ॥ धुरीषु निश्चलाः केचित्केचिद्यूपेषु संस्थिताः ॥ केचित्स्यंदनसं स्तंभाः केचित्स्यंदनवेष्टकाः ॥ ४२ ॥ आमलसारकेऽन्येऽपि अन्येऽपि कलशे स्थिताः ॥ रिपोर्भयंकरं दिव्यं ध्वजमालादिशोभितम् ॥ ४३ ॥ रथं देवमयं कृत्वा तमारूढो जगद्गुरुः ॥ निर्ययौ दानवो यत्र कोपाविष्टो महेश्वरः ॥ ४४ ॥ तिष्ठतिष्ठेत्युवाचाऽथ क्व प्रयास्यसि दुर्मते ॥ शरासनं करे गृह्य शरांश्चिक्षेप दानवे ॥४५॥ दानवेऽधिष्ठिते युद्धे शरैश्चिच्छेद सायकान् ॥ शरासारेण तत्रैव अंधकश्छादितस्तदा ॥ ४६ ॥ न तत्र दृश्यते सूर्यो नाकाशं न च चंद्रमाः ॥ आग्नेयमस्त्रं व्यसृजद्दानवोपि शिवं प्रति ॥ ४७ ॥ दह्यमानाः शरांगारैस्तत्रसुः सर्वदेवताः ॥ रक्षरक्ष महादेव दह्य मानांस्तु दानवात् ॥ ४८ ॥ ततो देवाधिदेवोऽसौ वारुणास्त्रमयोऽजयत् ॥ वारुणाऽस्त्रेण निमिषादाग्नेयं नाशितं तदा ॥ ४९ ॥ दानवेन तदा मुक्तं वायव्यास्त्रं रणाजिरे ॥ वारुणं च गतं तात वायव्यास्त्रविनाशितम् ॥ ५० ॥ देवो व्यसर्जयत्सार्पं क्रोधाविष्टेन चेतसा ॥ मारुतं नाशितं बाणैः सर्पैस्तत्र न संशयः ॥ ५१ ॥ दानवेन ततो मुक्तं गरुडास्त्रं च लीलया ॥ गारुडास्त्रं च तद्दृष्ट्वा सार्प्पं नैव व्यदृश्यत ॥ ५२ ॥ ततो देवा धिदेवेन नारसिंहं विसर्जितम् ॥ नारसिंहास्त्रबाणेन गारुडास्त्रं प्रशामितम् ॥ ५३ ॥ अस्त्रमस्त्रेण शाम्येत न बाध्येत परस्परम् ॥ महद्युद्धमभूत्तात सुरासुरभयंकरम् ॥ ५४ ॥ चक्रनालीकनाराचैस्तोमरैः खड्गमुद्गरैः ॥ वत्सदंतैस्तथा भल्लैः कर्णिकारैश्च शोभनैः ॥ ५५ ॥ एवं न शक्यते हन्तुं दानवो विविधायुधैः ॥ तदा ज्वालाकरालाश्च खड्गनाराचतोमराः ॥ ५६ ॥ वृषांकेन विमुक्तास्तु समरे दानवं प्रति ॥ न संस्पृशंति शस्त्राणि गात्रं गौडवधूरिव ॥ ५७ ॥ आयुधानि ततस्त्यक्त्वा बाहुयुद्धमुपस्थितौ ॥ करं करेण संगृह्य प्रहरन्तौ स्वमुष्टिभिः ॥ रणप्रयोगैर्युध्यन्तौ युयुधाते शिवांधकौ ॥ ५८ ॥ ॥ श्रीमार्कंडेय उवाच ॥ ॥ अन्धकं प्रति देवेशश्चिन्तयामास निग्रहम् ॥ हनिष्यामि न संदेहो दुष्टात्मानं न संशयः ॥ ५९ ॥

१ केन–इत्यध्याहारः ।

स शिवेन यदा क्षिप्तः पतितः पृथिवीतले ॥ ऊर्ध्वबाहुरधोवक्रो दानवो नृपसत्तम ॥ ६० ॥ क्रोधाविष्टेन देवेशः संग्रामे देवशत्रुणा ॥ कक्ष
योः कुहरे क्षिप्त्वा बन्धेनाऽऽक्रम्य पीडितः ॥६१॥ निस्पंदश्चा भवद्देवो मूर्च्छायुक्तो महेश्वरः ॥ मूर्च्छापन्नं तु तं ज्ञात्वा चिन्तयामास दानवः॥६२॥
हाहा कष्टं कृतं मेऽद्य दुष्कृतं पापकर्मणा ॥ किं करोमि कथं कर्म्म कस्मिन्स्थाने तु मोचये ॥ ६३ ॥ गृहीत्वा देवमुत्संगे गतः कैलासपर्वतम् ॥
शय्यायां शंकरं न्यस्य निर्ययौ दैत्यराट्ततः ॥६४॥ शय्यायां पतितो देवः प्रपेदे वेदनां ततः ॥ तावद्ददर्श चात्मानं स्वकीयभवनस्थितम् ॥६५॥
पराभवः कृतो मह्यं कथं तेन दुरात्मना ॥ क्रोधावेगसमाविष्टो निर्ययौ दानवं प्रति ॥ ६६ ॥ आयसीं लगुडीं गृह्य प्रभुर्भारसहस्रजाम् ॥
दानवं च ततो दृष्ट्वा प्राक्षिपत्तस्य मूर्द्धनि ॥ ६७ ॥ खड्गेन ताडयामास दानवः प्रहसन्रणे ॥ देवेनाथस्मृतं चाऽस्त्रं कौच्छेराख्यं महाहवे ॥ ६८ ॥
दीप्यमानं समुत्सृज्य हृदये ताडितः क्षणात् ॥ ततः स ताडिस्तेन रुधिरोद्गारमुद्वमन्॥६९॥पतितोऽधोमुखो भूत्वा ततः शूलेन भेदितः॥ पुनश्च देव
देवेन शूलेन द्विदलीकृतः॥७०॥शूलाग्रेऽसौ स्थितः पापो भ्रांतवांश्चक्रवत्तदा॥येये भूम्यां पतंति स्म तत्कायाद्रक्तबिंदवः॥७१॥तेते सर्वे समुतस्थुर्दानवाः
शस्त्रपाणयः॥व्याकुलस्तु ततो देवो दानवेन तरस्विना॥७२॥देवेनाथ स्मृता दुर्गा चामुंडा भीषणानना॥आयाता भीषणाकारा नानायुधविराजिता ॥
॥ ७३ ॥ महादंष्ट्रा महाकाया पिंगाक्षी लंबकर्णिका ॥ आदेशो दीयतां देव को यास्यति यमालयम् ॥ ७४ ॥ ॥ ईश्वर उवाच ॥ ॥ पिबास्य रुधिरं
भद्रे यथेष्टं दानवस्य च॥ निपतद्रुधिरं भूमौ दुर्गे गृह्णीष्व मा चिरम् ॥७५ ॥ निहन्मि दानवं यावत्साहाय्यं कुरु सुन्दरि ॥ एवमुक्ता तु सा दुर्गा पपौ
च रुधिरं ततः ॥७६॥ निहता दानवाः सर्वे देवेशेन सहस्रशः ॥ अन्धकोऽपि च तान्दृष्ट्वा दानवानवनिं गतान्॥ततो वाग्भिः प्रतुष्टाव देवदेवं महे
श्वरम् ॥ ७७ ॥ ॥ अंधक उवाच ॥ जयस्व देवदेवेश उमार्द्धार्द्धशरीरधृक् ॥ नमस्ते देवदेवेश सर्वाय त्रिगुणात्मने ॥ ७८ ॥ वृषभासनमारूढ
शशांककृतशेखर ॥ जय खट्वांगहस्ताय गंगाधर नमोऽस्तु ते ॥ ७९ ॥ नमो डमरुहस्ताय नमः कपालमालिने ॥ स्मरदेहविनाशाय महेशाय
नमोऽस्तु ते ॥ ८० ॥ पूष्णो दंतनिपाताय गणनाथाय ते नमः ॥ जय स्वरूपदेहाय अरूपबहुरूपिणे ॥ ८१ ॥ उत्तमांगविनाशाय विरिंचेरपि
शंकर ॥ श्मशानवासिने नित्यं नित्यं भैरवरूपिणे ॥ ८२ ॥ त्वं सर्वगोऽसि त्वं कर्त्ता त्वं हर्त्ता नान्य एव च ॥ त्वं भूमिस्त्वं दिशश्चैव त्वं गुरुर्भा
र्गवस्तथा ॥ ८३ ॥ सौरिस्त्वं देवदेवेश भूमिपुत्रस्तथैव च ॥ ऋक्षग्रहादिकं सर्वं यद्दृश्यं तत्त्वमेव च ॥ ८४ ॥ एवं स्तुतिं तदा कृत्वा देवं प्रति स

१ केन–इ०पा० । २ हत्वा–इ०पा० ।

दानवः ॥ संहताभ्यां तु पाणिभ्यां प्रणनाम महेश्वरम् ॥ ८५ ॥ ॥ ईश्वर उवाच ॥ ॥ साधुसाधु महासत्व वरं याचस्व दानव ॥ दाताऽहं याचकस्त्वं हि ददामीह यथेप्सितम् ॥ ८६ ॥ ॥ अंधक उवाच ॥ ॥ यदि तुष्टोऽसि देवेश यदि देयो वरो मम ॥ तदात्मसदृशोऽहं ते कर्त्तव्यो नाऽपरो वरः ॥ ८७ ॥ भस्मी जटी त्रिनेत्री च त्रिशूली च चतुर्भुजः ॥ व्याघ्रचर्मोत्तरीयश्च नागयज्ञोपवीतकः ॥ ८८ ॥ एतदिच्छाम्यहं सर्वं यदि तुष्टो महेश्वर ॥ ८९ ॥ ॥ ईश्वर उवाच ॥ ॥ ददामि ते वरं ह्यद्य यस्त्वया याचितोऽनघ ॥ गणेषु मे स्थितः पुत्र भृंगीशस्त्वं भविष्यसि ॥ ९० ॥ ॥ इति श्रीस्कांदे महापुराण एकाशीतिसाहस्र्यां संहितायां पञ्चम आवंत्यखण्डे रेवाखण्डेऽन्धकवधतद्वरप्रदानवर्णनंनामाष्टचत्वारिंशोऽध्यायः ॥ ४८ ॥ ॥ छ ॥ ॥ मार्कंडेय उवाच ॥ ॥ अंधकं तु निहत्याथ देवदेवो महेश्वरः ॥ उमया सहितो रुद्रः कैलासमगमन्नगम् ॥ १ ॥ आगताश्च ततो देवा ब्रह्माद्याश्च सवासवाः ॥ हृष्टास्तुष्टाश्च ते सर्वे प्रणेमुः पार्वतीपतिम् ॥ २ ॥ ॥ ईश्वर उवाच ॥ ॥ उपाविशंतु ते सर्वे ये केच न समागताः ॥ निहतो दानवो ह्येष गीर्वाणार्थे पितामह ॥ ३ ॥ रक्तेन तस्य मे शूलं निर्म्मलं नैव जायते ॥ शुभव्रततपोजप्यरतो ब्रह्मन्मया हतः ॥ ४ ॥ कर्तुमिच्छाम्यहं सम्यक्तीर्थया । चतुर्मुख ॥ आगच्छंतु मया सार्द्धं ये यूयमिह संगताः ॥ ५ ॥ इत्युक्त्वा देवदेवेशः प्रभासं प्रति निर्ययौ ॥ प्रभासाद्यानि तीर्थानि गंगासागरमध्यतः ॥ ६ ॥ अवगाह्यापि सर्वाणि नैर्मल्यं नाभवन्नृप ॥ नर्मदायां ततो गत्वा देवो देवैः समन्वितः ॥ ७ ॥ उत्तरं दक्षिणं कूलमवागाहत्प्रियव्रतः ॥ गतस्तु दक्षिणे कूले पर्वते भृगुसंज्ञितम् ॥ ८ ॥ तत्र स्थित्वा महादेवो देवैः सह महीपते ॥ भ्रांत्वा भ्रांत्वा चिरं श्रांतो निर्विण्णो निषसाद ह ॥ ९ ॥ मनोहारि यतः स्थानं सर्वेषां वै दिवौकसाम् ॥ तीर्थं विशिष्टं तन्मत्वा स्थितो देवो महेश्वरः ॥ १० ॥ गिरिं विव्याध शूलेन भिन्नं तेन रसातलम् ॥ निर्मलं चाऽभवच्छूलं न लेपो दृश्यते क्वचित् ॥ ११ ॥ देवैराह्वानिता तत्र महापुण्या च भारती ॥ पर्वतान्निःसृता तत्र महापुण्या सरस्वती ॥ १२ ॥ द्वितीयः संगमस्तत्र यथा वेण्यां सितासितः ॥ तत्र ब्रह्मा स्वयं देवो ब्रह्मेशं लिंगमुत्तमम् ॥ १३ ॥ संस्थापयामास पुण्यं सर्वदुःखप्रमुत्तमम् ॥ तस्य याम्ये दिशो भागे स्वयं देवो जनार्दनः ॥ १४ ॥ तिष्ठते च सदा तत्र विष्णुपादाग्रसंस्थिता ॥ अंभसो न भवेन्मार्गः कुंडमध्यस्थितस्य च ॥ १५ ॥ शूलाग्रेण कृता रेखा ततस्तोयं वहेन्नृप ॥ तत्तोयं च गतं तत्र यत्र रेवा महानदी ॥ १६ ॥ जललिंगं महापुण्यं चक्रतीर्थं नृपोत्तम ॥ शूलभेदे च देवेशः स्नानं कुर्याद्यथाविधि ॥ १७ ॥ आत्मानं

स्कां.म.पु. मन्यते शुद्धं न किंचित्कल्मषं कृतम् ॥ तस्यैवोत्तरकाष्ठायां देवदेवो जगद्गुरुः ॥ १८ ॥ आत्मना देवदेवेशः शूलपाणिः प्रतिष्ठितः ॥ सर्वतीर्थेषु आवं०सं० ५
॥२२२॥ तत्तीर्थं सर्वदेवमयं परम् ॥ १९ ॥ सर्वपापहरं पुण्यं सर्वदुःस्वप्नमुत्तमम् ॥ तत्र तीर्थे प्रतिष्ठाप्य देवदेवं जगद्गुरुः ॥ २० ॥ रक्षापालांस्ततो मुक्त्वा (रेवाखं० ३)
शतं साष्टविनायकान् ॥ क्षेत्रपालाः शतं साष्टं तद्रक्षंति प्रयत्नतः ॥ २१ ॥ विघ्नास्तस्योपजायंते यस्तत्र स्थातुमिच्छति ॥ केचित्कुटुंबान्नता अ० ४९
सु व्याघ्राः केचित्कृपीषु च ॥ २२ ॥ केचित्सभां प्रकुर्वंति केचिद्द्रव्यार्जने रताः ॥ परोक्षवादं कुर्वंति केऽपि हिंसारताः सदा ॥ २३ ॥
परदाररताः केचित्केचिद्वृत्तिविहिंसकाः ॥ अन्ये केचिद्वदंत्येवं कथं तीर्थेषु गम्यते ॥ २४ ॥ क्षुधया पीड्यते भार्या पुत्रभृत्यादयस्तदा ॥
मोहजालेषु योज्यंते एवं देवगणैर्नराः ॥ २५ ॥ पापाचाराश्च ये मर्त्याः स्नानं तेषां न जायते ॥ संरक्षंति च तत्तीर्थं देवभृत्यगणाः
सदा ॥ २६ ॥ धन्याः पुण्याश्च ये मर्त्यास्तेषां स्नानं प्रजायते ॥ सरस्वत्या भोगवत्या देवनद्या विशेषतः ॥ २७ ॥ अयं तु संगमः पुण्यो
यथा वेण्यां सितासितः ॥ दृष्ट्वा तीर्थं तु ते सर्वे गीर्वाणा हृष्टचेतसः ॥ २८ ॥ देवस्य सन्निधौ भूत्वा वर्णयामासुरुत्तमम् ॥ इदं तीर्थं तु देवेश गयाती
र्थेन ते समम् ॥२९॥ गुह्याद्गुह्यतमं तीर्थं न भूतं न भविष्यति ॥ शूलपाणिः समभ्यर्च्य इन्द्राद्यैरप्सरोगणैः ॥ ३० ॥ यक्षकिंनरगंधर्वैर्दिक्पालैर्लोक
पैरपि ॥ नृत्यगीतैस्तथा स्तोत्रैः सर्वैश्चापि सुरासुरैः ॥ ३१ ॥ पूज्यमानो गणैः सर्वैः सिद्धैर्नागैर्महेश्वरः ॥ देवेन भेदितं तत्र शूलाग्रेण नराधिप
॥ ३२ ॥ त्रिधा यत्रेक्ष्यतेऽद्यापि ह्यावर्त्तः सुरपूरितः ॥ कुंडत्रयं नरव्याघ्र महत्कलकलान्वितम् ॥ ३३ ॥ सर्वपापक्षयकरं सर्वदुःस्वप्नमुत्तमम् ॥ तत्र
तीर्थे तु यः स्नाति उपवासपरायणः ॥ ३४ ॥ दीक्षामंत्रविहीनोऽपि मुच्यते चाब्दिकादघात् ॥ ये पुनर्विधिवत्स्नांति मंत्रैः पंचभिरेव च ॥ ३५ ॥
वेदोक्तैः पंचभिर्मंत्रैः सहिरण्यघटैः शुभैः ॥ अक्षरैर्दशभिश्चैव षड्भिर्वा त्रिभिरेव वा ॥ ३६ ॥ पृथग्भूतैर्द्विजातीनां तीर्थे कार्यं नराधिप ॥ ब्रह्मक्षत्र
विशां वाऽपि स्त्रीशूद्राणां तथैव च ॥ ३७ ॥ पुरुषाणां त्रयीं ध्यात्वा स्नानं कुर्याद्यथाविधि ॥ दशाक्षरेण मंत्रेण ये पिबंति जलं नराः ॥ ३८ ॥ ते
गच्छंति परं लोकं यत्र देवो महेश्वरः ॥ केदारे च यथा पीतं रुद्रकुंडे तथैव च ॥ ३९ ॥ पंचरेफसमायुक्तं क्षकारं सुरपूजितम् ॥ ॐकारेण समा
॥ ४८ ॥ युक्तमेतद्वेद्यं प्रकीर्तितम् ॥ ४० ॥ यस्तत्र कुरुते स्नानं विधियुक्तो जितेंद्रियः ॥ तिलमिश्रेण तोयेन तर्पयेत्पितृदेवताः ॥ ४१ ॥ कुलानां तारये ॥२२२॥
द्विंशं दशपूर्वान्दशापरान् ॥ गयादिपंचस्थानेषु यः श्राद्धं कुरुते नरः ॥ ४२ ॥ स तत्र फलमाप्नोति शूलभेदे न संशयः ॥ यस्तत्र विधिना युक्तो
दद्याद्दानानि भक्तितः ॥ ४३ ॥ तदक्षयं फलं तत्र प्रहृतं पुष्कलं तथा ॥ गयाशिरो यथा पुण्यं पितृकार्येषु सर्वदा ॥ ४४ ॥ शूलभेदं तथा पुण्यं

स्नानदानादितर्पणैः ॥ भक्त्या ददाति यस्तत्र कांचनं गां महीं तिलान् ॥ ४५ ॥ आसनोपानहौ शय्यां वराश्वान्क्षत्रियस्तथा ॥ वस्त्रयुग्मं च धान्यं च गृहं पूर्णं प्रयत्नतः ॥४६॥ सयोक्त्रं लांगलं दद्यात्कृष्टां चैव वसुंधराम् ॥ दानान्येतानि यो दद्याद्ब्राह्मणे वेदपारगे ॥ ४७ ॥ श्रोत्रिये कुलसंपन्ने शुचिष्मति जितेंद्रिये ॥ श्रुताध्ययनसंपन्ने दंभहीने क्रियान्विते ॥ त्रयोदशाहःस्वेकैकं त्रयोदशगुणं भवेत् ॥ ४८ ॥ इति श्रीस्कांदे महापुराण एकाशीतिसाहस्र्यां संहितायां पञ्चम आवंत्यखण्डे रेवाखण्डे शूलभेदोत्पत्तिमाहात्म्यवर्णनंनामैकोनपंचाशत्तमोऽध्यायः ॥ ४९ ॥ ॥ छ ॥

॥ ॥ उत्तानपाद उवाच ॥ ॥ द्विजाश्च कीदृशाः पूज्या अपूज्याः कीदृशाः स्मृताः ॥ श्राद्धे वैवाहिके कार्ये दाने चैव विशेषतः ॥ १ ॥ यदि श्रद्धा भवेद्दैवयोगाच्छ्राद्धादिके विधौ ॥ एतदाख्याहि मे देव कस्य दानं न दीयते ॥ २ ॥ ॥ ईश्वर उवाच ॥ ॥ यथा काष्ठमयो हस्ती यथा चर्ममयो मृगः ॥ ब्राह्मणश्चानधीयानस्त्रयस्ते नामधारकाः ॥ ३ ॥ यथा षण्ढोऽफलः स्त्रीषु यथा गौर्गवि चाफला ॥ यथा चाज्ञेऽफलं दानं तथा विप्रोऽनृचोऽफलः ॥ ४ ॥ यथाऽनृणे[1] बीजमुप्त्वा वप्ता न लभते फलम् ॥ तथाऽनृचे हविर्दत्त्वा न दाता लभते फलम् ॥ ५ ॥ रोगी हीनाऽतिरिक्तांगः काणः पौनर्भवस्तथा ॥ अवकीर्णी श्यावदंतः सर्वाशी वृषलीपतिः ॥ ६ ॥ मित्रध्रुक्पिशुनः सोमविक्रयी परनिंदकः ॥ पितृमातृगुरुत्यागी नित्यं ब्राह्मणनिंदकः ॥ ७ ॥ शूद्रान्नं मंत्रसंयुक्तं यो विप्रो भक्षयेन्नृप ॥ सोऽस्पृश्यः कर्मचांडालः स्पृष्ट्वा स्नानं समाचरेत् ॥ ८ ॥ कुनखी वृषली स्तेयी वार्द्धुष्यः कुंडगोलकौ ॥ महादानरतो यश्च यश्चात्महनने रतः ॥ ९ ॥ भृतकाध्यापकः क्लीबः कन्यादूष्यभिशस्तकः ॥ एते विप्राः सदा त्याज्याः परिभाव्य[2] प्रयत्नतः ॥ १० ॥ प्रतिग्रहं गृहीत्वा तु वाणिज्यं यस्तु कारयेत् ॥ तस्य दानं न दातव्यं वृथा भवति तस्य तत् ॥ ११ ॥ श्रुताऽध्ययनसंपन्ना ये द्विजा वृत्ततत्पराः ॥ तेषां यद्दीयते दानं सर्वमक्षयतां व्रजेत् ॥ १२ ॥ दरिद्रान्भर भूपाल मा समृद्धान्कदाचन ॥ व्याधितस्यौषधं पथ्यं नीरुजस्य किमौषधैः ॥ १३ ॥ ॥ उत्तानपाद उवाच ॥ ॥ कीदृशोऽथ विधिस्तत्र तीर्थश्राद्धस्य का क्रिया ॥ दानं च दीयते यद्वत्तन्ममाख्याहि शंकर ॥ १४ ॥ ॥ ईश्वर उवाच ॥ ॥ श्राद्धं कृत्वा गृहे भक्त्या शुचिश्चाऽपि जितेंद्रियः ॥ गुरुं प्रदक्षिणीकृत्य भोज्य सीमांतके ततः ॥ १५ ॥ वाग्यतः प्रव्रजेत्तावद्यावत्सीमां न लंघयेत् ॥ शूलभेदं ततो गत्वा स्नानं कुर्याद्यथाविधि ॥ १६ ॥ पंचस्थानेषु च श्राद्धं हव्यकव्यादिभिः क्रमात् ॥ पिंडदानं च यः कुर्यात्पायसैर्मधुसर्पिषा ॥ १७ ॥ पितरस्तस्य तृप्यंति द्वादशाब्दानि पंच च ॥ अक्षतैर्बदरैर्बिल्वै

१ अनृणे—जलरहिते क्षेत्रे—इत्यर्थः । ऋणशब्दो दुर्गभूमौ जले च—इति कामधुक् जलपर्याये ऋणशब्दः । २ परिभाव्य—विचार्य—इत्यर्थः । धातूनामनेकार्थत्वात्—उक्तोऽर्थ एव प्रासंगिकः ।

 रिंगुदैर्मधुसर्पिषा ॥ १८ ॥ सोपि तत्फलमाप्नोति तीर्थेऽस्मिन्नाऽत्र संशयः ॥ उपानहौ च यो दद्या द्ब्राह्मणेभ्यः प्रयत्नतः ॥ १९ ॥ 
सोऽपि स्वर्गमवाप्नोति हयाऽऽरूढो न संशयः ॥ शय्यामश्वं च यो दद्याच्छत्रिकां वा विशेषतः ॥ २० ॥ गच्छेद्विमानमारूढः सोप्सरो 
 वृन्दवेष्टितः ॥ उत्तमं यो गृहं दद्यात्सप्तधान्यसमन्वितम् ॥ २१ ॥ स्वेच्छया मे वसेल्लोके कांचने भवने हि सः ॥ तिलधेनुं च यो 
दद्यात्सवत्सां वस्त्रसंभृताम् ॥ २२ ॥ नाकपृष्ठे वसेत्तावद्यावदाभूतसंप्लवम् ॥ गृहे वा यदि वाऽरण्ये तीर्थवर्त्मनि वा नृप ॥ २३ ॥ तोयमन्नं
च यो दद्याद्यमलोकं स नेक्षते ॥ सर्वदानानि दीयन्ते तेषां फलमवाप्यते ॥ २४ ॥ उदकं चान्नदानं च दद्यादभयमेव च ॥ अन्नदानात्परं
दानं न भूतं न भविष्यति ॥ २५ ॥ कन्यादानं तु यः कुर्याद्वृषं वा यः समुत्सृजेत् ॥ तस्य वासो भवेत्तत्र यत्राऽहमिति नाऽन्यथा ॥ २६ ॥
॥ ॥ उत्तानपाद उवाच ॥ ॥ कन्यादानं कथं स्वामिन्कर्त्तव्यं धार्मिकैः सदा ॥ परिग्रहो यथा पोष्यः कन्योद्वाहस्तथैव च ॥ २७ ॥ अन्यत्पृ
च्छामि देवेश कस्य कन्या न दीयते ॥ दातव्यं कुत्र तद्देव कस्मै दत्तमथाक्षयम् ॥ २८ ॥ उत्तम मध्यमं वाऽपि कनीयः स्यात्कथं विभो ॥
राजसं तामसं वाऽपि निःश्रेयसमथाऽपि वा ॥ २९ ॥ ॥ ईश्वर उवाच ॥ ॥ सर्वेषामेव दानानां कन्यादानं विशिष्यते ॥ यो दद्यात्परया
भक्त्याभिगम्य तनयां निजाम् ॥ ३० ॥ कुलीनाय सुरूपाय गुणज्ञाय मनीषिणे ॥ सुलग्ने सुमुहूर्ते च दद्यात्कन्यामलंकृताम् ॥ ३१ ॥ अश्वान्ना
गांश्च वासांसि योऽत्र दद्यात्स्वशक्तितः ॥ तस्य वासो भवेत्तत्र पदं यत्र निरामयम् ॥ ३२ ॥ येनाऽत्र दुहिता दत्ता प्राणेभ्योऽपि गरीयसी ॥ तेन
सर्वमिदं दत्तं त्रैलोक्यं सचराचरम् ॥३३॥ यः कन्यार्थं ततो लब्ध्वा भिक्षते चैव तद्धनम् ॥ स भवेत्कर्मचण्डालः काष्ठकीलो भवेन्मृतः ॥३४॥
गृहेऽपि तस्य योऽश्नीयाज्जिह्वालौल्यात्कथंचन ॥ चांद्रायणेन शुद्ध्येत तप्तकृच्छ्रेण वा पुनः ॥ ३५ ॥ ॥ उत्तानपाद उवाच ॥ ॥ वित्तं न
विद्यते यस्य कन्यैवास्ति च यद्गृहे ॥ कथं चोद्वाहनं तस्य न याञ्चां कुरुते यदि ॥ ३६ ॥ ॥ ईश्वर उवाच ॥ ॥ अवित्तेनैव कर्त्तव्यं कन्यो
द्वहनकं नृप ॥ कन्यानाम समुच्चार्य न दोषाय कदाचन ॥ ३७ ॥ अभिगम्योत्तमं दानं यच्च दानमयाचितम् ॥ भविष्यति युगस्यांतस्तस्यांतो
॥ ४९ ॥ नैव विद्यते ॥ ३८ ॥ अभिगम्योत्तमं दानं स्मृतमाहूय मध्यमम् ॥ याच्यमानं कनीयः स्याद्देहिदेहीति चाधमम् ॥ ३९ ॥ यथैवाऽश्माश्मना 
बद्धो निक्षिप्तो वारिमध्यतः ॥ द्वावेतौ निधनं यातस्तद्वदन्नमपात्रके ॥ ४० ॥ असमर्थे ततो दानं न प्रदेयं कदाचन ॥ दातारं नयतेऽधस्तादा
त्मानं च विशेषतः ॥ ४१ ॥ समर्थस्तारयेद्वा तु काष्ठं शुष्कं यथा जले ॥ यथा नौश्च तथा विद्वान्प्रापयेदपरं तटम् ॥ ४२ ॥ आहिताग्निश्च

गृह्णाति यः शूद्राणां प्रतिग्रहम् ॥ इह जन्मनि शूद्रोऽसौ मृतः श्वा चोपजायते ॥ ४३ ॥ वृथा क्लेशश्च जायेत ब्राह्मणे ह्यग्निहोत्रिणि ॥ असत्प्रति ग्रहं कुर्वन्गुप्तं नीचस्य गर्हितम् ॥ ४४ ॥ अभोज्यः स भवेन्मर्त्यो दह्यते कारिषाऽग्निना ॥ कटकारो भवेत्पश्चात्सप्त जन्म न संशयः ॥ ४५ ॥ लज्जादाक्षिण्यलोभाच्च यद्दानं चोपरोधजम् ॥ भृत्येभ्यश्च तु यद्दानं तद्वृथा निष्फलं भवेत् ॥ ४६ ॥ इति श्रीस्कांदे महापुराण एकाशीतिसाहस्र्यां संहितायां पंचम आवन्त्यखण्डे रेवाखण्डे शूलभेदमाहात्म्ये पात्रापात्रपरीक्षादानादिनियमवर्णनंनाम पञ्चाशत्तमोऽध्यायः ॥ ५० ॥ ॥ छ ॥ ॥ ॥ उत्तानपाद उवाच ॥ ॥ काले तत्क्रियते कस्मिञ्छ्राद्धं दानं तथेश्वर ॥ यात्रा तत्र प्रकर्त्तव्या तिथौ यस्यां वदाऽशु तत् ॥ १ ॥ ॥ ॥ ईश्वर उवाच ॥ ॥ पितृतीर्थे[1] यथा पुण्यं सर्वकामिकमुत्तमम् ॥ इदं तीर्थं तथा पुण्यं स्नानदानादितर्पणैः ॥ २ ॥ विशेषेण तु कुर्वीत श्राद्धं सर्वयुगादिषु ॥ मन्वन्तरादयो वत्स श्रूयंतां च चतुर्दश ॥ ३ ॥ अश्वयुक्छुक्लनवमी द्वादशी कार्त्तिकस्य च ॥ तृतीया चैत्रमासस्य तथा भाद्रप दस्य च॥४॥आषाढस्यैव दशमी माघस्यैव तु सप्तमी ॥ श्रावणस्याऽष्टमी कृष्णा तथाऽऽषाढस्य पूर्णिमा॥५॥फाल्गुनस्य त्वमावास्या पौषस्यैकादशी सिता ॥ कार्त्तिकी फाल्गुनी चैत्री ज्यैष्ठी पंचदशी तथा ॥ ६ ॥ मन्वंतरादयश्चैते अनंतफलदाः स्मृताः ॥ अयने चोत्तरे राजन्दक्षिणे श्राद्धमाचरेत् ॥७॥ कार्त्तिकी च तथा माघी वैशाखस्य तृतीयिका ॥ पौर्णमासी च चैत्रस्य ज्येष्ठस्य च विशेषतः॥८॥अष्टकासु च संक्रांतौ व्यतीपाते तथैव च ॥ श्राद्धकाला इमे सर्वे दत्तमेष्वक्षयं स्मृतम् ॥९॥ मधुमासे सिते पक्ष एकादश्यामुपोषितः ॥ निशि जागरणं कुर्याद्विष्णुपादसमीपतः ॥ १० ॥ धूपदीपादिनैवेद्यैः स्रङ्मालागुरुचन्दनैः ॥ अर्चां कुर्वंति ये विष्णोः पठेयुः प्राक्तनीं[2] कथाम् ॥ ११ ॥ ऋग्यजुःसाममन्त्रोक्तं सूक्तं जपति यो द्विजः ॥ सर्वपापविनिर्मुक्तो विष्णुलोकं स गच्छति ॥ १२ ॥ प्रातः श्राद्धं प्रकुर्वीत द्विजान्संपूज्य यत्नतः ॥ दानं दद्याद्यथाशक्ति गोहिरण्यांबरादिकम् ॥ १३ ॥ पितरस्तस्य तृप्यंति यावदाभूतसंप्लवम् ॥ श्राद्धदस्तु व्रजेत्तत्र यत्र देवो जनार्दनः ॥ १४ ॥ त्रयोदश्यां ततो गच्छेद्गुहावासिनि लिंगके ॥ दृष्ट्वा मार्कंडमीशानं मुच्यते सर्वपातकैः ॥ १५ ॥ ॥ उत्तानपाद उवाच ॥ ॥ गुहामध्ये महादेव लिंगं परमशोभितम् ॥ येन प्रतिष्ठितं देव तन्ममाख्यातुमर्हसि ॥ ॥ १६ ॥ ॥ ईश्वर उवाच ॥ ॥ त्रिषु लोकेषु विख्यातो मार्कंडेयो मुनीश्वरः ॥ दिव्यं वर्षसहस्रं स तपस्तेपे सुदारुणम् ॥ १७ ॥ गुहामध्यं प्रविष्टोऽसौ योगाभ्याससमुपाश्रितः ॥ लिंगं तु स्थापितं तेन मार्कंडेश्वरसंज्ञितम् ॥ १८ ॥ तत्र स्नात्वा च यो भक्त्या सोपवासो जितेंद्रियः ॥

१ पितृतीर्थे–गयातीर्थम्–इत्यर्थः । २ प्राक्तनीं कथाम्–पौराणिकीं कथाम्–एतन्माहात्म्यसूचिकाम्–इत्यर्थः ।

तत्र जागरणं कुर्वन्दद्याद्दीपं प्रयत्नतः ॥ १९ ॥ देवस्य स्नपनं कुर्यादमृतैः पंचभिस्तथा ॥ यथाशक्त्या समालभ्य पूजां कुर्याद्यथाविधि ॥ २० ॥
स्वशाखोत्पन्नमंत्रैश्च जपं कुर्युर्द्विजातयः ॥ सावित्र्यष्टसहस्रं तु शताष्टकमथापि वा ॥ २१ ॥ एतत्कृत्वा नृपश्रेष्ठ जन्मनः फलमाप्नुयात् ॥ चतुर्दश्यां
तु वै स्नात्वा पूजां कृत्वा यथाविधि ॥ २२ ॥ पात्रं परीक्ष्य दातव्यमात्मनः श्रेय इच्छता ॥ पितरस्तस्य तृप्यंति द्वादशाब्दान्यसंशयम् ॥ २३ ॥
दाता स गच्छते तत्र यत्र भोगाः सनातनाः ॥ गुहामध्ये प्रविष्टस्तु लोटयेच्चैव शक्तितः ॥ २४ ॥ नीले गिरौ हि यत्पुण्यं तत्समस्तं लभंति ते ॥
शूलभेदे तु यः कुर्याच्छ्राद्धं पर्वणिपर्वणि ॥ २५ ॥ विशेषाच्चैत्रमासांते[1] तस्य पुण्यफलं शृणु ॥ केदारे चैव यत्पुण्यं गंगासागरसंगमे ॥ २६ ॥
सितासिते तु यत्पुण्यमन्यतीर्थे विशेषतः ॥ अर्बुदे विद्यते पुण्यं पुण्यं चामरपर्वते ॥ २७ ॥ गयादिसर्वतीर्थानां फलमाप्नोति मानवः ॥ विधि
मंत्रसमायुक्तस्तर्पयेत्पितृदेवताः ॥ २८ ॥ कुलानां तारयेद्विंशं दशपूर्वान्दशापरान् ॥ दक्षिणस्यां ततो मूर्तौ शुचिर्भूत्वा समाहितः ॥ २९ ॥ न्यासं
कृत्वा तु पूर्वोक्तं प्रदद्यादष्टपुष्पिकाम् ॥ शास्त्रोक्तैरष्टभिः पुष्पैर्मानसैः शृणु तद्यथा ॥ ३० ॥ वारिजं सौम्यमाग्नेयं वायव्यं पार्थिवं पुनः ॥ वान
स्पत्यं भवेत्षष्ठं प्राजापत्यं तु सप्तमम् ॥ ३१ ॥ अष्टमं शिवपुष्पं स्यादेषां शृणु विनिर्णयम् ॥ वारिजं सलिलं ज्ञेयं सौम्यं मधुघृतं पयः ॥ ३२ ॥
आग्नेयं धूपदीपाद्यं वायव्यं चंदनादिकम् ॥ पार्थिवं कन्दमूलाद्यं वानस्पत्यं फलात्मकम् ॥ ३३ ॥ प्राजापत्यं तु पाठाद्यं शिवपुष्पं तु वासना ॥
अहिंसा प्रथमं पुष्पं पुष्पमिंद्रियनिग्रहः ॥३४॥ तृतीयं तु दया पुष्पं क्षमा पुष्पं चतुर्थकम् ॥ ध्यानपुष्पं तपः पुष्पं ज्ञानपुष्पं तु सप्तमम् ॥ ३५ ॥
सत्यं चैवाष्टमं पुष्पमेभिस्तुष्यंति देवताः ॥ भक्त्या तपस्विनः पूज्या ज्ञानिनश्च नराधिप ॥३६॥ छत्रमावरणं दद्यादुपानद्युगलं तथा ॥ तेन पूजि
तमात्रेण पूजिताः पुरुषास्त्रयः ॥ ३७ ॥ स्वर्गलोके वसेत्तावद्यावदाभूतसंप्लवम् ॥ शूलपाणेस्तु भक्त्या वै जाप्यं कुर्वंति ये नराः ॥ ३८ ॥ पंचामृतैः
पंचगव्यैर्यक्षकर्दमकुंकुमैः ॥ समालभेत देवेशं श्रीखंडागुरुचंदनैः ॥ ३९ ॥ नानाविधैश्च ये पुष्पैरर्चां कुर्वंति शूलिनः ॥ निशि जागरणं कुर्युर्दीप
दानं प्रयत्नतः ॥ ४० ॥ धूपनैवेद्यकं दद्यात्पठेत्पौराणिकीं कथाम् ॥ तत्र स्थाने स्थिता भक्त्या जपं कुर्वंति ये नराः ॥ ४१ ॥ श्रीसूक्तं पौरुषं
॥ ५० ॥ सूक्तं पावमानं वृषाकपिम् ॥ वेदोक्तैश्चैव मन्त्रैश्च रौद्रीं वा बहुरूपिणीम् ॥ ४२ ॥ ब्राह्मणान्पूजयेद्भक्त्या पूजयित्वा प्रणम्य च ॥ नानाविधैर्महा ॥२२
भोगैः शिवलोके महीयते ॥ ४३ ॥ अग्निमीत्यादिजाप्यानि[2] ऋग्वेदी जपते तु यः ॥ रुद्रान्पुरुषसूक्तं च श्लोकाध्यायं च शुक्रियम् ॥ ४४ ॥ इषेत्वा

१ चैत्रमासांत—चैत्रकृष्णामावास्यायाम्—इत्यर्थः । २ अग्निमीत्यादिजाप्यानि—अग्निमीळे—इत्यादीनि—ऋक्संहितासूक्तानि—इत्यर्थः ।

दिकमन्त्रौघं ज्योतिर्ब्राह्मणमेव च ॥ गायत्र्यं वै मधु चैव मंडलब्राह्मणानि च ॥ ४५ ॥ एताञ्जप्यांस्तु यो भक्त्या यजुर्वेदी जपेद्यदि ॥ देवव्रतं वामदेव्यं पुरुषर्षभमेव च ॥ ४६ ॥ बृहद्रथंतरं चैव यो जपेद्भक्तितत्परः ॥ स प्रयाति नरः स्थानं यत्र देवो महेश्वरः ॥ ४७ ॥ पादशौचं तथाऽभ्यंगं कुरुते योऽत्र भक्तितः ॥ गोदाने चैव यत्पुण्यं लभते नाऽत्र संशयः ॥ ४८ ॥ ब्राह्मणान्भोजयेत्तत्र मधुना पायसेन च ॥ एकस्मिन्भोजिते विप्रे कोटिर्भवति भोजिता ॥ ४९ ॥ सुवर्णं रजतं वस्त्रं दद्याद्भक्त्या द्विजोत्तमे ॥ तर्पितास्तेन देवाः स्युर्मनुष्याः पितरस्तथा ॥ ॥ ५० ॥ चंद्रसूर्यग्रहे भक्त्या स्नानं कुर्वंति ये नराः ॥ देवार्चनं ये च कुर्युर्जपं होमं विशेषतः ॥ दद्याद्दानं यथाशक्ति ब्राह्मणे वेदपारगे ॥ ॥ ५१ ॥ अश्वं रथं गजं यानं तुलापुरुषमेव च ॥ शकटं यः प्रदद्याद्वा सप्तधान्यप्रपूरितम् ॥ ५२ ॥ सयोक्त्रं लांगलं दद्याद्युवानौ तु धुरंधरौ ॥ गोभूतिलहिरण्यादि पात्रे दातव्यमर्चितम् ॥ ५३ ॥ अपात्रे विदुषा किंचिन्न देयं भूतिमिच्छता ॥ यतोऽसौ सर्वभूतानि दधाति धरणी किल ॥५४॥ ततो विप्राय सा देया सर्वसस्यौघमालिनी ॥ अथाऽन्यच्छृणु राजेंद्र गोदानस्य तु यत्फलम् ॥ ५५॥ यावद्वत्सस्य पादौ द्वौ मुखं योन्यां प्रदृश्यते॥ तावद्गौः पृथिवी ज्ञेया यावद्गर्भं न मुंचति ॥ ५६ ॥ येन केनाप्युपायेन ब्राह्मणे तां समर्प्ययेत् ॥ पृथ्वी दत्ता भवेत्तेन सशैलवनकानना ॥ ५७ ॥ तारयेन्नियतं दत्ता कुलानामेकविंशतिम् ॥ रौप्यखुरीं कांस्यदोहां सवस्त्रां च पयस्विनीम् ॥ ५८ ॥ ये प्रयच्छंति कृतिनो ग्रस्ते सूर्ये निशाकरे ॥ तेषां संख्यां न जानामि पुण्यस्याब्दशतैरपि ॥ ५९ ॥ सर्वस्याऽपि हि दानस्य संख्याऽस्तीह नराधिप ॥ चंद्रसूर्योपरागे च दानसंख्या न विद्यते ॥ ॥ ६० ॥ यत्र गौर्दृश्यते राजन्त्सर्वतीर्थानि तत्र हि ॥ तत्र पर्व विजानीयान्नाऽत्र कार्या विचारणा ॥ ६१ ॥ पुनः स्मृत्वा तु तत्तीर्थं यः कुर्याद्गमनं नरः ॥ अथवा म्रियते योऽत्र रुद्रस्याऽनुचरो भवेत् ॥ ६२ ॥ इति श्रीस्कांदे महापुराण एकाशीतिसाहस्र्यां संहितायां पञ्चम आवंत्यखंडे रेवाखण्डे शूलभेदे दानधर्मप्रशंसावर्णनंनामैकपंचाशत्तमोऽध्यायः ॥ ५१ ॥ ॥ छ ॥ ॥ ईश्वर उवाच ॥ ॥ अन्यदाख्यानकं वक्ष्ये पुरा वृत्तं नराधिप ॥ सकुटुंबो गतः स्वर्गं मुनिर्यत्र महातपाः ॥ १ ॥ ॥ उत्तानपाद उवाच ॥ ॥ कथं नाकं गतो विप्रः सकुटुंबो महानृषिः ॥ कौतुकं परमं देव कथयस्व मम प्रभो ॥ २ ॥ ॥ ईश्वर उवाच ॥ चित्रसेन इति ख्यातः काशीराजः पुराऽभवत् ॥ शूरो दाता सुधर्मात्मा सर्वकामसमृद्धिमान् ॥ ३ ॥ सा पुरी जनसंकीर्णा नाना रत्नोपशोभिता ॥ वाराणसीति विख्याता गंगातीरमुपाश्रिता ॥ ४ ॥ शरच्चंद्रप्रतीकाशा विद्वज्जनविभूषिता ॥ इन्द्रयष्टिसमाकीर्णा गोपगोकुलसंवृता ॥ ५ ॥ बहुध्वजसमाकीर्णा वेदध्वनिनिनादिता ॥ वणिग्जनैर्बहुविधैः क्रयविक्रयशा

लिनी ॥ ६ ॥ यंत्राऽऽदानैः प्रतोलीभिरुच्चैश्चान्यैः सुशोभिता ॥ देवताग्तनैर्दिव्यैराश्रमैर्गह्वरैर्युता ॥ ७ ॥ नानापुष्पफले रम्या कदलीखंडमं
डिता ॥ पनसैर्बकुलैस्तालैरशोकैराम्रकैस्तथा ॥८॥ राजवृक्षकपित्थैश्च दाडिमैरुपशोभिता ॥ वेदाध्ययननिर्घोषैः पवित्रीकृतमंगला ॥ ९ ॥ तस्या
उत्तरदिग्भागे आश्रमोऽभूत्सुशोभनः ॥ तन्मंदारवनंनाम त्रिषु लोकेषु विश्रुतम् ॥ १० ॥ बहुमंदारसंयुक्तं तेन मंदारकं विदुः ॥ विप्रो दीर्घतपा
नाम सर्वदा तत्र तिष्ठति ॥ ११ ॥ तपस्तपति सोऽत्यर्थं तेन दीर्घतपाः स्मृतः ॥ स तिष्ठति सपत्नीकः ससुतः सस्नुषस्तथा ॥ १२ ॥ शुश्रूषंति
सदा तस्य पुत्राः पंच प्रयत्नतः ॥ तस्य पुत्रः कनीयांस्तु ऋक्षशृंगो महातपाः ॥ १३ ॥ वेदाऽध्ययनसंपन्नो ब्रह्मचारी गुणान्वितः ॥ योगाभ्यास
रतो नित्यं कंदमूलफलाशनः ॥ १४ ॥ तिष्ठते मृगरूपेण मृगयूथचरस्तदा ॥ दिनांते च दिनांते च मातापित्रोः समीपगः ॥ १५ ॥ अभिवाद
यते नित्यं भक्तिमान्मुनिपुत्रकः ॥ पुनर्गच्छति तत्रैव कानने गिरिगह्वरे ॥ १६ ॥ क्रीडन्बालमृगैः सार्द्धं प्रत्यहं स मुनेः सुतः ॥ कदाचिद्दैवयो
गेन ऋक्षशृंगो ममार सः ॥ १७ ॥ इति श्रीस्कांदे महापुराण एकाशीतिसाहस्र्यां संहितायां पञ्चम आवंत्यखण्डे रेवाखण्डे शूल
भेदमाहात्म्ये ऋक्षशृंगचरित्रे दीर्घतपोमुन्याख्यानवर्णनंनाम द्विपंचाशत्तमोऽध्यायः ॥ ५२ ॥ ॥ छ ॥ ॥ उत्तानपाद उवाच ॥ ॥ आश्र
मे वसतस्तस्य स दीर्घतपसो मुनेः ॥ कनीयांस्तनयो देव कथं मृत्युमुपागतः ॥ १ ॥ ॥ ईश्वर उवाच ॥ ॥ शृणुष्वैकमना भूत्वा कथां दिव्यां
महीपते ॥ श्रवणादेव यस्यास्तु मुच्यते सर्वकिल्बिषैः ॥ २ ॥ काशीराजो महावीर्यो महाबलपराक्रमः ॥ चित्रसेन इति ख्यातो धरण्यां स नराधिप
॥ ३ ॥ तस्य राज्ये सदा धर्मो नाऽधर्मो विद्यते क्वचित् ॥ वेदधर्म्मरतो नित्यं प्रजा धर्मेण पालयन् ॥ ४ ॥ स्वधर्मनिरतश्चैव युद्धातिथ्यप्रियः
सदा ॥ क्षत्रधर्मं समाश्रित्य भोगान्भुंक्ते स कामतः ॥५॥ कोशस्यांतो न विद्येत हस्त्यश्वरथपत्तिमान् ॥ इतिहासपुराणज्ञैः पंडितैः सह संकथाम
॥ ६ ॥ कथयन्राजते राजा कैलास इव शंकरः ॥ एवं स पालयन्राज्यं राजा मंत्रिणमब्रवीत् ॥ ७ ॥ मृगयायां गमिष्यामि तिष्ठध्वं राज्यपालने ॥
गम्यतां सचिवैः प्रोक्ते गतोऽसौ वसुधाऽधिपः ॥८॥ अश्वारूढाश्च धावंतो राजानो मंडलाऽधिपाः ॥ छत्रैश्छत्राणि घृष्यंतोऽनुजग्मुः काननं प्रति ॥
॥ ९ ॥ रजस्तत्रोत्थितं भौमं गजवाजिपदाहतम् ॥ तेनैतच्छादितं सर्वं सदिङ्मार्त्तंडमंलम् ॥१०॥ न तत्र दृश्यते सूर्यो न काष्ठा न च चंद्रमाः ॥
॥ ५१ ॥ पादपाश्चान दृश्यंते गिरिशृंगाणि सर्वतः ॥ ११ ॥ परस्परं न पश्यंति निशार्द्धे वार्षिके यथा ॥ तत्राऽसौ सुमहद्यूथं मृगाणां समलक्ष्यत ॥ १२ ॥ ॥२२५॥

१ ऋक्षशृंगः–इ० पा० । २ वार्षिके–वर्षाकाले–इत्यर्थः ।

अधावत्सहितः सर्वैः स राजा राजपुत्रकैः॥ वृंदास्फोटोऽभवत्तेषां शीघ्रं जग्मुर्दिशो दश ॥१३॥ एकमार्गगतो राजा चित्रसेनो महीपतिः ॥ एकाकी स गतस्तत्र यत्र यत्र च ते मृगाः ॥१४॥ प्रविष्टोऽसौ ततो दुर्गं काननं गिरिगह्वरम् ॥ वल्लीगुल्मसमाकीर्णे स्थितो यत्र न लक्ष्यते ॥१५॥ अदृश्यां स्तु मृगान्मत्वा दिशो राजा व्यलोकयत् ॥ कां दिशं नु गमिष्यामि क्व मे सैन्यसमागमः ॥ १६ ॥ एवं कष्टं गतो राजा चित्रसेनो नराधिपः ॥ वृक्षच्छायां समाश्रित्य विश्राममकरोन्नृपः॥ १७ ॥ क्षुत्तृषार्त्तो भ्रमन्दुर्गे कानने गिरिगह्वरे ॥ ततोऽपश्यत्सरो दिव्यं पद्मिनीखंडमंडितम् ॥ ॥ १८ ॥ हंसकारंडवाऽऽकीर्णं चक्रवाकोपशोभितम् ॥ ततो दृष्ट्वा स राजेंद्रः संप्रहृष्टतनूरुहः ॥ १९ ॥ कमलानि गृहीत्वा तु ततः स्नानं समाचरत् ॥ तर्पयित्वा पितृदेवान्मनुष्यांश्च यथाविधि ॥२०॥ अच्छाद्य शतपत्रैश्च पूजयामास शंकरम्॥ ययौ पानीयममलं यथावत्स समाहितः॥२१॥ उत्तीर्य सलिलात्तीरे दृष्ट्वा वृक्षं समीपगम् ॥ उत्तीरयमधः कृत्वोपविष्टो धरणीतले ॥ २२ ॥ चिंतयन्नुपविष्टोऽसौ किमद्य प्रकरोम्यहम् ॥ तत्राऽऽसीनो ददर्शाथ वनोद्देशे मृगान्बहून् ॥२३॥ केचित्पूर्वमुखास्तत्र चापरे दक्षिणामुखाः ॥ वारुण्यभिमुखाः केचित्केचित्कौबेरदिङ्मुखाः ॥२४॥ केचिन्निद्रापराः केचिदूर्ध्वकर्णाः स्थिताः परे ॥ मृगमध्ये स्थितो योगी ऋक्षशृंगो महातपाः ॥२५॥ मृगान्दृष्ट्वा ततो राजा आहारार्थमचिंतयत् ॥ हन्मि तेषु मृगं कंचिद्भक्षयामि यदृच्छया ॥ २६ ॥ स्वस्थावस्थो भविष्यामि मृगमांसस्य भक्षणात् ॥ काशीं प्रति गमिष्यामि मार्गमन्विष्य यत्नतः ॥२७॥ विचिंत्यैवं ततो राजा वृक्षमूलमुपाश्रितः॥ चापं गृह्य कराग्रेण स शरं संदधे ततः॥२८॥ विचिक्षेप शरं तत्र यत्र ते बहवो मृगाः॥ तेषां मध्ये स वै विद्ध ऋक्षशृंगो महातपाः ॥२९॥ जग्मुस्त्रस्तास्तु ते सर्वे शब्दं कृत्वा वनौकसः ॥ स ऋषिः पतितस्तत्र कृष्णकृष्णेति चाब्रवीत ॥३०॥ हाहा कष्टं कृतं तेन येनाहं घातितोऽधुना ॥ कस्यैषा दुर्मतिर्जाता पापबुद्धेर्ममोपरि ॥ ३१ ॥ मृगमध्ये स्थितश्चाहं न कंचिदुपरोधये ॥ तां वाचं मानुषीं श्रुत्वा स राजा विस्मयान्वितः ॥ ३२ ॥ शीघ्रं गत्वा ततोऽपश्यद्ब्राह्मणं ब्रह्मतेजसा ॥ हाहा कष्टं कृतं मेऽद्य येनासौ घातितो द्विजः ॥ ३३ ॥ ॥ चित्रसेन उवाच ॥ ॥ अकामाद्घातितस्त्वं तु मृगभ्रांत्या मयाऽनघ ॥ गृहीत्वा बहुदारूणि स्वतनुं दाहयाम्यहम् ॥ ३४ ॥ दृष्टादृष्टं तु यत्किंचित्र समं ब्रह्महत्यया ॥ अन्यथा ब्रह्महत्यायाः शुद्धिर्मे न भविष्यति ॥ ३५ ॥ ॥ ऋक्षशृंग उवाच ॥ ॥ न ते सिद्धिर्भवेत्काचिन्मयि पंचत्वमागते ॥ बह्व्यो हत्या भविष्यंति विनाशे मम सांप्रतम् ॥३६॥ जननी मे पिता वृद्धो भ्रातरश्च तपस्विनः ॥ भ्रातृजाया मरिष्यंति मयि पंचत्वमागते॥३७॥

एता हत्या भविष्यंति कथं शुद्धिर्भवेत्तव ॥ उपायं कथयिष्यामि तं कर्तुं यदि मन्यसे ॥ ३८ ॥ ॥ चित्रसेन उवाच ॥ ॥ उपायः
कथ्यतां मेऽद्य यस्ते मनसि वर्त्तते ॥ करिष्ये तमहं सर्वं यत्नेनापि महामुने ॥ ३९ ॥ ॥ ऋक्षशृंग उवाच ॥ ॥ पृच्छामि त्वां कथं को वा
कुतस्त्वमिह चागतः ॥ ब्रह्मक्षत्रविशां मध्ये को भवानुत शूद्रजः ॥ ४० ॥ चित्रसेन उवाच ॥ ॥ नाहं शूद्रोऽस्मि भोस्तात न वैश्यो ब्राह्मणो न
वा ॥ न चांत्यजोऽस्मि विप्रेंद्र क्षत्रियोऽस्मि महामुने ॥ ४१ ॥ धर्मज्ञश्च कृतज्ञश्च सर्वसत्त्वहिते रतः ॥ अकामात्पातकं जातं कथं शुद्धिर्भविष्यति
॥ ४२ ॥ ॥ ऋक्षशृंग उवाच ॥ ॥ मां गृहीत्वा आश्रमं गच्छ यत्र तौ पितरौ मम ॥ आवेदयस्व चात्मानं पुत्रघातिनमातुरम् ॥ ४३ ॥ ते
दृष्ट्वा मां करिष्यंति कारुण्यं च तवोपरि ॥ उपायं कथयिष्यंति येन शांतिर्भविष्यति ॥ ४४ ॥ तस्य तद्वचनं श्रुत्वा चित्रसेनो नृपोत्तम ॥
स्कंधे कृत्वा तु तं विप्रं जगामाश्रमसन्निधौ ॥ ४५ ॥ न शक्नोति यदा वोढुं विश्राम्यति पुनःपुनः ॥ तावत्पश्यति तं विप्रं मूर्छितं विकलें
द्रियम् ॥ ४६ ॥ मुमोच चित्रसेनस्तं छायायां वटभूरुहः ॥ वस्त्रं चतुर्गुणं कृत्वा चक्रे वातं मुहुर्मुहुः ॥ ४७ ॥ पश्यतस्तस्य राजेंद्र ऋक्षशृंगो
महातपाः ॥ पंचत्वमगमच्छीघ्रं ध्यानयोगेन योगवित् ॥ ४८ ॥ दाहयामास तं विप्रं विधिदृष्टेन कर्मणा ॥ स्नानं कृत्वा स शोकार्त्तो विललाप
मुहुर्मुहुः ॥ ४९ ॥ इति श्रीस्कांदे महापुराण एकाशीतिसाहस्र्यां संहितायां पञ्चम आवन्त्यखंडे रेवाखंडे शूलभेदमाहात्म्ये ऋक्षशृंगस्वर्गगमनवर्णनं
नाम त्रिपञ्चाशत्तमोऽध्यायः ॥ ५३ ॥ ॥ छ ॥ ॥ ईश्वर उवाच ॥ ॥ ततश्चानंतरं राजा जगामोद्वेगमुत्तमम् ॥ कथं यामि गृहं त्वद्य वाराणस्यामहं
पुनः॥१॥ब्रह्महत्यासमाविष्टो जुहोम्यग्नौ कलेवरम्॥ अथवा तस्य वाक्येन तं गच्छाम्याश्रमं प्रति ॥२॥ कथयामि यथावृत्तं गत्वा तस्य महामुनेः ॥
एवं संचिंत्य राजासौ जगामाश्रमसन्निधौ॥३॥ऋक्षशृंगस्य चास्थीनि गृहीत्वा स नृपोत्तमः॥दृष्टिमार्गे स्थितस्तस्य महर्षेर्भावितात्मनः॥४॥दीर्घतपा
उवाच ॥ ॥ आगच्छ स्वागतं तेस्तु आसनेत्रोपविश्यताम्॥अर्घं ददाम्यहं येन मधुपर्कं सविष्टरम् ॥५॥ ॥ चित्रसेन उवाच॥ ॥अर्घस्यास्य न योग्योहं
महर्षे नास्मि भाषणे ॥ मृगमध्यस्थितो विप्रस्तव पुत्रो मया हतः ॥ ६ ॥ पुत्रघ्नं विद्धि मां विप्र तीव्रदण्डेन दंडय ॥ मृगभ्रांत्या हतो विप्र ऋक्षशृंगो
महातपाः ॥७॥ इति मत्त्वा मुनिश्रेष्ठ कुरु मे त्वं यथोचितम् ॥ माता तद्वचनं श्रुत्वा गृहान्निष्क्रम्य विह्वला ॥ ८ ॥ हा हताऽस्मीत्युवाचेदं पपात
धरणीतले ॥ विललाप सुदुःखार्ता पुत्रशोकेन पीडिता ॥ ९ ॥ हा हता पुत्रपुत्रेति करुणं कुररी यथा ॥ विललापाऽतुरा माता क्व गतो मां विहाय
वै ॥ मुखं दर्शय चात्मीयं मातरं मां हि मानय ॥ १० ॥ श्रुताऽध्ययनसंपन्नं जपहोमपरायणम् ॥ आगतं त्वां गृहद्वारे कदा द्रक्ष्यामि पुत्रक ॥११॥

लोकोक्त्या श्रूयते चैतच्चंदनं किल शीतलम् ॥ पुत्रगात्रपरिष्वंगश्चन्दनादपि शीतलः ॥ १२ ॥ किं चंदनेन पीयूषविंदुना किं किमिंदुना ॥ १३ ॥
पुत्रगात्रपरिष्वंगपात्रं गात्रं भवेद्यदि ॥ १४ ॥ परिष्वजितुमिच्छामि त्वामहं पुत्र सुप्रिय ॥ पंचत्वमनुयास्यामि त्वद्विहीनाद्य दुःखिता ॥ १५ ॥
एवं विलपती दीना पुत्रशोकेन पीडिता ॥ मूर्च्छिता विह्वला दीना निपपात महीतले ॥ १६ ॥ भार्यां च पतितां दृष्ट्वा पुत्रशोकेन पीडिताम् ॥
चुकोप स मुनिस्तत्र चित्रसेनाय भूभृते ॥ १७ ॥ ॥ दीर्घतपा उवाच ॥ ॥ याहियाहि महापाप मा मुखं दर्शयस्व मे ॥ किं त्वया घातितो
विप्रो ह्यकामाच्च सुतो मम ॥ १८ ॥ ब्रह्महत्या भविष्यंति बह्वचस्ते वसुधाधिप ॥ सकुटुम्बस्य मे त्वं हि मृत्युरेप उपस्थितः ॥ १९ ॥ एवमुक्त्व
ततो विप्रो विचिन्त्य च पुनःपुनः ॥ परित्यज्य तदा क्रोधं मुनिभावाज्जगाद ह ॥ २० ॥ ॥ दीर्घतपा उवाच ॥ ॥ उद्वेगं त्यज भो वत्सा
दुरुक्तं गदितो मया ॥ पुत्रशोकाभिभूतेन दुःखतप्तेन मानद ॥ २१ ॥ किं करोति नरः प्राज्ञः प्रेर्यमाणः स्वकर्मभिः ॥ प्रागेव हि मनुष्याणां बुद्धिः
कर्मानुसारिणी ॥ २२ ॥ अनेनैव विधानेन पंचत्वं विहितं मम ॥ हत्यास्तव भविष्यंति पूर्वमुक्ता न संशयः ॥ २३ ॥ ब्रह्मक्षत्रविशां मध्ये
शूद्रचण्डालजातिषु ॥ कस्त्वं कथय सत्यं मे कस्माच्च निहतो द्विजः ॥ २४ ॥ ॥ चित्रसेन उवाच ॥ ॥ विज्ञापयामि विप्रर्षे क्षन्तव्यं
ते ममोपरि ॥ नाऽहं विप्रोस्मि वै तात न वैश्यो न च शूद्रजः ॥ २५ ॥ न व्याधश्चांत्यजातो वा क्षत्रियोऽहं महामुने ॥ काशीराजो मृगान्ह
न्तुमागतो वनमुत्तमम् ॥ २६ ॥ भ्रांत्या निपातितो ह्येष मृगरूपधरो मुनिः ॥ इदानीं तव पादांते संश्रितः पातकान्वितः ॥ २७ ॥
किं कर्त्तव्यं मया विप्र उपायं कथयस्व मे ॥ २८ ॥ ॥ दीर्घतपा उवाच ॥ ॥ ब्रह्महत्या न शक्येताप्येका निस्तारितुं प्रभो ॥ दशैका च कथं
शक्यास्ताः शृणुष्व नरेश्वर ॥ २९ ॥ चत्वारो मे सुता राजन्त्सभार्या मातृपूर्वकाः ॥ मया सह न जीवंति ऋक्षशृंगस्य कारणे ॥ ३० ॥ उपायं
शोभनं तात कथयिष्ये शृणुष्व तम् ॥ शक्नोषि यदि तं कर्तुं सुखोपायं नरेश्वर ॥ ३१ ॥ सकुटुम्बं समस्तं मां दाहयित्वाऽनले नृप ॥ अस्थीनि
नर्मदातोये शूलभेदे विनिक्षिप ॥ ३२ ॥ नर्मदादक्षिणे कूले शूलभेदं हि विश्रुतम् ॥ सर्वपापहरं तीर्थं सर्वदुःखघ्नमुत्तमम् ॥ ३३ ॥ शुचिर्भूत्वा
ममाऽस्थीनि तत्र तीर्थे विनिक्षिप ॥ मोक्ष्यसे सर्वपापैस्त्वं मम वाक्यान्न संशयः ॥ ३४ ॥ ॥ राजोवाच ॥ ॥ आदेशो दीयतां तात करि
ष्यामि न संशयः ॥ समस्तं मेस्ति यत्किंचिद्राज्यं कोशः सुहृत्सुताः ॥ ३५ ॥ तवाऽधीनं महाविप्र प्रयच्छामि प्रसीद मे ॥ परस्परं विवदतोर्विप्र
राज्ञोस्तदा नृप ॥ ३६ ॥ स्फुटित्वा हृदयं शीघ्रं मुनिभार्या मृता तदा ॥ पुत्रशोकसमाविष्टा निर्जीवा पतिता क्षितौ ॥ ३७ ॥ पुत्राश्च मातृशोकेन

सर्वे पंचत्वमागताः॥ स्नुषाश्चैव तदा सर्वा मृताश्च सह भर्तृभिः ॥ ३८ ॥ पंचत्वं च गताः सर्व्वे मुनिमुख्या नृपोत्तम ॥ विप्रानाह्वापयामास ये तत्रा
श्रमवासिनः ॥ ३९ ॥ तेभ्यो निवेदयामास यथावृत्तं नृपोत्तमः॥ स तैस्तदाऽभ्यनुज्ञातः काष्ठान्यादाय यत्नतः ॥ ४० ॥ दाहं संचयनं चक्रे चित्रसे
नो महीपतिः ॥ ऋक्षशृंगादिसर्वेषां गृहीत्वाऽस्थीनि यत्नतः॥ ४१ ॥ याम्याशां प्रस्थितो राजा पादचारी महीपते ॥ न शक्नोति यदा गन्तुं छाया
माश्रित्य तिष्ठति ॥४२॥ विश्रम्य च पुनर्गच्छेद्भाराक्रांतो महीपतिः॥ सचैलं कुरुते स्नानं मुक्त्वाऽस्थीनि पदेपदे ॥४३॥ पिबेज्जलं निराहारः स गच्छ
न्दक्षिणामुखः ॥ अचिरेणैव कालेन संगतो नर्मदातटम् ॥४४॥ आश्रमस्थान्द्विजान्दृष्ट्वा पप्रच्छ पृथिवीपतिः ॥ ४५ ॥ ॥ चित्रसेन उवाच ॥ ॥
कथ्यतां शूलभेदस्य मार्गं मे द्विजसत्तमाः ॥ येन यामि महाभागा स्वकार्यार्थस्य सिद्धये ॥४६॥ ॥मुनय ऊचुः॥ ॥इतः क्रोशांतरादर्वाक्तीर्थं परमशो
भनम्॥नर्मदादक्षिणे कूले ततो द्रक्ष्यसि नाऽन्यथा॥४७॥ऋषिवाक्येन राजाऽसौ शीघ्रं गत्वा नरेश्वरः॥स ददर्श ततः शीघ्रं बहुद्विजसमाकुलम्॥४८॥
बहुद्रुमलताकीर्णं बहुपुष्पोपशोभितम् ॥ ऋक्षसिंहसमाकीर्णं नानाव्रतधरैः शुभैः ॥ ४९ ॥ एकपादास्थिताः केचिदपरे सूर्यदृष्टयः ॥ एकांगुष्ठ
स्थिताः केचिदूर्ध्वबाहुस्थिताः परे ॥ ५० ॥ दिनैकभोजनाः केचित्केचित्कंदफलाशनाः ॥ त्रिरात्रभोजनाः केचित्पराकव्रतिनोऽपरे ॥ ५१ ॥
चांद्रायणरताः केचित्केचित्पक्षोपवासिनः ॥ मासोपवासिनः केचित्केचिदृत्वंतपारणाः ॥ ५२ ॥ योगाभ्यासरताः केचित्केचिद्ध्यायंति तत्पदम् ॥
शीर्णपर्णाशिनः केचित्केचिच्च कटुकाशनाः ॥ ५३ ॥ शैवालभोजनाः केचित्केचिन्मारुतभोजनाः ॥ गार्हस्थ्ये च स्थिताः केचित्केचिच्चैवाऽग्नि
होत्रिणः ॥ ५४ ॥ एवं विधान्द्विजान्दृष्ट्वा जानुभ्यामवनिं गतः ॥ प्रणम्य शिरसा राजन्राजा वचनमब्रवीत् ॥ ५५ ॥ ॥ चित्रसेन उवाच ॥ ॥
कस्मिन्देशे च तत्तीर्थं सत्यं कथयत द्विजाः ॥ येनाऽभिवांछिता सिद्धिः सफला मे भविष्यति ॥ ५६ ॥ ॥ ऋषय ऊचुः ॥ ॥ धन्वंतरशतं
गच्छ भृगुतुंगस्य मूर्द्धनि॥ कुण्डं द्रक्ष्यसि तत्पूर्णं विस्तीर्णं पयसा शिवम् ॥५७॥ तेषां तद्वचनं श्रुत्वा गतः कुण्डस्य सन्निधौ ॥ दृष्ट्वा चैव तु तत्तीर्थं
भ्रांतिर्जाता नृपस्य वै ॥ ५८ ॥ ततो विस्मयमापन्नश्चिंतयन्वै मुहुर्मुहुः ॥ आकाशस्थं ददर्शाऽसौ सामिषं कुररं नृपः ॥ ५९ ॥ भ्रममाणं गृहीताहिं
वध्यमानं निरामिषैः ॥ परस्परं च युयुधुः सर्वेऽप्यामिषकांक्षया ॥ ६० ॥ हतश्चंचुप्रहारेण स ततः पतितोंऽभसि ॥ शूलेन शूलिना यत्र भूभागो
भेदितः पुरा ॥ ६१ ॥ तत्तीर्थस्य प्रभावेण स सद्यः पुरुषोऽभवत् ॥ विमानस्थं ददर्शाऽसौ पुमांसं दिव्यरूपिणम् ॥ ६२ ॥ गन्धर्वाऽप्सरसो
यक्षास्तं यांतं तुष्टुवुर्दिवि ॥ अप्सरोगीयमाने तु गते सूर्यस्य मूर्द्धनि ॥ चित्रसेनस्ततस्तस्मिन्नाश्चर्यं परमं गतः ॥ ६३ ॥ ऋषिणा कथितं यद्वत्त

द्रत्तीर्थं न संशयः ॥ हृष्टरोमाऽभवद्दृष्ट्वा प्रभावं तीर्थसंभवम् ॥ ६४ ॥ ममाऽद्य दिवसो धन्यो यस्मादत्र समागतः ॥ अस्थीनि भूमौ निक्षिप्य स्नानं कृत्वा यथाविधि ॥ ६५ ॥ तिलमिश्रेण तोयेनातर्पयत्पितृदेवताः ॥ गृह्यास्थीनि ततो राजा चिक्षेपांऽतर्जले तदा ॥ ६६ ॥ क्षणमेकं ततो वीक्ष्य राजोर्द्ध्ववदनः स्थितः ॥ तान्ददर्श पुनः सर्वान्दिव्यरूपधराञ्छुभान् ॥ ६७ ॥ दिव्यवस्त्रैश्च संवीतान्दिव्याभरणभूषितान् ॥ विमानैर्विविधै र्दिव्यैरप्सरोगणसेवितैः ॥ ६८ ॥ पृथग्भूतांश्च तान्सर्वान्विमानेषु व्यवस्थितान् ॥ उत्पत्तिवत्समालोक्य राजा संहर्षितोऽभवत् ॥ ६९ ॥ ऋषि र्विमानमारूढश्चित्रसेनमथाब्रवीत् ॥ भोभोः साधो महाराज चित्रसेन महीपते ॥ ७०॥ त्वत्प्रसादान्नृपश्रेष्ठ गतिर्दिव्या ममेदृशी ॥ जातेयं यत्त्वया कार्यं कृतं परमशोभनम् ॥ ७१ ॥ स्वसुतोऽपि न शक्नोति पितॄणां कर्त्तुमीदृशम् ॥ मदीयवचनात्तात निष्पापस्त्वं भविष्यसि ॥ ७२ ॥ फलं प्राप्स्यसि राजेंद्र कामिकं मनसेप्सितम् ॥ आशीर्वादांस्ततो दत्त्वा चित्रसेनाय धीमते ॥ स्वर्गं जगाम ससुतस्ततो दीर्घतपा मुनिः ॥ ७३ ॥ इति श्रीस्कांदे महापुराण एकाशीतिसाहस्र्यां संहितायां पञ्चम आवंत्यखंडे रेवाखण्डे दीर्घतपसःस्वर्गारोहणवर्णनंनाम चतुःपंचाशत्तमोऽध्यायः ॥ ॥ ५४ ॥ ॥ छ ॥ ॥ उत्तानपाद उवाच ॥ ॥ माहात्म्यं तीर्थजं दृष्ट्वा चित्रसेनो नरेश्वरः ॥ किं चकार क्व वा वासं किमाहारो बभूव ह ॥ १ ॥ ॥ ईश्वर उवाच ॥ ॥ भृगुतुंगं समारुह्य ऐशानीं दिशमाश्रितः ॥ तपश्चचार विपुलं कुण्डे तत्र नृपोत्तमः ॥ २ ॥ सर्वान्देवान्हृदि ध्यात्वा ब्रह्मविष्णुमहेश्वरान् ॥ विचिक्षेप यदात्मानं प्रत्यक्षौ रुद्रकेशवौ ॥ करे गृहीत्वा राजानं रुद्रो वचनमब्रवीत् ॥ ३ ॥ ॥ ईश्वर उवाच ॥ ॥ प्राणत्यागं महाराज मा काले त्वं कृथा वृथा ॥ अद्याप्यसि युवा त्वं वै न युक्तं मरणं तव ॥ ४ ॥ स्वस्थानं गच्छ शीघ्रं त्वं भुक्त्वा भोगान्यथेप्सितान् ॥ कुरु निष्कण्टकं राज्यं नाके शक्र इवापरः ॥ ५ ॥ ॥ चित्रसेन उवाच ॥ ॥ न राज्यं कामये देव न पुत्रान्न च बांधवान् ॥ न भार्यां न च कोशं च न गजान्न तुरंगमान् ॥ ६ ॥ मुञ्चमुञ्च महादेव मा विघ्नः क्रियतां मम ॥ स्वर्गप्राप्तिर्ममाऽद्यैव त्वत्प्रसादान्महेश्वर ॥ ७ ॥ ॥ ईश्वर उवाच ॥ ॥ यस्याऽग्रतो भवेद्ब्रह्मा विष्णुः शंभुस्तथैव च ॥ स्वर्गेण तस्य किं कार्यं स गतः किं करिष्यति॥८॥तुष्टा वयं त्रयो देवा वृणीष्व वरमुत्तमम् ॥ यथेप्सितं महाराज सत्यमेतदसंशयम् ॥ ९ ॥ ॥ चित्रसेन उवाच ॥ ॥ यदि तुष्टास्त्रयो देवा ब्रह्मविष्णुमहेश्वराः ॥ अद्यप्रभृति युष्माभिः स्थातव्यमिह सर्वदा ॥ १० ॥ गयाशिरो यथा पुण्यं कृतं युष्माभिरेव च ॥ तथैवेदं प्रकर्त्तव्यं शूलभेदं च पावनम् ॥११॥ यत्रयत्र स्थिता यूयं तत्रतत्र वसाम्यहम् ॥ गणानां चैव सर्वेषामाधिपत्यमथाऽस्तु मे ॥ १२ ॥ ॥ ईश्वर उवाच ॥ ॥ अद्यप्रभृति तिष्ठामः शूलभेदे नरेश्वर ॥

त्रिकालं हि त्रयो देवाः कलांशेन वसामहे ॥ १३ ॥ नंदिसंज्ञो गणाधीशो भविष्यति भवान्ध्रुवम् ॥ मत्समीपे तु भवत आदौ पूजा भविष्यति ॥
॥ १४ ॥ प्रक्षिप्य तानि चास्थीनि यत्र दीर्घतपा ययौ ॥ सकुटुंबो विमानस्थः स्वर्गतस्त्वं तथा कुरु ॥ १५ ॥ एवं देवा वरं दत्त्वा चित्रसेनाय
पार्थिव ॥ कुंडमूर्द्धनि याम्यायां त्रयो देवास्तदा स्थिताः ॥१६॥ परस्परं वदंत्येवं पुण्यतीर्थमिदं परम् ॥ यथा हि गयाशिरः पुण्यं पूर्वमेव पठ्यते ॥
तथा रेवातटे पुण्यं शूलभेदं न संशयः ॥ १७ ॥ ॥ ईश्वर उवाच ॥ ॥ इदं तीर्थं तथा पुण्यं यथा पुण्यं गयाशिरः ॥ सकृत्पिंडोदकेनैव नरो
निर्मलतां व्रजेत् ॥ १८ ॥ एकं गयाशिरो मुक्त्वा सर्वतीर्थानि भूपते ॥ शूलभेदस्य तीर्थस्य कलां नार्हंति षोडशीम् ॥ १९ ॥ कुंडमुदीच्यां याम्या
यां दशहस्तप्रमाणतः ॥ रौद्रवारुणकाष्ठायां प्रमाणं चैकविंशति[1] ॥ २० ॥ एतत्प्रमाणं तत्तीर्थं पिंडदानादिकर्मसु ॥ नाधर्मनिरता दातुं लभंते
दानमत्र हि ॥ २१ ॥ विष्णुस्तु पितृरूपेण ब्रह्मरूपी पितामहः ॥ प्रपितामहो रुद्रोऽभूदेवं त्रिपुरुषाः स्थिताः ॥ २२ ॥ कदा पश्यति तीर्थं वै कदा
नस्तारयिष्यति ॥ इति प्रतीक्षां कुर्वंति पुत्राणां सततं नृप ॥ शूलभेदे नरः स्नात्वा दृष्ट्वा शूलधरं सकृत् ॥ २३ ॥ नापुत्रो नाधनो रोगी सप्तजन्मसु
जायते ॥ एकविंशतिं पितुः पक्षे मातुश्चैवैकविंशतिम् ॥ २४ ॥ भार्यापक्षे दशैवेह कुलान्येतानि तारयेत् ॥ शूलभेदवने राजञ्छाकमूलफलैरपि ॥
॥ २५ ॥ एकस्मिन्भोजिते विप्रे कोटिर्भवति भोजिता ॥ पंचस्थानेषु यः श्राद्धं कुरुते भक्तिमान्नरः ॥२६॥ कुलानि प्रेतभूतानि सर्वाण्यपि हि ता
रयेत् ॥ द्विजदेवप्रसादेन पितॄणां च प्रसादतः ॥२७॥ श्राद्धदो निवसेत्तत्र यत्र देवो महेश्वरः ॥ स्युरात्मघातिनो ये च गोब्राह्मणहनाश्च ये ॥ २८ ॥
दंष्ट्रिभिर्जलपाते च विद्युत्पातेषु ये मृताः ॥ न येषामग्निसंस्कारो नाशौचं नोदकक्रिया ॥ २९ ॥ तत्र तीर्थे तु यस्तेषां श्राद्धं कुर्वीत भक्तितः ॥
मोक्षावाप्तिर्भवेत्तेषां युगमेकं न संशयः ॥ ३० ॥ अज्ञानाद्यत्कृतं पापं बालभावाच्च यत्कृतम् ॥ तत्सर्वं नाशयेत्पापं स्नानमात्रेण भूपते ॥ ३१ ॥
रजकेन यथा धौतं वस्त्रं भवति निर्मलम् ॥ तथा पापोऽपि तत्तीर्थे स्नातो भवति निर्मलः ॥ ३२ ॥ संन्यासं कुरुते योऽत्र तीर्थे विधिसमन्वितम् ॥
ध्यायन्नित्यं महादेवं स गच्छेत्परमं पदम् ॥ ३३ ॥ क्रीडित्वा स यथाकामं स्वेच्छया शिवमंदिरे ॥ वेदवेदांगतत्त्वज्ञो जायतेऽसौ शुभे कुले ॥३४॥
रूपवान्सुभगश्चैव सर्वव्याधिविवर्जितः ॥ राजा वा राजपुत्रो वा धर्माऽऽचारसमन्वितः ॥ ३५ ॥ एतत्ते कथितं राजंस्तीर्थस्य फलमुत्तमम् ॥ यच्छ्रु
त्वा मानवो नित्यं मुच्यते सर्वकिल्बिषैः ॥ ३६ ॥ य इदं श्रावयेन्नित्यमाख्यानं द्विजपुंगवान् ॥ श्राद्धे देवकुले[2] वाऽपि पठेत्पर्वणि पर्वणि ॥ ३७ ॥

१ एकविंशति—एकविंशतिहस्तप्रमाणमित्यर्थः । २ देवमंदिरे—इत्यर्थः ।

गीर्वाणास्तस्य तुष्यंति मनुष्याः पितृभिः सह ॥ पठतां शृण्वतां चैव नश्यते सर्वपातकम् ॥ ३८ ॥ लिखित्वा तीर्थमाहात्म्यं ब्राह्मणेभ्यो ददाति यः ॥ जातिस्मरत्वं लभते प्राप्नोत्यभिमतं फलम् ॥ ३९ ॥ रुद्रलोके वसेत्तावद्यावदक्षरमन्वितम् ॥ ४० ॥ इति श्रीस्कांदे महापुराण एकाशीतिसाहस्र्यां संहितायां पञ्चम आवन्त्यखंडे रेवाखण्डे शूलभेदमाहात्म्ये काशीराजमोक्षगमनंनाम पचपंचाशत्तमोऽध्यायः ॥ ५५ ॥ ॥ छ ॥

॥ ॥ उत्तानपाद उवाच ॥ ॥ अन्यच्च श्रोतुमिच्छामि केन गंगाऽवतारिता ॥ रुद्रशीर्षे स्थिता देवी पुण्या कथमिहाऽऽगता ॥ १ ॥ पुण्या देवशिलानाम तस्या माहात्म्यमुत्तमम् ॥ एतदाख्याहि मे सर्वं प्रसन्नो यदि शंकर ॥ २ ॥ ॥ ईश्वर उवाच ॥ शृणुष्वैकमना भूत्वा यथा गंगाऽवतारिता ॥ देवैः सर्वैर्महाभागा सर्वलोकहिताय वै ॥ ३ ॥ अस्ति विंध्यो नगो नाम याम्याशायां महीपते ॥ गीर्वाणास्तु गताः सर्वे तस्य मूर्ध्नि नरेश्वर ॥ ४ ॥ तत्र चाह्वानिता[1] गंगा ब्रह्माद्यैरखिलैः सुरैः ॥ अभ्यर्च्येशं जगन्नाथं देवदेवं जगद्गुरुम् ॥ ५ ॥ जटामध्यस्थितां गंगां मोचयस्वेति भूतले ॥ भास्वंती सा ततो मुक्ता रुद्रेण शिरसा भुवि ॥ ६ ॥ तत्र स्थाने महापुण्या देवैरुत्पादिता स्वयम् ॥ ततो देवनदी जाता सा हिताय नृणां भुवि ॥ ७ ॥ वसंति ये तटे तस्याः स्नानं कुर्वंति भक्तितः ॥ पिबंति च जलं नित्यं न ते यांति यमालयम् ॥ ८ ॥ यत्र सा पतिता कुंडे शूलभेदे नराधिप ॥ देवनद्याः प्रतीच्यां तु तत्र प्राची सरस्वती ॥ ९ ॥ याम्यायां शूलभेदस्य तत्र तीर्थमनुत्तमम् ॥ तत्र देवशिला पुण्या स्वयं देवेन निर्मिता ॥ १० ॥ तत्र स्नात्वा तु यो भक्त्या तर्पयेत्पितृदेवताः ॥ पितरस्तस्य तृप्यंति यावदाभूतसंप्लवम् ॥ ११ ॥ तत्र स्नात्वा तु यो भक्त्या ब्राह्मणान्भोजयेन्नृप ॥ स्वल्पान्नेनापि दत्तेन तस्य चांऽतो न विद्यते ॥ १२ ॥ ॥ उत्तानपाद उवाच ॥ ॥ कानि दानानि दत्तानि शस्तानि धरणीतले ॥ यानि दत्त्वा नरो भक्त्या मुच्यते सर्वपातकैः ॥ १३ ॥ देवशिलाया माहात्म्यं स्नानदानादि जं फलम् ॥ व्रतोपवासनियमैर्यत्प्राप्यं तद्वदस्व मे ॥ १४ ॥ ॥ ईश्वर उवाच ॥ ॥ आसीत्पुरा महावीर्यश्चेदिनाथो महाबलः ॥ वीरसेन इति ख्यातो मंडलाधिपतिर्नृप ॥ १५ ॥ राष्ट्रे तस्य रिपुर्नोऽस्ति न व्याधिर्न च तस्कराः ॥ न चाधर्मोऽभवत्तत्र धर्म एव हि सर्वदा ॥ १६ ॥ सदा मुदान्वितो राजा सभार्यो बहुपुत्रकः ॥ एकासीद्दुहिता तस्य सुरूपा गिरिजा यथा ॥ १७ ॥ इष्टा सा पितृमातृभ्यां बंधुवर्गजनस्य च ॥ कृतं वैवाहिकं कर्म काले प्राप्ते यथाविधि ॥ १८ ॥ अनंतरं चेदिपतिर्द्वादशाब्दमखे स्थितः ॥ ततस्तस्यास्तु यो भर्ता स मृत्युवशमागतः ॥ १९ ॥

१ आह्वानिता—संजाताह्वानं यस्याः सा—आह्वानिता—तारकादित्वादितच् । आहूता—इत्येवार्थः ।

॥१॥

विधवां तां सुतां दृष्ट्वा राजा शोकसमन्वितः ॥ उवाच वचनं तत्र स्वभार्यां दुःखपीडिताम् ॥ २० ॥ प्रिये दुःखमिदं जातं यावज्जीवं सुदुः
सहम् ॥ नैषा रक्षयितुं शक्या रूपयौवनगर्विता ॥ २१ ॥ दूषयेत कुलं क्वाऽपि कथं रक्ष्या हि बालिका ॥ नोपायो विद्यते क्वाऽपि भानु
मत्याश्च रक्षणे ॥ परस्परं विवदतोः श्रुत्वा तत्कन्यकाऽब्रवीत् ॥ २२ ॥ ॥ भानुमत्युवाच ॥ ॥ न लज्जामि तवाग्रेऽहं जल्पंती तात कर्हि
चित् ॥ सत्यं नोत्पद्यते दोषो मदर्थे ते नराधिप ॥ २३ ॥ अद्यप्रभृत्यहं तात धारयिष्ये न मूर्द्धजान् ॥ स्थूलवस्त्रपटार्द्धं तु धारयिष्यामि ते गृहे
॥ २४ ॥ करिष्यामि व्रतान्याशु पुराणविहितानि च ॥ आत्मानं शोषयिष्यामि तोषयिष्ये जनार्दनम् ॥ २५ ॥ ममैषा वर्त्तते बुद्धिर्यदि त्वं
तात मन्यसे ॥ भानुमत्या वचः श्रुत्वा राजा संहर्षितोऽभवत् ॥ २६ ॥ तीर्थयात्रां समुद्दिश्य कोशं दत्त्वा सुपुष्कलम् ॥ विसृज्य पुरुषान्वृ
द्धान्कृत्वा तस्याः सुरक्षणे ॥ २७ ॥ पुरुषान्सायुधांश्चापि ब्राह्मणान्सपुरोहितान् ॥ दासीदासान्पदातींश्च चास्याः संरक्षणक्षमान् ॥ २८ ॥
ततः पितुर्मतेनैव गंगातीरं गता सती ॥ अवगाह्य तटे द्वे तु[1] गंगायाः स नराधिप ॥ २९ ॥ नित्यं संपूज्य सद्विप्रान्गंधमाल्यादिभूषणैः ॥
द्वादशाब्दानि सा तीरे गंगायाः समवस्थिता ॥ ३० ॥ त्यक्त्वा गंगां तदा राज्ञी गता काष्ठां तु दक्षिणाम् ॥ प्राप्ता सा सचिवैः सार्द्धं यत्र रेवा
महानदी ॥ ३१ ॥ समाः पंच स्थिता तत्र ॐकारेऽमरकंटके ॥ उदग्याम्येषु तीर्थेषु तीर्थात्तीर्थं जगाम सा ॥ ३२ ॥ स्नात्वास्नात्वाऽऽपूज्य विप्रान्भ
क्तिपूर्वमतंद्रिता ॥ वारुणीं सा दिशं गत्वा देवनद्याश्च संगमे ॥ ३३ ॥ ददर्श चाऽऽश्रमं पुण्यं मुनिसंघैः समाकुलम् ॥ दृष्ट्वा मुनिसमूहं सा प्रणि
पत्येदमब्रवीत् ॥ ३४ ॥ माहात्म्यमस्य तीर्थस्य नाम चैवाऽस्य कीदृशम् ॥ कथयंतु महाभागाः प्रसादः क्रियतां मम ॥ ३५ ॥ ॥ ऋषय
ऊचुः ॥ ॥ चक्रतीर्थं तु विख्यातं चक्रं दत्तं पुरा हरेः ॥ महेश्वरेण तुष्टेन देवदेवेन शूलिना ॥ ३६ ॥ अत्र तीर्थे तु यः स्नात्वा तर्पयेत्पितृदेवताः ॥
अनिवर्त्तिका गतिस्तस्य जायते नात्र संशयः ॥ ३७ ॥ द्वितीयेऽह्नि ततो गच्छेच्छूलभेदे तपस्विनि ॥ पूर्वोक्तेन विधानेन स्नानं कुर्याद्यथा
विधि ॥ ३८ ॥ जन्मत्रयकृतैः पापैर्मुच्यते नात्र संशयः ॥ जलेन तिलमात्रेण प्रदद्यादंजलित्रयम् ॥ ३९ ॥ तृप्यंति पितरस्तस्य द्वादशाब्दान्य
संशयम् ॥ यः श्राद्धं कुरुते भक्त्या श्रोत्रियैर्ब्राह्मणैर्नृप ॥ ४० ॥ वार्धुष्याद्यास्तु वर्ज्यंते पितॄणां दत्तमक्षयम् ॥ अपरेह्नि ततो गच्छेत्पुण्यां देव
शिलां शुभाम् ॥ ॥ ४१ ॥ वीक्ष्यते जाह्नवी पुण्या देवैरुत्पादिता पुरा ॥ स्नात्वा तत्र जलं दद्यात्तिलमिश्रं नराधिप ॥ ४२ ॥ सकृत्पिंडप्रदानेन

१ द्वे तटे अवगाह्य—इत्यनयोक्त्या—गंगाप्रदक्षिणा कृतेति व्यज्यते ।

मुच्यते ब्रह्महत्यया ॥ एकादश्यामुपोषित्वा पक्षयोरुभयोरपि ॥ ४३ ॥ क्षपाजागरणं कुर्यात्पठेत्पौराणिकीं कथाम् ॥ विष्णुपूजां प्रकुर्वीत
पुष्पधूपनिवेदनैः ॥ ४४ ॥ प्रभाते भोजयेद्विप्रान्दानं दद्यात्स्वशक्तितः ॥ चतुर्थेऽह्नि ततो गच्छेद्यत्र प्राची सरस्वती ॥ ४५ ॥ ब्रह्मदेहाद्विनिष्क्रां
ता पावनार्थं शरीरिणाम् ॥ तत्र स्नात्वा नरो भक्त्या तर्पयेत्पितृदेवताः ॥ ४६ ॥ श्राद्धं कृत्वा यथान्यायमनिंद्यान्भोजयेद्द्विजान् ॥ पितरस्तस्य
तृप्यंति द्वादशाब्दान्यसंशयम् ॥ ४७ ॥ सर्वदेवमयं स्थानं सर्वतीर्थमयं तथा ॥ देवकोटिसमाकीर्णं कोटिलिंगोत्तमोत्तमम् ॥ ४८ ॥ त्रिरात्रं
कुरुते योऽत्र शुचिः स्नात्वा जितेंद्रियः ॥ पक्षं मासं च षण्मासमब्दमेकं कदाचन ॥ ४९ ॥ न तस्य संभवो मर्त्ये तस्य वासो
भवेद्दिवि ॥ नियमस्थो विमुच्येत त्रिजन्मजनितादघात् ॥ ५० ॥ विना पुंसा तु या नारी द्वादशाब्दं शुचिव्रता ॥ तिष्ठते साऽक्षयं कालं रुद्र
लोके महीयते ॥ ५१ ॥ मुनीनां वचनं श्रुत्वा मुदा परमया ययौ ॥ ततोऽवगाह्य तत्तीर्थमहर्निशमतंद्रिता ॥ ५२ ॥ दृष्ट्वा तीर्थप्रभावं
तु पुनर्वचनमब्रवीत् ॥ श्रूयतां वचनं मेऽद्य ब्राह्मणाः सपुरोहिताः ॥ ५३ ॥ न त्यजामीदृशं स्थानं यावज्जीवमहर्निशम् ॥ मात्पितुश्च तथा
मातुः कथयध्वमिदं वचः ॥ ५४ ॥ त्वत्कन्या शूलभेदस्था नियता व्रतचारिणी ॥ एवमुक्त्वा स्थिता सा तु तत्र भानुमती नृप ॥ ५५ ॥
एकांतरोपवासस्था शनैर्मासोपवासिता ॥ देवशिलास्थिता नित्यं दध्यौ सा चक्रपाणिनम् ॥ ५६ ॥ अहर्निशं दहेद्धूपं चंदनं च सदीपक
म् ॥ पादशौचं स्वयं कृत्वा स्वयं भोजयते द्विजान् ॥ द्वादशाब्दानि सा राज्ञी सुव्रता तत्र संस्थिता ॥ ५७ ॥ ॥ ईश्वर उवाच ॥ ॥
अन्यद्देवशिलायास्तु माहात्म्यं शृणु भूपते ॥ कथयामि महाबाहो सेतिहासं पुरातनम् ॥ ५८ ॥ कश्चिद्वनेचरो व्याधः शबरः सह भार्यया ॥
दुर्भिक्षपीडितस्तत्र आमिषार्थं वनं गतः ॥ ५९ ॥ नापश्यत्पक्षिणस्तत्र न मृगान्न फलानि च ॥ सरस्ततो ददर्शाऽथ पद्मिनीखण्डमंडितम् ॥
॥ ६० ॥ दृष्ट्वा सरोवरं तत्र शबरी वाक्यमब्रवीत् ॥ कुमुदानि गृहाण त्वं दिव्यान्याहारसिद्धये ॥ ६१ ॥ देवस्य पूजनार्थं तु शूलभेदस्य
यत्नतः ॥ विक्रयो भविता तत्र धर्मशीलो जनो यतः ॥ ६२ ॥ भार्याया वचनं श्रुत्वा जग्राह कुमुदानि सः ॥ उत्तीर्णस्तु तटे यावद्दृष्ट्वा

---

१ सर्वतो भयात्–इ०पा० । २ क्षपाजागरणं–क्षपायां–रात्रौ–जागरणम्–इत्यर्थः । ३ इतः प्राक्पर्यन्तं भानुमत्यास्तपःस्थितिवृत्तान्तो वर्णितः–एतदग्रेऽपि भानुमतीचरित्रमवशिष्टमेव–मध्ये च तच्चरित्रान्तर्गतं शबरीचरित्रं तावद्वर्णयितुम्–'ईश्वर उवाच–'इति–नूतनविषयारंभकप्रास्ताविकेश्वरोक्तिपूर्वकचरित्रान्तरवर्णनारंभोऽकारि । नैतेनेदं विषयान्तरमिति भ्रमितव्यम् । किन्तु प्रक्रान्त एवायं विषयसंबन्धकः–तदुपयोग्येवोत्तरसंदर्भश्चास्ति । अत्र विषयान्तरत्वभ्रान्तिरिव भासते–परं सेतोऽग्रेतनप्रक्रान्तभानुमतीचरित्रसंदर्शनेन निरस्ता स्यादेवेत्यवधेयं सुधीभिः ।

श्रीवृक्षमग्रतः ॥ ६३ ॥ श्रीफलानि गृहीत्वा तु सुपक्वानि विशेषतः ॥ शूलभेदं स संप्राप्तो ददर्श सुबहूञ्जनान् ॥ ६४ ॥ चैत्रमासे सिते पक्षे एकादश्यां नराधिप ॥ तस्मिन्नहनि नार्श्रीयुर्बाला वृद्धास्तथा स्त्रियः ॥ ६५ ॥ मण्डपं ददृशे तत्र कृतं देवशिलोपरि ॥ वस्त्रैः संवेष्टितं दिव्यं स्रङ्माल्यैरुपशोभितम् ॥६६॥ ऋषयश्चाऽऽगतास्तत्र ये चाऽऽश्रमनिवासिनः ॥ सोपवासाः सनियमाः सर्वे साग्निपरिग्रहाः ॥ ६७ ॥ देवनद्यास्तटे रम्ये मुनिसंघैः समाकुले ॥ आगच्छद्भिर्नृपश्रेष्ठ मार्गस्तत्र न लभ्यते ॥ ६८ ॥ दृष्ट्वा जनपदं तत्र तां भार्यां शबरोऽब्रवीत् ॥ गच्छ पृच्छस्व कमपि किमद्य स्नानकारणम् ॥ ६९ ॥ पर्वाणि यानि श्रूयंते किंस्वित्सूर्येन्दुसंप्लवः ॥ अयनं किं भवेदद्य किं वाऽक्षयतृतीयका ॥ ७० ॥ ततः स्वभर्तुर्वचनाच्छबरी प्रस्थिता तदा ॥ पप्रच्छ नारीं दृष्ट्वाऽग्रे दत्त्वाग्रे कमले शुभे ॥ ७१ ॥ तिथिरद्यैव का प्रोक्ता किं पर्व कथयस्व मे ॥ किमयं स्नाति लोकोऽयं किं वा स्नानस्य कारणम् ॥ ७२ ॥ ॥ नार्युवाच ॥ ॥ अद्य चैकादशी पुण्या सर्वपापक्षयंकरी ॥ उपोषिता सकृद्येन नाकप्राप्तिं करोति सा ॥ ७३ ॥ तस्यास्तद्वचनं श्रुत्वा शबरी शबराय वै ॥ कथयामास चाव्यग्रा स्त्रीवाक्यं नृपसत्तम ॥ ७४ ॥ अद्य त्वेकादशी पुण्या बालवृद्धैरुपोषिता॥ मदनैकादशीनाम सर्वपापक्षयंकरी ॥ ७५ ॥ नियता श्रूयते तत्र राजपुत्री सुशोभना ॥ व्रतस्था नियताहारा नाम्ना भानुमती सती ॥ ७६ ॥ नैतयासदृशी काचित्त्रिषु लोकेषु विश्रुता ॥ दृश्यते सा वरारोहा ह्यवतीर्णा महीतले ॥ ७७ ॥ भार्याया वचनं श्रुत्वा शबरस्तां जगाद ह ॥ कमलानि यथालाभं दत्त्वा भुंक्ष्व हि सत्वरम् ॥ ७८ ॥ ममैषा वर्त्तते बुद्धिर्न भोक्तव्यं मया ध्रुवम् ॥ न मयोपार्जितं भद्रे पापबुद्ध्या शुभं क्वचित् ॥ ७९ ॥ ॥ शबर्युवाच ॥ ॥ न पूर्वं तु मया भुक्तं कस्मिंश्चैव तु वासरे ॥ भुक्तशेषं मया भुक्तं यावत्कालं स्मराम्यहम् ॥ ८० ॥ भार्याया निश्चयं ज्ञात्वा स्नानं कर्तुं जगाम ह ॥ अर्धोत्तरीयवस्त्रेण स्नानं कृत्वा तु भक्तितः ॥ ॥ ८१ ॥ सर्वान्देवान्नमस्कृत्य गतो देवशिलां प्रति ॥ तस्थौ स शंकमानोऽपि नमस्कृत्य जनार्दनम् ॥ ८२ ॥ यस्यास्तु कुमुदे दत्ते तया राज्यै निवेदितम् ॥ तद्दृष्ट्वा पद्मयुगलं तां दासीं साऽब्रवीत्तदा ॥ ८३ ॥ कुत्र पद्मद्वयं लब्धं कथ्यतामग्रतो मम ॥ शीघ्रं तत्रैव गत्वा च पद्मानानय चापरान् ॥ ८४ ॥ धान्येन वसुना वाऽपि कमलानि समानय ॥ भानुमत्या वचः श्रुत्वा गता सा शबरं प्रति ॥ ८५ ॥ श्रीफलानि च पुष्पाणि बहून्यन्यानि देहि मे ॥ ८६ ॥ ॥ शबर्युवाच ॥ ॥ श्रीफलानि सपुष्पाणि दास्यामि च विशेषतः ॥ न लोभो न स्पृहा मेऽस्ति गत्वा राज्ञीं

१ 'वा पुंसि पद्मम्' इत्यमरात् 'पद्म' शब्दस्य पुंस्त्वमपि ।

निवेदय ॥ ८७ ॥ तया च सत्वरं गत्वा यथावृत्तं निवेदितम् ॥ शबर्युक्तं पुरस्तस्याः सविस्तरपरं वचः ॥ ८८ ॥ तस्यास्तु वचनं श्रुत्वा राज्ञी तत्र स्वयं गता ॥ उवाच शबरीं प्रीत्या देहि पद्मानि मूल्यतः ॥ ८९ ॥ ॥ शबर्युवाच ॥ ॥ न मूल्यं कामये देवि फलपुष्पसमुद्भवम् ॥ श्रीफलानि च पुष्पाणि यथेष्टं मम गृह्यताम् ॥ ९० ॥ अर्चां कुरु यथान्यायं वासुदेवे जगत्पतौ ॥ ९१ ॥ ॥ राज्ञ्युवाच ॥ ॥ विना मूल्यं न गृह्णामि कमलानि तवाऽधुना ॥ धान्यस्य खारिकाश्चैकां ददामि प्रतिगृह्यताम् ॥ ९२ ॥ दश विंशत्यथ त्रिंशच्चत्वारिंशदथाऽपि वा ॥ गृहाण वा खारिशतं दुर्भिक्षांभोधिमुत्तर ॥ ९३ ॥ वसुरत्नं सुवर्णं च अन्यत्ते यदभीप्सितम् ॥ तत्सर्वं संप्रदास्यामि कमलार्थे न संशयः ॥ ९४ ॥ ॥ शबर्युवाच ॥ ॥ नाहारं चिंतयाम्यद्य मुक्त्वा देवं वरानने ॥ देवकार्यं विना भद्रे नान्या बुद्धिः प्रवर्त्तते ॥ ९५ ॥ ॥ राज्ञ्युवाच ॥ ॥ न त्वयाऽन्नं परित्याज्यं सर्वमन्ने प्रतिष्ठितम् ॥ तस्मात्सर्वप्रयत्नेन ममान्नं प्रतिगृह्यताम् ॥ ९६ ॥ तपस्विनो महाभागा ये चाऽरण्यनिवासिनः ॥ गृहस्थद्वारि ते सर्वे याचंतेऽन्नमतंद्रिताः ॥ ९७ ॥ ॥ शबर्युवाच ॥ ॥ निषेधश्च कृतः पूर्वं सर्व्वं सत्ये प्रतिष्ठितम् ॥ सत्येन तपते सूर्यः सत्येन ज्वलतेऽनलः ॥ ९८ ॥ सत्येन तिष्ठत्युदधिर्वायुः सत्येन वाति हि ॥ सत्येन पच्यते सस्यं गावः क्षीरं स्रवंति च ॥ ९९ ॥ सत्याधारमिदं सर्वं जगत्स्थावरजंगमम् ॥ तस्मात्सर्वप्रयत्नेन सत्यं सत्येन पालयेत् ॥ १०० ॥ देवकार्यं तु मे मुक्त्वा नाऽन्या बुद्धिः प्रवर्त्तते ॥ गृहाण राज्ञि पुष्पाणि कुरु पूजां गदाभृतः ॥ १०१ ॥ श्रूयते द्विजवाक्यैस्तु न दोषो विद्यते क्वचित् ॥ कुशाः शाकं पयो मत्स्या गंधाः पुष्पाक्षता दधि ॥ मांसं शय्यासनं धानाः प्रत्याख्येया न वारि च ॥ १०२ ॥ ॥ राज्ञ्युवाच ॥ ॥ आरामोपहृतं पुष्पमारण्यं पुष्पमेव च ॥ क्रीतं प्रतिग्रहे लब्धं पुष्पमेवं चतुर्विधम् ॥ १०३ ॥ उत्तमं पुष्पमारण्यं गृहीतं स्वयमेव च ॥ मध्यमं फलमारामे त्वधमं क्रीतमेव च ॥ प्रतिग्रहेण यल्लब्धं निष्फलं तद्विदुर्बुधाः ॥ ॥ १०४ ॥ ॥ पुरोहित उवाच ॥ ॥ गृहाण राज्ञि पुष्पाणि कुरु पूजां गदाभृतः ॥ उपकारः प्रकर्त्तव्यो व्यपदेशेन कर्हिचित् ॥ १०५ ॥ ॥ ॥ ईश्वर उवाच ॥ ॥ श्रीफलानि सपद्मानि दत्तानि शबरेण तु ॥ गृहीत्वा तानि राज्ञी सा पूजां चक्रे सुशोभनाम् ॥ १०६ ॥ क्षपाजागरणं चक्रे श्रुत्वा पौराणिकीं कथाम् ॥ शबरस्तु ततो भार्यामिदं वचनमब्रवीत् ॥ १०७ ॥ दीपार्थं गृह्यतां स्नेहो यथालाभेन सुन्दरि ॥ कृत्वा दीपं ततस्तौ तु कृत्वा पूजां हरेः शुभाम् ॥१०८॥ चक्रतुर्जागरं रात्रौ ध्यायन्तौ धरणीधरम् ॥ ततः प्रभातसमये दृष्ट्वा स्नानोत्सुकं जनम् ॥१०९॥

१ शबरेण—तस्याः शबर्याः पत्या । तयोस्तदानीं सहधर्मचारित्वमासीदेवातः शबर्याः शबरस्य च—फलपुष्पसमर्पणे समानमेव साहाय्यं बोद्धव्यम् ।

स्नाति वै शूलभेदे तु देवनद्यां तथाऽपरे ॥ सरस्वत्यां नराः केचिन्मार्कंडस्य ह्रदेऽपरे ॥ ११० ॥ चक्रतीर्थं गताश्चक्रुः स्नानं केचिद्विधानतः ॥
शुचयस्ते जनाः सर्व्वे स्नात्वा देवशिलोपरि ॥ १११ ॥ श्राद्धं चक्रुः प्रयत्नेन श्रद्धया पूतचेतसा ॥ तान्दृष्ट्वा शबरो बिल्वैः पिंडांश्चक्रे
प्रयत्नतः ॥ ११२ ॥ भानुमत्या तथा भर्त्तुः पिंडनिर्वपणं कृतम् ॥ अनिंद्या भोजिता विप्रा दंभवार्धुष्यवर्जिताः ॥ ११३ ॥ हविष्यान्नैस्तथा दध्ना
शर्करामधुसर्पिषा ॥ पायसेन तु गव्येन कृतान्नेन विशेषतः ॥ ११४ ॥ भोजयित्वा तथा राज्ञी ददौ दानं यथाविधि ॥ पादुकोपानहौ छत्रं
शय्यां गोवृषमेव च ॥ ११५ ॥ विविधानि च दानानि हेमरत्नधनानि च ॥ चक्रतीर्थे महाराज कपिलां यः प्रयच्छति ॥ पृथ्वी तेन भवेद्दत्ता
सशैलवनकानना ॥ ११६ ॥ ॥ उत्तानपाद उवाच ॥ ॥ यानियानि च दत्तानि शस्तानि जगतीपतेः ॥ तानि सर्वाणि देवेश कथयस्व प्रसादतः ॥
॥ ११७ ॥ ॥ ईश्वर उवाच ॥ ॥ तिलप्रदः प्रजामिष्टां दीपदश्चक्षुरुत्तमम् ॥ भूमिदः स्वर्गमाप्नोति दीर्घमायुर्हिरण्यदः ॥ ११८ ॥ गृहदो रोगरहि
तो रूप्यदो रूपवान्भवेत् ॥ वासोदश्चंद्रसालोक्यमर्कसायुज्यमश्वदः॥ ११९ ॥ वृषदस्तु श्रियं पुष्टां गोदाता च त्रिविष्टपम् ॥ यानशय्याप्रदो भार्यामै
श्वर्यमभयप्रदः ॥ १२० ॥ धान्यदः शाश्वतं सौख्यं ब्रह्मदो ब्रह्म शाश्वतम् ॥ वार्यन्नपृथिवीवासस्तिलकांचनसर्पिषाम् ॥ १२१ ॥ सर्वेषामेव दानानां
ब्रह्मदानं[1] विशिष्यते ॥ येनयेन हि भावेन यद्यद्दानं प्रयच्छति ॥ १२२ ॥ तेनतेन स भावेन प्राप्नोति प्रतिपूजितम्[2] दृष्ट्वा दानानि सर्वाणि राज्ञी
दत्तानि यानि च ॥ १२३ ॥ उवाच शबरो भार्यां यत्तच्छृणु नरेश्वर ॥ पुराणं पठितं भद्रे ब्राह्मणैर्वेदपारगैः ॥ १२४ ॥ श्रुतं च तन्मया सर्वं दानधर्म
फलं शुभम् ॥ पूर्वजन्मार्जितं पापं स्नानदानव्रतादिभिः ॥ १२५ ॥ शरीरं दुस्त्यजं मुक्त्वा लभते गतिमुत्तमाम् ॥ संसारसागराद्भीतः सत्यं भद्रे
वदामि ते ॥ १२६ ॥ अनेकानि च पापानि कृतानि बहुशो मया ॥ घातिता जंतवो भद्रे निर्दग्धाः पर्वताः सदा ॥ १२७ ॥ तेन पापेन
दग्धोऽहं दारिद्र्यं न निवर्त्तते ॥ तीर्थावगाहनं पूर्वं पापेन न कृतं मया ॥ १२८ ॥ तेनाऽहं दुःखितो भद्रे दारिद्र्यमनिवर्त्तकम् ॥ मातुर्गृहं प्रयाहि
त्वं त्यज स्नेहं ममोपरि ॥ नगशृंगं समारुह्य मोक्तुमिच्छाम्यहं तनुम् ॥१२९॥ ॥ शबर्युवाच ॥ मात्रा पित्रा न मे कार्यं नाऽपि स्वजनबांधवैः ॥
॥ ५७ ॥ या गतिस्तव जीवेश सा ममापि भविष्यति ॥ १३० ॥ न स्त्रीणामीदृशो धर्मो विना भर्त्रा स्वजीवितम् ॥ श्रूयंते बहवो दोषा धर्मशास्त्रेष्वनेकधा ॥२३१॥
॥१३१॥ पारणं कुरु भोजेंद्र व्रतं येन न नश्यति ॥ यत्तेऽभिवांछितं किंचिद्दिष्णवे कर्त्तुमर्हसि ॥१३२॥ भार्याया वचनं श्रुत्वा मुमुदेश बरस्ततः ॥

१ ब्रह्मदानम्—विद्यादानम्—इत्यर्थः । मनुस्मृतावपि—"सर्वेषामेव दानानां ब्रह्मदानं प्रशस्यते"—इत्युक्तम् । २ च प्राप्तोऽस्मि—इति शेषः ।

गृहीत्वा श्रीफलं शीघ्रं होमं कृत्वा यथाविधि ॥१२३॥ सर्वदेवान्नमस्कृत्य भुक्तोऽपि च तया सह ॥ चैत्र्यां तु विषुवं ज्ञात्वा तस्थौ तत्र दिनत्रयम्॥१२४॥ इति श्रीस्कांदे महापुराण एकाशीतिसाहस्र्यां संहितायां पञ्चम आवन्त्यखण्डे व्याधवाक्योपदेशकथनपूर्वकदानादिफलवर्णनंनाम षट्पंचाशत्तमोऽध्यायः ॥ ५६ ॥ ॥ छ ॥ ॥ ईश्वर उवाच ॥ ॥ भानुमती द्विजान्भोज्य बुभुजे भुक्तशेषतः ॥ भुक्त्वा सुसुखमास्थाय तदन्नं पारिणाम्य च ॥ १ ॥ त्रयोदश्यां ततो गत्वा मदनाख्यतिथौ तदा ॥ मार्कंडस्य ह्रदे स्नात्वाऽऽनर्च्य देवं गुहाशयम् ॥ २ ॥ कृतोपवासनियमा स्नापयित्वा महेश्वरम् ॥ पञ्चामृतसुगन्धेन धूपदीपनिवेदनैः ॥ ३ ॥ आर्चयद्विविधैः पुष्पैर्नैवेद्यैश्च सुशोभनैः ॥ क्षपाजागरणं कृत्वा श्रुत्वा पौराणिकीं कथाम् ॥ ४ ॥ नृत्यगीतैस्तथा स्तोत्रैर्दध्यौ देवं महेश्वरम् ॥ अन्नं विस्तारितं सर्वं देवस्याऽग्रे यथाविधि ॥ ५ ॥ चातुर्वर्ण्यसुताः सर्वे भोजिताः सपरिच्छदाः ॥ चतुर्दश्यां दिनं यावत्संपूज्य वृषभध्वजम् ॥ ६ ॥ शंखवादित्रभेरीभिः पटहध्वनिनादितम् ॥ क्षपाजागरणं कृत्वा प्रभूतजनसंकुलम् ॥ ७ ॥ नृत्यगीतैस्तथा स्तोत्रैः प्रेरिता सा निशा तदा ॥ प्रभाते भोजिता विप्राः पायसैर्मधुसर्पिषा ॥ ८ ॥ दत्त्वा दानानि विप्रेभ्यः शक्त्या विप्रानुसारतः[1] ॥ अर्चयित्वा महापुष्पैः सुगन्धैर्मदनेन च ॥ ९ ॥ विचित्रैः सूक्ष्मवस्त्रैश्च देवः संपूज्य वेष्टितः ॥ स्रग्दामलंबमानैश्च बहुदीपसमुज्ज्वलैः ॥ १० ॥ पक्वान्नैर्विविधैर्भक्ष्यैः सुवृत्तैर्मोदकादिभिः ॥ ततस्ते ब्राह्मणाः सर्व्वे वेदाध्ययनतत्पराः ॥ ११ ॥ तत्पर्व कीर्त्तयांचक्रुः पद्मकं नाम नामतः ॥ आदित्यस्य दिनं त्वद्य तिथिः पञ्चदशी तथा ॥ १२ ॥ त्वाष्ट्रमेव च नक्षत्रं संक्रांतिर्विषुवन्तथा ॥ व्यतीपातस्तथा योगः करण विष्टिरेव च ॥ १३ ॥ पद्मकंनाम पर्वैतदयनादिचतुर्गुणम् ॥ अत्र दत्तं हुतं जप्तं सर्वं भवति चाऽक्षयम् ॥ १४ ॥ ते द्विजा भानुमत्याऽथ शूलभेदं गताः सह ॥ ददृशुः शबरं कुण्डे भार्यया सह संस्थितम् ॥ १५ ॥ ऐशानीं स दिशं गत्वा पर्वते भृगुमूर्द्धनि ॥ पतितुं च समारूढो भार्यया सह पार्थिव॥ ॥ १६ ॥ ॥ भानुमत्युवाच ॥ ॥ तिष्ठतिष्ठ महासत्त्व शृणुष्व वचनं मम ॥ किमर्थं त्यजसि प्राणानद्यापि च युवा भवान् ॥ १७ ॥ कः सन्तापः क उद्वेगः किं दुःखं व्याधिरेव च ॥ शिशुः संदृश्यसेऽद्यापि कारणं कथ्यतामिदम् ॥ १८ ॥ ॥ शबर उवाच ॥ ॥ कारणं नास्ति मे किंचिन्न दुःखं किंचिदेव तु ॥ संसारभयभीतोऽहं नान्या बुद्धिः[2] प्रवर्त्तते ॥ १९ ॥ दुःखेन लभ्यते यस्मान्मानुष्यं जन्म भाग्यतः ॥ मानुष्यं जन्म चासाद्य यो न धर्मं समाचरेत् ॥ २० ॥ स गच्छेन्निरयं घोरमात्मदोषेण सुन्दरि ॥ तस्मात्पतितुमिच्छामि तीर्थेऽस्मिन्पापानाशने ॥ २१ ॥

१ विप्रानुसारतः—विप्राणां विद्वत्त्वाविद्वत्वादिविचारानुसारेण बहुद्रव्याल्पद्रव्यदानानि दत्त्वा—इत्यर्थः । २ चास्ति मे मतिः—इ०पा० ।

राज्युवाच ॥ अद्यापि वर्त्तते कालो धर्मस्योपार्जने तव ॥ कृतापकृतकर्मा वै व्रतदानैर्विशुद्ध्यति ॥ २२ ॥ अहं दास्यामि धान्यं वा
वासांसि द्रविणं बहु ॥ नित्यमाचर धर्मं त्वं ध्यायन्नित्यं महेश्वरम् ॥ २३ ॥ ॥ शबर उवाच ॥ नैवाहं कामये वित्तं न धान्यं वस्त्रमेव च ॥
यो यस्यैवान्नमश्नाति स तस्याऽश्नाति किल्बिषम् ॥ २४ ॥ ॥ राज्युवाच ॥ ॥ कंदमूलफलाहारो भ्रमित्वा भैक्ष्यमुत्तमम् ॥ अवगाह्य सुतीर्थानि
सर्वपापैः प्रमुच्यते ॥ २५ ॥ ततो विमुक्तपापस्तु यत्किंचित्कुरुते शुचिः ॥ कर्मणा तेन पूतस्त्वं सद्गतिं प्राप्स्यसि ध्रुवम् ॥ २६ ॥ ॥ शबर
उवाच ॥ ॥ अन्नमद्य मया त्यक्तं प्राणेभ्योऽपि महत्तरम् ॥ सत्यं न लोपये देवि निश्चिताऽत्र मतिर्मम ॥ २७ ॥ प्रसादः क्रियतां देवि क्षमस्वा
ऽद्य जनैः सह ॥ अर्धोत्तरीयवस्त्रेण संयम्यात्मानमुद्यतः ॥ २८ ॥ भार्यया सहितो व्याधो हरिं ध्यात्वा पपात ह ॥ नगार्द्धात्पतितो यावद्गतजीवो
नराधिप ॥२९॥ चूर्णीभूतौ हि तौ दृष्ट्वा कुंडस्योपरि भूमिप ॥ त्रिमुहूर्त्ते गते काले शबरो भार्यया सह ॥३० ॥ दिव्यं विमानमारूढो गतश्चानुत्तमां
गतिम् ॥३१॥ इति श्रीस्कांदे महापुराण एकाशीतिसाहस्र्यां संहितायां पञ्चम आवंत्यखण्डे रेवाखण्डे व्याधस्वर्गगमनवर्णनंनाम सप्तपंचाशत्तमो
ऽध्यायः ॥ ५७ ॥ ॥ छ ॥ ॥ उत्तानपाद उवाच ॥ ॥ अथातो देवदेवेश भानुमत्यकरोच्च किम् ॥ एष मे संशयो देव कथयस्व प्रसादतः
॥ १ ॥ ॥ ईश्वर उवाच ॥ ॥ चिंतयित्वा मुहूर्त्तं सा गता कुंडस्य सन्निधौ ॥ दृष्ट्वा कुंडस्य माहात्म्यं[1] राज्ञी हर्षेण पूरिता ॥ २ ॥ विप्रान्बहू
न्समाहूय पूजयामास तत्क्षणात् ॥ दत्त्वा तु विधिवद्दानं ब्राह्मणेभ्यो नृपात्मज ॥ ३ ॥ निश्चयं परमं कृत्वा स्थिता शांतेन चेतसा ॥
ततः संपूज्य विधिवत्पितृन्देवान्नराधिप ॥ ४ ॥ क्षपयित्वा पक्षमेकं मधुमासस्य सा स्थिता ॥ अमावास्यां[2] ततो राज्ञी गता पर्वत
सन्निधौ ॥ ५ ॥ नगशृंगं समारुह्य कृत्वा मुकुलितौ करौ ॥ विज्ञाप्य ब्राह्मणान्सर्वानिदं वचनमब्रवीत् ॥ ६ ॥ मम माता पिता भ्राता ये
चान्ये सखिबांधवाः ॥ क्षमापयित्वा सर्वांस्तान्वचनं मम कथ्यताम् ॥ ७ ॥ त्वत्पुत्री शूलभेदे तु तपः कृत्वा स्वशक्तितः ॥ विसृज्य चैव
सात्मानं तस्मिंस्तीर्थे दिवं ययौ॥ ८ ॥ ॥ ब्राह्मणा[3] ऊचुः ॥ ॥ संदेशं कथयिष्यामस्त्वयोक्तं शोभनव्रते ॥ मातापितृभ्यां सुश्रोणि मा
तेऽभूदत्र संशयः ॥ ९ ॥ ततो विसृज्य ताँल्लोकान्स्थिताः पर्वतमूर्द्धनि ॥ अर्धोत्तरीयवस्त्रेण गाढं बद्ध्वा पुनःपुनः ॥ १० ॥ ततश्चिक्षेप साऽऽत्मान
मेकचित्ता नराधिप ॥ नगार्द्धे पतिता यावत्तावद्दृष्टाः सुरांगनाः ॥ ११ ॥ भोभो वत्से महाभागे भानुमत्यतितापसि ॥ दिव्यं विमानमारुह्य कैलासं

१ इत्युक्त्वा—इति शेषः । २ 'अमावस्यात्वमावस्या अमावासी त्वमावसी'—इति कोशादमावासीशब्दः—अमावास्यादिने—इत्यर्थः । ३ दिव्या ऊचुः—इ० पा० ।

प्रति गम्यताम् ॥ १२ ॥ ततः सा पश्यतां तेषां जनानां त्रिदिवं गता ॥ १३ ॥ ॥ मार्कंडेय उवाच ॥ ॥ इति ते कथितः सर्वः शूलभेदस्य विस्तरः ॥ यः श्रुतः शंकरात्पूर्वमृषिदेवसमागमे ॥ १४ ॥ य इदं पठते भक्त्या तीर्थे देवकुलेऽपि वा ॥ स मुच्यते महापापादपि जन्मशतार्जितात् ॥ ॥ १५ ॥ ब्रह्महा च सुरापी च स्तेयी च गुरुतल्पगः ॥ गोघाती स्त्रीविघाती च देवब्रह्मस्वहारकः ॥ १६ ॥ स्वामिद्रोही मित्रघाती तथा विश्वास घातकः ॥ परन्यासापहारी च परनिक्षेपलोपकः ॥ १७ ॥ रसभेदी तुलाभेदी तथा वार्द्धुषिकस्तु यः ॥ यः कन्याविघ्नकर्त्ता च तथा विक्रयका रकः ॥ १८ ॥ परभार्या भ्रातृभार्या गौः स्नुषा कन्यका तथा ॥ अभिगामी[1] परद्वेषी तथा धर्मप्रदूषकः ॥१९॥ मुच्यंते सर्व एवैते शूलभेदप्रभावतः ॥ ॥ २० ॥ य इदं श्रावयेच्छ्राद्धे विप्राणां भुंजतां नृप ॥ मुदं प्रयांति संहृष्टाः पितरस्तस्य सर्वशः ॥ २१ ॥ यश्चेदं शृणुयाद्भक्त्या पठ्यमानं नरो वशी ॥ स मुक्तः सर्वपापेभ्यः सर्वकल्याणभाग्भवेत् ॥ २२ ॥ इदं यशस्यमायुष्यमिदं पावनमुत्तमम् ॥ पठतां शृण्वतां नृणामायुःकीर्त्तिविवर्द्धनम् ॥ ॥ २३ ॥ इति कथितमिदं ते शूलभेदस्य पुण्यं महिमं[2] न हि मनुष्यैः श्रूयते यत्सपापैः ॥ मदनरिपुतटिन्या याम्यकूलस्थितस्य प्रबलदुरितकंदो च्छेदकुद्दालकल्पम् ॥ २४ ॥ इति श्रीस्कांदे महापुराण एकाशीतिसाहस्र्यां संहितायां पञ्चम आवंत्यखंडे रेवाखण्डे शूलभेदतीर्थमाहात्म्यवर्णनं नामाष्टपंचाशत्तमोऽध्यायः ॥ ५८ ॥ ॥ छ ॥ शूलभेदमाहात्म्यं समाप्तम् ॥ ॥ श्रीमार्कंडेय उवाच[3] ॥ ॥ ततः पुष्करिणीं गच्छेत्सर्वपाप प्रणाशिनीम् ॥ श्रुते यस्याः प्रभावे तु सर्वपापैः प्रमुच्यते ॥ १ ॥ रेवाया उत्तरे कूले तीर्थं परमशोभनम् ॥ यत्राऽस्ते सर्वदा देवो वेदमूर्त्तिर्दिवाकरः ॥ २ ॥ कुरुक्षेत्रं यथा पुण्यं सार्वकामिकमुत्तमम् ॥ इदं तीर्थं तथा पुण्यं सर्वकामफलप्रदम् ॥ ३ ॥ कुरुक्षेत्रे यथा वृद्धिर्दानस्य जगतीपते ॥ पुष्क रिण्यां तथा दानं वर्द्धते नाऽत्र संशयः ॥ ४ ॥ यवमेकं तु यो दद्यात्सौवर्णं मस्तके नृप ॥ पुष्करिण्यां तथा स्थानं यथा स्थानं नरे स्मृतम् ॥ ५ ॥ सूर्यग्रहे तु यः स्नात्वा दद्याद्दानं यथाविधि ॥ हस्त्यश्वरथरत्नादि गृहं गाश्च युगंधरान् ॥ ६ ॥ सुवर्णं रजतं वाऽपि ब्राह्मणेभ्यो ददाति यः ॥ त्रयोदश दिनं यावत्त्रयोदशगुणं भवेत् ॥ ७ ॥ तिलमिश्रेण तोयेन तर्प्ययेत्पितृदेवताः ॥ द्वादशाब्दे भवेत्प्रीतिस्तत्र तीर्थे महीपते ॥ ८ ॥ यस्तत्र कुरुते श्राद्धं पायसैर्मधुसर्पिषा ॥ श्राद्धदो लभते स्वर्गं पितॄणां दत्तमक्षयम् ॥ ९ ॥ अक्षतैर्बदरैर्बिल्वैरिंगुदैर्वा तिलैः सह ॥ अक्षयं फलमाप्नोति तस्मिंस्तीर्थे न संशयः ॥ १० ॥ तत्र स्नात्वा तु यो देवं पूजयेच्च दिवाकरम् ॥ आदित्यहृदयं जप्त्वा पुनरादित्यमर्चयेत् ॥ स गच्छेत्परमं लोकं त्रिदशैरपि वंदि

---

१ अभिगामी—एतासु—इति शेषः । एतासु—परभार्यादिषु—अभिगामी मैथुनकृत् इत्यर्थः । २ महिम—नपुंसकत्वमार्षम् महिम—माहात्म्यम् । ३ श्रीभगवानुवाच—इ० पा० ।

तम् ॥ ११ ॥ ऋचमेकां जपेद्यस्तु यजुर्वा साम एव च ॥ स समग्रस्य वेदस्य फलमाप्नोति वै नृप ॥ १२ ॥ यस्त्र्यक्षरं जपेन्मंत्रं ध्यायमानो दिवाक
रम् ॥ आदित्यहृदयं जप्त्वा मुच्यते सर्वपातकैः ॥ १३ ॥ यस्तत्र विधिवत्प्राणांस्त्यजते नृपसत्तम ॥ स गच्छेत्परमं स्थानं यत्र देवो दिवाकरः ॥
॥ १४ ॥ इति श्रीस्कांदे महापुराण एकाशीतिसाहस्र्यांसंहितायां पञ्चम आवंत्यखंडे रेवाखंडे पुष्करिण्यामादित्यतीर्थमाहात्म्यवर्णनंनामैकोन
षष्टितमोऽध्यायः ॥ ५९ ॥ ॥ छ ॥ ॥ श्रीमार्कंडेय उवाच ॥ ॥ भूयोप्यहं प्रवक्ष्यामि आदित्येश्वरमुत्तमम् ॥ सर्वदुःखहरं पार्थ सर्ववि
घ्नविनाशनम् ॥ १ ॥ आयुःश्रीवर्द्धनं नित्यं पुत्रदं स्वर्गदं शिवम् ॥ यस्य तीर्थस्य चाऽन्यानि तीर्थानि कुरुनंदन ॥ २ ॥ नालभंत श्रियं नाके
मर्त्ये पातालगोचरे ॥ कुरुक्षेत्रं गया गंगा नैमिषं पुष्करं तथा ॥ ३ ॥ वाराणसी च केदारं प्रयागं रुद्रनंदनम् ॥ महाकालं सह
स्राक्षं शुक्लतीर्थं नृपोत्तम ॥ ४ ॥ रवितीर्थस्य सर्वाणि कलां नार्हंति षोडशीम् ॥ रवितीर्थे हि यद्वृत्तं तच्छृणुष्व नृपोत्तम ॥ ५ ॥
स्नेहात्ते कथयिष्यामि वार्द्धकेनातिपीडितः ॥ शृण्वंतु ऋषयः सर्वे तपोनिष्ठा महौजसः ॥ ६ ॥ श्रुतं मे रुद्रसान्निध्ये नंदिस्कंदगणैः सह ॥
पार्वत्या पृष्टः शंभुश्च रवितीर्थस्य यत्फलम् ॥ ७ ॥ शंभुना च यदाऽख्यातं गिरिजायाः ससंभ्रमम् ॥ तत्सर्वमेकचित्तेन रुद्रोद्गीतं श्रुतं मया ॥
॥ ८ ॥तत्तेऽहं संप्रवक्ष्यामि शृणु यत्नेन पांडव॥दुर्भिक्षोपहता विप्रा नर्मदां तु समाश्रिताः॥९॥उद्दालको वशिष्ठश्च मांडव्यो गौतमस्तथा ॥ याज्ञव
ल्क्योऽथ गर्गश्च शांडिल्यो गालवस्तथा ॥ १० ॥ नाचिकेतो विभांडश्च वालखिल्यादयस्तथा ॥ शातातपश्च शंखश्च जैमिनिर्गोभिलस्तथा ॥ ११ ॥ जैगी
षव्यः शतानीकः सर्व एव समागताः ॥ तीर्थयात्रा कृता तैस्तु नर्मदायाः समंततः ॥ १२ ॥ आदित्येश्वरमायाताः प्रसंगादृषिपुंगवाः ॥ वृक्षैः
संच्छादितं शुभ्रं धवतिन्दुकपाटलैः ॥ १३ ॥ जंबीरैरर्जुनैः कुब्जैः शमीकेसरकिंशुकैः ॥ तस्मिंस्तीर्थे महापुण्ये सुगंधिकुसुमाकुले ॥ १४ ॥ पुन्ना
गनालिकेरैश्च खदिरैः कल्पपादपैः ॥ अनेकश्वापदाकीर्णं मृगमार्जारसंकुलम् ॥ १५ ॥ ऋक्षहस्तिसमाकीर्णं चित्रकैश्चोपशोभितम् ॥ प्रविष्टा
ऋषयः सर्वे वने पुष्पसमाकुले ॥ १६ ॥ वनांते च स्त्रियो दृष्टा रक्ता रक्तांबरान्विताः ॥ रक्तमाल्यानुशोभाढ्या रक्तचन्दनचर्चिताः ॥ १७ ॥
रक्ताभरणसंयुक्ताः पाशहस्ता भयावहाः ॥ तासां समीपगा दृष्टाः कृष्णजीमूतसन्निभाः ॥ १८ ॥ महाकाया भीमवक्त्राः पाशहस्ता भयावहाः ॥
अनावृष्ट्युपमा दृष्टा आतुराः पिंगलोचनाः ॥ १९ ॥ दीर्घजिह्वा करालास्या तीक्ष्णदंष्ट्रा दुरासदा ॥ वृद्धा नारी कुरुश्रेष्ठ दृष्टाऽन्या ऋषिपुंगवैः ॥
॥ २० ॥ ततः समीपगा वृद्धा तस्य वृन्दस्य भारत ॥ स्वाध्यायनिरता विप्रा दृष्टास्तैः पापकर्मभिः ॥ २१ ॥ ऊचुस्ते तु सक्रुद्धेन ब्राह्मणांस्त

पसि स्थितान् ॥ अस्माकं स्वामिनः सर्वे तिष्ठन्ते तीर्थमध्यतः ॥ ते प्रस्थाप्या महाभागाः सर्वथैव त्वरान्विताः ॥ २२ ॥ तच्छ्रुत्वा वचनं तेषां सर्वे चैव त्वरान्विताः ॥ जग्मुस्ते नर्मदाकक्षं दृष्ट्वा रेवां द्विजोत्तमाः ॥ २३ ॥ ततः केचित्स्तुवंत्यन्ये जय देवि नमोऽस्तु ते ॥ २४ ॥ नमोस्तु ते सिद्धगणैर्निषेविते नमोऽस्तु ते सर्वपवित्रमंगले ॥ नमोऽस्तु ते विप्रसहस्रसेविते नमोऽस्तु रुद्रांगसमुद्भवे वरे ॥ २५ ॥ नमोस्तु ते सर्वपवित्रपावने नमोऽस्तु ते देवि वरप्रदे शिवे ॥ नमामि ते शीतजले सुखप्रदे सरिद्वरे पापहरे विचित्रिते ॥ २६ ॥ अनेकभूतौघसुसेवितांगे गन्धर्वयक्षोरगपावितांगे ॥ महागजौघैर्महिषैर्वराहैरापीयसे तोयमहोर्मिमाले ॥ २७ ॥ नमामि ते सर्ववरे सुखप्रदे विमोचयास्मानघपाशबद्धान् ॥ २८ ॥ भ्रमन्ति तावन्नरकेषु मर्त्या यावत्तवांभो नहि संश्रयन्ति ॥ स्पृष्टं करैश्चन्द्रमसो रवेश्चेत्तद्देवि दद्यात्परमं पदं तु ॥ २९ ॥ अनेकसंसारभयार्दितानां पापैरनेकैरभिवेष्टितानाम् ॥ गतिस्त्वमंभोजसमानवक्त्रे द्वन्द्वैरनेकैरभिसंवृतानाम् ॥ ३० ॥ नद्यश्च पूता विमला भवन्ति त्वां देवि संप्राप्य न संशयोऽत्र ॥ दुःखातुराणामभयं ददासि शिष्टैरनेकैरभिपूजिताऽसि ॥ ३१ ॥ विण्मूत्रदेहाश्च निमग्नदेहा भ्रमन्ति तावन्नरकेषु मर्त्याः ॥ महाबलध्वस्ततरंगभंगं जलं न यावत्तव संस्पृशंति ॥ ३२ ॥ म्लेच्छाः पुलिंदास्त्वथ यातुधानाः पिबन्ति येंऽभस्तव देवि पुण्यम् ॥ तेऽपि प्रमुच्यन्ति भयाच्च घोरात्किमत्र विप्रा भवपाशभीताः ॥ ३३ ॥ सरांसि नद्यः क्षयमभ्युपेता घोरे युगेऽस्मिन्कलिनावसृष्टे ॥ त्वं भ्राजसे देवि जलौघपूर्णा दिवीव नक्षत्रपथे च गंगा ॥ ३४ ॥ तव प्रासादाद्वरदे विशिष्टे कालं यथेमं परिपालयित्वा ॥ यास्याम मोक्षं तव सुप्रसादाद्धयं यथा त्वं कुरु नः प्रसादम् ॥ ३५ ॥ त्वामाश्रिता ये शरणं गताश्च गतिस्त्वमंबेव पितेव पुत्रान् ॥ त्वत्पालिता यावदिमं सुघोरं कालं त्वनावृष्टिहतं क्षिपामः ॥ ३६ ॥ एवं स्तुता तदा देवी नर्मदा सरितां वरा ॥ प्रत्यक्षा सा परा मूर्तिर्ब्राह्मणानां युधिष्ठिर ॥ ३७ ॥ ॥ श्रीमार्कंडेय उवाच ॥ ॥ पठंति ये स्तोत्रमिदं नरेन्द्र शृण्वंति भक्त्या परया प्रशांताः ॥ ते यांति रुद्रं वृषसंयुतेंन यानेन दिव्यांबरभूषितांगाः ॥ ३८ ॥ ये स्तोत्रमेतत्सततं जपन्तिं स्नात्वा च तोयेन तु नर्मदायाः ॥ तेभ्योंतकाले सरिदुत्तमेयं गतिं विशुद्धामचिराद्ददाति ॥ ३९ ॥ प्रातः समुत्थाय तथा शयानो यः कीर्तयेतानुदिनं स्तवेन्द्रम् ॥ देहक्षयं स्वे सलिले ददाति समाश्रयं तस्य महानुभाव ॥ ४० ॥ पापैर्विमुक्ता दिवि मोदमानाः संभोगिनश्चैव तु नान्यथा च ॥ ४१ ॥ प्रसन्ना नर्मदा देवी स्तोत्रेणाऽनेन भारत ॥ जलेनाप्यायितान्विप्रान्दक्षिणापथवाहिनी ॥ ४२ ॥ अमृतत्वं तु वो दद्मि योगिभिर्यन्न गम्यते ॥ दुर्लभं यत्सुरैः सर्वैर्मत्प्रसादाल्लभिष्य‍थ ॥ ४३ ॥ इति ते ब्राह्मणा राजल्लँब्ध्वा वरमनुत्तमम् ॥ गमिष्यंतः प्रीतचित्ता ददृशुश्चित्रमद्भुतम् ॥ ४४ ॥ ॥ श्रीमार्कंडेय

उवाच ॥ ॥ दृष्टास्तैः पुरुषाः पार्थ नर्मदातटसंस्थिताः ॥ स्नानदेवार्चनासक्ताः पंच एव महाबलाः ॥ ४५ ॥ ते दृष्टा ब्राह्मणैः सर्व्वैर्वेदवेदांग
पारगैः ॥ संपृष्टास्तैर्महाराज यथा तदवधारय ॥ ४६ ॥ ॥ विप्रा ऊचुः ॥ ॥ वनांते स्त्रीयुगं दृष्ट्वा महारौद्रं भयावहम् ॥ वृद्धाश्च पुरुषास्तत्र
पाशहस्ता भयावहाः ॥ ४७ ॥ दुर्धर्षा दुर्न्निरीक्ष्याश्च इतश्चेतश्च चंचलाः ॥ व्याहरंतः शुभां वाचं न तत्र गतिरस्ति वै ॥ ४८ ॥ अपरस्परयोः सर्वे
निरीक्षंतः पुनःपुनः ॥ तैस्तु यद्वचनं प्रोक्तं तत्सर्वं कथ्यतामिति ॥४९ ॥ अस्माकं पुरुषाः पंच तिष्ठंति तत्र सत्तमाः ॥ ते प्रस्थाप्या महाभागाः सर्व
थैव त्वरान्विताः॥५०॥अथ ते पुरुषाः पंच श्रुत्वा वाक्यमिदं शुभम् ॥परस्परं निरीक्षंतो वदन्ति च पुनःपुनः॥५१॥क्व ते कस्य कुतो याताः किमुक्तं तै
र्भयावहैः ॥ ५२ ॥ पुरुषा ऊचुः ॥ तीर्थावगाहनं सर्वैः पूर्वदक्षिणपश्चिमैः ॥ उत्तरैश्च कृतं भक्त्या न पापं तैर्व्यपोहितम् ॥ ५३ ॥ निष्पापाश्चाथ
संजातास्तीर्थस्याऽस्य प्रभावतः ॥ शृण्वंतु ऋषयः सर्वे वह्निकालोपमा द्विजाः ॥ ५४ ॥ पातकानि च घोराणि यान्यचिंत्यानि देहिनाम् ॥
पापिष्ठेन तु चैकेन गुरुदारा निषेविता ॥५५॥ हृतं चाऽन्येन मित्रस्वं सुवर्णं च धनं तथा ॥ ब्रह्महत्या महारौद्रा कृता चाऽन्येन पातकम् ॥५६॥
सुरापानं तु चान्यस्य संजातं चाप्यकामतः ॥ गोवध्या चाप्यकामेन कृता चैकेन पापिना ॥ ५७ ॥ अकामतोऽपि सर्वेषां पातकानि नराधिप ॥
ब्राह्मणानां तु ते श्रुत्वा वाक्यं तद्विस्मयान्विताः ॥ ५८ ॥ सद्य एव तदा जाताः पापिष्ठा गतकल्मषाः ॥ तीर्थस्याऽस्य प्रभावेन नर्मदायाः प्रभा
वतः ॥ ५९ ॥ न क्वचित्पातकानां तु प्रवेशश्चाऽत्र जायते ॥ एवं संचित्य ते सर्वे पापिष्ठाश्च परस्परम् ॥ ६० ॥ चित्रभानुः स्मृतस्तैस्तु विचिंत्य
हृदये हरिम् ॥ स्नात्वा रेवाजले पुण्ये तर्पिताः पितृदेवताः ॥ ६१ ॥ नत्वा तु भास्करं देवं हृदि ध्यात्वा जनार्द्दनम् ॥ प्रदक्षिणं तु तं भक्त्या
ज्वलंतं जातवेदसम् ॥६२॥ पतिताः पांडवश्रेष्ठ पापोद्विग्ना महीपते ॥ सात्त्विकीं वासनां कृत्वा त्यक्त्वा रजस्तमस्तथा ॥ ६३ ॥ हतं तैः पावके
सर्व्वं रेवाया उत्तरे तटे ॥ विमानस्थास्तदा दृष्टा ब्राह्मणैस्ते युधिष्ठिर ॥ ६४ ॥ आश्चर्यमतुलं दृष्टमृषिभिर्नर्मदातटे ॥ तदाप्रभृति ते सर्वे रागद्वेष
विवर्जिताः ॥ ६५ ॥ रवितीर्थं द्विजा हृष्टाः सेवन्ते मोक्षकांक्षया ॥ तीर्थस्याऽस्य च यत्पुण्यं तच्छृणुष्व नराधिप ॥ ६६ ॥ पीडितो वृद्धभावेन
॥ ६० ॥ भक्त्या प्रीतो नरेश्वर ॥ उद्देशं कथयिष्यामि द्विक्रोशाभ्यंतरे स्थितः ॥ ६७ ॥ कुरुक्षेत्रं यथा पुण्यं रवितीर्थं श्रुतं मया ॥ ईश्वरेण पुरा ख्यातं ॥२३४॥
षण्मुखस्य नराधिप ॥ ६८ ॥ श्रुतं रुद्राच्च तैः सर्व्वैरहं तत्र समीपगः ॥ ॥ ईश्वर उवाच ॥ ॥ मार्त्तंडग्रहणे प्राप्ते ये व्रजंति षडानन ॥
रवितीर्थे कुरुक्षेत्रे तुल्यमेतत्फलं लभेत् ॥ ६९ ॥ स्नाने दाने तथा जप्ये होमे चैव विशेषतः॥ कुरुक्षेत्रे समं पुण्यं नाऽत्र कार्या विचारणा ॥७०॥

ग्रामे वा यदि वाऽरण्ये पुण्या सर्वत्र नर्मदा ॥ रवितीर्थे विशेषेण रेवा पुण्यफलप्रदा ॥ ७१ ॥ षष्ठ्यां सूर्यदिने भक्त्या व्यतीपाते च वै धृतौ ॥ संक्रांतौ ग्रहणेऽमायां ये व्रजंति जितेंद्रियाः ॥ ७२ ॥ कामक्रोधैर्विमुक्ताश्च रागद्वेषैस्तथैव च ॥ उपोष्य परया भक्त्या देवस्याऽग्रे नराधिप ॥ ॥ ७३ ॥ रात्रौ जागरणं कृत्वा दीपं देवस्य बोधयेत् ॥ कथां वै वैष्णवीं पार्थ वेदाभ्यसनमेव च ॥ ७४ ॥ ऋग्वेदं वा यजुर्वेदं सामवेदमथर्वणम् ॥ ऋचमेकां जपेद्यस्तु स वेदफलमाप्नुयात् ॥ ७५ ॥ गायत्र्या च चतुर्वेदफलमाप्नोति मानवः ॥ प्रभाते पूजयेद्विप्रानन्नदानहिरण्यतः ॥ ७६ ॥ भूमिदानेन वस्त्रेण अन्नदानेन शक्तितः ॥ छत्रोपानहशय्यादिगृहदानेन पाण्डव ॥ ७७ ॥ ग्रामधूर्वहदानेन गजकन्याहयेन च ॥ विद्याशकटदानेन सर्वेषामभयं भवेत् ॥ ७८ ॥ शत्रुश्च मित्रतां याति विषं चैवाऽमृतं भवेत् ॥ ग्रहा भवंति सुप्रीताः प्रीतस्तस्य दिवाकरः ॥ ७९ ॥ एतत्ते सर्वमाख्यातं रवितीर्थफलं नृप ॥ ये शृण्वंति नरा भक्त्या रवितीर्थफलं शुभम् ॥८०॥ तेऽपि पापविनिर्मुक्ता रविलोके वसंति हि ॥ गोदानेन च यत्पुण्यं यत्पुण्यं भृगुदर्शने ॥ ८१ ॥ केदार उदकं पीत्वा तत्पुण्यं जायते नृणाम् ॥ अब्दमश्वत्थसेवायां तिलपात्रप्रदो भवेत् ॥ ८२ ॥ तत्फलं समवाप्नोति आदित्येश्वरकीर्त्तनात् ॥ श्रुते यस्य प्रभावे न[1] जायते यन्नृपात्मज ॥ ८३ ॥ तत्सर्वं कथयिष्यामि भक्त्या तव महीपते ॥ पापानि च प्रलीयन्ते भिन्नपात्रे यथा जलम् ॥ ८४ ॥ तीर्थस्याऽभिमुखो नित्यं जायते नाऽत्र संशयः ॥ गुह्याद्गुह्यतरं तीर्थं कथितं तव पांडव ॥ ८५ पापिष्ठानां कृतघ्नानां स्वामिमित्रावघातिनाम् ॥ तीर्थाख्यानं शुभं तेषां गोपितव्यं सदा बुधैः ॥ ८६ ॥ इति श्रीस्कांदे महापुराण एकाशीतिसाहस्र्यां संहितायां पंचम आवन्त्यखण्डे रेवाखण्डे आदित्येश्वरतीर्थमाहात्म्यवर्णनंनाम षष्टितमोऽध्यायः ॥६०॥ ॥ छ ॥ ॥ श्रीमार्कंडेय उवाच ॥ ॥ ततो गच्छेत्परं पुण्यं नर्मदादक्षिणे तटे ॥ शक्रतीर्थं सुविख्यातमशेषाघविनाशनम् ॥ १ ॥ पुरा शक्रेण तत्रैव तपो वै दुरतिक्रमम् ॥ प्रारब्धं परया भक्त्या देवं प्रति महेश्वरम् ॥ २ ॥ ततः संतोषितो देव उमापतिर्नराधिप ॥ देवेंद्रत्वं वरं राज्यं दानवानां वधं ददौ ॥ ३ ॥ लब्धं शक्रेण नृपते नर्मदातीर्थभावतः॥ ततः पुण्यतमं तीर्थं संजातं वसुधातले॥४॥ कार्त्तिकस्य तु मासस्य कृष्णपक्षे त्रयोदशीम् ॥ उपोष्य वै नरो भक्त्या सर्वपापैः प्रमुच्यते ॥५॥ दुःस्वप्नसंभवैः पापैर्दुर्निमित्तसमुद्भवैः॥ ग्रहशाकिनिसंभूतैर्मुच्यते पांडुनंदन ॥६॥ शक्रेश्वरं नृपश्रेष्ठ ये प्रपश्यंति भक्तितः॥ तेषां जन्मकृतं पापं नश्यते नाऽत्र संशयः ॥७॥ अगम्यागमने चैव अवाह्ये चैव वाहिते ॥ स्वामिमित्रनिघाते यन्नश्यते नाऽत्र संशयः ॥ ८ ॥ गोप्रदानं

[1] न जायते–मुक्तो भवति–इत्यर्थः ।

प्रकर्तव्यं शुभं ब्राह्मणपुंगवे ॥ धुर्यं वा दापयेत्तस्मिन्सर्वांगरुचिरं नृप ॥ ९ ॥ दातव्यं परया भक्त्या स्वर्गे वासमभीप्सता ॥ एतत्ते सर्वमाख्यातं
शक्रेश्वरफलं नृप ॥१०॥ इति श्रीस्कांदे महापुराण एकाशीतिसाहस्र्यां संहितायां पंचम आवन्त्यखण्डे रेवाखण्डे शक्रेश्वरतीर्थमाहात्म्यवर्णनंनामैक
षष्टितमोऽध्यायः ॥ ६१ ॥ ॥ छ ॥ ॥ श्रीमार्कंडेय उवाच ॥ ॥ ततो गच्छेत्तु राजेंद्र करोडीश्वरमुत्तमम् ॥ यत्र वै निहतास्तात दानवाः
सपदानुगाः ॥ १ ॥ इन्द्रादिदेवैः संहृष्टैः सततं जयबुद्धिभिः ॥ तेषां ये पुत्रपौत्राश्च पूर्ववैरमनुस्मरम् ॥ २ ॥ क्रुद्धैर्देवसमूहैश्च दानवा निहता रणे ॥
तेषां शिरांसि संगृह्य सर्वे देवाः सवासवाः ॥ ३ ॥ निक्षिप्य नर्मदातोये बंधुभावमनुस्मरम् ॥ तत्र स्नात्वा सुराः सर्वे स्थापयित्वा उमापतिम् ॥४॥
इन्द्रेण सहिताः सर्वेऽपूजयँल्लोकसिद्धये ॥ हृष्टचित्ताः सुराः सर्वे जग्मुराकाशमंडलम् ॥ ५ ॥ दानवानां महाभाग सूदिता कोटिरुत्तमा ॥
तदाप्रभृति तत्तीर्थं करोडीति महीतले ॥ ६ ॥ विख्यातं तु तदा लोके पापघ्नं पांडुनंदन ॥ अष्टम्यां च चतुर्दश्यामुभौ पक्षौ च भक्तितः ॥
उपोष्य शूलिनश्चाग्रे रात्रौ कुर्वीत जागरम् ॥ ७ ॥ सत्कथापाठसंयुक्तो वेदाध्ययनसंयुतः ॥ प्रभाते विमले प्राप्ते पूजयेत्त्रिदशेश्वरम् ॥ ८ ॥
पंचामृतेन संस्नाप्य श्रीखण्डेन च गुंठयेत् ॥ शस्तैः पल्लवपुष्पैश्च पूजयेत्तु प्रयत्नतः ॥ ९ ॥ बहुरूपं जपन्मंत्रं दक्षिणाशां व्यवस्थितः ॥ यथोक्तेन
विधानेन नाभिमात्रे जले क्षिपेत् ॥ १० ॥ तिलांजलिं तु प्रेताय दक्षिणाशामुपस्थितः ॥ श्राद्धं तत्रैव विप्राय कारयेद्विजितेंद्रियः ॥ ११ ॥
विषमैरग्रजातैश्च वेदाभ्यसनतत्परैः ॥ गोहिरण्येन संपूज्य तांबूलैर्भोजनैस्तथा ॥ १२ ॥ भूषणैः पादुकाभिश्च ब्राह्मणान्पांडुनंदन ॥ भवेत्कोटिगुणं
तस्य नात्र कार्या विचारणा ॥ १३ ॥ तस्मिंस्तीर्थे तु यः कश्चित्त्यजेद्देहं विधानतः ॥ तस्य भवति यत्पुण्यं तच्छृणुष्व नराधिप ॥ १४ ॥
यावदस्थीनि तिष्ठंति मर्त्यस्य नर्मदाजले ॥ तावद्वसति धर्मात्मा शिवलोके सुदुर्लभे ॥ १५ ॥ ततः कालाच्च्युतस्तस्मादिह मानुषतां गतः ॥
कोटीधनपतिः श्रीमाञ्जायते राजपूजितः ॥ १६ ॥ सर्वधर्मसमायुक्तो मेधावी बीजपुत्रकः ॥ विख्यातो वसुधापृष्ठे दीर्घायुर्मानवो भवेत् ॥ १७ ॥
पुनः स्मरति तत्तीर्थं तत्र गत्वा नृपोत्तम ॥ करोडेश्वरमभ्यर्च्य प्राप्नोति परमां गतिम् ॥ १८ ॥ इन्द्रचन्द्रयमै रुद्रैरादित्यैर्वसुभिस्तथा ॥ विश्वेदेवै
॥ ६१ ॥ स्तथा सर्वैः स्थापितस्त्रिदशेश्वरः ॥ १९ ॥ रेवाया उत्तरे कूले लोकानां हितकाम्यया ॥ मानवो भक्तिसंयुक्तः प्रासादं कारयेत्तु यः ॥ २० ॥ ॥२१ ॥

१ अनुस्मरम्–अनुस्मृत्यानुस्मृत्य–इत्यर्थः दीर्घाभाव आर्षः । २ दीर्घाभाव आर्षः ।

तस्मिंस्तीर्थे नरश्रेष्ठ सद्गतिं समवाप्नुयात् ॥ न्यायोपात्तधनेनैव दारुपाषाणकेष्टकैः ॥ २१ ॥ ब्राह्मणः क्षत्रियैर्वैश्यैः शूद्रैः स्त्रीभिश्च शक्तितः ॥ तेपि यांति नरा लोके शांकरे सुरपूजिते ॥ २२ ॥ यः शृणोति सदा भक्त्या माहात्म्यं तीर्थजं नृप ॥ तस्य पापं प्रणश्येत षण्मासाभ्यंतरं च यत ॥ २३ ॥ इति श्रीस्कांदे महापुराण एकाशीतिसाहस्र्यां संहितायां पञ्चम आवन्त्यखण्डे रेवाखण्डे करोडीश्वरतीर्थमाहात्म्यवर्णनंनाम द्विषष्टितमोऽध्यायः ॥ ६२ ॥ ॥ छ ॥ ॥ श्रीमार्कंडेय उवाच ॥ ॥ ततो गच्छेच्च राजेंद्र कुमारेश्वरमुत्तमम् ॥ प्रसिद्धं सर्वतीर्थानामगस्त्येश्वरसन्निधौ ॥ १ ॥ षण्मुखेन पुरा तात सर्वपातकनाशनम् ॥ आराध्य परया भक्त्या सिद्धिः प्राप्ता नराधिप ॥ २ ॥ देवसैन्याधिपो जातः सर्वशत्रुनिबर्हणः ॥ उग्रतेजा महात्माऽसौ संजातस्तीर्थसेवनात् ॥ ३ ॥ तदाप्रभृति तत्तीर्थं संजातं नर्मदातटे ॥ तत्र तीर्थे तु यो गत्वा एकचित्तो जितेंद्रियः ॥ ४ ॥ कार्त्तिकस्य चतुर्दश्यामष्टम्यां च विशेषतः ॥ स्नापयेद्गिरिजानाथं दधिदुग्धेन सर्पिषा ॥ ५ ॥ गीतं तत्र प्रकर्तव्यं पिंडदानं यथाविधि ॥ ब्राह्मणैः श्रोत्रियैः पार्थ षट्कर्मनिरतैः शुभैः ॥ ६ ॥ यत्किंचिद्दीयते तत्र अक्षयं पांडुनन्दन ॥ सर्वतीर्थमयं तीथ निर्मितं शिखिना नृप ॥ ७ ॥ एतत्ते सर्वमाख्यातं कुमारेश्वरजं फलम् ॥ कुमारदर्शनात्पुण्यं प्राप्यते पांडुनन्दन ॥ ८ ॥ मृतः स्वर्गमवाप्नोति सत्यमीश्वरभाषितम् ॥ ९ ॥ इति श्रीस्कांदे महापुराण एकाशीतिसाहस्र्यां संहितायां पञ्चम आवन्त्यखण्डे रेवाखण्डे कुमारेश्वरतीर्थमाहात्म्यवर्णनंनाम त्रिषष्टितमोऽध्यायः ॥ ६३ ॥ ॥ छ ॥ ॥ श्रीमार्कंडेय उवाच ॥ ॥ ततो गच्छेत्तु राजेंद्र तीर्थं परमशोभनम् ॥ नराणां पापनाशाय अगस्त्येश्वरमुत्तमम् ॥ १ ॥ तत्र स्नात्वा नरो राजन्मुच्यते ब्रह्महत्यया ॥ कार्त्तिकस्य तु मासस्य कृष्णपक्षे चतुदशी ॥ २ ॥ घृतेन स्नापयेद्देवं समाधिस्थो जितेंद्रियः ॥ एकविंशति कुलोपेतो च्यवंदेश्वरात्पदाव ॥ ३ ॥ धनं चोपानहौ छत्रं दद्याच्च घृतकंबलम् ॥ भोजनं चैव सर्वेषां सर्वं कोटिगुणं भवेत् ॥ ४ ॥ इति श्रीस्कांदे महापुराण एकाशीतिसाहस्र्यां संहितायां पञ्चम आवंत्यखण्डे रेवाखण्डे अगस्त्येश्वरतीर्थमाहात्म्यवर्णनंनाम चतुःषष्टितमोऽध्यायः ॥ ६४ ॥ ॥ छ ॥ ॥ श्रीमार्कंडेय उवाच ॥ ॥ ततो गच्छेत्तु राजेंद्र आनंदेश्वरमुत्तमम् ॥ रुद्रस्य परमानंदो यत्र जातो युधिष्ठिर ॥ तत्तीर्थं कथयिष्यामि सर्वपापक्षयं करम् ॥ १ ॥ ॥ युधिष्ठिर उवाच ॥ ॥ आनंदश्चैव संजातो रुद्रस्य द्विजसत्तम ॥ कथ्यतां मे च तत्सर्वं संक्षेपात्सह बांधवैः ॥ २ ॥

---

१ पाषाणकाः—पाषाणा एव स्वार्थे कन् । २ शिखिना—शिखिवाहनेने—इत्यर्थः । ३ बांधवैः सह—सहिताय—मे—इत्यर्थो बोद्धव्यः ।

॥ ॥ श्रीमार्कंडेय उवाच ॥ ॥ कथयामि नृपश्रेष्ठ आनंदेश्वरमुत्तमम् ॥ दानवानां वधं कृत्वा देवदेवो महेश्वरः ॥ ३ ॥ पूजितो दैवतैः सर्वैः किन्न 
रैर्यक्षपन्नगैः ॥ आनंदसंयुतो देवो ननर्त वृषवाहनः॥ ४ ॥ भैरवं रूपमास्थाय गौर्या चार्द्धांगसंस्थितः ॥ भूतवेतालकंकालैर्भैरवैर्भैरवो वृतः ॥ ५ ॥ 
ननर्त नर्मदातीरे दक्षिणे पांडुनंदन ॥ तुष्टैर्मरुद्गणैः सर्व्वैः स्थापितः कमलासनः ॥ ६ ॥ तदाप्रभृति तत्तीर्थमानंदेश्वरमुच्यते ॥ अष्टम्यां च चतु 
र्दश्यां पौर्णमास्यां नराधिप ॥ ७ ॥ विधिवच्चार्च्चयेद्देवं सुगंधेन विलेपयेत् ॥ ब्राह्मणान्पूजयेत्तत्र यथाशक्त्या युधिष्ठिर ॥ ८ ॥ गोदानं तत्र कर्त्त
व्यं वस्त्रदानं शुभावहम् ॥ वसंतस्य त्रयोदश्यां श्राद्धं तत्रैव कारयेत् ॥ ९ ॥ इंगुदैर्बदरैर्बिल्वैरक्षतैश्च जलेन वा ॥ प्रेतानां कारयेच्छ्राद्धमानंदेश्वर
उत्तमे ॥ १० ॥ आनंदित भवेयुस्ते यावदाभूतसंप्लवम् ॥ संततेर्वै न विच्छेदः सप्तजन्मसु जायते ॥ आनंदोहि भवत्तेषां प्रतिजन्मनि भारत ॥
॥ ११ ॥ इति श्रीस्कांदे महापुराण एकाशीतिसाहस्र्यां संहितायां पञ्चम आवंत्यखण्डे रेवाखण्डे आनंदेश्वरतीर्थमाहात्म्यवर्णनंनाम पंचषष्टित
मोऽध्यायः ॥ ६५ ॥ ॥ छ ॥ ॥ श्रीमार्कंडेय उवाच ॥ ॥ ततो गच्छेत्तु राजेंद्र मातृतीर्थमनुत्तमम् ॥ संगमस्य समीपस्थं नर्मदादक्षिणे
तटे ॥ १ ॥ मातरस्तत्र राजेंद्र संजाता नर्मदातटे ॥: उमार्द्धनारिर्देवेशो व्यालयज्ञोपवीतधृक् ॥ २ ॥ उवाच योगिनीवृंदं कष्टंकष्टमहो हर ॥ अजे
याः सर्वदेवानां त्वत्प्रसादान्महेश्वर ॥ ३ ॥ तीर्थमत्र विधानेन प्रख्यातं वसुधातले ॥ एवं भवतु योगिन्य इत्युक्त्वाऽन्तरधाच्छिवः ॥ ४ ॥
॥ ॥ श्रीमार्कंडेय उवाच ॥ ॥ तत्र तीर्थे तु यो भक्त्या नवम्यां नियतः शुचिः ॥ उपोष्य परया भक्त्या पूजयेन्मातृगोचरम्[1] ॥ ५ ॥ तस्य स्यु
र्मातरः प्रीताः प्रीतोऽयं वृषवाहनः ॥ वंध्याया मृतवत्साया अपुत्राया युधिष्ठिर ॥ ६ ॥ स्नापनं चारभेत्तत्र मंत्रशास्त्रविदुत्तमः ॥ सहिरण्येन कुंभेन
पंचरत्नफलान्वितः ॥ ७ ॥ स्नापयेत्पुत्रकामायाः कांस्यपात्रेण देशिकः ॥ पुत्रं सा लभते नारी वीर्यवंतं गुणान्वितम् ॥ ८ ॥ यो यं काममभिध्याये
त्ततः स लभते नृप ॥ मातृतीर्थात्परं तीर्थं न भूतं न भविष्यति ॥ ९ ॥ इति श्रीस्कांदे महापुराण एकाशीतिसाहस्र्यां संहितायां पञ्चम आवन्त्य
खंडे रेवाखंडे मातृतीथमाहात्म्यवर्णनंनाम षट्षष्टितमोऽध्यायः ॥ ६६ ॥ ॥ छ ॥ ॥ श्रीमार्कंडेय उवाच ॥ ॥ तस्यैवानंतरं तात जल
मध्ये व्यवस्थितम् ॥ लुंकेश्वरमिति ख्यातं सुरासुरनमस्कृतम् ॥ १ ॥ इदं तीर्थं महापुण्यं नानाश्चर्यं महीतले ॥ अस्य तीर्थस्य माहात्म्यमुत्पत्तिं 
 शृणु भारत ॥ २ ॥ आसीत्पुरा महावीर्यो दानवो बलदर्पितः ॥ कालपृष्ठ इति ख्यातः सुतो ब्रह्मसुतस्य च ॥ ३ ॥ गंगातटं समाश्रित्य चचार

१ मातृगोचरम्–शंकरम्–इत्यर्थः ।

विपुलं तपः ॥ अधोमुखोऽपि संस्थित्वाऽपिबद्धूममहर्निशम् ॥ ४ ॥ ततश्चानंतरं देवस्तिष्ठते ह्युमया सह ॥ दृष्ट्वा तं पार्वती सा तु तपस्युग्रे व्यवस्थितम्॥ ५ ॥ पश्यपश्य महादेव धूमाशी तिष्ठते नरः ॥ प्रसीद तं कुरुष्वाऽद्य देहि शीघ्रं वरं विभो ॥ ६ ॥ ॥ ईश्वर उवाच ॥ ॥ यदुक्तं वचनं देवि न तन्मे रोचते प्रिये ॥ स्वकार्यं च सदा चिंत्यं परकार्यं विसर्जयेत् ॥ ७ ॥ मूर्खस्त्रीबालशत्रूणां यश्छंदेनाऽनुवर्त्तते ॥ व्यसने पतते घोरे सत्यमेतदुदीरितम् ॥ ८ ॥ ॥ देव्युवाच ॥ ॥ भार्यायाऽभ्यर्थितो भर्त्ता कारणं बहु भाषते ॥ लघुत्वं याति सा नारी एवं शास्त्रेषु पठ्यते ॥ ९ ॥ प्राणत्यागं करिष्यामि यदि मां त्वं न मन्यसे ॥ पार्वत्या प्रेरितो देवो गतोऽसौ दानवं प्रति ॥ १० ॥ ॥ ईश्वर उवाच ॥ ॥ किमर्थं पिबसे धूमं किमर्थं तप्यसे तपः ॥ किं दुःखं किं नु संतापो वद कार्यमभीप्सितम् ॥ ११ ॥ युवा त्वं दृश्यसेऽद्यापि वर्षविंशतिरेव च ॥ तदाचक्ष्व हि मे सर्व्वं तपसः कारणं महत् ॥ १२ ॥ ॥ दानव उवाच ॥ ॥ अचला दीयतां भक्तिर्मम स्थैर्य्यं तवोपरि ॥ अपरं वर्षसाहस्रं निर्विघ्नं मे गतं विभो ॥ ॥ १३ ॥ दिवसानां सहस्रे द्वे पूर्णे त्वत्तपसा मम ॥ १४ ॥ ॥ ईश्वर उवाच ॥ ॥ याचयाऽभीप्सितं कार्यं तुष्टोऽहं तव सुव्रत ॥ देवस्य वचनं श्रुत्वा चिंतयामास दानवः ॥ १५ ॥ किं नाकं याचयाम्यद्य किमद्य सकलां महीम् ॥ एवं सचिंतयामास कामबाणेन पीडितः ॥ १६ ॥ ॥ दानव उवाच ॥ ॥ यदि तुष्टोऽसि मे देव वरं दास्यसि मे प्रभो ॥ संग्रामैस्तु न तुष्टोऽहं बलं नास्तीति किंच न ॥ १७ ॥ यस्य मूर्द्धन्यहं देव पाणिना समुपस्पृशे ॥ देवदानवगंधर्वो भस्मसाद्यातु तत्क्षणात् ॥ १८ ॥ ॥ ईश्वर उवाच ॥ ॥ यत्त्वया चिंतितं किंचित्तत्सर्वं सफलं तव ॥ उत्तिष्ठ गच्छ शीघ्रं त्वं भवनं प्रति दानव ॥ १९ ॥ ॥ दानव उवाच ॥ ॥ स्थीयतां देवदेवेश यावज्ज्ञास्यामि ते वरम् ॥ युष्मन्मूर्ध्नि न्यसे पाणिं प्रत्ययो मे भवेद्यथा ॥ २० ॥ ततश्चानंतरं देवश्चिंतयानो महेश्वरः ॥ न स्कंदो न हरिर्ब्रह्मा यः कार्येषु क्षमोऽधुना ॥ २१ ॥ ज्ञात्वा चैवापदं प्राप्तां देवः प्रार्थयते वृषम्॥अनेन सह पापेन युध्यस्व सांप्रतं क्षणम्॥२२॥करं प्रासारयद्दैत्यो देवं मूर्ध्नि किल स्पृशेत् ॥ लांगूलेनाऽहतो दैत्यो विषण्णः पतितो भुवि॥२३॥ देवस्तु दक्षिणामाशां गतश्चैवोमया सह ॥ भयभीतो निरीक्षेत ग्रीवां भज्य पुनःपुनः ॥ २४ ॥ गते चाऽदर्शनं देवे युयुधे वृषभेण सः॥ द्वावेतौ बलिनां श्रेष्ठौ युयुधाते महाबलौ ॥ २५ ॥ प्रहारैर्वज्रसदृशैः कोपेन घटिकात्रयम् ॥ पाणिभ्यां न स्पृशेद्यो वै वृषभस्य शिरस्तथा ॥ २६ ॥ हत्वा लांगूलपातेन आगतो वृषभस्तदा ॥ उत्थितश्चाप्यसौ दैत्यो व्रजते वृषपृष्ठतः ॥ २७ ॥ वायुवेगेन संप्राप्तो यत्र देवो महेश्वरः ॥ आगतं

१ यावत्--इत्यध्याहारः । तावत्--इत्याक्षिप्तेन--उत्तरेण वाक्येन संबंधः । २ भज्य--तं निरीक्षितुं पश्चात्परिवृत्य--इत्यर्थः ।

दानवं दृष्ट्वा वृषो वचनमब्रवीत् ॥ २८ ॥ आरुह्य पृष्ठे मे देव शीघ्रमेव हि गम्यताम् ॥ आरुह्य वृषभं देवो जगाम चोमया सह ॥ २९ ॥ नाकं
प्राप्तस्ततो देवो गतः शक्रस्य मंदिरम् ॥ नात्यजद्देवपृष्ठं तु दानवो बलदर्पितः ॥ ३० ॥ इंद्रलोकं परित्यज्य ब्रह्मलोकं गतस्तदा ॥ यत्रयत्र ब्रजे
द्देवो भयात्सह दिवौकसैः ॥ ३१ ॥ अपश्यत्तत्र तत्रैव पृष्ठे लग्नं तु दानवम् ॥ सर्वांल्लोकान्भ्रमित्वा तु देवो विस्मयमागतः ॥ ३२ ॥ न स्थानं
विद्यते किंचिद्यत्र विश्रम्यते क्षणम् ॥ देवदानवयोस्तत्र युद्धं ज्ञात्वा सुदारुणम् ॥ ३३ ॥ हर्षितात्मा मुनिस्तत्र चिरं नृत्यति नारदः ॥ धन्योऽहमद्य
मे जन्म जीवितं च सुजीवितम् ॥ ३४ ॥ महांतं च कलिं दृष्ट्वा सन्तोषः परमोऽभवत् ॥ देवदानवयोस्तत्र युद्धं त्यक्त्वा च नारदः ॥ ३५ ॥
आजगाम ततो विप्रो यत्र देवो महेश्वरः ॥ दृष्ट्वा देवोथ तं विप्रं प्रतिपूज्याऽब्रवीदिदम् ॥३६॥ भो नारद मुनिश्रेष्ठ जानीषे केशवं क्वचित् ॥ गत्वा तत्र
च शीघ्रं त्वं केशवाय निवेदय ॥ ३७ ॥ ॥ नारद उवाच ॥ ॥ देवदानवसिद्धानां गंधर्वोरगरक्षसाम् ॥ सर्वेषामेव देवेशो हरते ध्रुवमापदम् ॥
॥ ३८ ॥ असंभाव्यं न वक्तव्यं मनसाऽपि न चिंतयेत् ॥ ईदृशीं नैव बुद्ध्यामि आपदं च विभो तव ॥ ३९ ॥ ॥ ईश्वर उवाच ॥ ॥
गच्छ नारद शीघ्रं त्वं यत्र देवो जनार्दनः ॥ विदितं च त्वया सर्वं यत्कृतं दानवेन तु ॥ ४० ॥ अवध्यो दानवो ह्येष सेन्द्रैरपि मरुद्गणैः ॥ गत्वा
तु केशवं देवं निवेदय महामुने ॥ ४१ ॥ ॥ नारद उवाच ॥ ॥ न तु गच्छाम्यहं देव सुप्तः क्षीरोदधौ सुखी ॥ केशवः प्रेरणे ह्येषामादेशो
दीयतां प्रभो ॥४२॥ मात्रा स्वस्रा दुहित्रा वा राजानं च तथा प्रभुम् ॥ गुरुं चैवाऽदितः कृत्वा शयानं न प्रबोधयेत् ॥ ४३ ॥ ॥ ईश्वर उवाच ॥ ॥
यदि क्वचिदगारेषु वह्निरुत्पद्यते महान् ॥ निधनं यांति तत्रस्था यद्बुद्धेरन्नसूरयः ॥ ४४ ॥ ॥ नारद उवाच ॥ ॥ शीघ्रं गच्छ महादेव
आत्मानं रक्ष सुप्रभो ॥ गच्छाम्यहं न सन्देहो यत्र देवो जनार्दनः ॥ ४५ ॥ ततो नंदिमहाकालौ स्तम्भहस्तौ भयानकौ ॥ जघ्नतुर्दानवं तत्र मुद्गरा
दिभिरायुधैः ॥ ४६ ॥ त्रयोऽपि च महाकायाः सप्ततालप्रमाणकाः ॥ न शमो जायते तेषां युध्यतां च परस्परम् ॥ ४७ ॥ ततश्चानंतरं विप्रोऽग
च्छत्तं केशवं प्रति ॥ सुप्तं क्षीरार्णवेऽपश्यच्छेषपर्यंकसंस्थितम् ॥ ४८ ॥ लक्ष्म्या पादयुगं गृह्य ऊरूपरि निवेशितम् ॥ अप्सरोगीयमानं तु
॥ ६३ ॥ भक्त्याऽऽनम्य च केशवम् ॥ ४९ ॥ अद्य मे सफलं जन्म जीवितं च सुजीवितम् ॥ उत्थापयस्व देवेशं लक्ष्मि त्वमविशंकिता ॥ ५० ॥ नारदस्य ॥२३७॥
वचः श्रुत्वा पदांगुष्ठं व्यमर्दयत् ॥ नारदस्तिष्ठते द्वारि उत्तिष्ठ मधुसूदन ॥ ५१ ॥ देवोऽपि नारदं दृष्ट्वा परं हर्षमुपागतः ॥ स्वागतं तु मुनिश्रेष्ठ सुप्र
भाताऽद्य शर्वरी ॥ ५२ ॥ ॥ नारद उवाच ॥ ॥ अद्य मे सफलं देव प्रभातं तव दर्शनात् ॥ कुशलं च न देवानां शीघ्रमुत्तिष्ठ गम्यताम् ॥ ५३ ॥

॥ श्रीविष्णुरुवाच ॥ ॥ ब्रह्मा चेंद्रश्च रुद्रश्च ये चान्ये तु मरुद्गणाः ॥ आपदः कारणं यच्च तत्समाख्यातुमर्हसि ॥ ५४ ॥ ॥ नारद उवाच ॥ ॥
दानवेन महातीव्रं तपस्तप्तं सुदारुणम् ॥ रुद्रेण च वरो दत्तो भस्मत्वं मनसेप्सितम् ॥ ५५ ॥ वरदानबलेनैव स देवं हन्तुमर्हति ॥ ईदृशं चेष्टितं
ज्ञात्वा नीतो देवोऽमरैः सह ॥ ५६ ॥ नारदस्य वचः श्रुत्वा जगाम समुनिर्हरिः ॥ दृष्ट्वा देवस्तमीशानं गच्छन्तं दिशमुत्तराम् ॥ ५७ ॥ दृष्ट्वा देवं च
रुद्रोथ परिष्वज्य पुनःपुनः ॥ नमस्कृत्य जगन्नाथं देवं च मधुसूदनः ॥५८॥ ॥विष्णुरुवाच॥ ॥भयस्य कारणं देव कथ्यतां च महेश्वर ॥ देवदानवय
क्षाणां प्रेषयेयं यमालयम् ॥५९॥ ललाटे च कृतो घर्म्मो युष्माकं च महेश्वर॥छित्वा शिरस्तथांगानि इंद्रियाणि न संशयः ॥६०॥ ॥ ईश्वर उवाच ॥
नास्ति सौख्यं च मूर्खेषु नास्ति सौख्यं च रोगिषु ॥ पराधीनेन सौख्यं तु स्त्रीजिते च विशेषतः ॥६१॥ स्त्रीजितेन मया विष्णो वरो दत्तस्तु दानवे ॥
यस्य मूर्ध्नि न्यसेत्पाणिं स भवेद्भस्मपुंजवत् ॥६२॥ अजेयश्चामरश्चैव मया ह्युक्तः स केशव ॥ हंतुमिच्छति मां पाप उपायस्तव विद्यते ॥६३॥ ॥विष्णुरु
वाच ॥ गच्छंतु अमराः सर्वे युष्माभिः सह शंकर ॥ उपायं सर्जयाम्यद्य वधार्थं दानस्य च॥६४॥रेवायाश्च तटे तिष्ठ देव त्वममरैः सह ॥कालक्षेपो न
कर्त्तव्यो गम्यतां त्वरितं प्रभो॥६५॥दक्षिणा यत्र गंगा च रेवा चैव महानदी ॥यत्रयत्र च दृश्येत प्राची चैव सरस्वती॥६६॥तत्समं च महातीर्थं न म
र्त्ये चैव दृश्यते ॥ स्नानं ये तत्र कुर्वंति दानं चैव तु भक्तितः ॥ ६७ ॥ सप्तजन्मकृतं पापं नश्यते नात्र संशयः ॥ एतत्तीर्थं महापुण्यं सर्व
पातकनाशनम् ॥ ६८ ॥ गम्यतां तत्र देवेश लुंकेशं त्वं सहामरैः ॥ विष्णोस्तु वचनादेव प्रविष्टो ह्रदमुत्तमम् ॥ ६९ ॥ रतिं सुमहतीं चक्रे
सह तत्र मरुद्गणैः ॥ ततश्चानंतरं देवो मायां कृत्वा ह्यनेकधा ॥ ७० ॥ वसंतमासं संसृज्य उद्यानवनशोभितम् ॥ अशोकैर्बकुलैश्चैव ब्रह्मवृक्षैः
सुशोभनैः ॥ ७१ ॥ श्रीवृक्षैश्च कपित्थैश्च शिरीषै राजचंपकैः ॥ श्रीफलैश्च ताथा तालैः कदंबोदुंबरैस्तथा ॥ ७२ ॥ अश्वत्थादिद्रुमैश्चैव नानावृक्षै
रनेकशः ॥ नानापुष्पैः सुगंधाढ्यैर्भ्रमरैश्च निनादितम् ॥ ७३ ॥ तस्मिन्मध्ये महावृक्षो न्यग्रोधश्च सुशोभनः ॥ बहुपक्षिसमायुक्तः कोकिलाराव
नादिनः ॥ ७४ ॥ कृष्णेन च कृतं तस्मिन्कन्यारूपं च तत्क्षणात् ॥ न तस्याः सदृशी कन्या त्रैलोक्ये सचराचरे ॥ ७५ ॥ अन्याश्च कन्यकाः
सप्त सुरूपाः शुभलोचनाः ॥ दिव्यरूपधराः सर्वा दिव्याभरणभूषिताः ॥ ७६ ॥ पुमांसमभिकांक्षंत्यो यद्येकः कामयेत्स्त्रियः ॥ मौक्तिकै रत्नमाणि
क्यैर्वैडूर्यैश्च सुशोभनैः ॥ ७७ ॥ कामहारैश्च वंशैश्च बद्धो हिंदोलकः कृतः ॥ आरूढाश्च महाकन्या गायंते सुस्वरं तदा ॥७८॥ मारुतः शीतलो
वाति वनं स्पृष्ट्वा सुशोभनम् ॥ वातेन प्रेरितो गंधो दानवो घ्राणपीडितः ॥ ७९ ॥ ततः कुसुमगंधेन विस्मयं परमं गतः ॥ आघ्राय चेदृशं

पुण्यं न दृष्टं न श्रुतं मया ॥ ८० ॥ वने चिंतयतः किंचिद्ध्वनि गीतं सुशोभनम् ॥ गीतस्य च ध्वनिं श्रुत्वा मोहितो मायया हरेः ॥ ८१ ॥ व्या
धस्यैव महाकूटे पतंति च यथा मृगाः ॥ कालस्पृष्टस्तथा कृष्णे पतितश्च नराधिप ॥ ८२ ॥ दृष्ट्वा कन्यां च तां दैत्यो मूर्च्छया पतितो भुवि ॥
पतितेन तु दृष्टैका कन्या वटतले स्थिता ॥ ८३ ॥ आस्यं दृष्ट्वा तु नारीणां पुनः कामेन पीडितः ॥ गृहीत्वा हेमदंडं तु तां पातयितुमिच्छति
॥ ८४ ॥ ॥ कन्योवाच ॥ ॥ मा मानुस्पर्शय त्वं हि कुमार्यहं कुलोत्तम ॥ भो मुंचमुंच मां शीघ्रं यावद्गच्छाम्यहं गृहम् ॥ ८५ ॥ ॥ दानव
उवाच ॥ ॥ अहं विवाहमिच्छामि त्वया सह सुशोभने ॥ भूपृष्ठे सकले राज्ञी भवस्येवं न संशयः ॥ ८६ ॥ ॥ कन्योवाच ॥ ॥ पिता रक्षति
कौमार्ये भर्त्ता रक्षति यौवने ॥ पुत्रो रक्षति वृद्धत्वे न स्त्री स्वातंत्र्यमर्हति ॥ ८७ ॥ न स्वातंत्र्यं ममैवास्ति उत्पन्नाहं महत्कुले ॥ याच्यस्तु मत्पिता
भ्राता मातापि हि तथैव च ॥ ८८ ॥ ॥ दानव उवाच ॥ ॥ यदि मां नेच्छसे त्वद्य स्वातंत्र्यं नावलंबसे ॥ ममापि च तदा हत्या सत्यं च
शुभलोचने ॥ ८९ ॥ ॥ कन्योवाच ॥ ॥ विश्वासो नैव कर्तव्यो यादृशे तादृशे नरे ॥ नराः स्त्रीषु विचित्राश्च लंपटाः काममोहिताः ॥ ९० ॥
परिणीय तु मां त्वं हि भुंक्ष्व भोगान्मया सह ॥ जन्मनाशो भवेत्पश्चान्न त्वं नान्यो भवेन्मम ॥ ९१ ॥ ब्राह्मणी क्षत्रिणी वैशी शूद्री यावत्तथैव
च ॥ द्वितीयो न भवेद्भर्त्ता एकाकी चेह जन्मनि ॥ ९२ ॥ ॥ दानव उवाच ॥ ॥ यत्त्वया गदितं वाक्यं तन्मया धारितं हृदि ॥ प्रत्ययं मे
कुरुष्वाऽद्य यत्ते मनसि रोचते ॥ ९३ ॥ ॥ कन्योवाच ॥ ॥ जानीष्व गोपकन्यां मां क्रीडामि सखिभिः सह ॥ अस्मत्कुलेषु यद्दिव्यं
तत्कुरुष्व यथाविधि ॥ ९४ ॥ न तद्दिव्यं कुलेऽस्माकं विषं कोशं न तत्तुला ॥ गोपान्वयेषु सर्वेषु हस्तः शिरसि दीयते ॥ ९५ ॥ कामांधेनैव
राजेंद्र निक्षिप्तो मस्तके करः ॥ तत्क्षणाद्भस्मसाद्भूतो दग्धस्तृणचयो यथा ॥ ९६ ॥ केशवोपरि देवैस्तु पुष्पवृष्टिः शुभा कृता ॥ हृष्टाः सर्वेऽगम
न्देवाः स्वस्थानं विगतज्वराः ॥ ९७ ॥ क्षीरोदं केशवोगच्छत्कालपृष्ठे निपातिते ॥ य इदं शृणु याद्भक्त्या चरितं दानवस्य च ॥ ९८ ॥ स जयी
जायते नित्यं शंकरस्य वचो यथा ॥ एतस्मात्कारणाद्राजँल्लिंगेश्वरमिति श्रुतम् ॥ ९९ ॥ लीनं च पातकं यस्मात्स्नानमात्रेण नश्यति ॥ त्वगस्थि[1]
॥ ६४ ॥ शोणितं मांसं मेदस्नायुस्तथैव च ॥१००॥ मज्जाशुक्रगतं पापं नश्यते जन्मकोटिजम् ॥ लुंकेश्वरे महाराज तोयं पिबति भक्तितः ॥ १ ॥ त्रिभिः
प्रसृतिमात्राभिः पापं यांति सहस्रधा ॥ विशेषेण चतुर्दश्या[2]मुभौ पक्षौ तु चाष्टमी ॥ २ ॥ उपोष्य यो नरो भक्त्या पितॄणां पांडुनन्दन ॥ उद्धृता

१ त्वगस्थ्यादिगतं पापम्—इत्यर्थोऽत्र यथाकथंचिद्बोद्धव्यः प्रकरणात् । २ अस्य इति शेषः ।

स्तेन ते सर्वे नारकीयाः पितामहाः ॥ ३ ॥ काकिणीं चैव यो दद्याद्ब्राह्मणे वेदपारगे ॥ तेन दानफलं सर्वं कुरुक्षेत्रादिकं च यत् ॥ ४ ॥ प्राप्तं तु नान्यथा राजञ्च्छंकरो वदते त्विदम् ॥ स्पर्शलिंगमिदं राजञ्च्छंकरेण तु निर्मितम् ॥ ५ ॥ स्पर्शमात्रे मनुष्याणां रुद्रवासोऽभिजायते ॥ तेन दानफलं सर्वं कुरुक्षेत्रादिकं च यत् ॥ ६ ॥ एतस्मात्कारणाद्राजँल्लोकपालाश्च रक्षकाः ॥ दुर्गा च रक्षणे सृष्टा चतुर्हस्तधरा शुभा ॥ ७ ॥ धनदो लोकपालेशो रक्षकश्चेश्वरस्य च ॥ रक्षति च सदा कालं ग्रहव्यापाररूपतः॥८॥पुत्रभ्रातृसमारूपैः स्वामिसंबंधरूपिभिः॥ लंकेश्वरं च राजेंद्र देवैर्नाऽद्यापि मुच्यते ॥ १०९ ॥ इति श्रीस्कांदे महापुराण एकाशीतिसाहस्र्यां संहितायां पञ्चम आवन्त्यखंडे रेवाखंडे लुंकेश्वरतीर्थमाहात्म्यवर्णनं नाम सप्तषष्टितमोऽध्यायः ॥ ६७ ॥ ॥ श्रीमार्कंडेय उवाच ॥ ॥ धनदस्य तु तत्तीर्थं ततो गच्छेद्युधिष्ठिर ॥ नर्मदादक्षिणे कूले सर्वपापक्षयंकरम् ॥ १ ॥ सर्वतीर्थफलं तत्र प्राप्यते नात्र संशयः ॥ चैत्रमासत्रयोदश्यां शुक्लपक्षे जितेंद्रियः ॥ २ ॥ उपोष्य परया भक्त्या रात्रौ कुर्वीत जागरम् ॥ पंचामृतेन राजेंद्र स्नापयेद्धनदं बुधः ॥ ३ ॥ दीपं घृतेन दातव्यं गीतं वाद्यं च कारयेत् ॥ प्रभाते पूजयेद्विप्रानात्मनः श्रेय इच्छति ॥ ४ ॥ प्रतिग्रहसमर्थांश्च विद्यासिद्धांतवादिनः ॥ श्रौतस्मार्त्तक्रियायुक्तान्परदारपराङ्मुखान् ॥ ५ ॥ पूजयेद्गोहिरण्येन वस्त्रोपानहभोजनैः ॥ छत्रशय्याप्रदानेन सर्वपापक्षयो भवेत् ॥६॥ त्रिजन्मजनितं पापं धनदस्य प्रभावतः ॥ स्वर्गदं दुर्विनीतानां विनीतानां च मोक्षदम् ॥ ७ ॥ अन्नदं च दरिद्राणां भवेज्जन्मनिजन्मनि ॥ कुलीनत्वं दुःखहानिः स्वभावाज्जायते नरे ॥८॥ व्याधिध्वंसो भवेत्तेषां नर्मदोदकसेवनात् ॥ धनदस्य तु यस्तीर्थे विद्यादानं प्रयच्छति ॥ ॥९॥स याति भास्करे लोके सर्वव्याधिविवर्जिते ॥ देवद्रोणीं च तत्रैव स्वशक्त्या पांडुनंदन ॥ १० ॥ ये प्रकुर्वंति भूयिष्ठां रेवाया दक्षिणे तटे ॥ ते यांति शांकरे लोके सर्वदुःखविवर्जिते ॥ ११ ॥ इति श्रीस्कांदे महापुराण एकाशीतिसाहस्र्यां संहितायां पंचम आवन्त्यखण्डे रेवाखण्डे धनदतीर्थमाहात्म्यवर्णनंनामाष्टषष्टितमोऽध्यायः ॥ ६८ ॥ ॥ छ ॥ ॥ श्रीमार्कंडेय उवाच ॥ ॥ ततो गच्छेत्तु राजेंद्र मंगलेश्वरमुत्तमम् ॥ स्थापितं भूमिपुत्रेण लोकानां हितकाम्यया ॥ १ ॥ तोषितः परया भक्त्या शंकरः शशिशेखरः ॥ चतुर्दश्यां गुरुर्देवः प्रत्यक्षो मङ्गलेश्वरः ॥ २ ॥ ब्रूहि पुत्र वरं शुभ्रन्तन्ते दास्यामि मंगल ॥ ३ ॥ ॥ मंगल उवाच ॥ ॥ प्रसादं कुरु मे शंभो प्रतिजन्मनि शंकर ॥ त्वदंगस्वेदसंभूतो ग्रहमध्ये वसाम्यहम्॥४॥ त्वत्प्रसादेन ईशान पूज्योऽहं सर्वदैवतैः ॥ कृतार्थोह्यद्य संजातस्तव दर्शनभाषणात् ॥ ५ ॥ स्थानेऽस्मिन्देवदेवेश मम नाम्ना महेश्वरः ॥ एवं भवतु

१ तत्प्राप्यते—इति शेषः ।

ते पुत्रेत्युक्त्वा चांतरधीयत ॥ ६ ॥ मंगलोऽपि महात्मा वै स्थापयित्वा महेश्वरम् ॥ आत्मयोगबलेनैव शूलिनाऽपूजयत्ततः ॥ ७ ॥ सर्व्वदुःख हरं लिंगं नाम्ना वै मंगलेश्वरम् ॥ तत्र तीर्थे तु वै राजन्ब्राह्मणान्प्रीणयेत्सुधीः ॥ ८ ॥ सपत्नीकान्नृपश्रेष्ठ चतुर्थ्यंगारके व्रते ॥ पत्नीभर्त्तारसंयुक्तं विद्वांसं श्रोत्रियं द्विजम् ॥ ९ ॥ व्रतांते चैव गोधूमैः शिवमुद्दिश्य दीयते ॥ प्रीयतां मे महादेवः सपत्नीको वृषध्वजः ॥ १० ॥ वस्त्रयुग्मं प्रदातव्यं लोहितं पांडुनंदन ॥ धूर्वहौ रक्तवर्णौ च शुभ्रं कृष्णं तथैव च ॥ ११ ॥ छत्रं शय्यां शुभां चैव रक्तमाल्यानुलेपनम् ॥ दातव्यं पाण्डवश्रेष्ठ विशुद्धेनांतरात्मना ॥ १२ ॥ चतुर्थ्यां तु तथाऽष्टम्यां पक्षयोः शुक्लकृष्णयोः ॥ श्राद्धं तत्रैव कर्त्तव्यं वित्तशाठ्येन वर्जितः ॥ १३ ॥ प्रेता भवंति सुप्रीता युगमेकं महीपते ॥ सपुत्रो जायते मर्त्यः प्रतिजन्म नृपोत्तम ॥ १४ ॥ तस्य तीर्थस्य भावेन सर्वांगरुचिरो नृप ॥ मंगलं भवते वंशे नाऽशुभं विद्यते क्वचित् ॥ १५ ॥ भक्त्या यः कीर्त्तयेन्नित्यं तस्य पापं व्यपोहति ॥ १६ ॥ इति श्रीस्कान्दे महापुराण एकाशीतिसाहस्र्यां संहितायां पञ्चम आवन्त्यखण्डे रेवाखण्डे मंगलेश्वरतीर्थमाहात्म्यवर्णनंनामैकोनसप्ततितमोऽध्यायः ॥ ६९ ॥ ॥ छ ॥ ॥ ॥ ॥ श्रीमार्कंडेय उवाच ॥ ॥ रेवाया उत्तरे कूले तीर्थं परमशोभनम् ॥ रविणा निर्मितं पार्थ सर्वपापक्षयंकरम् ॥ १ ॥ स्वांशेन भास्कर स्तत्र तिष्ठते चोत्तरे तटे ॥ सर्वव्याधिहरः पुंसां नर्मदायां व्यवस्थितः ॥ २ ॥ षष्ठ्यांषष्ठ्यां नृपश्रेष्ठ ह्यष्टम्यां च चतुर्दशीम् ॥ स्नानं यः कारये न्मर्त्यः श्राद्धं प्रेतेषु भक्तितः ॥ तस्य पापक्षयः पार्थ सूर्यलोके महीयते ॥ ३ ॥ ततः स्वर्गाच्च्युतः सोऽपि जायते विमले कुले ॥ धनाढ्यो व्याधि निर्मुक्तो जीवेज्जन्मनिजन्मनि ॥ ४ ॥ इति श्रीस्कान्दे महापुराण एकाशीतिसाहस्र्यां संहितायां पञ्चम आवन्त्यखण्डे रेवाखण्डे रवितीर्थ माहात्म्यवर्णनंनाम सप्ततितमोऽध्यायः ॥ ७० ॥ ॥ छ ॥ ॥ श्रीमार्कंडेय उवाच ॥ ॥ कामेश्वरं ततश्चान्यच्छृणु पांडवसत्तम ॥ सिद्धो यत्र गणाध्यक्षो गौरीपुत्रो महाबलः ॥ १ ॥ तत्र तीर्थे तु यो भक्त्या भक्तियुक्तो जितेंद्रियः ॥ पंचामृतेन संस्नाप्य धूपनैवेद्यपूजनैः ॥ २ ॥ प्रसाद्य जगतामीशं सर्वपापैः प्रमुच्यते ॥ अष्टम्यां मार्गशीर्षस्य तत्र स्नात्वा युधिष्ठिर ॥ ३ ॥ यो येन[2] यजते तत्र स तं काममवाप्नुयात् ॥ ४ ॥ इति श्रीस्कांदे महापुराण एकाशीतिसाहस्र्यां संहितायां पञ्चम आवंत्यखंडे रेवाखण्डे कामेश्वरतीर्थमाहात्म्यवर्णनंनामैकसप्ततितमोऽध्यायः ॥ ॥ ७१ ॥ ॥ छ ॥ ॥ श्रीमार्कंडेय उवाच ॥ ॥ ततो गच्छेत्तु राजेंद्र मणिनागेश्वरं शुभम् ॥ उत्तरे नर्मदाकूले सर्वपापक्षयंकरम् ॥ स्थापितं

१ पत्नीभर्तारसंयुक्तं विद्वांसं श्रोत्रियं द्विजम्—एतस्य समुदितस्यार्थस्य—विद्वद्ब्राह्मणदाम्पत्यम्—इत्यर्थः । २ येन—कामेन—इत्यध्याहारः । येन कामेन—यंयं काममभिध्याय—इत्यर्थः ।

मणिनागेन लोकानां हितकाम्यया ॥ १ ॥ ॥ युधिष्ठिर उवाच ॥ ॥ आशीविषेण सर्प्पेण ईश्वरस्तोषितः कथम् ॥ क्षुद्राः सर्वस्य लोकस्य भयदा विषशालिनः ॥ २ ॥ कथ्यतां तात मे सर्वं पातकस्योपशांतिदम् ॥ मम संतापजं दुःखं दुर्योधनसमुद्भवम् ॥ ३ ॥ कर्णभीष्मोद्भवं रौद्रं दुःखं पांचालिसंभवम् ॥ तव वक्त्रांबुजौघेन प्लावितं निर्वृतिं गतः ॥ ४ ॥ श्रुत्वा तव मुखोद्गीतां कथां वै पापनाशिनीम् ॥ अयुक्तमिदमस्माकं द्विज क्लेशो न शाम्यति ॥ ५ ॥ अथवा प्राप्स्यते तात विद्यादानस्य यत्फलम् ॥ तत्फलं प्राप्यते नित्यं कथाश्रवणतो हरेः ॥ ६ ॥ ॥ श्रीमार्कंडेय उवाच ॥ ॥ यथायथा त्वं नृप भाषसे च तथातथा मे सुखमेति भारती ॥ शैथिल्यता वा जरयान्वितस्य त्वत्सौहृदं नश्यति नैव तात ॥ शृणुष्व तस्मात्सह बांधवैश्च कथामिमां पापहरां प्रशस्ताम् ॥ ७ ॥ कथयामि यथावृत्तमितिहासं पुरातनम् ॥ ८ ॥ कथितं पूर्वतो वृत्तैः पारंपर्येण भारत ॥ ९ ॥ द्वे भार्ये कश्यपस्यास्तां सर्वलोकेष्वनुत्तमे ॥ गरुत्मन्तं च विनताऽसूत कद्रूरहीनथ ॥ १० ॥ संतोषेण च ते तात तिष्ठतः काश्यपे गृहे ॥ कद्रूश्च विनतानाम हृष्टे च वनिते सदा ॥ ११ ॥ ताभ्यां सार्द्धं क्रीडते च कश्यपोऽपि प्रजापतिः ॥ ततस्त्वेकदिने प्राप्ते आश्रमस्था शुभानना ॥ १२ ॥ उच्चैःश्रवं हयं दृष्ट्वा मनोवेगसमन्वितम् ॥ पश्यपस्य हि तन्वंगी हयं सर्वत्र पांडुरम् ॥ १३ ॥ धावमानमविश्रांतं जवेन मनसोपमम् ॥ तं दृष्ट्वा सहसा चाऽश्वमीर्ष्याभावेन चाब्रवीत् ॥ १४ ॥ ॥ कद्रूरुवाच ॥ ब्रूहि भद्रे सहस्रांशोरश्वः किंवर्णको भवेत ॥ अहं ब्रवीमि कृष्णोऽयं त्वं किं वदसि तद्वद ॥ १५ ॥ ॥ विनतोवाच ॥ ॥ पश्यसे ननु नेत्रैश्च कृष्णं श्वेतं न पश्यसि ॥ असत्यभाषणाद्भद्रे यमलोकं गमिष्यसि ॥ १६ ॥ ॥ सत्यानृते तु वचने पणस्तव ममैव तु ॥ सहस्रं चैव वर्षाणां दास्यहं तव मंदिरे ॥ १७ ॥ असत्या यदि मे वाणी कृष्ण उच्चैः श्रवा यदि ॥ तदाहं त्वद्गृहे दासी भवामि सर्पमातृके ॥ १८ ॥ यदि उच्चैश्रवाः श्वेतोऽहं दासी च तवैव तु ॥ एवं परस्परं द्वाभ्यां संवादोऽयं व्यवर्द्धत ॥ १९ ॥ आश्रमेषु गता बाला रात्रौ चिंतापरा स्थिता ॥ बंधुवर्गस्य कथितं समस्तं तद्विचेष्टितम् ॥ २० ॥ पुत्राणां कथितं पार्थ पणं चैव मया कृतम् ॥ हाहाकारः कृतः सर्वैः श्रुत्वा मात्रा पणं कृतम् ॥ २१ ॥ जाता दासी न संदेहः श्वेतो भास्करवाहनः ॥ उच्चैःश्रवा हयः श्वेतो न कृष्णो विद्यते क्वचित् ॥ २२ ॥ ॥ कद्रूरुवाच ॥ ॥ यथाऽहं न भवे दासी तत्कार्यं च विचिंत्यताम् ॥ विशध्वं रोमकूपेषु ह्युच्चैःश्रवहयस्य तु ॥ २३ ॥ एकं मुहूर्त्तमात्रं तु यावत्कृष्णः स दृश्यते ॥ क्षणमात्रेण चैकेन दासी सा भवते मम ॥ २४ ॥ दासीं कृत्वा तु तां तन्वीं विनतां सत्यगर्विताम् ॥ ततः स्वस्थानगाः सर्वे भविष्यथ यथासुखम् ॥ २५ ॥ ॥

सर्पा ऊचुः ॥ ॥ यथा त्वं जननी चांब सर्वेषां भुवि पूजिता ॥ तथा साऽपि विशेषेण वंचितव्या न मातरः ॥२६॥ माता च पितृभार्या च मातृ
माता पितामही ॥ कर्मणा मनसा वाचा हितं तासां समाचरेत् ॥ २७ ॥ सा ततस्तेन वाक्येन क्रुद्धा कालानलोपमा ॥ मम वाक्यमकुर्वाणा
ये केचिद्भुवि पन्नगाः ॥ २८ ॥ हव्यवाहमुखे सर्वे ते यास्यंत्यविचारितम् ॥ मातुस्तद्वचनं श्रुत्वा सर्वे चैव भुजंगमाः ॥ २९ ॥ केचित्प्रविष्टा रोमेषु
उच्चैःश्रवहयस्य च ॥ नष्टाः केचिद्दशदिशं कद्रूशापभयात्ततः ॥ ३० ॥ केचिद्गंगाजले नष्टाः केचिन्नष्टाः सरस्वतीम् ॥ केचिन्महोदधौ लीनाः
प्रविष्टा विंध्यकंदरे ॥ ३१ ॥ आश्रित्य नर्मदातोये मणिनागोत्तमो नृप ॥ तपश्चचार विपुलमुत्तरे नर्मदातटे ॥ ३२ ॥ मातृशापभयात्पार्थ ध्यायते
कामनाशनम् ॥ अच्छेद्यमप्रतर्क्यं च विनाशोत्पत्तिवर्जितम् ॥ ३३ ॥ वायुभक्षः शतं साग्रं तदर्धं रविवीक्षकः ॥ एवं ध्यानरतस्यैव प्रत्यक्षस्त्रिपुरां
तकः ॥ ३४ ॥ साधुसाधु महाभाग सत्त्ववांस्तु भुजंगम ॥ त्वया भक्त्या गृहीतोऽहं प्रीतस्ते ह्युरगेश्वर ॥ वरं याचय मे क्षिप्रं यस्ते मनसि वर्त्तते ॥
॥ ३५ ॥ ॥ मणिनाग उवाच ॥ ॥ मातृशापभयान्नाथ क्लिष्टोऽहं नर्मदातटे ॥ त्वत्प्रसादेन मे नाथ मातृशापो भवेद्वृथा ॥ ३६ ॥ ॥ ईश्वर
उवाच ॥ ॥ हव्यवाहमुखं वत्स न प्राप्स्यसि ममाऽऽज्ञया ॥ मम लोके निवासश्च तव पुत्र भविष्यति ॥ ३७ ॥ ॥ मणिनाग उवाच ॥ ॥ अत्र
स्थाने महादेव स्थीयतामंशभागतः ॥ सहस्रांशेन भागेन स्थीयतां नर्मदाजले ॥ उपकाराय लोकानां मम नाम्नैव शंकर ॥ ३८ ॥ ॥ ईश्वर
उवाच ॥ ॥ स्थापयस्व परं लिंगमाज्ञया मम पन्नग ॥ इत्युक्त्वांतर्हितो देवो जगाम ह्युमया सह ॥३९॥ मार्कंडेय उवाच ॥ तत्र तीर्थे तु ये गत्वा
शुचि प्रयतमानसाः ॥ पंचम्यां वा चतुर्दश्यामष्टम्यां शुक्लकृष्णयोः ॥४०॥ अर्चयंति सदा पार्थ नोपसर्पंति ते यमम् ॥ दध्ना च मधुना चैव घृतेन
क्षीरयोगतः ॥ ४१ ॥ स्नापयंति विरूपाक्षमुमादेहार्धधारिणम् ॥ कामांगदहनं देवमधासुरनिषूदनम् ॥ ४२ ॥ स्नाप्यमानं च ये भक्त्या पश्यंति परमे
श्वरम् ॥ ते यांति च परे लोके सर्वपापविवर्जिते ॥ ४३ ॥ श्राद्धं प्रेतेषु ये पार्थ चाष्टम्यां पंचमीषु च ॥ ब्राह्मणैश्च सदा योग्यै
र्वेदपाठकचिंतकैः ॥ ४४ ॥ स्वदारनिरतैः श्लक्ष्णैः परदारविवर्जितैः ॥ षट्कर्मनिरतैस्तात शूद्रप्रेषणवर्जितैः ॥ ४५ ॥ खंजाश्च दर्दुराः षंढा
वार्द्धुष्याश्च कृषीवलाः ॥ भिन्नवृत्तिकराः पुत्र नियोज्या न कदाचन ॥ ४६ ॥ वृषली मंदिरे यस्य महिषीं यस्तु पालयेत् ॥
स विप्रो दूरतस्त्याज्यो व्रते श्राद्धे नराधिप ॥ ४७ ॥ काणाष्टुंटाश्च मंटाश्च वेदपाठविवर्जिताः ॥ न ते पूज्या द्विजाः

१ नः—इति शेषः । २ कद्रूः—इत्यर्थः । ३ मे—मत्तः सकाशात्—इत्यर्थः । ४ टुंटाः—अव्यक्तशब्दकर्तारः—इत्यर्थः । शब्दकल्पद्रुमे-टुण्टकशब्दव्याख्यानम् । ५ मण्टाः-उन्मत्ताः-इत्यर्थः। शब्दकल्पद्रुमे--मण्टशब्दव्याख्यानम् ।

पार्थ मणिनागेश्वरे शुभे ॥ ४८ ॥ यदीच्छेदूर्ध्वगमनमात्मनः पितृभिः सह ॥ सर्वांगरुचिरां धेनुं यो दद्यादग्रजन्मने ॥ ४९ ॥ स याति परमं लोकं यावदाभूतसंप्लवम् ॥ ततः स्वर्गाच्युतः सोऽपि जायते विमले कुले ॥ ५० ॥ ये पश्यंति परं भक्त्या मणिनागेश्वरं नृप ॥ न तेषां जायते वंशे पन्नगानां भयं नृप ॥ ५१ ॥ पन्नगः शंकते तेषां मणिनागप्रदर्शनात् ॥ सौपर्णरूपिणस्ते वै दृश्यन्ते नागमण्डले ॥ ५२ ॥ फलानि चैव दानानां शृणुष्वाऽथ नृपोत्तम ॥ अन्नं संस्कारसंयुक्तं ये ददंते नरोत्तमाः ॥ ५३ ॥ तोयं शय्यां तथा छत्रं कन्यां दासीं सुभाषिणीम् ॥ पात्रे देयं यतो राजन्यदीच्छेच्छ्रेय आत्मनः ॥ ५४ ॥ सुरभीणि च पुष्पाणि गन्धवस्त्राणि दापयेत् ॥ दीपं धान्यं गृहं शुभ्रं सर्वोपस्करसंयुतम् ॥५५॥ ये ददन्ते परं भक्त्या ते व्रजंति त्रिविष्टपम् ॥ मणिनागे नृपश्रेष्ठ यच्च दानं प्रदीयते ॥ ५६ ॥ तस्य दानस्य भावेन स्वर्गे वासो भवेद्ध्रुवम् ॥ पातकानि प्रलीयन्ते आमपात्रे यथा जलम् ॥ ५७ ॥ नर्मदातोयसंसिद्धं भोज्यं विप्रे ददाति यः ॥ सोऽपि पापैर्विनिर्मुक्तः क्रीडते दैवतैः सह ॥ ५८ ॥ ततः स्वर्गच्युतानां हि लक्षणं प्रवदाम्यहम् ॥ दीर्घायुषो जीवपुत्रा धनवंतः सुशोभनाः ॥ ५९ ॥ सर्वव्याधिविनिर्मुक्ताः सुतभृत्यैः समन्विताः ॥ त्यागिनो भोगसंयुक्ता धर्माख्यानरताः सदा ॥ ६० ॥ देवद्विजगुरोर्भक्तास्तीर्थसेवापरायणाः ॥ मातापितृवशा नित्यं द्रोहक्रोधविवर्जिताः ॥ ६१ ॥ एभिरेव गुणैर्युक्ता ये नराः पांडुनंदन ॥ सत्यंते स्वर्गादायाताः स्वर्गे वासं व्रजंति ते ॥ ६२ ॥ सर्वतीर्थवरं तीर्थं मणिनागं नृपोत्तम ॥ तीर्थाख्यानमिदं पुण्यं यः पठेच्छृणुयादपि ॥ ६३ ॥ सोऽपि पापैर्विनिर्मुक्तः शिवलोके महीयते ॥ न विषं क्रमते तेषां विचरंति यथेच्छया ॥ ६४ ॥ भाद्रपद्यां च यत्ष ष्ठ्यां पुण्यं सूर्यस्य दर्शने ॥ तत्फलं समवाप्नोति आख्यानश्रवणेन तु ॥ ६५ ॥ इति श्रीस्कांदे महापुराण एकाशीतिसाहस्र्यां संहितायां पञ्चम आवंत्यखण्डे रेवाखण्डे मणिनागेश्वरतीर्थमाहात्म्यवर्णनंनाम द्विसप्ततितमोऽध्यायः ॥ ७२ ॥ ॥ छ ॥ ॥ श्रीमार्कंडेय उवाच ॥ ॥ नर्मदा दक्षिणे कूले तीर्थं परमशोभनम् ॥ सर्वपापहरं पाथ गोपारेश्वरमुत्तमम् ॥ गोदेहान्निःसृतं लिंगं पुण्यं भूमितले नृप ॥ १ ॥ ॥ युधिष्ठिर उवाच ॥ ॥ गोदेहान्निःसृतं कस्माल्लिंगं पापक्षयंकरम् ॥ दक्षिणे नर्मदाकूले मणिनागसमीपतः ॥ संक्षेपात्कथ्यतां विप्र गोपारेश्वरसम्भवम् ॥ २ ॥ ॥ ॥ श्रीमार्कंडेय उवाच ॥ ॥ कामधेनुस्तपस्तत्र पुरा पार्थ चकार ह ॥ ध्यायते परया भक्त्या देवदेवं महेश्वरम् ॥ ३ ॥ तुष्टस्तस्या जगन्नाथः कपिलाया महेश्वरः ॥ निःसृतो देहमध्यात्तु अच्छेद्यः परमेश्वरः ॥ ४ ॥ तुष्टो देवि जगन्मातः कपिले परमेश्वरि ॥ आराधनं कृतं यस्मात्त

१ अनंतरं मणिनागेश्वरतीर्थे गत्वा स्नात्वा—दानानि दत्त्वा च—इत्यर्थोऽत्राध्याहृत्य बोद्धव्यः।

द्ददाऽऽशु शुभानने ॥ ५ ॥ ॥ सुरभ्युवाच ॥ ॥ लोकानामुपकाराय सृष्टाऽहं परमेष्ठिना ॥ लोककार्याणि सर्वाणि सिद्धयंति मत्प्रसादतः ॥ ६ ॥
लोकाः स्वर्गं प्रयास्यन्ति मत्प्रसादेन शंकर ॥ तीर्थं त्वं भव मे शम्भो लोकानां हितकाम्यया ॥ ७ ॥ तथेति भगवानुक्त्वा तीर्थे तत्रावसन्मुदा ॥
तदाप्रभृति तत्तीर्थं विख्यातं वसुधातले ॥ स्नानेनैकेन राजेंद्र पापसंघं व्यपोहति ॥८॥ गोपारेश्वरगोदानं यस्तु भक्त्या च कारयेत् ॥ योग्ये द्विजो
त्तमे देया योग्या धेनुः सकांचना ॥ ९ ॥ सवत्सा तरुणी शुभ्रा बहुक्षीरा सवस्त्रका ॥ कृष्णपक्षे चतुर्दश्यामष्टम्यां वा प्रदापयेत् ॥ १० ॥ सर्वेषु
चैव मासेषु कार्त्तिके च विशेषतः ॥ दापयेत्परया भक्त्या द्विजे स्वाध्यायतत्परे ॥ ११ ॥ विधिना च प्रदद्याद्यो विधिना यस्तु गृह्णते ॥ तावुभौ
पुण्यकर्माणौ प्रेक्षकः पुण्यभाजनम् ॥ १२ ॥ पिंडदानं प्रकुर्याद्यः प्रेतानां भक्तिसंयुतः ॥ पिंडेनैकेन राजेंद्र प्रेता यांति परां गतिम् ॥ १३ ॥
भक्त्या प्रणामं रुद्रस्य ये कुर्वंति दिनेदिने ॥ तेषां पापं प्रलीयेत भिन्नपात्रे जलं यथा ॥ १४ ॥ तत्र तीर्थे तु यो राजन्वृषभं च समुत्सृजेत् ॥ पितर
श्चोद्धृतास्तेन शिवलोके महीयते ॥ १५ ॥ ॥ युधिष्ठिर उवाच ॥ ॥ वृषोत्सर्गे कृते तात फलं यज्जायते नृणाम् ॥ तत्सर्वं कथयस्वाशु प्रय
त्नेन द्विजोत्तम ॥ १६ ॥ ॥ श्रीमार्कंडेय उवाच ॥ ॥ सर्वलक्षणसंपूर्णे वृषे चैव तु यत्फलम् ॥ तदहं संप्रवक्ष्यामि शृणुष्व धर्मनंदन[1] ॥ १७ ॥
कार्त्तिके चैव वैशाखे पूर्णिमायां नराधिप ॥ रुद्रस्य सन्निधौ भूत्वा शुचिः स्नातो जितेंद्रियः ॥ १८ ॥ वृषस्यैव समुत्सर्गं कारयेत्प्रीयतां हरः ॥
सान्निध्ये कारयेत्पुत्र चतस्रो वत्सिकाः शुभाः ॥ १९ ॥ दत्त्वा तु विप्रमुख्याय सर्वलक्षणसंयुताः ॥ प्रीयतां च महादेवो ब्रह्मा विष्णुर्महेश्वरः ॥
॥ २० ॥ वृषभे रोमसंख्या या सर्वांगेषु नराधिप ॥ तावद्वर्षप्रमाणं तु शिवलोके महीयते ॥ २१ ॥ शिवलोके वसित्वा तु यदा मर्त्येषु जाय
ते ॥ कुले महति संभूतिर्धनधान्यसमाकुले ॥ २२ ॥ नीरोगो रूपवांश्चैव विद्याढ्यः सत्यवाक्छुचिः ॥ गोपारेश्वरमाहात्म्यं मया
ख्यातं युधिष्ठिर ॥ गोदेहान्निःसृतं लिंगं नर्मदादक्षिणे तटे ॥ २३ ॥ इति श्रीस्कांदे महापुराण एकाशीतिसाहस्र्यां संहितायां पंचम
आवन्त्यखण्डे रेवाखण्डे गोपारेश्वरमाहात्म्यवर्णनंनाम त्रिसप्ततितमोऽध्यायः ॥ ७३ ॥ ॥ छ ॥ ॥ श्रीमार्कंडेय उवाच ॥ ॥
रेवाया उत्तरे कूले तीर्थं परमशोभनम् ॥ सर्वपापहरं मर्त्ये नाम्ना वै गौतमेश्वरम् ॥ १ ॥ स्थापितं गौतमेनैव लोकानां हितकाम्यया ॥
स्वर्गसोपानरूपं तु तीर्थं पुंसां युधिष्ठिर ॥ २ ॥ तत्र गच्छ परं भक्त्या यत्र देवो जगद्गुरुः ॥ पातकस्य विनाशार्थं स्वर्गवासप्रदस्तथा ॥ ३ ॥

१ पाण्डुनन्दन—इ०पा० ।

सौभाग्यवर्द्धनं तीर्थं जयदं दुःखनाशनम् ॥ पिंडदानेन चैकेन कुलानामुद्धरेत्त्रयम् ॥ ४ ॥ यत्किंचिद्दीयते भक्त्या स्वल्पं वा यदि वा बहु ॥ तत्सर्वं शतसाहस्रमाज्ञया गौतमस्य हि ॥ ५ ॥ तीर्थानां परमं तीर्थं स्वयं रुद्रेण भाषितम् ॥ ६ ॥ इति श्रीस्कांदे महापुराण एकाशीतिसाहस्र्यां संहितायां पञ्चम आवन्त्यखण्डे रेवाखण्डे गौतमेश्वरतीर्थमाहात्म्यवर्णनंनाम चतुःसप्ततितमोऽध्यायः ॥ ७४ ॥ ॥ छ ॥ ॥ श्रीमार्कंडेय उवाच ॥ ॥ नर्मदादक्षिणे कूले तीर्थं परमशोभनम् ॥ शंखचूडस्य नाम्ना वै प्रसिद्धं भूमिमंडले ॥ १ ॥ शंखचूडः स्वयं तत्र संस्थितः पांडुनंदन ॥ वैनतेयभयात्पार्थ सुखद नर्मदातटे ॥ २ ॥ तत्र तीर्थे तु यो भक्त्या शुचिर्भूत्वा समाहितः ॥ स्नापयेच्छंखचूडं तु क्षीरक्षौद्रेण सर्पिषा ॥ ३ ॥ रात्रौ जागरणं कुर्याद्देवस्याग्रे नराधिप ॥ दधिभक्तेन संपूज्य ब्राह्मणाञ्छंसितव्रतान् ॥ गोप्रदाने द्विजेंद्रोऽयं सर्वपापक्षयंकरः ॥ ४ ॥ तस्मिंस्तीर्थे तु यः पार्थ सर्प्पदष्टं प्रतर्प्पयेत् ॥ स याति परमं लोकं शंकरस्य वचो यथा ॥ ५ ॥ इति श्रीस्कांदे महापुराण एकाशीतिसाहस्र्यां संहितायां पञ्चम आवंत्यखण्डे रेवाखण्डे शंखचूडतीर्थमाहात्म्यवर्णनंनाम पंचसप्ततितमोऽध्यायः ॥ ७५ ॥ ॥ छ ॥ ॥ श्रीमार्कंडेय उवाच ॥ ततो गच्छेत्तु राजेंद्र पारेश्वरमनुत्तमम् ॥ पराशरो महात्मा वै नर्मदायास्तटे शुभे ॥ १ ॥ तपश्चचार विपुलं पुत्रार्थं पांडुनंदन ॥ हिमवद्दुहिता तेन गौरी नारायणी नृप ॥ २ ॥ तोषिता परया भक्त्या नर्मदोत्तरके तटे ॥ तस्य तुष्टा महादेवी शंकरार्द्धांगधारिणी ॥ ३ ॥ भोभो ऋषिवर श्रेष्ठ तुष्टाऽहं तव भक्तितः ॥ वरं याचय मे विप्र पराशर महामते ॥ ४ ॥ ॥ पराशर उवाच ॥ ॥ परितुष्टाऽसि मे देवि यदि देयो वरो मम ॥ देहि पुत्रं भगवति सत्यशौचगुणान्वितम् ॥ ५ ॥ वेदाभ्यसनशीलं हि सर्वशास्त्रविशारदम् ॥ तीर्थे चाऽत्र भवेद्देवि सन्निधानवरेण तु ॥ ६ ॥ लोकोपकारहेतोश्च स्थीयतां गिरिनंदिनि ॥ पराशराभिधानेन नर्मदादक्षिणे तटे ॥ ७ ॥ ॥ श्रीदेव्युवाच ॥ ॥ एवं भवतु ते विप्र तत्रै वांतरधीयत ॥ पराशरो महात्मा वै स्थापयामास पार्वतीम् ॥ ८ ॥ शंकरं स्थापयामास सुरासुरनमस्कृतम् ॥ अच्छेद्यमप्रतर्क्यं च देवानां तु दुरासदम् ॥ ९ ॥ पराशरो महात्मा वै कृतार्थो ह्यभवन्नृप ॥ १० ॥ तत्र तीर्थे तु यो भक्त्या शुचिः प्रयतमानसः ॥ स्त्र्यथवा पुरुषो वापि काम क्रोधविवर्जितः ॥ ११ ॥ माघे चैत्रेऽथ वैशाखे श्रावणे नृपनंदन ॥ मासि मार्गशिरे चैव शुक्लपक्षे तु सर्वदा ॥ १२ ॥ तत्र गत्वा शुभे स्थाने नर्मदादक्षिणे तटे ॥ १३ ॥ उपोष्य परया भक्त्या व्रतमेतत्समाचरेत् ॥ रात्रौ जागरणं कृत्वा दीपदानं स्वशक्तितः ॥ १४ ॥ गीतं नृत्यं तथा वाद्यं कामक्रोधविवर्जितः ॥ प्रभाते विमले प्राप्ते द्विजाः पूज्याः स्वशक्तितः ॥ १५ ॥ संपूज्य ब्राह्मणान्पार्थ धनदानहिरण्यतः ॥ वस्त्रेण च्छत्रदानेन

शय्यातांबूलभोजनैः ॥ १६ ॥ प्रीणयेन्नर्मदातीरे ब्राह्मणाञ्छंसितव्रतान् ॥ श्राद्धं कार्यं नृपश्रेष्ठ आमैः पक्वैर्जलेन च ॥ १७ ॥ स्त्रीणां चैव तु शूद्राणामामश्राद्धं प्रशस्यते ॥ आमं चतुर्गुणं देयं ब्राह्मणानां युधिष्ठिर ॥ १८ ॥ वेदोक्तेन विधानेन द्विजाः पूज्याः प्रयत्नतः ॥ हस्तमात्रैः कुशैश्चैव तिलैश्चैवाक्षतैर्नृप ॥ १९ ॥ विप्रा उदङ्मुखाः कार्याः स्वयं वै दक्षिणामुखः ॥ दर्भेषु निक्षिपेदन्नमित्युच्चार्य द्विजाग्रतः ॥ २० ॥ प्रेता यांतु परे लोके तीर्थस्यास्य प्रभावतः ॥ पापं मे प्रशमं यातु एतु वृद्धिं शुभं सदा ॥ २१ ॥ वृद्धिं यातु सदा वंशो ज्ञातिवर्गो द्विजोत्तम ॥ एवमुच्चार्य विप्राय दानं देयं स्वशक्तितः ॥ २२ ॥ गोभूतिसहिरण्यादि चान्नं वस्त्रं स्वशक्तितः ॥ दातव्यं पांडवश्रेष्ठ पारेश्वरवराश्रमे ॥ २३ ॥ ये शृण्वंति परं भक्त्या मुच्यंते सर्वपातकैः ॥ २४ ॥ इति श्रीस्कांदे महापुराण एकाशीतिसाहस्र्यां संहितायां पञ्चम आवन्त्यखण्डे रेवाखण्डे पारेश्वरतीर्थमाहात्म्यवर्णनंनाम षट्सप्ततितमोऽध्यायः ॥ ७६ ॥ ॥ श्रीमार्कंडेय उवाच ॥ ॥ भीमेश्वरं ततो गच्छेत्सर्वपापक्षयंकरम् ॥ सेवितं ऋषिसंघैश्च भीमव्रतधरैः शुभैः ॥ १ ॥ तत्र तीर्थे तु यः स्नात्वा सोपवासो जितेंद्रियः ॥ जपेदेकाक्षरं मंत्रमूर्ध्वबाहुर्दिवाकरे ॥ २ ॥ तस्य जन्मार्जितं पापं तत्क्षणादेव नश्यति ॥ सप्तशन्मार्जितं पापं गायत्र्या नश्यते ध्रुवम् ॥३॥ दशभिर्जन्मभिर्जातं शतेन तु पुरा कृतम् ॥ सहस्रेण त्रिजन्मोत्थं गायत्री हंति किल्बिषम् ॥ ४ ॥ वैदिकं लौकिकं वापि जाप्यं जप्तं नरेश्वर ॥ तत्क्षणाद्दहते सर्वं तृणन्तु ज्वलनो यथा ॥ ५ ॥ न देवबलमाश्रित्य कदाचित्पापमाचरेत् ॥ अज्ञानान्नश्यते क्षिप्रं नोत्तरं तु कदाचन ॥ ६ ॥ तत्र तीर्थे तु यो दानं शक्तिमाश्रित्य चाचरेत् ॥ तदक्षय्यफलं सर्वं जायते पांडुनंदन ॥ ७ ॥ इति श्रीस्कांदे महापुराण एकाशीतिसाहस्र्यां संहितायां पञ्चम आवन्त्यखण्डे रेवाखण्डे भीमेश्वरतीर्थमाहात्म्यवर्णनंनाम सप्तसप्ततितमोऽध्ययः ॥७७॥ ॥ श्रीमार्कंडेय उवाच ॥ ॥ ततो गच्छेत्तु राजेंद्र नारदेश्वरमुत्तमम् ॥ तीर्थानां परमं तीर्थं निर्मितं नारदेन तु ॥१॥ ॥ युधिष्ठिर उवाच ॥ ॥ नारदेन मुनिश्रेष्ठ कस्मात्तीर्थं विनिर्मितम् ॥ एतदाख्याहि मे सर्वं प्रसन्नो यदि सत्तम ॥२॥ श्रीमार्कंडेय उवाच ॥ ॥ परमेष्ठिसुतः पार्थ नारदो मुनिसत्तमः ॥ रेवायाश्चोत्तरे कूले तपस्तेन पुरा कृतम् ॥ ३ ॥ नवनाडीनिरोधेन काष्ठावत्यां गतेन च ॥ तोषितः पशुभर्त्ता वै नारदेन युधिष्ठिर ॥ ४ ॥ ॥ ईश्वर उवाच ॥ ॥ तुष्टोऽहं तव विप्रेंद्र योगिनाथ अयोनिज ॥ वरं प्रार्थय मे वत्स यस्ते मनसि वर्त्तते ॥ ५ ॥ ॥ नारद उवाच ॥ ॥ त्वत्प्रसादेन मे शंभो योगश्चैव प्रसिध्यतु ॥ अचला ते भवेद्भक्तिः सर्वकालं ममैव तु ॥ ६ ॥ स्वेच्छाचारी भवे देव वेदवेदांगपारगः ॥ त्रिकालज्ञो जगन्नाथ गीतज्ञोऽहं सदा भवे ॥ ७ ॥ दिनेदिने यथा युद्धं देवदानवमानुषैः ॥ पाताले मर्त्यलोके वा स्वर्गे वाऽपि महेश्वर ॥ ८ ॥

पश्येयं त्वत्प्रसादेन भवंतं पार्वतीं तथा ॥ तीर्थं लोकेषु विख्यातं सर्वपापक्षयंकरम् ॥ ९ ॥ ॥ ईश्वर उवाच ॥ ॥ एवं नारद सर्वं तु भविष्यति न संशयः ॥ चिंतितं मत्प्रसादेन सिद्ध्यते नात्र संशयः ॥ १० ॥ स्वेच्छाचारो भवेर्वत्स स्वर्गे पातालगोचरे ॥ मर्त्ये वा भ्रम वै योगिन्न केनाऽपि निवार्यसे ॥ ११ ॥ सप्त स्वरास्त्रयो ग्रामा मूर्च्छनाश्चैकविंशतिः ॥ ताना एकोनपंचाशत्प्रसादान्मे तव ध्रुवम् ॥ १२ ॥ मम प्रियंकरं दिव्यं नृत्य गीतं भविष्यति ॥ कलिं च पश्यसे नित्यं देवदानवकिन्नरैः ॥ १३ ॥ त्वत्तीर्थं भूतले पुण्यं मत्प्रसादाद्भविष्यति ॥ वेदवेदांगतत्त्वज्ञो ह्यशेषज्ञानकोविदः ॥ एकस्त्वमसि निःसंगो मत्प्रसादेन नारद ॥१४॥ इत्युक्त्वांतर्दधे देवो नारदस्तत्र शूलिनम् ॥ स्थापयामास राजेंद्र सर्वसत्त्वोपकारकम् ॥ ॥ १५ ॥ पृथिव्यामुत्तमं तीर्थं निर्मितं नारदेन तु ॥ तत्र तीर्थे नृपश्रेष्ठ यो गच्छेद्विजितेंद्रियः ॥ १६ ॥ मासि भाद्रपदे पार्थ कृष्णपक्षे चतुर्दशी ॥ उपोष्य परया भक्त्या रात्रौ कुर्वीत जागरम् ॥ १७ ॥ छत्रं तत्र प्रदातव्यं ब्राह्मणे शुभलक्षणे ॥ शस्त्रेण तु हता ये वै तेषां श्राद्धं प्रदापयेत् ॥ ते यांति परमं लोकं पिंडदानप्रभावतः ॥ १८ ॥ कपिला तत्र दातव्या पितॄनुद्दिश्य भारत ॥ इत्युच्चार्य द्विजे देया यांतु ते परमां गतिम् ॥ १९ ॥ अस्य श्राद्धस्य भावेन ब्राह्मणस्य प्रसादतः ॥ नर्मदातोयभावेन न्यायार्जितधनस्य च ॥ तेषां चैव प्रभावेन प्रेता यांतु परां गतिम् ॥ २० ॥ इत्युच्चार्य द्विजे देया दक्षिणा च स्वशक्तितः॥ हविष्यान्नं विशालाक्ष द्विजानां चैव दापयेत् ॥ २१ ॥ दीपं भक्त्या प्रदातव्यं नृत्यं गीतं च कारयेत् ॥ अवाप्तं तेन वै सर्व्वं यः करोतीश्वरालये ॥ २२ ॥ स याति रुद्रसान्निध्यमिति रुद्रः स्वयं जगौ ॥ विद्यादानेन चैकेन अक्षयां गतिमाप्नुयात् ॥ ॥ २३ ॥ धूर्वहास्तत्र दातव्या भूमिः सस्यवती नृप ॥ चित्रभानुं शुभैर्मंत्रैः प्रीणयेत्तत्र भक्तितः ॥ २४ ॥ आज्येन सुप्रभूतेन होमद्रव्येण भारत ॥ ये यजंति सदा भक्त्या त्रिकालं नृत्यमेव च ॥ २५ ॥ तीर्थे नारदनामाख्ये रेवायाश्चोत्तरे तटे ॥ चित्रभानुमुखा देवाः सर्वदेवमयो ऋषिः ॥ २६ ॥ ऋषिणा प्रीणिताः सर्वे तस्मात्प्रीत्यो[1] हुताशनः ॥ पूजिते हव्यवाहे तु दारिद्र्यं नैव जायते ॥ २७ ॥ धनेन विपुला प्रीतिर्जायते प्रतिजन्मनि ॥ कुलीनाश्च सुवेषाश्च सर्वकालं धनेन तु ॥ २८ ॥ प्लवो नदीनां पतिरंगनानां राजा च सद्वृत्तरतः प्रजानाम् ॥ धनं नराणामृतवस्तरूणां गतं गतं यौवनमानयंति[2] ॥२९॥ धनदत्वं धनेशेन तस्मिंस्तीर्थे ह्युपार्जितम् ॥ यमेन च यमत्वं हि इंद्रत्वं चैव वज्रिणा ॥३०॥ अन्यैरपि महीपालैः पार्थिवत्व मुपार्जितम् ॥ नारदेश्वरमाहात्म्याद्ध्रुवो निश्चलतां गतः ॥ ३१ ॥ सर्वतीर्थवरं तीर्थं निर्मितं नारदेन तु॥ पृथिव्यां सागरांतायां रेवायाश्चोत्तरे तटे ॥

१ प्रीत्यः—प्रीणनीयः—इत्यर्थः । २ युक्ता भविष्यन्ति—इति शेषः ।

तद्वरं सर्वतीर्थानां महापातकनाशनम् ॥ ३२ ॥ इति श्रीस्कांदे महापुराण एकाशीतिसाहस्र्यां संहितायां पञ्चम आवंत्यखण्डे रेवाखण्डे
नारदेश्वरतीर्थमाहात्म्यवर्णनंनामाष्टसप्ततितमोऽध्यायः ॥ ७८ ॥ ॥ छ ॥ ॥ श्रीमार्कंडेय उवाच ॥ ॥ ततो गच्छेत्तु राजेंद्र तीर्थद्वयमनुत्तमम् ॥
दधिस्कन्दं मधुस्कंदं सर्वपापक्षयंकरम् ॥ १ ॥ दधिस्कन्दे नरः स्नात्वा यस्तु दद्याद्द्विजे दधि ॥ उपतिष्ठेत्ततस्तस्य सप्तजन्मनि भारत ॥ २ ॥
न व्याधिर्न जरा तस्य न शोको नैव मत्सरः ॥ दशचंद्रशतं यावज्जायते विमले कुले ॥ ३ ॥ मधुस्कन्देऽपि मधुना मिश्रितान्यस्तिलान्ददेत् ॥
नाऽसौ वैवस्वतं देवं पश्येद्वै जन्मसप्ततिम् ॥ ४ ॥ मधुना सह संमिश्रं पिंडं यस्तु प्रदापयेत् ॥ तस्य पौत्रप्रपौत्रेभ्यो दारिद्र्यं नैव जायते ॥
॥ ५ ॥ दधिभिः सह संमिश्रं पिंडं यस्तु प्रदापयेत् ॥ तस्मिंस्तीर्थे नरः स्नात्वा विधिवद्दक्षिणामुखः ॥ ६ ॥ पिता पितामहश्चैव तथैव
प्रपितामहः ॥ द्वादशाब्दानि तुष्यंति नाऽत्र कार्या विचारणा ॥ ७ ॥ इति श्रीस्कांदे महापुराण एकाशीतिसाहस्र्यां संहितायां पञ्चम
आवन्त्यखण्डे रेवाखण्डे दधिस्कन्दमधुस्कन्दतीर्थमाहात्म्यवर्णनंनामैकोनाशीतितमोऽध्यायः ॥ ७९ ॥ ॥ छ ॥ ॥ श्रीमार्कंडेय
उवाच ॥ ॥ ततो गच्छेत्तु राजेंद्र नंदिकेश्वरमुत्तमम् ॥ यत्र सिद्धो महानंदी तत्ते सर्वं वदाम्यहम् ॥ १ ॥ रेवायां पुरतः कृत्वा पुरा
नंदी गणेश्वरः ॥ तपस्तपञ्जयं कुर्वंस्तीर्थात्तीर्थं जगाम ह ॥ २ ॥ दधिस्कंदं मधुस्कंदं यावत्त्यक्त्वा तु गच्छति ॥ तावत्तुष्टो महादेवो नंदिनाथ
मुवाच ह ॥ ३ ॥ ॥ ईश्वर उवाच ॥ ॥ भोभोः प्रसन्नो नंदीश वरं वृणु यथेप्सितम् ॥ तपसा तेन तुष्टोऽहं तीर्थयात्राकृतेन ते ॥ ४ ॥ नंदीश्वर उवाच ॥
न चाऽहं कामये वित्तं न चाऽहं कुलसंततिम् ॥ मुक्त्वा न कामये कामं तव पादांबुजात्परम् ॥ ५ ॥ कृमिकीटपतंगेषु तिर्यग्योनिं गतस्य वा ॥ जन्म
जन्मांतरेऽप्यस्तु भक्तिस्त्वयि ममाऽचला ॥ ६ ॥ तथेत्युक्त्वा महादेवः परया कृपया नृप ॥ गृहीत्वा तं करे सिद्धं जगाम निलयं हरः ॥ ७ ॥ तस्मिं
स्तीर्थे तु यः स्नात्वा भक्त्या त्र्यक्षं प्रपूजयेत् ॥ अग्निष्टोमस्य यज्ञस्य फलं प्राप्नोति मानवः ॥ ८ ॥ तत्र तीर्थे तु यः स्नात्वा प्राणत्यागं करोति चेत् ॥
शिवस्याऽनुचरो भूत्वा मोदते कल्पमक्षयम् ॥ ९ ॥ ततः कालेन महता जायते विमले कुले ॥ वेदवेदांगतत्त्वज्ञो जीवेच्च शरदां शतम् ॥ १० ॥ एतत्ते
कथितं तात तीर्थमाहात्म्यमुत्तमम् ॥ दुर्लभं मर्त्यसंज्ञस्य सर्वपापक्षयंकरम् ॥ ११ ॥ इति श्रीस्कांदे महापुराण एकाशीतिसाहस्र्यां संहितायां
पञ्चम आवंत्यखंडे रेवाखण्डे नंदिकेश्वरतीर्थमाहात्म्यवर्णनंनामाशीतितमोऽध्यायः ॥ ८० ॥ ॥ छ ॥ ॥ श्रीमार्कंडेय उवाच ॥ ॥ ततो
गच्छेन्महाराज वरुणेश्वरमुत्तमम् ॥ यत्र सिद्धो महादेवो वरुणो नृपसत्तम ॥ १ ॥ पिण्याकशाकपर्णैश्च कृच्छ्रचांद्रायणादिभिः ॥ आराध्य गिरिजा

नाथं ततः सिद्धिं परां गतः ॥ २ ॥ तत्र तीर्थे तु यः स्नात्वा संतर्प्य पितृदेवताः ॥ पूजयेच्छंकरं भक्त्या स याति परमां गतिम् ॥ ३ ॥ कुंडिकां
वर्द्धनीं वाऽपि महद्वा जलभाजनम् ॥ अन्नेन सहितं पार्थ तस्य पुण्यफलं शृणु ॥४॥ यत्फलं लभते मर्त्यः सत्रे द्वादशवार्षिके ॥ तत्फलं समवाप्नोति
नाऽत्र कार्या विचारणा ॥ ५ ॥ सर्वेषामेव दानानामन्नदानं परं स्मृतम् ॥ सद्यः प्रीतिकरं तोयमन्नं च नृपसत्तम ॥ ६ ॥ तत्र तीर्थे मृतानां तु नराणां
भावितात्मनाम् ॥ वरुणस्य पुरे वासो यावदाभूतसंप्लवम् ॥ ७ ॥ पश्चात्पूर्णे ततः काले मर्त्यलोके प्रजायते ॥ अन्नदानप्रदो नित्यं जीवेद्वर्षशतं नरः
॥ ८ ॥ इति श्रीस्कांदे महापुराण एकाशीतिसाहस्र्यां संहितायां पञ्चम आवन्त्यखण्डे रेवाखण्डे वरुणेश्वरतीर्थमाहात्म्यवर्णनंनामैकाशीतितमो
ऽध्यायः ॥ ८१ ॥ ॥ छ ॥ ॥ श्रीमार्कंडेय उवाच ॥ ॥ ततो गच्छेन्महीपाल वह्नितीर्थमनुत्तमम् ॥ यत्र सिद्धो महातेजास्तपः कृत्वा
हुताशनः ॥ १ ॥ सर्वभक्ष्यः कृतो योऽसौ दंडके मुनिना पुरा ॥ नर्मदातटमाश्रित्य पूतो जातो हुताशनः ॥ २ ॥ तत्र तीर्थे तु यः स्नात्वा पूज
यित्वा महेश्वरम् ॥ अग्निप्रवेशं कुरुते स गच्छेदग्निसाम्यताम् ॥ ३ ॥ भक्त्या स्नात्वा तु यस्तत्र तर्प्पयेत्पितृदेवताः ॥ अग्निष्टोमस्य यज्ञस्य फलमा
प्नोत्यसंशयम् ॥ ४ ॥ तस्यैवाऽनंतरं राजन्कौबेरं तीर्थमुत्तमम् ॥ कुबेरो यत्र संसिद्धो यक्षाणामधिपः पुरा ॥ ५ ॥ तत्र तीर्थे नरः स्नात्वा समभ्यर्च्य
जगद्गुरुम् ॥ उमया सहितं भक्त्या सर्वपापैः प्रमुच्यते ॥ ६ ॥ तत्र तीर्थे तु यः स्नात्वा दद्याद्विप्राय कांचनम् ॥ नाभिमात्रे जले तिष्ठन्स लभेतार्बु
दं फलम् ॥ ७ ॥ दधिस्कंदे मधुस्कंदे नंदीशे वरुणालये ॥ आग्नेये यत्फलं तात स्नात्वा तत्फलमाप्नुयात् ॥ ८ ॥ ते वंद्या मानुषे लोके धन्याः पूर्ण
मनोरथाः ॥ यैस्तु दृष्टं महापुण्यं नर्मदातीर्थपंचकम् ॥ ९ ॥ ते यांति भास्करे लोके परमे दुःखनाशने ॥ भास्करादैश्वरे लोके चैश्वरादनिवर्तके ॥
॥ १० ॥ नीयते स परे लोके यावदिंद्राश्चतुर्दश ॥ ततः स्वर्गाच्च्युतो मर्त्यो राजा भवति धार्मिकः ॥ ११ ॥ सर्वरोगविनिर्मुक्तो भुनक्ति सचराच
रम् ॥ विष्णुश्च देवता येषां नर्मदातीर्थसेविनाम् ॥ १२ ॥ अखंडितप्रतापास्ते जायंते नाऽत्र संशयः ॥ गंगा कनखले पुण्या कुरुक्षेत्रे सरस्वती ॥
॥ १३ ॥ ग्रामे वा यदि वाऽरण्ये पुण्या सर्वत्र नर्मदा ॥ रेवातीरे वसेन्नित्यं रेवातोयं सदा पिबेत् ॥ १४ ॥ स स्नातः सर्वतीर्थेषु सोमपानं दिनेदिने ॥
गंगाद्याः सरितः सर्वाः समुद्राश्च सरांसि च ॥ कल्पांते संक्षयं यांति न मृता तेन नर्मदा ॥ १५ ॥ इति श्रीस्कान्दे महापुराण एकाशीतिसाहस्र्यां
संहितायां पञ्चम आवन्त्यखण्डे रेवाखण्डे दधिस्कंदादिपंचतीर्थमाहात्म्यवर्णनं नाम द्व्यशीतितमोऽध्यायः ॥ ८२ ॥ ॥ छ ॥ ॥ श्रीमार्कंडेय
उवाच ॥ ॥ ततो गच्छेन्महाराज तीर्थं परमशोभनम् ॥ ब्रह्महत्याहरं प्रोक्तं रेवातटसमाश्रयम् ॥ हनूमताभिधं ह्यत्र विद्यते लिंगमुत्तमम् ॥ १ ॥

॥ युधिष्ठिर उवाच ॥ ॥ हनूमंतेश्वरं नाम कथं जातं वदस्व मे ॥ ब्रह्महत्याहरं तीर्थं रेवादक्षिणसंस्थितम् ॥ २ ॥ ॥ श्रीमार्कंडेय उवाच ॥ ॥ साधु
साधु महाबाहो सोमवंशविभूषण ॥ गुह्याद्गुह्यतरं तीर्थं नाख्यातं कस्यचिन्मया ॥ ३ ॥ तव स्नेहात्प्रवक्ष्यामि पीडितो वार्द्धकेन तु ॥ पूर्वं जातं मह
युद्धं रामरावणयोरपि ॥ ४ ॥ पुलस्त्यो ब्रह्मणः पुत्रो विश्रवास्तस्य वै सुतः ॥ रावणस्तेन संजातो दशास्यो ब्रह्मराक्षसः ॥ ५ ॥ त्रैलोक्यविजयी
भूतः प्रसादाच्छूलिनः स च ॥ गीर्वाणा विजिताः सर्वे रामस्य गृहिणी हता ॥ ६ ॥ वारितः कुम्भकर्णेन सीतां मोचयमोचय ॥ विभीषणेन वै
पापो मन्दोदर्या पुनःपुनः ॥ ७ ॥ त्वं जितः कार्त्तवीर्येण[1] रैणुकेयेन सोऽपि च ॥ स[2] रामो रामभद्रेण तस्य संख्ये कथं जयः ॥ ८ ॥ ॥ रावण
उवाच ॥ ॥ वानरैश्च नरैर्ऋक्षैर्वराहैश्च निरायुधैः ॥ देवासुरसमूहैश्च न जितोऽहं कदाचन ॥ ९ ॥ ॥ श्रीमार्कंडेय उवाच ॥ ॥ सुग्रीवहनु
मद्भ्यां च कुमुदेनांगदेन च ॥ एतैरन्यैः सहायैश्च रामचन्द्रेण वै जितः ॥ १० ॥ रामचन्द्रेण पौलस्त्यो हतः संख्ये महाबलः ॥ वनं भग्नं हताः
शूराः प्रभंजनसुतेन च ॥ ११ ॥ रावणस्य सुतो जन्ये[4] हतश्चाक्षकुमारकः ॥ आयामो[5] रक्षसां भीमः संपिष्टो वानरेण तु ॥ १२ ॥ एवं रामायणे वृत्ते
सीतामोक्षे कृते सति ॥ अयोध्यां तु गते रामे हनुमान्स महाकपिः ॥ १३ ॥ कैलासाख्यं गतः शैलं प्रणामाय महेशितुः ॥ तिष्ठतिष्ठेत्यसौ
प्रोक्तो नंदिना वानरोत्तमः ॥ १४ ॥ ब्रह्महत्यायुतस्त्वं हि राक्षसानां वधेन हि ॥ भैरवस्य सभा नूनं नद्रष्टव्या त्वया कपे ॥ १५ ॥ ॥ हनुमानु
वाच ॥ ॥ नंदिनाथ हरं पृच्छ पातकस्योपशांतिदम् ॥ पापोऽहं प्लवगो यस्मात्संजातः कारणांतरात् ॥ १६ ॥ ॥ नन्द्युवाच ॥ ॥ रुद्रदेहोद्भवा
किं ते न श्रुता भूतले स्थिता ॥ श्रवणाज्जन्मजनितं द्विगुणं कीर्त्तनाद्व्रजेत् ॥ १७ ॥ त्रिंशज्जन्मार्जितं पापं न श्येद्रेवावगाहनात् ॥ तस्मात्त्वं नर्म
दातीरं गत्वा चर तपो महत् ॥ १८ ॥ गन्धवाहसुतो[6]ऽप्येवं नंदिनोक्तं निशम्य च ॥ प्रयातो नर्मदातीरमौर्व्या दक्षिणसंगमम् ॥ १९ ॥ दध्यौ
सुदक्षिणे देवं विरूपाक्षं त्रिशूलिनम् ॥ जटामुकुटसंयुक्तं व्यालयज्ञोपवीतिनम् ॥ २० ॥ भस्मोपचितसर्वांगं डमरुस्वरनादितम् ॥ उमार्द्धांगहरं
शांतं गोनाथासनसंस्थितम्[7] ॥ २१ ॥ वत्सरान्सुबहून्यावदुपासांचक्र ईश्वरम् ॥ तावत्तुष्टो महादेव आजगाम सहोमया ॥ २२ ॥ उवाच मधुरां

१ सः—कार्तवीर्यः । २ सः—रेणुकेयः—रामः—परशुरामः । ३ स्याम्—इति शेषः । ४ जन्ये—युद्धे । ५ आयामः—समूहः—इत्यर्थोऽत्र । ६ गंधवाहसुतः—वायुपुत्रो हनुमान् । ७ गोनाथासनसंस्थितम्—वृषारूढम् ।

वाणीं मेघगंभीरनिस्वनाम् ॥ साधुसाध्वित्युवाचेशः कष्टं वत्स त्वया कृतम् ॥ २३ ॥ न च पूर्वं त्वया पापं कृतं रावणसंक्षये ॥ स्वामिकार्यरतस्त्वं हि सिद्धोऽसि मम दर्शनात् ॥ २४ ॥ हनुमांश्च हरं दृष्ट्वा उमार्द्धांगहरं स्थिरम् ॥ साष्टांगं प्रणतोऽवोचज्जय शंभो नमोऽस्तु ते ॥ जयांऽधकविनाशाय जय गंगाशिरोधर ॥ २५ ॥ एवं स्तुतो महादेवो वरदो वाक्यमब्रवीत् ॥ वरं प्रार्थय मे वत्स प्राणसंभवसंभव ॥ २६ ॥ ॥ श्रीहनूमानुवाच ॥ ॥ ब्रह्मरक्षोवधाज्जाता मम हत्या महेश्वर ॥ न पापोऽहं भवेदेव युष्मत्संभाषणे क्षणात् ॥ २७ ॥ ॥ ईश्वर उवाच ॥ ॥ नर्मदातीर्थमाहात्म्याद्धर्मयोगप्रभावतः ॥ मन्मूर्त्तिदर्शनात्पुत्र निष्पापोऽसि न संशयः ॥ २८ ॥ अन्यच्च ते प्रयच्छामि वरं वानरपुंगव ॥ उपकाराय लोकानां नामानि तव मारुते ॥ २९ ॥ हनूमानंजनिसुतो वायुपुत्रो महाबलः ॥ रामेष्टः फाल्गुनो गोत्रः पिंगाक्षोऽमितविक्रमः ॥ ३० ॥ उदधिक्रमणश्रेष्ठो दशग्रीवस्य दर्पहा ॥ लक्ष्मणप्राणदाता च सीताशोकनिवर्त्तनः ॥ ३१ ॥ इत्युक्त्वांतर्दधे देव उमया सह शंकरः ॥ हनूमानीश्वरं तत्र स्थापयामास भक्तितः ॥ ३२ ॥ आत्मयोगबलेनैव ब्रह्मचर्यप्रभावतः ॥ ईश्वरस्य प्रसादेन लिंगं कामप्रदं हि तत् ॥ अच्छेद्यमप्रतर्क्यं च विनाशोत्पत्तिवर्जितम् ॥ ॥ ३३ ॥ ॥ श्रीमार्कंडेय उवाच ॥ ॥ हनूमंतेश्वरे पुत्र प्रत्यक्षप्रत्ययं शृणु ॥ यद्वृत्तं द्वापरस्याऽऽदौ त्रेतांते पांडुनन्दन ॥ ३४ ॥ सुपर्वानाम भूपालो बभूव वसुधातले ॥ तस्य राज्ञः सदा सौख्यं नरा दीर्घायुषः सदा ॥ ३५ ॥ स पुत्रधनसंयुक्तश्चौरोपद्रववर्जितः ॥ शतबाहुर्बभूवाऽस्यः पुत्रो भीमपराक्रमः ॥३६॥ आसक्तोऽसौ सदा कालं पापधर्मैर्नरेश्वर ॥ अटाट्यत धरां सर्वां पर्वतांश्च वनानि च ॥३७॥ वधार्थं मृगयूथानामागतो विंध्यपर्वतम् ॥ तरुजातिसमाकीर्णे हस्तियूथसमाचिते ॥३८॥ सिंहचित्रकशोभाढ्ये मृगवाराहसंकुले ॥ क्रीडित्वा स वने राजा नर्मदामानतः क्वचित् ॥ ॥ ३९ ॥ हनूमंतवने प्राप्तः शतक्रोशप्रमाणके ॥ चिंचिणीवनशोभाढ्ये कदंबतरुसंकुले ॥ ४० ॥ नित्यं पालाशजंबीरैः करंजखदिरैस्तथा ॥ पाटलैर्बदरैर्युक्तैः शमीतिंदुकशोभितम् ॥४१॥ मृगयूथैः समाच्छन्नशिखंडिस्वरनादितम् ॥ पारावतकसंघानां समंतात्स्वरशोभितम् ॥ ४२ ॥ शरत्कालेऽरमद्राजा बहुले चाऽश्विनस्य सः ॥ वनमध्यं गतोऽद्राक्षीद्भ्रमन्तं पिंगलद्विजम् ॥४३॥ पुस्तिकाकरसंस्थं च पप्रच्छ चपलं द्विजम् ॥ ४४ ॥ ॥ शतबाहुरुवाच ॥ ॥ एकाकी त्वं वने कस्माद्भ्रमसे पुस्तिकाकरः ॥ इतस्ततोऽपि संपश्यन्कथयस्व द्विजोत्तम ॥ ४५ ॥ ॥ ब्राह्मण उवाच ॥ ॥ कान्यकुब्जात्समायातः प्रेषितो राजकन्यया ॥ अस्थिक्षेपाय वै राजन्हनूमंतेश्वरे जले ॥ ४६ ॥ ॥ राजोवाच ॥ ॥ अस्थिक्षेपो जले कस्माद्धनूमंतेश्वरे द्विज ॥

१ प्राणसंभवसंभव–वायुपुत्र । २ बहुले–कृष्णपक्षे–इत्यर्थः ।

क्रियते केन कार्येण साश्चर्यं कथ्यतां मम ॥ ४७ ॥ सुपर्वणः सुतो यानं त्यक्त्वा भूमौ प्रणम्य च ॥ कृतांजलिपुटो भूत्वा ब्राह्मणाय नरेश्वर ॥
समस्तं कथयामास वृत्तांतं स्वं पुरातनम् ॥ ४८ ॥ ॥ ब्राह्मण उवाच ॥ ॥ शिखंडीनाम राजाऽस्ति कान्यकुब्जे प्रतापवान् ॥ अपुत्रोऽसौ
महीपालः कन्या जाता मनोरथैः ॥ ४९ ॥ जातिस्मरा सुचार्वंगी नर्मदायाः प्रभावतः ॥ पित्रा च सैकदा कन्या विवाहाय प्रजल्पिता ॥ ५० ॥
अनित्ये पुत्रि संसारे कन्यादानं ददाम्यहम् ॥ श्वः कृत्यमद्य कुर्वीत पूर्वाह्णे चाऽपराह्णिकम् ॥ न हि प्रतीक्षते मृत्युः कृतं चास्य न चाकृतम्
॥ ५१ ॥ ॥ कन्योवाच ॥ ॥ इच्छेयं यत्र काले हि तत्र देया त्वया पितुः ॥ पुत्रीवाक्यादसौ राजा विस्मितो वाक्यमब्रवीत् ॥ ५२ ॥
शिखंड्युवाच ॥ ॥ कथ्यतां मे महाभागे साश्चर्यं भाषितं त्वया ॥ पितुर्वाक्येन सा बाला उत्तमा ह्यागतांतिकम् ॥ ५३ ॥ कथयामास यद्वृत्तं
हनूमंतेश्वरे नृप ॥ कलापिनी ह्यहं तात युता भर्त्रावसं तदा ॥ ५४ ॥ रेवौर्व्यासंगमान्तिस्था रेवाया दक्षिणे तटे ॥ हनूमंतवने पुण्ये चिक्रीडाहं यदृ
च्छया ॥ ५५ ॥ भर्तृयुक्ता च संसुप्ता रजन्यां सरले नगे ॥ आगता लुब्धकास्तत्र क्षुधार्त्ता वनमुत्तमम् ॥ ५६ ॥ भर्तृयोगयुता पापैर्दृष्टाऽहं वध
चिंतकैः ॥ पाशबंधं समादाय बद्धाहं स्वामिना सह ॥ ५७ ॥ ग्रीवां ते मोटयामासुः पिच्छाच्छोटनकं कृतम् ॥ हुताशनमुखे तैस्तु सह कांतेन
लुब्धकैः ॥ ५८ ॥ पारिभर्ज्याव्रयोर्मांसं भक्षयित्वा यथेष्टतः ॥ सुप्ताः स्वस्थेंद्रिया रात्रौ सा गता शर्वरी क्षयम् ॥ ५९ ॥ प्रभाते मांसशेषं च
जंबुकैर्गृध्रघातिभिः ॥ मच्छरीरोद्भवं चास्थि स्नायुमांसेन चावृतम् ॥ ६० ॥ गृहीतं घातिनैकेन चाकाशात्पतितं तदा ॥ तं मांसभक्षणं दृष्ट्वा परे
पक्षिण आगताः ॥ ६१ ॥ दृष्ट्वा पक्षिसमूहं तु अस्थिखंडं व्यसर्जयत् ॥ विहगानां समस्तानां धावतां चैव पश्यताम् ॥ ६२ ॥ पतितं नर्मदातोये
हनूमंतेश्वरे नृप ॥ [illegible]मस्थिखंडं च पतितं नर्मदाजले ॥ ६३ ॥ तस्य तीर्थस्य पुण्येन जाताऽहं पुत्रिका तव ॥ भूपकन्या त्वहं जाता पूर्ण
चन्द्रनिभानना ॥ ६४ ॥ जातिस्मरा नरेंद्रस्य संजाता भवतः कुले ॥ तस्माद्विवाहं नेच्छामि मम भर्त्ता नृपोत्तम ॥ ६५ ॥ विषमे वर्त्तते
ऽद्यापि शकुंतमृगजातिषु ॥ तस्यास्थिशेषं राजेंद्र तस्मिंस्तीर्थे भविष्यति ॥ ६६ ॥ तत्क्षेपणार्थं वै तात प्रेषयाऽद्य द्विजोत्तमम् ॥ एतत्ते सर्व
माख्यातं कारणं नृपसत्तम ॥ ६७ ॥ मद्भर्त्ता विषमे स्थाने शकुंतमृगजातिषु ॥ यदि प्रेषयसे तात कंचित्त्वं नर्मदातटे ॥ ६८ ॥ तस्याहं कथ
यिष्यामि स्थानैश्चिह्नैश्च लक्षितम् ॥ शिखंडिनाऽप्यहं तत्र ह्याहूतो ह्यवनीपते ॥ ६९ ॥ दास्यामि विंशतिग्रामान्गच्छ त्वं नर्मदातटे ॥ प्रेषणं मे
प्रतिज्ञातमलक्ष्म्या पीडितेन तु ॥ ७० ॥ ॥ कन्योवाच ॥ ॥ गच्छ त्वं नर्मदां पुण्यां सर्वपापक्षयंकरीम् ॥ आग्नेय्यां सोमनाथस्य हनूमंतेश्वरः

परः ॥ ७१ ॥ अर्द्धक्रोशेन रेवाया विस्तीर्णो वटपादपः ॥ करंजः कटहश्चैव सन्निधाने वटस्य च ॥ ७२ ॥ न्यग्रोधमूलसान्निध्ये सूक्ष्मान्यस्थीनि
द्रक्ष्यसि ॥ समूह्य तानि संगृह्य गच्छ रेवां द्विजोत्तम ॥ ७३ ॥ आश्विनस्याऽसिते पक्षे त्रिपुरारेस्तु वै तिथौ ॥ स्नाप्य त्रिशूलिनं भक्त्या रात्रौ
त्वं कुरु जागरम् ॥ ७४ ॥ क्षिपेः प्रभाते तानि त्वं नाभिमात्रजलस्थितः ॥ इत्युच्चार्य द्विजश्रेष्ठ विमुक्तिस्तस्य जायताम् ॥ ७५ ॥ क्षिप्त्वास्थीनि
पुनः स्नानं कर्त्तव्यं त्वघनाशनम् ॥ एवं कृते तु राजेंद्र गतिस्तस्य भविष्यति ॥ ॥ ७६ ॥ कथितं कन्यया यच्च तत्सर्वं पुस्तिकाकृतम् ॥
आगतोऽहं नृपश्रेष्ठ तीर्थेऽत्र दुरितापहे ॥ ७७ ॥ सोऽभिज्ञानं ततो दृष्ट्वा नीत्वास्थीनि नरेश्वर ॥ पूर्वोक्तेन विधानन प्राक्षिपं नर्मदांमसि ॥ ७८ ॥
पुष्पवृष्टिः पपाताऽऽशु साधुसाध्विति पांडव ॥ विमानं च ततो दिव्यमागतं बर्हिणस्तदा ॥ ७९ ॥ दिव्यरूपधरो भूत्वा गतो नाके कलापवान् ॥
एवं तु प्रत्ययं दृष्ट्वा हनूमंतेश्वरे नृप ॥ ८० ॥ चकारानशनं विप्रः शतबाहुश्च भूपतिः ॥ शोषयामासतुस्तौ स्वमीश्वराराधने रतौ ॥ ८१ ॥
ध्यायंतौ तस्थतुर्देवं शतबाहुद्विजोत्तमौ ॥ मासार्धेन मृतो राजा शतबाहुर्महामनाः ॥ ८२ ॥ किंकणीजालशोभाढ्यं विमानं तत्र चागतम् ॥ साधु
साधु नृपश्रेष्ठ विमानारोहणं कुरु ॥ ८३ ॥शतबाहुरुवाच ॥ नायामि स्वर्गमार्गाग्रं विप्रो यावन्न संस्थितः ॥ उपदेशप्रदो मह्यं गुरुरूपी द्विजोत्तमः ॥
॥८४॥अप्सरस ऊचुः ॥ लोभावृतो ह्ययं विप्रो लोभात्पापस्य संग्रहः॥ हनूमंतेश्वरे राजन्ये मृताः सत्त्वमास्थिताः॥८५॥ते यांति शांकरे लोके सर्वपा
पक्षयंकरे ॥ नैव पापक्षयश्चास्य ब्राह्मणस्य नरेश्वर ॥ ८६ ॥ गृहं च गृहिणी चित्ते ब्राह्मणस्य प्रवर्त्तते ॥ शतबाहुस्ततो विप्रमुवाच विनयान्वितः ॥
॥ ८७ ॥ त्यज मूलमनर्थस्य लोभमेनं द्विजोत्तम ॥ इत्युक्त्वा स्वर्ययौ राजा स्वर्गकन्यासमावृतः ॥ ८८ ॥ दिनैः कैश्चिद्गतो विप्रः स्वर्गं वैतालि
कैर्वृतः ॥ बर्हीं च काशीराजस्य पुत्रस्तीर्थप्रभावतः ॥ ८९ ॥ आत्मानं कन्यया दत्तं पूर्वजन्म व्यचिंतयन् ॥ सा च तं प्रौढमालोक्य पितुराज्ञाम
वाप्य च ॥ स्वयंवरे स्वभर्त्तार लेभे साध्वी नृपात्मजम् ॥ ९० ॥ ॥ श्रीमार्कंडेय उवाच ॥ ॥ एतद्वृत्तांतमभवत्तस्मिंस्तीर्थे नृपोत्तम ॥ एतस्मा
त्कारणान्मेध्यं तीर्थमेतत्सदा नृप ॥ ९१ ॥ अष्टम्यां वा चतुर्दश्यां सर्व्वकालं नरेश्वर ॥ विशेषाच्चाश्विने मासि कृष्णपक्षे चतुर्दशीम् ॥ ९२ ॥ स्नाप
येदीश्वरं भक्त्या क्षौद्रक्षीरेण सर्पिषा ॥ दध्ना च खंडयुक्तेन कुशतोयेन वै पुनः ॥ ९३ ॥ श्रीखंडेन सुगंधेन गुंठयेच्च महेश्वरम् ॥ ततः सुगंधपुष्पैश्च
बिल्वपत्रैश्च पूजयेत् ॥ ९४ ॥ मुचकुंदेन कुंदेन जातीकाशकुशोद्भवैः ॥ उन्मत्तमुनिपुष्पौघैः पुष्पैस्तत्कालसंभवैः ॥ ९५ ॥ अर्चयेत्परया भक्त्या
हनूमंतेश्वरं शिवम् ॥ घृतेन दापयेद्दीपं तैलेन तदभावतः ॥ ९६ ॥ श्राद्धं च कारयेत्तत्र ब्राह्मणैर्वेदपारगैः ॥ सर्व्वलक्षणसंपूर्णैः कुलीनैर्गृहपालकैः ॥

॥ ९७ ॥ तर्प्पयेद्ब्राह्मणान्भक्त्या वसनान्नहिरण्यतः ॥ नरकस्था दिवं यांतु प्रोच्येति प्रणमेद्द्विजान् ॥ ९८ ॥ पतितान्वर्जयेद्विप्रान्वृषली यस्य गेहिनी ॥ स्ववृषं चापरित्यज्य वृषैरन्यैर्वृषायते ॥ ९९ ॥ वृषलीं तां विदुर्देवा न शूद्री वृषली भवेत ॥ ब्रह्महत्या सुरापानं गुरुदारनिषेणम् ॥ ॥ १०० ॥ सुवर्णहरणन्यासमित्रद्रोहोद्भवं तथा ॥ नश्यते पातकं सवमित्येवं शंकरोऽब्रवीत् ॥ १०१ ॥ ॥ श्रीमार्कंडेय उवाच ॥ ॥ वाक्प्रलापेन भो वत्स बहुनोक्तेन किं मया ॥ सर्वपातकसंयुक्तो दद्याद्दानं द्विजन्मने ॥ २ ॥ गोदानं च प्रकर्तव्यमस्मिंस्तीर्थे विशेषतः ॥ गोदानं हि यतः पार्थ सर्वदानाधिकं स्मृतम् ॥ ३ ॥ सर्व्वदेवमया गावः सर्वे देवास्तदात्मकाः ॥ शृंगाग्रेषु महीपाल शक्रो वसति नित्यशः ॥ ४ ॥ उरः स्कंदः शिरो ब्रह्मा ललाटे वृषभध्वजः ॥ चंद्रार्कौ लोचने देवौ जिह्वायां च सरस्वती ॥ ५ ॥ मरुद्गणाः सदा साध्या यस्या दंता नरेश्वर ॥ हुंकारे चतुरो वेदान्विद्यात्सांगपदक्रमान् ॥ ५ ॥ ऋषयो रोमकूपेषु ह्यसंख्यातास्तपस्विनः ॥ दंडहस्तो महाकायः कृष्णो महिषवाहनः ॥ ६ ॥ यमः पृष्ठस्थितो नित्यं शुभाशुभपरीक्षकः ॥ चत्वारः सागराः पुण्याः क्षीरधाराः स्तनेषु च ॥ ७ ॥ विष्णुपादोद्भवा गंगा दर्शनात्पापनाशनी ॥ प्रस्रावे संस्थिता यस्मात्तस्माद्वंद्या सदा बुधैः ॥८॥ लक्ष्मीश्च गोमये नित्यं पवित्रा सर्वमंगला ॥ गोमयालेपनं तस्मात्कर्त्तव्यं पांडुनंदन ॥ ९ ॥ गंधर्वाप्सरसो नागाः खुराग्रेषु व्यवस्थिताः ॥पृथिव्यां सागरांतायां यानि तीर्थानि भारत ॥ तानि सर्वाणि जानीयाद्गोर्गव्यं तेन पावनम् ॥११०॥ ॥ युधिष्ठिर उवाच ॥ सर्वदेवमयी धेनुर्गीर्वाणाद्यैरलंकृता ॥ एतत्कथय मे तात कस्माद्गोषु समाश्रिताः ॥ ११ ॥ ॥ श्रीमार्कंडेय उवाच ॥ ॥ सर्वदेवमयो विष्णुर्गावो विष्णुशरीरजाः ॥ देवास्तदुभयात्तस्मात्कल्पिता विविधा जनैः ॥ १२ ॥ श्वेता वा कपिला वापि क्षीरिणी पांडुनंदन ॥ सवत्सा च सुशीला च सितवस्त्राऽवगुंठिता ॥ १३ ॥ कांस्यदोहनिका देया स्वर्णशृंगी सुभूषिता ॥ हनूमंतेश्वरस्याऽग्रे भक्त्या विप्राय दापयेत् ॥ १४ ॥ नियमस्थेन सा देया स्वर्गमानंत्यमिच्छता ॥ असमर्थाय ये दद्युर्विष्णुलोके प्रयांति ते ॥ १५ ॥ असौ लोके च्युतो राजन्भूतले द्विजमंदिरे ॥ कुशलो जायते पुत्रो गुणविद्याधनर्द्धिमान् ॥ १६ ॥ सर्वपापहरं तीर्थं हनूमंतेश्वरं नृप ॥ शृण्वन्विमुच्यते पापाद्वर्णसंकरसंभवात् ॥ १७ ॥ दूरस्थश्चिंतयन्पश्यन्मुच्यते नाऽत्र संशयः ॥ ११८ ॥ इति श्रीस्कांदे महापुराण एकाशीतिसाहस्र्यां संहितायां पञ्चम आवंत्यखण्डे रेवाखण्डे हनूमंतेश्वरतीर्थमाहात्म्यवर्णनंनाम त्र्यशीतितमोऽध्यायः ॥ ८३ ॥ ॥ छ ॥ ॥ श्रीमार्कंडेय उवाच ॥ अत्रैवोदाहरंतीममितिहासं पुरातनम् ॥ कैलासे पृच्छते भक्त्या

१ वर्णसंकरकारकात्–इ० पा० ।

षण्मुखाय शिवोदितम् ॥ १ ॥ ॥ ईश्वर उवाच ॥ ॥ पूर्वं त्रेतायुगे स्कंद हतो रामेण रावणः ॥ चतुर्दश तदा कोट्यो निहता ब्रह्मरक्षसाम् ॥ ॥ २ ॥ हतेषु तेषु वै तत्र रक्षणाय दिवौकसाम् ॥ महानंदस्तदा जातस्त्रिषु लोकेषु पुत्रक ॥ ३ ॥ ततः सीतां समासाद्य समं वानरपुंगवैः ॥ रामोप्ययोध्यामायातो भरतेन कृतोत्सवः ॥ तस्मै समर्पयामास स राज्यं लक्ष्मणाग्रजः ॥ ४ ॥ तस्मिन्प्रशासति ततो राज्यं निहतकंटकम् ॥ कृतकार्योऽथ हनुमान्कैलासमगत्पुरा ॥ ५ ॥ ततो नंदी प्रतीहारो रुद्रांशमपि तं कपिम् ॥ न च संगमयामास रुद्रेणाऽघौघहारिणा ॥ ६ ॥ तेन पृष्टस्तदा नन्दी किं मया पातकं कृतम् ॥ येन रुद्रवपुः पुण्यं न पश्याम्यंबिकान्वितम् ॥ ७ ॥ ॥ नन्द्युवाच ॥ ॥ त्वयाऽवतरणं चक्रे कपींद्राऽमरहेतुना ॥ तथाऽपि हि कृतं पापमुपभोगेन शाम्यति ॥ ८ ॥ ॥ हनुमानुवाच ॥ ॥ किं मयाऽकारि तत्पापं नंदिन्देवार्थकारिणा ॥ राक्षसाश्च हता दुष्टा विप्रयज्ञाङ्गघातिनः ॥ ९ ॥ ततस्तदालापकुतूहली हरो निजांशभाजं कपिमुग्रतेजसम् ॥ उवाच द्वारांतरदत्तदृष्टिः पुरःस्थितं प्रेक्ष्य कपीश्वरं पुनः ॥ १० ॥ ॥ ईश्वर उवाच ॥ ॥ गंगा गया कपे रेवा यमुना च सरस्वती ॥ सर्वपापहरा नद्यस्तासु स्नानं समाचर ॥ ११ ॥ नर्मदादक्षिणे कूले तीर्थं परमशोभनम् ॥ सोमनाथसमीपस्थं तत्र त्वं गच्छ वानर ॥ १२ ॥ तत्र स्नात्वा महापापं गमिष्यति ममाऽऽज्ञया ॥ उत्पत्य वेगाद्धनुमाञ्छ्रीरेवादक्षिणे तटे ॥ १३ ॥ जगाम सुमहानादस्तपश्चक्रे सुदुष्करम् ॥ तस्य वै तप्यमानस्य रक्षोवधकृतं तमः ॥ १४ ॥ विलीनं पार्थ कालेन कियतेशप्रसादतः ॥ ततो देवैः समं देवस्तत्तीर्थमगमद्धरः ॥ १५ ॥ कपिमालिंगयामास वरं तस्मै प्रदत्तवान् ॥ अद्यप्रभृति ते तीर्थं भविष्यति न संशयः ॥ १६ ॥ कपितीर्थं ततो जातं तस्थौ तत्र स्वयं हरः ॥ हनूमन्तेश्वरो नाम्ना सर्वहत्याहरस्तदा ॥ १७ ॥ तत्र तीर्थे तु यः स्नात्वा भक्त्या लिंगं प्रपूजयेत् ॥ सर्वपापानि नश्यंति हरस्य वचनं यथा ॥ १८ ॥ तत्राऽस्थीनि विलीयन्ते पिंडदानेऽक्षया गतिः ॥ यत्किञ्चिद्दीयते तत्र तद्धि कोटिगुणं भवेत् ॥ १९ ॥ हनुमानप्ययोध्यायां रामं द्रष्टुमथाऽगमत् ॥ चकार कुशलप्रश्नं स्वस्वरूपं न्यवेदयत् ॥ २० ॥ ॥ श्रीराम उवाच ॥ ॥ कुर्वतो देवकार्यं ते मम कार्यं च कुर्वतः ॥ ततोऽहमपि पापीयांस्तपस्तप्स्याम्यसंशयम् ॥ २१ ॥ तत्रैव दक्षिणे कूले रेवायाः पापहारिणि ॥ चतुर्विंशतिवर्षाणि तपस्तेपेऽथ राघवः ॥ २२ ॥ ज्योतिष्मतीपुरीसंस्थः श्रीरेवास्नानमाचरन् ॥ तस्य शुश्रूषणं चक्रे लक्ष्मणोऽपि तदाज्ञया ॥ २३ ॥ स्थापयामासतुर्लिंगे तौ तदा रामलक्ष्मणौ ॥ प्रभावात्सत्यतपसो रेवातीरे महामती ॥ निष्पापतां तदा वीरौ जग्मतू रामलक्ष्मणौ ॥ २४ ॥ ततस्तदा देवपुरोगमो हरो गतो दि वै पुण्यमुनीश्वरैः सह ॥ आगत्य तीर्थं च वरं

ददौ तदा निजां कलां तत्र विसृज्य तीर्थे ॥ २५ ॥ मुनिभिः सर्वतीर्थानां क्षिप्तं कुंभोदकं भुवि ॥ एकस्थं लिंगनामाथ कलाकुंभस्तथाऽभवत् ॥
॥ २६ ॥ कुंभेश्वर इति ख्यातस्तदा देवगणार्चितः ॥ रामोऽपि पूजयामास तल्लिंगं देवसेवितम् ॥ २७ ॥ ततो वरं ददौ देवो रामकीर्त्यभिवृद्धये ॥
चतुर्विंशतिमे वर्षे रामो निष्पापतां गतः ॥ २८ ॥ यदा कन्यागतः पंगुर्गुरुणा सहितो भवेत् ॥ तदेव देवयात्रेयमिति देवा जगुर्मुदा ॥ २९ ॥ यथा
गोदावरीतीर्थे सर्वतीर्थफलं भवेत् ॥ तथात्र रेवास्नानेन लिंगानां दर्शनैर्नृणाम् ॥ ३० ॥ करिष्यंत्यत्र ये श्राद्धं पितृणां नर्मदातटे ॥ कुंभेश्वरसमीप
स्थास्तत्फलं शृणु षण्मुख ॥ ३१ ॥ यावन्तो रोमकूपाः स्युः शरीरे सर्वदेहिनाम् ॥ तावद्वर्षप्रमाणेन पितृणामक्षया गतिः ॥ ३२ ॥ पृथिव्यां
देवताः सर्वा सर्वतीर्थानि यानि तु ॥ लभन्ते तत्फलं मर्त्या लिंगत्रयविलोकनात् ॥ ३३ ॥ अपुत्रो लभते पुत्रं निर्द्धनो धनमाप्नुयात् ॥ सरोगो
मुच्यते रोगान्नाऽत्र कार्या विचारणा ॥ ३४ ॥ सिंहराशिं गते जीवे यत्स्याद्गोदावरीफलम् ॥ तद्द्वादशगुणं स्कंद कुंभेश्वरसमीपतः ॥ ३५ ॥ ये
जानंति न पश्यंति कुंभशंभुमुमापतिम् ॥ नर्मदादक्षिणे कूले तेषां जन्म निरर्थकम् ॥ ३६ ॥ यथा गोदावरीयात्रा कर्त्तव्या मुनिशासनात् ॥ चतु
र्विंशतिमे वर्षे तथेयं देवभाषितम् ॥३७॥ यावच्चंद्रश्च सूर्यश्च यावद्वै दिवि तारकाः ॥ तावत्तदक्षयं दानं रेवाकुंभेश्वरांतिके ॥३८॥ महादानानि देयानि
तत्र लोकैर्विचक्षणैः ॥ गोदानमत्र शंसंति सौवर्णं राजतं तथा ॥ ३९ ॥ यस्याः स्मरणमात्रेण नश्यते पापसंचयः ॥ स्नानेन किं पुनः स्कन्द ब्रह्म
हत्यां व्यपोहति ॥ ४० ॥ तत्र तीर्थे तु यः स्नात्वा श्राद्धं कुर्याद्युधिष्ठिर ॥ एकोत्तरं कुलशतमुद्धरेच्छिवशासनात् ॥ ४१ ॥ यानि कानि च
तीर्थानि चासमुद्रसरांसि च ॥ शिवलिंगार्चनस्येह कलां नार्हंति षोडशीम् ॥ ४२ ॥ एवं देवा वरं दत्त्वा हरीश्वरपुरोगमाः ॥ स्वस्थानमगमन्पूर्वं
मुक्त्वा तन्नाम चोत्तमम् ॥ ४३ ॥ तीर्थस्याऽस्य वरं दत्त्वा स रामो लक्ष्मणाग्रजः ॥ अयोध्यां प्रविवेशाऽसौ निष्पापो नर्मदाजलात् ॥ ४४ ॥ सौवर्णीं
च ततः कृत्वा सीतां यज्ञं चकार सः ॥ अनुमन्त्र्य मुनींल्लोकान्देवताश्च निजं कुलम् ॥ ४५ ॥ पुरा त्रेतायुगे जातं तत्तीर्थं स्कन्दनामकम् ॥ निय
मेन ततो लोकैः कर्त्तव्यं लिंगदर्शनम् ॥ ४६ ॥ तावत्पापानि देहेषु महापातकजान्यपि ॥ यावन्न प्रेक्षते जंतुस्तत्तीर्थं देवसेवितम् ॥ ४७ ॥ ते
धन्यास्ते महात्मानस्तेषां जन्म सुजीवितम् ॥ ज्योतिष्मतीपुरीसंस्थं ये द्रक्ष्यंति हरं परम् ॥ ४८ ॥ तस्मान्मोहं परित्यज्य जनैर्गंतव्यमादरात् ॥

१ पंगुः—शनैश्चरः—इत्यर्थः । २ तत्र तीर्थे—इति शेषः ।

तीर्थाऽशेषफलावाप्त्यै तीर्थं कुम्भेश्वराह्वयम् ॥ ४९ ॥ ॥ मार्कंडेय उवाच ॥ ॥ श्रुत्वेति शंभुवचसा स षडाननोऽथ नत्वा पितुः पदयुगांबुज मादरेण ॥ संप्राप्य दक्षिणतटं गिरिशस्रवन्त्याः कीशाग्र्यरामकलशास्यशिवान्ददर्श ॥ ५० ॥ इति श्रीस्कांदे महापुराण एकाशीतिसाहस्र्यां संहितायां पञ्चम आवंत्यखंडे रेवाखंडे कपितीर्थरामेश्वरलक्ष्मणेश्वरकुम्भेश्वरमाहात्म्यवर्णनंनाम चतुरशीतितमोऽध्यायः ॥ ८४ ॥ ॥ छ ॥ ॥ ॥ श्रीमार्कंडेय उवाच ॥ ॥ ततो गच्छेत्तु राजेंद्र नर्मदायाः पुरातनम् ॥ ब्रह्महत्याहरं तीर्थं वाराणस्या समं हि तत् ॥ १ ॥ ॥ युधिष्ठिर उवाच ॥ ॥ आश्चर्यं कथ्यतां ब्रह्मन्यद्वृत्तं नर्मदातटे ॥ वाराणस्या समं कस्मादेतत्कथय मे प्रभो ॥ २ ॥ निमग्नो दुःखसंसारे हृतराज्यो द्विजोत्तम ॥ युष्मद्वाणीजलस्नातो निर्दुखः सह बांधवैः ॥ ३ ॥ ॥ श्रीमार्कंडेय उवाच ॥ ॥ साधुसाधु महाबाहो सोमवंशविभूषण ॥ पृष्टोऽस्मि दुर्लभं तीर्थं गुह्याद्गुह्यतरं परम् ॥ ४ ॥ आदौ पितामहस्तावत्समस्तजगतः प्रभुः ॥ मनसा तस्य संजाता दशैव ऋषिपुंगवाः ॥ ५ ॥ मरीचिमत्र्यंगिरसौ पुलस्त्यं पुलहं क्रतुम् ॥ प्रचेतसं वसिष्ठं च भृगुं नारदमेव च ॥ ६ ॥ जज्ञे प्राचेतसं दक्षं महातेजाः प्रजापतिः ॥ दक्षस्याऽपि तथा जाताः पंचाशद्दुहिताः किल ॥ ७ ॥ ददौ स दश धर्माय कश्यपाय त्रयोदश ॥ तथैव स महाभागः सप्तविंशतिमिंदवे ॥ ८ ॥ रोहिणीनाम या तासामभीष्टा साऽभवद्विधोः ॥ शेषासु करुणां कृत्वा शप्तो दक्षेण चंद्रमाः ॥ ९ ॥ क्षयरोग्यभवच्चंद्रो दक्षस्यायं प्रजापतेः ॥ स च शापप्रभावेण निस्तेजाः शर्वरीपतिः ॥ १० ॥ गतः पितामहं सोमो वेपमानोऽमृतांशुमान् ॥ पद्मयोने नमस्तुभ्यं वेदगर्भ नमोऽस्तु ते ॥ शरणं त्वां प्रसन्नोऽस्मि पाहि मां कमलासन ॥ ११ ॥ ॥ ब्रह्मोवाच ॥ ॥ निस्तेजाः शर्वरीनाथ कलाहीनश्च दृश्यसे ॥ उद्विग्नमानसस्तात संजातः केन हेतुना ॥ ॥ १२ ॥ ॥ सोम उवाच ॥ ॥ दक्षशापेन मे ब्रह्मन्निस्तेजस्त्वं जगत्पते ॥ निर्हारश्चाऽस्य शापस्य कथ्यतां मे पितामह ॥ १३ ॥ ॥ ॥ ब्रह्मोवाच ॥ ॥ सर्वत्र सुलभा रेवा त्रिषु स्थानेषु दुर्लभा ॥ ओंकारेऽथ भृगुक्षेत्रे तथा चैवौर्वसंगमे ॥ १४ ॥ तत्र गच्छ क्षपानाथ यत्र रेवांतरं तटम् ॥ त्वरितोऽसौ गतस्तत्र यत्र रेवौर्विसंगमः ॥ १५ ॥ काष्ठावस्थःस्थितः सोमो दध्यौ त्रिपुरवैरिणम् ॥ यावद्वर्षशतं पूर्णं तावत्तुष्टो महेश्वरः ॥ १६ ॥ प्रत्यक्षः सोमराजस्य वृषासन उमापतिः ॥ साष्टांगं प्रणिपत्योच्चैर्जय शंभो नमोऽस्तु ते ॥ १७ ॥ जय शंकर पापहराय नमो जय ईश्वर ते जगदीश नमः ॥ जय वासुकिभूषणधार नमो जय शूलकपालधराय नमः ॥ १८ ॥ जय अन्धकदेहविनाश नमो जय दानववृन्द

१ निर्हारः—प्रतीकारः—इत्यर्थः ।

वधाय नमः ॥ जय निष्कलरूप सकलाय नमो जय काल कामदहाय नमः ॥ १९ ॥ जय मेचककण्ठधराय नमो जय सूक्ष्मनिरंजनशब्द
नमः ॥ जय आदिरनादिरनंत नमो जय शंकर किंकरमीश भजे[1] ॥ २० ॥ एवं स्तुतो महादेवः सोमराजेन पांडव ॥ तुष्टस्तस्य नृपश्रेष्ठ शिवया
शंकरोऽब्रवीत् ॥ ॥ ईश्वर उवाच ॥ ॥ २१ ॥ वरं प्रार्थय मे भद्र यत्ते मनसि वर्त्तते ॥ साधुसाधु महासत्त्व तुष्टोऽहं तपसा तव ॥ २२ ॥
॥ ॥ सोम उवाच ॥ ॥ दक्षशापेन दग्धोऽहं क्षीणसत्त्वो महेश्वर ॥ शापस्योपशमं देव कुरु शर्म मम प्रभो ॥ २३ ॥ ॥ ईश्वर उवाच ॥ ॥
तव भक्तिगृहीतोऽहमुमया सह तोषितः ॥ निष्पापः सोमनाथस्त्वं संजातस्तीर्थसेवनात् ॥ २४ ॥ इत्यूचे देवदेवेशः क्षणं ध्यात्वेंदुना ततः ॥
स्थापितं परमं लिंगं कामदं प्राणिनां भुवि ॥ सर्वदुःखहरं तत्तु ब्रह्महत्याविनाशनम् ॥ २५ ॥ ॥ युधिष्ठिर उवाच ॥ ॥ सोमनाथप्रभावं मे
संक्षेपात्कथय प्रभो ॥ दुःखार्णवनिमग्नानां त्राता प्राप्तो द्विजोत्तम ॥ २६ ॥ ॥ श्रीमार्कंडेय उवाच ॥ ॥ शृणु तीर्थप्रभावं ते संक्षेपात्कथया
म्यहम् ॥ यद्वृत्तमुत्तरे कूले रेवाया उरिसंगमे ॥ २७ ॥ शंबरो नाम राजाभूत्तस्य पुत्रस्त्रिलोचनः ॥ त्रिलोचनसुतः कण्वः स पापर्द्धिपरोऽ
भवत् ॥ २८ ॥ वने नित्यं भ्रमन्सोऽथ मृगयूथं ददर्शह ॥ मृगयूथं हतं तत्तु त्रिलोचनसुतेन च ॥ २९ ॥ मृगरूपी द्विजो मध्ये चरते
निर्जने वने ॥ स हतस्तेन संगेन कण्वेन मुनिसत्तम ॥ ३० ॥ ब्रह्महत्यान्वितः कण्वो निस्तेजा व्यचरन्महीम् ॥ व्यचरंश्चैव संप्राप्तो
नर्मदासुरिसंगमे ॥ ३१ ॥ किंशुकाशोकबहले जंबीरपनसाकुले ॥ कदंबपाटलाकीर्णे बिल्वनारंगशोभिते ॥ ३२ ॥ चिंचिणीचंपको
पेते ह्यगस्तितरुछादिते ॥ प्रभूतभूतसंयुक्तं वनं सर्वत्र शोभितम् ॥ ३३ ॥ चित्रकैर्मृगमार्जारैर्हिंस्रैः शंबरशूकरैः ॥ शशैर्गवयसंयुक्तैः शिखंडि
खरमंडितम् ॥ ३४ ॥ प्रविष्टस्तु वने कण्वस्तृषार्त्तः श्रमपीडितः ॥ स्नातो रेवाजले पुण्ये संगमे पापनाशने ॥ ३५ ॥ अर्चितः परया भक्त्या
सोमनाथो युधिष्ठिर ॥ पपौ सुविमलं तोयं सर्वपापक्षयंकरम् ॥ ३६ ॥ फलानि च विचित्राणि चखाद सह किंकरैः ॥ सुप्तः पादपच्छायायां
श्रांतो मृगवधेन च ॥ ३७ ॥ तावत्तीर्थवरं विप्रः स्नानार्थं संगमं गतः ॥ मार्गगो ब्राह्मणो हर्षोद्युक्तस्तद्गतमानसः ॥ ३८ ॥ अबला तमुवा
चेदं तिष्ठतिष्ठ द्विजोत्तम ॥ त्रस्तो निरीक्षते यावद्दिशः सर्वा नरेश्वर ॥ ३९ ॥ तावद्वृक्षसमारूढां स्त्रियं रक्ताम्बरावृताम् ॥ रक्तमाल्यां तदा बालां
रक्तचंदनचर्चिताम् ॥ रक्ताभरणशोभाढ्यां पाशहस्तां ददर्श ह ॥ ४० ॥ ॥ स्त्र्युवाच ॥ ॥ संदेशं श्रूयतां विप्र यदि गच्छसि संगमे ॥ मद्भर्त्ता

१ भज—रक्षेत्यर्थः । धातूनामनेकार्थत्वात् ।

तिष्ठते तत्र शीघ्रमेव विसर्जय ॥ ४१ ॥ एकाकिनी च ते भार्या तिष्ठते वनमध्यगा ॥ इत्याकर्ण्य गतो विप्रः संगमं सुरदुर्लभे ॥ ४२ ॥ वृक्षच्छायान्वितः कण्वो ब्राह्मणेनावलोकितः ॥ उवाच तं प्रति तदा वचनं ब्राह्मणोत्तमः ॥ ४३ ॥ ॥ ब्राह्मण उवाच ॥ ॥ वनांतरे मया दृष्टा बाला कमललोचना ॥ रक्तांबरधरा तन्वी रक्तचंदनचर्चिता ॥ ४४ ॥ रक्तमाल्या सुशोभाढ्या पाशहस्ता मृगेक्षणा ॥ वृक्षारूढावदद्वाक्यं मद्भर्त्ता प्रेष्यतामिति ॥ ४५ ॥ ॥ कण्व उवाच ॥ ॥ कस्मिन्स्थाने तु विप्रेंद्र विद्यते मृगलोचना ॥ कस्य सा केन कार्येण सर्वमेतद्वदाशु मे ॥ ४६ ॥ ॥ ब्राह्मण उवाच ॥ ॥ संगमादर्द्धकोशे सा उद्यानांते हि विद्यते ॥ वचनाद्ब्राह्मणस्यैषा न ज्ञाता पार्थिवेन तु ॥ ४७ ॥ तदा स कण्वभूपालः स्वकं दूतं समादिशत् ॥ ॥ कण्व उवाच ॥ ॥ गच्छ त्वं पृच्छतां तां क्वागता क्व च गमिष्यसि ॥ प्रेषितस्त्वरितो दूतो गतो नारीसमीपतः ॥ ४८ ॥ वृक्षस्थां ददृशे बालामुवाच नृपसत्तम ॥ मन्नाथः पृच्छति त्वां तु काऽसि त्वं क्व गमिष्यसि ॥ ४९ ॥ ॥ कन्योवाच ॥ गुरुरात्मवतां शास्ता राजा शास्ता दुरात्मनाम् ॥ इह प्रच्छन्नपापानां शास्ता वैवस्वतो यमः ॥ ५० ॥ ब्रह्महत्या च संजाता मृगरूपधरद्विजात् ॥ मया युक्तोऽपि ते राजा मुक्तस्तीर्थप्रभावतः ॥ ५१ ॥ अर्द्धक्रोशांतरान्मध्ये ब्रह्महत्या न संविशेत् ॥ सोमनाथप्रभावोऽयं वाराणस्याः समः स्मृतः॥ ॥ ५२ ॥ गच्छ त्वं प्रेष्यतां राजा शीघ्रमत्र न संशयः ॥ गतो भृत्यस्ततः शीघ्रं वेपमानः सुविह्वलः ॥ ५३ ॥ समस्तं कथयामास यद्वृत्तं हि पुरातनम् ॥ तस्य वाक्यादसौ राजा पतितो धरणीतले ॥ ५४ ॥ ॥ भृत्य उवाच ॥ ॥ कस्मात्त्वं शोचसे नाथ पूर्वोपात्तं शुभाशुभम् ॥ इत्याकर्ण्य वचस्तस्य राजा वचनमब्रवीत् ॥ ५५ ॥ प्राणत्यागं करिष्यामि सोमनाथसमीपतः ॥ शीघ्रमानीयतां वह्निरिंधनानि बहूनि च ॥ ५६ ॥ आनीतं तत्क्षणात्सर्वं भृत्यैस्तद्वशवर्त्तिभिः ॥ स्नानं कृत्वा शुभे तोये संगमे पापनाशने ॥ ५७ ॥ अर्चितः परया भक्त्या सोमनाथो महीभृता ॥ त्रिःप्रदक्षिणतः कृत्वा ज्वलंतं जातवेदसम् ॥ ५८ ॥ प्रविष्टः कण्वराजाऽसौ हृदि ध्यात्वा जनार्दनम् ॥ पीतांबरधरं देवं जटामुकुटधारिणम् ॥ ५९ ॥ श्रिया युक्तं सुपर्णस्थं शंखचक्रगदाधरम् ॥ सुरारिसूदनं दध्यौ सुगतिर्मे भवत्विति ॥ ६० ॥ पपात पुष्पवृष्टिस्तु साधु साधु नृपात्मज ॥ आश्चर्यमतुलं दृष्ट्वा निरीक्ष्य च परस्परम् ॥ ६१ ॥ मृतं तैः पावके भृत्यैर्हृदि ध्यात्वा गदाधरम् ॥ विमानस्थास्ततः सर्वे संजाताः पांडुनंदन ॥ ६२ ॥ निष्पापास्ते दिवं याताः सोमनाथप्रभावतः ॥ ब्राह्मणे संगमे तत्र ध्यायमाने वृषध्वजम् ॥ ६३ ॥ ॥ श्रीमार्कंडेय उवाच ॥ ॥ सोमनाथप्रभावोऽयं शृणुष्वैकमना विधिम् ॥ अष्टम्यां वा चतुर्दश्यां सर्वकालं रवेर्दिने ॥ ६४ ॥ विशेषाच्छुक्लपक्षे चेत्सूर्यवारेण

सप्तमी ॥ उपोष्य यो नरो भक्त्या रात्रौ कुर्वीत जागरम् ॥ ६५ ॥ पंचामृतेन गव्येन स्नापयेत्परमेश्वरम् ॥ श्रीखंडेन ततो गुंव्य पुष्पधूपादिकं
ददेत् ॥ ६६ ॥ घृतेन बोधयेद्दीपं नृत्यं गीतं च कारयेत् ॥ सोमवारे तथाऽष्टम्यां प्रभाते पूजयेद्द्विजान् ॥ ६७ ॥ जितक्रोधानात्मवतः
परनिंदाविवर्जितान् ॥ सर्वांगरुचिराञ्च्छस्तान्स्वदारपरिपालकान् ॥ ६७ ॥ गायत्रीपाठमात्रांश्च विकर्मविरतान्सदा ॥ पुनर्भूर्वृषली शूद्री च
रेयुर्यस्य मंदिरे ॥ ६९ ॥ दूरतोऽसौ द्विजस्त्याज्य आत्मनः श्रेय इच्छता ॥ हीनांगाऽनतिरिक्तांगान्येषां पूर्वापरं न हि ॥ ७० ॥ व्रते श्राद्धे
तथा दाने दूरतस्तान्विवर्जयेत् ॥ आयसी तरुणी तुल्या द्विजाः स्वाध्यायवर्जिताः ॥ ७१ ॥ आत्मानं सह याज्येन पातयंति न संशयः ॥
शाल्मलीनावतुल्याः[1] स्युः षट्कर्मनिरता द्विजाः ॥ ७२ ॥ दातारं च तथाऽऽत्मानं तारयंति तरंति च ॥ श्राद्धं सोमेश्वरेः पार्थ यः
कुर्याद्गतमत्सरः ॥ ७३ ॥ प्रेतास्तस्य हि सुप्रीता यावदाभूतसंप्लवम् ॥ अन्नं वस्त्रं हिरण्यं च यो दद्यादग्रजन्मने ॥ ७४ ॥ स याति शांकरे
लोक इति मे सत्यभाषितम् ॥ हयं यो यच्छते तत्र संपूर्णं तरुणं सितम् ॥ ७५ ॥ रक्तं वा पीतवर्णं वा सर्वलक्षणसंयुतम् ॥ कुंकुमेन
विलिप्तांगावग्रजन्महयावपि[2] ॥ ७६ ॥ स्रग्दामभूषितौ कार्यौ सितवस्त्रावगुंठितौ ॥ अंघ्रिः प्रदीयतां स्कन्धे मदीये हयमारुह ॥ ७७ ॥ आरूढे
ब्राह्मणे ब्रूयाद्भास्करः प्रीयतामिति ॥ स याति शांकरं लोकं सर्व्वपापविवर्जितः ॥ ७८ ॥ उपरागे तु सोमस्य तीर्थं गत्वा जितेंद्रियः ॥ सत्यलोका
च्च्युतश्चाऽपि राजा भवति धार्मिकः ॥ ७९ ॥ तस्य वासः सदा राजन्न नश्यति कदाचन ॥ दीर्घायुर्जायते पुत्रो भार्या च वशवर्तिनी ॥ ८० ॥
जीवेद्वर्षशतं साग्रं सर्वदुःखविवर्जितः ॥ सोपवासो जितक्रोधो धेनुं दद्याद्द्विजन्मने ॥ ८१ ॥ सवत्सां क्षीरसंयुक्तां श्वेतवस्त्रावलोकिताम् ॥ शबलां
पीतवर्णां च धूम्रां वा नीलकर्बुराम् ॥ ८२ ॥ कपिलां वा सवत्सां च घण्टाभरणभूषिताम् ॥ रूप्यखुरां कांस्यदोहां स्वर्णशृंगीं नरेश्वर ॥ ८३ ॥
श्वेतया वर्द्धते वंशो रक्ता सौभाग्यवर्द्धिनी ॥ शबला पीतवर्णा च दुःखघ्न्यौ संप्रकीर्तिते ॥ ८४ ॥ कपिला नाशयेत्पापं सप्तजन्मसमुद्भवम् ॥ सत्य
लोकमवाप्नोति गोप्रदायी नरेश्वर ॥ ८५ ॥ पक्षांतेऽथ व्यतीपाते वैधृतौ रविसंक्रमे ॥ दिनक्षये गजच्छायां ग्रहणे भास्करस्य च ॥ ८६ ॥ ये व्रजंति
महात्मानः संगमे सुरदुर्लभे ॥ मृदावगुण्ठयित्वा तु चात्मानं संगमे विशेत् ॥ ८७ ॥ हृदयांतर्जले जाप्या प्राणायामोथवा नृप ॥ गायत्री वैष्णवी
चैव सौरी शैवी यदृच्छया ॥ तेऽपि पापैः प्रमुच्यंत इत्येवं शंकरोऽब्रवीत् ॥ ८८ ॥ जगतीं सोमनाथस्य यस्तु कुर्यात्प्रदक्षिणाम् ॥ प्रदक्षीणीकृता

१ शाल्मलीनावतुल्याः—नावसन्दस्य—अकारान्तत्वमार्षम् । शाल्मलीवृक्षकाष्ठनिर्मितनौकासमानाः—इत्यर्थः । २ अग्रजन्महयौ—अग्रजन्मा—ब्राह्मणो—यस्मैहयो देयः—सः—इत्यर्थः । हयश्च—अश्वः ।

तेन सप्तद्वीपा वसुन्धरा ॥ ८९ ॥ ब्रह्महत्या सुरापानं गुरुदारनिषेवणम् ॥ भ्रूणहा स्वर्णहर्त्ता च मुच्यंते नाऽत्र संशयः ॥ ९० ॥ तीर्थाख्यानमिदं
पुण्यं यः शृणोति जितेंद्रियः ॥ व्याधितो मुच्यते रोगी चारोगी सुखमाप्नुयाव् ॥ ९१ ॥ यत्ते संदह्यते चेतः शृणु तन्मे युधिष्ठिर ॥ नैकापि
नृप लोकेऽस्मिन्भ्रूणहत्या सुदुस्त्यजा ॥ ९२ ॥ किमु षड्विंशतिं पार्थ प्राप याः क्षणदाकरः[1] ॥ सोऽपि तीर्थमिदं प्राप्य तपस्तप्त्वा सुदुश्चरम् ॥ ९३ ॥
विमुक्तः सर्वपापेभ्यः शीतरश्मिरभूत्सुखी ॥ श्रूयते नृप पौराणी गाथा गीता महर्षिभिः ॥ ९४ ॥ लिंगं प्रतिष्ठितं ह्येकं दशभ्रूणहनं भवेत् ॥ अतो
लिंगत्रयं सोमः स्थापयामास भारत ॥ ९५ ॥ रेवोरिसंगमे ह्याद्यं द्वितीयं भृगुकच्छके ॥ ततः सिद्धिं परां प्राप्य प्रभासे तु तृतीयकम् ॥ ९६ ॥
इति ते कथितं सर्वं तीर्थमाहात्म्यमुत्तमम् ॥ धर्म्यं यशस्यमायुष्यं स्वर्ग्यं संशुद्धिकृन्नृणाम् ॥ ९७ ॥ पुत्रार्थी लभते पुत्रान्निष्कामः स्वर्गमाप्नु
याव् ॥ मुच्यते सर्वपापेभ्यस्तीर्थं कृत्वा परं नृप ॥ ९८ ॥ एतत्ते सर्वमाख्यातं सोमनाथस्य यत्फलम् ॥ श्रुत्वा पुत्रमवाप्नोति स्नात्वा चाऽष्टौ[2] न
संशयः ॥ ९९ ॥ इति श्रीस्कांदे महापुराण एकाशीतिसाहस्र्यां संहितायां पञ्चम आवन्त्यखंडे रेवाखंडे सोमनाथतीर्थमाहात्म्यवर्णनंनाम पंचा
शीतितमोऽध्यायः ॥ ८५ ॥ ॥ छ ॥ ॥ श्रीमार्कंडेय उवाच ॥ ॥ ततो गच्छेन्महाराज पिंगलावर्त्तमुत्तमम् ॥ संगमस्य समीपस्थं रेवाया
उत्तरे तटे ॥ हव्यवाहेन राजेंद्र स्थापितः पिंगलेश्वरः ॥ १ ॥ युधिष्ठिर उवाच ॥ ॥ हव्यवाहेन भगवन्नीश्वरः स्थापितः कथम् ॥ एतदाख्याहि मे
सर्वं प्रसादाद्वक्तुमर्हसि ॥ २ ॥ ॥ मार्कंडेय उवाच ॥ ॥ शंभुना रेतसा राजंस्तर्पितो हव्यवाहनः ॥ प्राप्तसौख्येन रौद्रेण गौर्याक्रीडनचेतसा ॥
॥ ३ ॥ हव्यवाहमुखे क्षिप्तं रुद्रेणामिततेजसा ॥ रुद्रस्य रेतसा दग्धस्तीर्थयात्राकृतादरः ॥ ४ ॥ सागरांश्च नदीर्गत्वा क्रमाद्रेवां समागतः ॥ चचार
परया भक्त्या ध्यानमुग्रं हुताशनः ॥ ५ ॥ वायुभक्षः शतं साग्रं यावत्तेपे हुताशनः ॥ तावत्तुष्टो महादेवो वरदो जातवेदसः ॥ संनिधौ समुपेत्याथ
वचनं चेदमब्रवीत् ॥ ६ ॥ ॥ ईश्वर उवाच ॥ ॥ वरं वृणीष्व हव्याश यस्ते मनसि वर्त्तते ॥ ७ ॥ ॥ वह्निरुवाच ॥ ॥ नमस्ते सर्व
लोकेश उग्रमूर्त्ते नमोस्तु ते ॥ रेतसा तव संदग्धः कुष्ठी जातो महेश्वर ॥ कृपां कुरु महादेव मम रोगं विनाशय ॥ ८ ॥ ॥ ईश्वर उवाच ॥ ॥
हव्यवाह भवारोगो मत्प्रसादाच्च सत्वरम् ॥ अत्र तीर्थे कृतस्नानः स्वरूपं प्रतिपत्स्यसे ॥ ९ ॥ इत्युक्त्वा च महादेवस्तत्रैवान्तरधीयत ॥ अनंतरं
हव्यवाहः सस्नौ रेवाजले त्वरन् ॥ १० ॥ तदैव रोगनिर्मुक्तोऽभवद्दिव्यस्वरूपवान् ॥ स्थापयामास देवेशं स वह्निः पिंगलेश्वरम् ॥ ११ ॥ नाम्ना

१ क्षणदाकरः–चन्द्रः–इत्यर्थः । रोहिण्यव्यतिरिक्तासु षड्विंशतिस्त्रीष्वृतुकालेऽप्यनभिगमनाद्याः भ्रूणहत्याः प्राप–तद्विमुक्तत्व्यम् –इति भावः । २ अष्टौ पुत्रान्–इत्यर्थः ।

संपूजयामास तुष्टाव स्तुतिभिर्मुदा ॥ ततो जगाम देशं स्वं देवानां हव्यवाहनः ॥ १२ ॥ हव्यवाहेन भूपैवं स्थापितः पिंगलेश्वरः ॥ जितक्रोधो हि यस्तत्र उपवासं समाचरेत् ॥ १३ ॥ अतिरात्रफलं तस्य अंते रुद्रत्वमाप्नुयात् ॥ गुणान्विताय विप्राय कपिलां तत्र भारत ॥ १४ ॥ अलंकृत्य सवत्सां च शक्त्याऽलंकारभूषिताम् ॥ यः प्रयच्छति राजेंन्द्र स गच्छेत्परमां गतिम् ॥ १५ ॥ इति श्रीस्कांदे महापुराण एकाशीतिसाहस्र्यां संहितायां पञ्चम आवंत्यखंडे रेवाखण्डे पिंगलेश्वरतीर्थमाहात्म्यवर्णनंनाम षडशीतितमोऽध्यायः ॥८६॥ ॥ छ ॥ ॥ श्रीमार्कंडेय उवाच ॥ ॥ ततो गच्छेन्महीपाल तीर्थं परमशोभनम् ॥ स्थापितं मुनिसंघैर्यद्ब्रह्मवंशसमुद्भवैः ॥ १ ॥ ऋणमोचनमित्याख्यं रेवातटसमाश्रितम् ॥ षण्मासं मनुजो भक्त्या तर्पयन्पितृदेवताः ॥ २ ॥ देवैः पितृमनुष्यैश्च ऋणमात्मकृतं च यत् ॥ मुच्यते तत्क्षणान्मर्त्यः स्नातो वै नर्मदाजले ॥ ॥ ३ ॥ प्रत्यक्षं दुरितं तत्र दृश्यते फलरूपतः ॥ तत्र तीर्थे तु यो राजन्नेकचित्तो जितेंद्रियः ॥ ४ ॥ स्नात्वा दानं च वै दद्यादर्चयेद्गिरिजापतिम् ॥ ऋणत्रयविनिर्मुक्तो नाके दीप्यति देववत् ॥ ५ ॥ इति श्रीस्कांदे महापुराण एकाशीतिसाहस्र्यां संहितायां पञ्चम आवन्त्यखण्डे रेवाखण्डे ऋणत्रयमोचनतीर्थमाहात्म्यवर्णनंनाम सप्ताशीतितमोऽध्यायः ॥ ८७ ॥ ॥ छ ॥ ॥ श्रीमार्कंडेय उवाच ॥ ॥ तस्यैवानंतरं पार्थ कापिलं तीर्थमाश्रयेत् ॥ स्थापितं कपिलेनैव सर्वपातकनाशनम् ॥ १ ॥ अष्टम्यां च सिते पक्षे चतुर्दश्यां नरेश्वर ॥ स्नापयेत्परया भक्त्या कपिलाक्षीरसर्पिषा ॥ ॥ २ ॥ श्रीखंडेन सुगंधेन गुंठयेत महेश्वरम् ॥ ततः सुगंधपुष्पैश्च श्वेतैश्च नृपसत्तम ॥ ३ ॥ येऽर्चयंति जितक्रोधा न ते यांति यमालयम् ॥ असिपत्रवनं घोरं यमचुल्ही सुदारुणा ॥ ४ ॥ दृश्यते नैव विद्वद्भिः कपिलेश्वरपूजनात् ॥ स्नात्वा रेवाजले पुण्ये भोजयेद्ब्राह्मणाञ्छुभान् ॥ ५ ॥ गोप्रदानेन वस्त्रेण तिलदानेन भारत ॥ छत्रशय्याप्रदानेन राजा भवति धार्म्मिकः ॥ ६ ॥ तीव्रतेजा विघोरश्च जीवत्पुत्रः प्रियंवदः ॥ शत्रुवर्गो न तस्य स्यात्कदाचित्पांडुनंदन ॥ ७ ॥ इति श्रीस्कांदे महापुराण एकाशीतिसाहस्र्यां संहितायां पञ्चम आवन्त्यखण्डे रेवाखण्डे कपिलेश्वरतीर्थमाहात्म्यवर्णनंनामाष्टाशीतितमोऽध्यायः ॥ ८८ ॥ ॥ छ ॥ ॥ श्रीमार्कंडेय उवाच ॥ ॥ ततो गच्छेत्तु राजेंद्र पूतिकेश्वरमुत्तमम् ॥ नर्मदादक्षिणे कूले सर्वपापक्षयंकरम् ॥ १ ॥ स्थापितं जांबुवंतेन लोकानां तु हितार्थिना ॥ राजा प्रसेनजिन्नाम तस्यां वक्षस्थलान्मणौ ॥ २ ॥ समुत्क्षिप्ते तु तेनैव सपूतिरभवद्व्रणः ॥ तत्र तीर्थे तपस्तप्त्वा निर्व्रणः समजायत ॥ ३ ॥ तेन तत्स्थापितं लिंगं पूतिकेश्वरमुत्तमम् ॥ यस्तत्र मनुजो भक्त्या

१ अतिरात्रफलम्—अतिरात्राख्ययज्ञस्य फलम्—इत्यर्थः । २ विघोरः—शान्तरूपः—इत्यर्थः ।

स्नायाद्भरतसत्तम ॥ ४ ॥ सर्वान्कामानवाप्नोति संपूज्य परमेश्वरम् ॥ कृष्णाष्टम्यां चतुर्दश्यां सर्वकालं नराधिप ॥ येऽर्चयंति सदा देवं ते न यांति यमालयम् ॥ ५ ॥ इति श्रीस्कांदे महापुराण एकाशीतिसाहस्र्यां संहितायां पञ्चम आवन्त्यखण्डे रेवाखण्डे पूतिकेश्वरतीर्थमाहात्म्यवर्णनंनामैकोननवतितमोऽध्यायः ॥ ८९ ॥ ॥ छ ॥ ॥ श्रीमार्कंडेय उवाच ॥ ॥ रेवाया उत्तरे कूले वैष्णवं तीर्थमुत्तमम् ॥ जलशायीति वै नाम विख्यातं वसुधातले ॥ १ ॥ दानवानां वधं कृत्वा सुप्तस्तत्र जनार्दनः ॥ चक्रं प्रक्षालितं तत्र देवदेवेन चक्रिणा ॥ सुदर्शनं च निष्पापं रेवाजलसमाश्रयात् ॥ २ ॥ ॥ युधिष्ठिर उवाच ॥ ॥ चक्रतीर्थं समाचक्ष्व मुनिसंघैश्च वंदितम् ॥ विष्णोः प्रभावमतुलं रेवायाश्चैव यत्फलम् ॥ ३ ॥ ॥ ॥ श्रीमार्कंडेय उवाच ॥ ॥ साधुसाधु महाप्राज्ञ विरक्तस्त्वं युधिष्ठिर ॥ गुह्याद्गुह्यतरं तीर्थं निर्मितं चक्रिणा स्वयम् ॥ ४ ॥ तत्तेऽहं संप्रवक्ष्यामि कथां पापप्रणाशिनीम् ॥ आसीत्पुरा महादैत्यस्तालमेघ इति श्रुतः ॥ ५ ॥ तेन देवा जिताः सर्वे हृतराज्या नराधिप ॥ यज्ञभागान्स्वयं भुंक्ते अहं विष्णुर्न संशयः ॥ ६ ॥ धनदस्य हृतं वित्तं हृतः शक्रस्य वारणः ॥ इंद्राणीं वांछते पापो हयरत्नं रवेरपि ॥७॥ तालमेघभयात्पार्थ रविरुद्राः सवासवाः ॥ यमः स्कंदो जलेशोऽग्निर्वायुर्देवो धनेश्वरः ॥८॥ सवाक्पतिमहेशाश्च नष्टचित्ताः पितामहम् ॥ गता देवा ब्रह्मलोकं तत्र दृष्ट्वा पितामहम् ॥ ९ ॥ तुष्टुवुर्विविधैः स्तोत्रैर्वागीशप्रमुखाः सुराः ॥ गुणत्रयविभागाय पश्चाद्भेदमुपेयुषे ॥ १० ॥ दृष्ट्वा देवान्निरुत्साहान्विवर्णानवनीपते ॥ प्रसादाभिमुखो देवः प्रत्युवाच दिवौकसः ॥ ११ ॥ ॥ ब्रह्मोवाच ॥ ॥ स्वागतं सुरसंघस्य कान्तिर्नष्टा पुरातनी ॥ हिमक्लिष्टप्रभावेण ज्योतींषीव मुखानि वः ॥ १२ ॥ प्रशमादर्चिषामेतदनुद्गीर्णं सुरायुधम् ॥ वृत्रस्य हंतुः कुलिशं कुंठितश्रीव लक्ष्यते ॥ १३ ॥ किं चायमरिदुर्वारः पाणौ पाशः प्रचेतसः ॥ मंत्रेण हतवीर्यस्य फणिनो दैन्यमाश्रितः ॥ १४ ॥ कुबेरस्य मनःशल्यं शंसतीव पराभवम् ॥ अपविद्धगतो वायुर्भग्नशाख इव द्रुमः ॥ १५ ॥ यमोपि विलिखन्भूमिं दंडेनास्तमितत्विषा ॥ कुरुतेस्मिन्नमोघोपि निर्वाणालातलाघवम् ॥ १६ ॥ अमी च कथमादित्याः प्रतापक्षतिशीतलाः ॥ चित्रन्यस्ता इव गताः प्रकामालोकनीयताम् ॥ १७ ॥ तद्ब्रूत वत्साः किमितः प्रार्थयध्वं समागताः ॥ किमागमनकृत्यं वो ब्रूत निःसंशयं सुराः ॥ १८ ॥ मयि सृष्टिर्हि लोकानां रक्षा युष्मास्ववस्थिता ॥ ततो मंदानिलोद्धूतकमलाकरशोभिना ॥ १९ ॥ गुरुं नेत्रसहस्रेण प्रेरयामास वृत्रहा ॥ स द्विनेत्रं हरेश्चक्षुः सहस्रनयनाधिकम् ॥ २० ॥ वाचस्पतिरुवाचेदं प्रांजलिर्जलजासनम् ॥

१ अहं विष्णुर्न संशयः—इति मन्यमानः—इति शेषः । २ सः वाचस्पतिः साक्षात् हरेः द्विनयनं चक्षुः—द्रष्टा—सकलपरावरज्ञानशालित्वात्—इति भावः ।

युष्मद्वंशोद्भवस्तात तालमेघो महाबलः ॥ २१ ॥ उपतापयते देवान्धूमकेतुरिवोच्छ्रितः ॥ तेन देवगणाः सर्वे दुःखिता दानवेन च ॥
॥ २२ ॥ तालमेघो दैत्यपतिः सर्वान्नो बाधते बली ॥ तस्मात्त्वां शरणं प्राप्ताः शरणं नो विधे भव ॥ २३ ॥ ततः प्रसन्नो भगवान्वेधा
स्तानब्रवीद्वचः ॥ २४ ॥ ॥ ब्रह्मोवाच ॥ ॥ तालमेघेन वो मध्ये बली तेन समः सुराः ॥ विना माधवदेवेन साध्यो मे नैव दानवः ॥ २५ ॥
ततः सुरगणाः सर्वे विरिंचिप्रमुखा नृप ॥ क्षीरोदं प्रस्थिताः सर्वे दुःखितास्तेन वैरिणा ॥ २६ ॥ त्वरिताः प्रस्थिता देवाः केशवं द्रष्टुकाम्यया ॥
क्षीरोदं सागरं गत्वाऽस्तुवंस्ते जलशायिनम् ॥ २७ ॥ ॥ देवा ऊचुः ॥ ॥ जगदादिरनादिस्त्वं जगदंतोऽप्यनंतकः ॥ जगन्मूर्त्तिरमूर्त्तिस्त्वं जय
गीर्वाणपूजित ॥ २८ ॥ जय क्षीरोदशयन जय लक्ष्म्या सदा वृत ॥ जय दानवनाशाय जय देवकिनंदन ॥२९॥ जय शंखगदापाणे जय चक्रधर
प्रभो ॥ इति देवस्तुतिं श्रुत्वा प्रबुद्धो जलशाय्यथ ॥ ३० ॥ उवाच मधुरां वाणीं मेघगंभीरनिस्वनाम् ॥ किमर्थं बोधितो ब्रह्मन्समर्थैर्वः सुरासुरैः ॥
॥ ३१ ॥ ॥ ब्रह्मोवाच ॥ ॥ तालमेघभयात्कृष्ण संप्राप्तास्तव मंदिरम् ॥ न वध्यः कस्यचित्पापस्तालमेघो जनार्दन ॥ ३२ ॥ त्वमेव जहि
तं दुष्टं मृत्युं यास्यति नान्यथा ॥ ३३ ॥ ॥ श्रीकृष्ण उवाच ॥ ॥ स्वस्थानं गम्यतां देवाः स्वकीयां लभत प्रजाम् ॥ दुष्टात्मानं हनिष्यामि
तालमेघं महाबलम् ॥ ३४ ॥ स्थानं ब्रुवंतु मे देवा वसेद्यत्र स दानवः ॥ ३५ ॥ ॥ देवा ऊचुः ॥ ॥ हिमाचलगुहायां स वसते दानवे
श्वरः ॥ चतुर्विंशतिसाहस्रैः कन्याभिः परिवारितः ॥ ३६ ॥ तुरंगैः स्यंदनैः कृष्ण संख्या तस्य न विद्यते ॥ नटा नानाविधास्तत्र असंख्यात
गुणा हरे ॥ ३७ ॥ द्विरदाः पर्वताकारा हयाश्च द्विरदोपमाः ॥ महाबलो वसेत्तत्र गीर्वाणभयदायकः ॥ ३८ ॥ श्रुत्वा देवो वचस्तेषां देवाना
मातुरात्मनाम् ॥ अचिंतयद्गरुत्मंतं शत्रुसंघविनाशनम् ॥ ३९ ॥ चक्रं करेण संगृह्य गदाचक्रधरः प्रभु ॥ शार्ङ्गं च मुशलं सीरं करैर्गृह्य जनार्दनः
॥ ४० ॥ आरूढः पक्षिराजेंद्रं वधार्थं दानवस्य च ॥ दानवस्य पुरे पेतुरुत्पाता घोररूपिणः ॥ ४१ ॥ गोमायुर्गृध्रमध्ये तु कपोतैः सममावि
शत् ॥ विना वातेन तस्यैव ध्वजदंडः पपात ह ॥ ४२ ॥ सर्पमूषकयोर्युद्धं तथा केसरिनागयोः ॥ उन्मार्गाः सरितस्तत्रावहन्रक्तविमिश्रिताः ॥
अकालतरुपुष्पाणि दृश्यंते स्म समंततः ॥ ४३ ॥ ततः प्राप्तो जगन्नाथो हिमवंतं नगेश्वरम् ॥ पांचजन्यश्च सहसा पूरितः पुरसन्निधौ ॥ ४४ ॥
तेन शब्देन महता ह्यारूढो दानवेश्वरः ॥ उवाच च तदा वाक्यं तालमेघो महाबलः ॥ ४५ ॥ ॥ तालमेघ उवाच ॥ ॥ कोऽयं मृत्युवशं

१ तथा चेत्—इति शेषः तथा चेत्—त्वमेव तं हंसि चेत्—इत्यर्थः । २ तस्य तुरङ्गस्यन्दनादेः सेनाङ्गस्य इत्यर्थः । ३ आरूढः—क्रोधाविष्टः—इत्यर्थः ।

प्राप्तो ह्यज्ञात्वा मम विक्रमम् ॥ धुंधुमाराज्ञया ह्याशु स्वसैन्यपरिवारितः ॥ ४६ ॥ बलादानय तं बद्ध्वा ममाग्रे बाहुशालिनम् ॥ ४७ ॥
॥ ॥ धुंधुमार उवाच ॥ ॥ आनयामि न संदेहः सुरो यक्षोऽथ किन्नरः ॥ स्यंदनौघैः समायुक्तो गजवाजिभटैः सह ॥ ४८ ॥ हृष्टस्ततो जग
द्योनिः सुपर्णस्थो महाबलः ॥ गृह्यतांगृह्यतामेष इत्युक्तास्तेन किंकराः ॥ ४९ ॥ चतुर्दिक्षु प्रधावंत इतश्चेतश्च सर्वतः ॥ सुपर्णेनाऽग्निरूपेण
दग्धास्ते शलभा यथा ॥ ५० ॥ धुंधुमारोऽपि कृष्णेन शरघातेन ताडितः ॥ इतो वक्षस्थले पापो मृतावस्थो रथोपरि ॥ ५१ ॥ हाहाकारं ततः
सर्वे दानवाश्चक्रुरातुराः ॥ तालमेघस्ततः क्रुद्धो रथारूढो विनिर्गतः ॥ ददृशे केशवं पार्थ शंखचक्रगदाधरम् ॥ ५२ ॥ ॥ तालमेघ
उवाच ॥ ॥ अन्ये ते दानवाः कृष्ण ये हताः समरे त्वया ॥ हिरण्यकशिपुप्रख्या न पुमांसो हि तेऽच्युत ॥ ५३ ॥ इत्युक्त्वा दानवः पार्थ वर्षयामास
सायकैः ॥ दानवस्य शरान्मुक्तांच्छेदयामास केशवः ॥ ५४ ॥ गरुत्मानवधीत्सैन्यमवध्यं यत्सुरासुरैः ॥ कृष्णेन द्विगुणास्तस्य
प्रेषिताः स्वशिलीमुखाः ॥ ५५ ॥ द्विगुणं द्विगुणीकृत्य प्रेषयामास दानवः ॥ तानप्यष्टगुणैः कृष्णश्छादयामास सायकैः ॥ ५६ ॥
ततः क्रुद्धेन दैत्येन ह्याग्नेयं बाणमुत्तमम् ॥ ५७ ॥ वारुणं प्रेषयामास त्वाग्नेयं शमितं ततः ॥ वारुणेनैव वायव्यं तालमेघो व्यसर्जयत् ॥
॥ ५८ ॥ सार्पं चैव हृषीकेशो वायव्यस्य प्रशांतये ॥ नारसिंहं नृसिंहोऽपि प्रेषयामास पांडव ॥ ५९ ॥ नारसिंहं ततो
दृष्ट्वा तालमेघो महाबलः ॥ उत्तीर्य स्यंदनाच्छीघ्रं गृहीत्वा खड्गचर्मणी ॥ ६० ॥ कृष्ण त्वां प्रेषयिष्यामि यममार्गं सुदारुणम् ॥ इत्युक्त्वा
दानवः पार्थ आगतः केशवं प्रति ॥ ६१ ॥ खड्गेनाताडयद्दैत्यो गदापाणिं जनार्दनम् ॥ मंडलाग्रं ततो गृह्य केशवो हृष्टमानसः ॥ ६२ ॥
जघनोरःस्थले पार्थ तालमेघं महाहवे ॥ जनार्दनस्तदा दैत्यं दैत्यो हरिमहन्मृधे ॥ ६३ ॥ जनार्दनस्ततः क्रुद्धस्तालमेघाय भारत ॥ अमो
घं चक्रमादाय मुक्तं तस्य च मूर्द्धनि ॥ ६४ ॥ निपपात शिरस्तस्य पर्वताश्च चकंपिरे ॥ समुद्राः क्षुभिताः पार्थ नद्य उन्मार्गगामिनीः ॥ ६५ ॥
पुष्पवृष्टिं ततो देवा मुमुचुः केशवोपरि ॥ अवध्यः सुरसंघानां सूदितः केशव त्वया ॥ ६६ ॥ स्वस्थाश्चैव ततो देवास्तालमेघे निपातिते ॥ जना
र्दनोऽपि कौंतेय नर्मदातटमाश्रितः ॥ ६७ ॥ क्षीरोदां नर्मदां मत्वा अनन्तभुजगोपरि ॥ लक्ष्म्या समन्वितः कृष्णो निलीनश्चोत्तरे तटे ॥ ६८ ॥
चक्रं विभीषणं मर्त्ये ज्वालामालासमन्वितम् ॥ पतितं नर्मदातोये जलशायिसमीपतः ॥ ६९ ॥ निर्द्धूतकल्मषं जातं नर्मदातोययोगतः ॥ तालमे

१ हे धुंधुमार—आज्ञया—मे—इति शेषः । हे धुंधुमार मे आज्ञया—इति योजना । २ आर्षी प्रथमार्थे द्वितीया ।

घवधोत्पन्नं यत्पापं नृपनन्दन ॥ ७० ॥ तत्सर्वं क्षालितं सद्यो नर्मदांभसि भारत ॥ तदाप्रभृति लोकेऽस्मिञ्जलशायी महीपते ॥ ७१ ॥ चक्रतीर्थं
वदन्त्यन्ये केचित्कालाघनाशनम् ॥ विख्यातं भारते वर्षे नर्मदायां महीपते ॥ ७२ ॥ तत्तीर्थस्य प्रभावोऽयं श्रूयतामवनीपते ॥ यथाऽनन्तो हि
नागानां देवानां च जनार्दनः ॥ ७३ ॥ मासानां मार्गशीर्षोऽस्ति नदीनां नर्मदा यथा ॥ मासि मार्गशिरे पार्थ ह्येकादश्यां सितेऽहनि ॥ ७४ ॥
गत्वा यो मनुजो भक्त्या कामक्रोधविवर्जितः ॥ वैष्णवीं भावनां कृत्वा जलेशं तु व्रजेत वै ॥ ७५ ॥ एकभुक्तं च नक्तं च तथैवाऽयाचितं नृप ॥
उपवासं तथा दानं ब्राह्मणानां च भोजनम् ॥ ७६ ॥ करोति च कुरुश्रेष्ठ न स याति यमालयम् ॥ यमलोकभयाद्भीता ये लोकाः पांडुनन्दन ॥
॥ ७७ ॥ ते पश्यंतु श्रियः कांतं नागपर्यंकशायिनम् ॥ गोपीजनसमावृत्तं योगनिद्रां समाश्रितम् ॥ विश्वरूपं जगन्नाथं संसारभयनाशनम ॥७८॥
स्नापयेत्परया भक्त्या क्षौद्रक्षीरेण सर्पिषा ॥ खंडेन[1] तोयमिश्रेण जगद्योनिं जनार्दनम् ॥ ७९ ॥ स्नाप्यमानं च पश्यंति ये लोका गतमत्सराः ॥
ते यांति परमं लोकं सुराऽसुरनमस्कृतम् ॥ ८० ॥ घृतेन बोधयेद्दीपमथवा तैलपूरितम् ॥ रात्रौ जागरणं कृत्वा देवस्याग्रे विमत्सराः ॥ ८१ ॥
ये कथां वैष्णवीं भक्त्या शृण्वंति च नृपोत्तम ॥ ब्रह्महत्यादिपापानि नश्यन्ते नाऽत्र संशयः ॥ ८२ ॥ प्रदक्षिणंति ये मर्त्या जलशायिजगद्गु
रुम् ॥ प्रदक्षिणीकृता तैस्तु सप्तद्वीपा वसुन्धरा ॥ ८३ ॥ ततः प्रभाते विमले पितॄन्संतर्प्पयेज्जलैः ॥ श्राद्धं च ब्राह्मणैस्तत्र योग्यैः पाण्डव मानवाः ॥
॥ ८४ ॥ स्वदारनिरतैः शांतैः परदारविवर्जकैः ॥ वेदाभ्यसनशीलैश्च स्वकर्म्मनिरतैः शुभैः ॥ ८५ ॥ नित्यं यजनशीलैश्च त्रिसंध्यापरिपालकैः ॥
श्रद्धया कारयेच्छ्राद्धं यदीच्छेच्छ्रेय आत्मनः ॥ ८६ ॥ ते धन्या मानुषे लोके वंद्या हि भुवि मानवाः ॥ ये वसन्ति सदाकालं पादपद्माश्रया
हरेः ॥ ८७ ॥ जलशायं प्रपश्यन्ति प्रत्यक्षं सुरनायकम् ॥ पक्षोपवासं पाराकं व्रतं चांद्रायणं शुभम् ॥ ८८ ॥ मासोपवासमुग्रं च षष्ठान्नं पञ्चमं
व्रतम् ॥ तत्र तीर्थे तु यः कुर्यात्सोऽक्षयां गतिमाप्नुयात् ॥ ८९ ॥ ॥ श्रीमार्कंडेय उवाच ॥ ॥ अतः परं प्रवक्ष्यामि तिलधेनोश्च यत्फलम् ॥
यथा यस्मिन्यदा देया दाने तस्याः शुभं फलम् ॥ ९० ॥ एतत्कथांतरं पुण्यमृषेर्द्वैपायनात्पुरा ॥ श्रुतं हि नैमिषे पुण्ये नारदाद्यैरनेकधा ॥ ९१ ॥
इदं परममायुष्यं मंगल्यं कीर्त्तिवर्द्धनम् ॥ विप्राणां श्रावयन्विद्वान्फलानंत्यंसमश्नुते ॥ ९२ ॥ बहुभ्यो न प्रदेयानि गौर्गृहं शयनं स्त्रियः ॥ विभ
क्तदक्षिणा ह्येता दातारं नाप्नुवन्ति च ॥ ९३ ॥ एकमेतत्प्रदातव्यं न बहूनां युधिष्ठिर ॥ सा च विक्रयमापन्ना दहत्यासप्तमं कुलम् ॥ ९४ ॥ तिलाः

[1] खण्डेन—शर्करया—इत्यर्थः ।

श्वेतास्तिलाः कृष्णास्तिला गोमूत्रसन्निभाः॥ तिलानां तु विचित्राणां धेनुं वत्सं च कारयेत् ॥९५॥ यथालाभा तु सर्वेषां चतुर्द्रोणा तु गौः स्मृता ॥
द्रोणस्य वत्सकः कार्यो बहूना वाऽपि कामतः ॥९६॥ यस्मिन्देशे तु यन्मानं विषये मा विचारितम् ॥ तेन मानेन तां कुर्यादक्षयं फलमश्नुते ॥९७॥ सुख
पूर्वं शुचौ भूमौ पुष्पधूपाक्षतैस्तथा ॥ कर्णाभ्यां रत्ने दातव्ये दीपौ नेत्रद्वये तथा ॥९८॥ श्रीखंडमुरसि स्थाप्यं ताभ्यां चैव तु कांचनम् ॥ ऊर्ध्वे मधु घृतं देयं
कुर्यात्सर्षपरोमकम् ॥९९॥ कंबले कंबलं दद्याच्छ्रोण्यां मधु घृतं तथा ॥ यवसं पायसं दद्याद्घृतं क्षौद्रसमन्वितम् ॥ १०० ॥ स्वर्णशृंगी रूप्यशिफा
रुक्मलांगूलसंयुता ॥ रत्नपृष्ठी तु दातव्या कांस्यपात्रावदोहिनी ॥ १०१ ॥ यस्याद्बाल्यकृतं पापं यद्वा कृतमजानता ॥ वाचा कृतं कर्मकृतं मन
सा यद्विचिंतितम् ॥१०२॥ जले निष्ठीवितं चैव मुशलं वाऽपि लंघितम्॥वृषलीगमनं चैव गुरुदारनिषेवणम् ॥१०३॥ कन्याया गमनं चैव सुवर्णस्ते
यमेव च ॥ सुरापानं तथा चान्यत्तिलधेनुः पुनाति हि ॥ १०४ ॥ अहोरात्रोपवासेन विधिवत्तां विसर्जयेत् ॥ या सा यमपुरे घोरे नदी वैतरणी
स्मृता ॥ १०५ ॥ वालुकाऽयोऽश्मस्थला च पच्यते यत्र दुष्कृती ॥ अवीचिर्नरको यत्र यत्र यामलपर्वतौ ॥१०६॥ यत्र लोहमुखाः काका यत्र श्वानो
भयंकराः ॥ असिपत्रवनं चैव यत्र सा कूटशाल्मली ॥ १०७ ॥ तान्सुखेन व्यतिक्रम्य धर्मराजालयं व्रजेत् ॥ धर्मराजस्तु तं दृष्ट्वा सूनृतं वक्ति
भारत ॥१०८॥ विमानमुत्तमं योग्यं मणिरत्नविभूषितम् ॥ अत्रारुह्य नरश्रेष्ठ प्रयाहि परमां गतिम् ॥ १०९ ॥ मा च चाटु भटे देहि मैव देहि पुरोहि
ते ॥ मा च काणे विरूपे च न्यूनांगे न च देवले ॥ ११० ॥ अवेदविदुषे नैव ब्राह्मणे सर्वविक्रये ॥ मित्रघ्ने च कृतघ्ने च मंत्रहीने तथैव च ॥ १११ ॥
वेदांतगाय दातव्या श्रोत्रियाय कुटुंबिने ॥ वेदांतगसुते देया श्रोत्रिये गृहपालके ॥ ११२ ॥ सर्वांगरुचिरे विप्रे सद्वृत्ते च प्रियंवदे ॥ पूर्णिमायां तु
माघस्य कार्तिक्यामथ भारत ॥ ११३ ॥ वैशाख्यां मार्गशीर्ष्यां वाऽऽषाढ्यां चैत्र्यामथाऽपि वा ॥ अयने विषुवे चैव व्यतीपाते च सर्वदा ॥
॥ ११४ ॥ षडशीतिमुखे पुण्ये छायायां कुंजरस्य वा ॥ एष ते कथितः कल्पस्तिलधेनोर्मयाऽनघ ॥ ११५ ॥ व्रजंति वैष्णवं लोकं दत्त्वा पादं यमो
परि ॥ प्राणत्यागात्परं लोकं वैष्णवं नात्र संशयः ॥ भित्त्वाऽशु भास्करं यांति नाऽत्र कार्या विचारणा ॥ ११६ ॥ एतत्ते सर्वमाख्यातं चक्रतीर्थं
फलं नृप ॥ यच्छ्रुत्वा मानवो भक्त्या सर्वपापैः प्रमुच्यते ॥ ११७ ॥ इति श्रीस्कांदे महापुराण एकाशीतिसाहस्र्यां संहितायां पञ्चम आवंत्य
खण्डे रेवाखण्डे जलशायितीर्थमाहात्म्यवर्णनंनाम नवतितमोऽध्यायः ॥ ९० ॥ ॥ छ ॥ ॥ श्रीमार्कंडेय उवाच ॥ ॥ ततो गच्छेन्म

१ छायायां कुंजरस्य—हस्तिच्छायापर्वणि—इत्यर्थः।

हीपाल तीथ परमपावनम् ॥ चंडादित्यं नृपश्रेष्ठ स्थापितं चंडमुंडयोः ॥ १ ॥ आस्तां पुरा महादैत्यौ चंडमुंडौ सुदारुणौ ॥ नर्मदातीरमाश्रित्य
चेरतुर्विपुलं तपः ॥ २ ॥ ध्यायंतौ भास्करं देवं तमोनाशं जगत्त्रये ॥ तुष्टस्तत्तपसा देवः सहस्रांशुरुवाच ह ॥ ३ ॥ साधुसाध्विति तौ पार्थ नर्मदा
याः शुभे तटे ॥ वरं प्रार्थयतं वीरौ यथेष्टं चेतसेच्छितम् ॥ ४ ॥ ॥ चंडमुंडावूचतुः ॥ ॥ अजेयौ सर्वदेवानां भूयास्वावां समाहितौ ॥ सर्वरोगैः
परित्यक्तौ सर्वकालं दिवाकर ॥ ५ ॥ एवमस्त्विति तौ प्राह भास्करो वारितस्करः ॥ इत्युक्त्वांतर्दधे भानुर्दैत्याभ्यां तत्र भास्करः ॥६॥ स्थापितः
परया भक्त्या तं गच्छेदात्मसिद्धये ॥ गीर्वाणांश्च मनुष्यांश्च पितॄंस्तत्राऽपि तर्पयेत् ॥ ७ ॥ स वसेद्भास्करे लोके विरंचिदिवसं नृप ॥ घृतेन बोधये
द्दीपं षष्ठ्यां स च नरेश्वर ॥ मुच्यते सर्वपापैस्तु प्रतियाति पुरं रवेः ॥८॥ उत्पत्तिं चंडभानोर्यः[1] शृणोति भरतर्षभ ॥ विजयी स सदा नूनमाधिव्या
धिविवर्जितः ॥ ९ ॥ इति श्रीस्कांदे महापुराण एकाशीतिसाहस्र्यां संहितायां पञ्चम आवन्त्यखण्डे रेवाखंडे चंडादित्यतीर्थमाहात्म्यवर्णनंना
मैकनवतितमोऽध्यायः ॥ ९१ ॥ ॥ छ ॥ ॥ श्रीमार्कंडेय उवाच ॥ ॥ ततो गच्छेत्तु राजेंद्र यमहास्यमनुत्तमम् ॥ सर्वपापहरं तीर्थं नर्म
दातटमाश्रितम् ॥ १ ॥ ॥ युधिष्ठिर उवाच ॥ ॥ यमहास्यं कथं जातं पृथिव्यां द्विजपुंगव ॥ एतत्सर्वं ममाख्याहि परं कौतूहलं हि मे ॥ २ ॥
॥ ॥ श्रीमार्कंडेय उवाच ॥ ॥ साधुसाधु महाप्राज्ञ पृष्टोऽहं नृपनंदन ॥ स्नानार्थं नर्मदां पुण्यामागतस्ते पिता पुरा ॥ ३ ॥ रजकेन यथा
धौतं वस्त्रं भवति निर्मलम् ॥ तथाऽसौ निर्मलो जातो धर्मराजो युधिष्ठिर ॥ ४ ॥ स पश्यन्निर्मलं देहं हसन्प्रोवाच विस्मितः ॥ ५ ॥ ॥ यम
उवाच ॥ ॥ मत्पुरं कथमायांति मनुजाः पापबृंहिताः ॥ स्नानेनैकेन रेवायाः प्राप्यते वैष्णवं पदम् ॥ ६ ॥ समर्था ये न पश्यंति रेवां पुण्य
जलां शुभाम् ॥ जात्यंधैस्ते समा ज्ञेया मृतैः पंगुभिरेव वा ॥७॥ समर्था ये न पश्यति रेवां पुण्यजलां नदीम् ॥ एतस्मात्कारणाद्राजन्हसितो लोक
शासनः ॥ ८ ॥ स्थापयित्वा यमस्तत्र देवं स्वर्गं जगाम ह ॥ यमहासेश्वरे राजञ्जितक्रोधो जितेंद्रियः ॥ ९ ॥ विशेषाच्चाऽऽश्विने मासि कृष्णपक्षे
चतुर्दशीम् ॥ उपोष्य परया भक्त्या सर्वपापैः प्रमुच्यते ॥ १० ॥ रात्रौ जागरणं कुर्याद्दीपं देवस्य बोधयेत् ॥ घृतेन चैव राजेंद्र शृणु तत्राऽस्ति
यत्फलम् ॥ ११ ॥ मुच्यते पातकैः सर्वैरगम्यागमनोद्भवैः ॥ अभक्ष्यभक्षणोद्भूतैरपेयापेयजैरपि ॥ १२ ॥ अवाह्यवाहिते यत्स्याद्दोह्या
दोहने यथा ॥ स्नानमात्रेण तस्यैवं यांति पापान्यनेकधा ॥ १३ ॥ यमलोकं न वीक्षेत मनुजः स कदाचन ॥ पितॄणां परमं गुह्यमिदं भूमौ नृरे

[1] चंडभानोः—चंडमुंडस्थापितान्यसूर्यदेवस्य—इत्यर्थः ।

श्वर ॥ १४ ॥ ददतामक्षयं सर्वं यमहास्ये न संशयः ॥ अमावास्यां जितक्रोधो यस्तु पूजयते द्विजान् ॥ १५ ॥ हिरण्यभूमिदानेन तिलदानेन भूयसा ॥ कृष्णाजिनप्रदानेन तिलधेनुप्रदानतः ॥ १६ ॥ विधानोक्तद्विजाग्र्याय ये प्रदास्यंति भक्तितः ॥ हयं वा कुंजरं वाऽथ धूर्वहौ सीरसंयुतौ ॥ १७ ॥ कन्यां वसुमतीं गां च महिषीं वा पयस्विनीम् ॥ ददते ये नृपश्रेष्ठ नोपसर्पंति ते यमम् ॥ १८ ॥ यमोऽपि भवति प्रीतः प्रतिजन्म युधिष्ठिर ॥ यमस्य वाहो महिषो महिष्यस्तस्य मातरः ॥ १९ ॥ तासां दानप्रभावेण यमः प्रीतो भवेद्ध्रुवम् ॥ नाऽसौ यममवाप्नोति यदि पापैः समावृतः ॥ २० ॥ एतस्मात्कारणादत्र महिषीदानमुत्तमम् ॥ तस्याः शृंगे जलं कार्यं धूम्रवस्त्रानुवेष्टिता ॥२१॥ आयसस्य खुराः कार्यास्ताम्रपृष्ठाः सुभूषिताः ॥ लवणाचलं पूर्वस्यामाग्नेय्यां गुडपर्वतम् ॥ २२ ॥ कार्पासं याम्यभागं तु नवनीतं तु नैर्ऋते ॥ पश्चिमे सप्तधान्यानि वायव्ये तंदुलाः स्मृताः ॥ २३ ॥ सौम्ये तु कांचनं दद्यादीशाने घृतमेव च ॥ प्रदद्याद्यमराजो मे प्रीयतामित्युदीरयन् ॥ २४ ॥ इत्युच्चार्य द्विजस्याग्रे यमलोकं महाभयम् ॥ असिपत्रवनं घोरं यमचुल्ली सुदारुणा ॥ २५ ॥ रौद्रा वैतरणी चैव कुम्भीपाको भयावहः ॥ कालसूत्रो महाभीमस्तथा यमलपर्वतौ ॥ ॥ २६ ॥ क्रकचं तैलयंत्रं च श्वानो गृध्राः सुदारुणाः ॥ निरुच्छ्वासा महानादा भैरवो रौरवस्तथा ॥ २७ ॥ एते घोरा याम्यलोके श्रूयंते द्विज सत्तम ॥ त्वत्प्रसादेन ते सौम्यास्तीर्थस्याऽस्य प्रभावतः ॥ २८ ॥ दानस्याऽस्य प्रभावेण यमराजप्रसादतः ॥ नरकेऽहं न यास्यामि द्विज जन्मनि जन्मनि ॥ २९ ॥ यमहास्यस्य चाख्यानमिदं शृण्वंति ये नराः ॥ तेऽपि पापविनिर्मुक्ता न पश्यंति यमालयम् ॥ ३० ॥ इति श्रीस्कांदे महापुराण एकाशीतिसाहस्र्यां संहितायां पञ्चम आवन्त्यखंडे रेवाखंडे यमहास्यतीर्थमाहात्म्यवर्णनं नाम द्विनवतितमोऽध्यायः ॥ ९२ ॥ ॥ छ ॥ ॥

॥ ॥ श्रीमार्कंडेय उवाच ॥ ॥ ततो गच्छेत्तु राजेंद्र कल्होडीतीर्थमुत्तमम् ॥ विख्यातं भारते लोके गंगायाः पापनाशनम् ॥ १ ॥ दुर्लभं मनुजैः पार्थ रेवातटसमाश्रितम् ॥ प्राणिनां पापनाशाय ऊषरं पुष्करं तथा ॥ २ ॥ तत्तु तीर्थमिदं पुण्यमित्येवं शूलिनो वचः ॥ जाह्नवी पशुरूपेण तत्र स्नानार्थमागता ॥ ३ ॥ अतस्तद्विश्रुतं लोके कल्होडीतीर्थमुत्तमम् ॥ त्रिरात्रं कारयेत्तत्र पूर्णिमायां युधिष्ठिर ॥ ४ ॥ रजस्तमस्तथा क्रोधं दंभं मात्सर्यमेव च ॥ एतांस्त्यजति यः पार्थ तेनाप्तं मोक्षजं फलम् ॥५॥ पयसा स्नापयेद्देवं त्रिसंध्यं च त्र्यहं तथा ॥ पयो गोसंभवं सद्यः संवत्सा

१ सवत्स. । जीवपुत्रिणी—इत्यनयोः पदयोः—गोसंभवम्—पयः—इत्यत्रान्वयोऽस्ति । तेन या गौः सवत्सा जीवपुत्रिणी भवेत्—तद्गोसंभवं पयः—इति: यथार्थार्थो बोध्यः । मूले पदयोजना यथाकथंचिद्वत्यस्ता दरीदृश्यते सा चार्षेति तोष्टव्यं सुधीभिः ।

जीवपुत्रिणी ॥ ६ ॥ कृत्वा तत्ताम्रजे पात्रे क्षौद्रेण चैव योजिते ॥ ॐ नमः श्रीशिवायेति स्नानं देवस्य कारयेत् ॥ ७ ॥ स याति त्रिदश
स्थानं नाकस्त्रीभिः समावृतः ॥ यस्तत्र विधिवत्स्नात्वा दानं प्रेतेषु यच्छति ॥ ८ ॥ शुक्लां गां दापयेत्तत्र प्रीयतां मे पितामहाः ॥ ब्राह्मणे शौचसंपन्ने
स्वदारनिरते सदा ॥ ९ ॥ सवत्सां वस्त्रसंयुक्तां हिरण्योपरि संस्थिताम् ॥ सत्त्वयुक्तो ददद्राजञ्च्छांभवं लोकमाप्नुयात् ॥ १० ॥ इति श्रीस्कांदे महा
पुराण एकाशीतिसाहस्र्यां संहितायां पंचम आवन्त्यखण्डे रेवाखण्डे कल्होडीतीर्थमाहात्म्यवर्णनंनाम त्रिनवतितमोऽध्यायः ॥ ९३ ॥ ॥ छ ॥ ॥
॥ ॥ श्रीमार्कंडेय उवाच ॥ ॥ तस्यैवानंतरं राजन्नंदितीर्थं व्रजेच्छुभम् ॥ सर्वपापहरं पुंसां नंदिना निर्मितं पुरा ॥ १ ॥ पापौघहतजंतूनां
मोक्षदं नर्मदातटे ॥ अहोरात्रोषितो भूत्वा नंदिनाथं युधिष्ठिर ॥ २ ॥ पञ्चोपचारपूजायामर्चयेन्नंदिकेश्वरम् ॥ रत्नानि चैव विप्रेभ्यो यो दद्याद्धर्म
नंदन ॥ ३ ॥ स याति परमं स्थानं यत्र वासः पिनाकिनः ॥ सर्वसौख्यसमायुक्तोऽप्सरोभिः सह मोदते ॥ ४ ॥ इति श्रीस्कांदे महापुराण
एकाशीतिसाहस्र्यां संहितायां पञ्चम आवन्त्यखण्डे रेवाखण्डे नंदिकेश्वरतीर्थमाहात्म्यवर्णनंनाम चतुर्नवतितमोऽध्यायः ॥ ९४ ॥ ॥ छ ॥ ॥
॥ ॥ श्रीमार्कंडेय उवाच ॥ ॥ ततो गच्छेत्तु राजेंद्र बदर्याश्रममुत्तमम् ॥ सर्वतीर्थवरं पुण्यं कथितं शंभुना पुरा ॥ १ ॥ यश्चैष भारतस्याऽ
र्थे तत्र सिद्धः किरीटभृत् ॥ भ्राता ते फाल्गुनो नाम विद्ध्येनं नरदैवतम् ॥ २ ॥ नरनारायणौ द्वौ तावागतौ नर्मदातटे ॥ ज्ञानं तस्यैव[1] यो राज
न्भक्तिमान्वै जनार्दने ॥ ३ ॥ समं पश्यति सर्वेषु स्थावरेषु चरेषु च ॥ ब्राह्मणं श्वपचं चैव तत्र प्रीतो जनार्दनः ॥ ४ ॥ ऐकात्म्यं पश्य कौंतेय मयि
चात्मनि नांतरम् ॥ नरनारायणाभ्यां हि कृतं बदरिकाश्रमम् ॥ ५ ॥ स्थापितः शंकरस्तत्र लोकानुग्रहकारणात् ॥ त्रिमूर्त्तिस्थापितं लिंगं स्वर्ग
मार्गानुमुक्तिदम् ॥ ६ ॥ तत्र गत्वा शुचिर्भूत्वा ह्येकरात्रोपवासकृत् ॥ रजस्तमस्तथा त्यक्त्वा सात्त्विकं भावमाश्रयेत् ॥ ७ ॥ रात्रौ जागरणं कृत्वा
मधुमासाष्टमीदिने ॥ अथवा च चतुर्दश्यामुभौ पक्षौ च कारयेत् ॥ ८ ॥ आश्विनस्य विशेषेण कथितं तव पांडव ॥ स्नापयेत्परया भक्त्या क्षीरेण
मधुना सह ॥ ९ ॥ दध्ना शर्करया युक्तं घृतेन समलंकृतम् ॥ पंचामृतमिदं पुण्यं स्नापयेद्वृषभध्वजम् ॥ १० ॥ स्नाप्यमानं शिवं भक्त्या वीक्षते
यो विमत्सरः ॥ तस्य वासः शिवोपांते शक्रलोके न संशयः ॥ ११ ॥ शाठ्येनाऽपि नमस्कारः प्रयुक्तः शूलपाणिने ॥ संसारमूलबद्धाना

१ यः जनार्दने भक्तिमान्--तस्यैव ज्ञानं लभ्येत--नान्यस्य--इत्यन्वयानुगुणोऽर्थः ।

सुद्वेष्टनकरो हि यः ॥ १२ ॥ तेनाधीतं श्रुतं तेन तेन सर्वमनुष्ठितम् ॥ येनोंनमः शिवायेति मंत्राभ्यासः स्थिरीकृतः ॥ १३ ॥ यः पुनः स्नाप
येद्भक्त्या एकभक्तो जितेन्द्रियः ॥ तस्याऽपि यत्फलं पार्थ वक्ष्ये तल्लेशतस्तव ॥ १४ ॥ पीडितो वृद्धभावेन तव भक्त्या वदाम्यहम् ॥ ते यांति
परमं स्थानं भित्त्वा भास्करमण्डलम् ॥ १५ ॥ संसारे सर्वसौख्यानां निलयास्ते भवन्ति च ॥ आश्चर्यं ज्ञातिवर्गाणां धर्माणां निलयास्तु ते ॥
॥ १६ ॥ संपन्नाः सर्वकामैस्ते पृथिव्यां पृथिवीपते ॥ श्राद्धं तत्रैव यः कुर्यान्नर्मदोदकमिश्रितम् ॥ १७ ॥ योग्यैश्च ब्राह्मणै राजन्कुलीनैर्वेदपारगैः ॥
सुरूपैश्च सुशीलैश्च स्वदारनिरतैः शुभैः ॥ १८ ॥ आर्यदेशप्रसूतैश्च श्लक्ष्णैश्चैव सुरूपिभिः ॥ कारयेत्पिंडदानं वै भास्करे कुतपस्थिते ॥ १९ ॥
पितॄणां परमं लोकं यदीच्छेद्धर्मनन्दन ॥ वर्जयेत्तान्प्रयत्नेन काणान्दुष्टांश्च दांभिकान् ॥ २० ॥ पुरुषान्क्रूरषण्डांश्च ब्राह्मणानां च निन्दकान् ॥
एतांश्च वर्जयेद्विप्रान्यदीच्छेच्छ्रेय आत्मनः ॥ २१ ॥ तस्मात्सर्वप्रयत्नेन योग्यं विप्रं समाश्रयेत् ॥ नरकान्मोचयेत्प्रेतान्कुम्भीपाकपुरोगमान् ॥
॥ २२ ॥ मोक्षो भवति सर्वेषां पितॄणां नृपनन्दन ॥ विप्रेभ्यः कांचनं दद्यात्प्रीयतां मे पितामहः ॥ २३ ॥ अन्नं च दापयेत्तत्र भक्त्या वस्त्रं च
भारत ॥ गां वृषं मेदिनीं दद्याच्छत्रं शस्तं नृपोत्तम ॥ २४ ॥ स पुमान्स्वर्गमाप्नोति इत्येवं शंकरोऽब्रवीत् ॥ प्राणत्यागं तु यः कुर्याच्छिखिना सलि
लेनवा ॥ २५ ॥ अनाशकेन वा भूयः स गच्छेच्छिवमंदिरम् ॥ नरनारायणीतीरे देवद्रोण्यां च यो नृप ॥ २६ ॥ स वसेदीश्वरस्याग्रे यावदिंद्राश्चतु
र्दश ॥ पुनः स्वर्गाच्च्युतः सोऽपि राजा भवति वीर्य्यवान् ॥ २७ ॥ सर्व्वैश्वर्यगुणैर्युक्तः प्रजापालनतत्परः ॥ ततः स्मरति तत्तीर्थं पुनरेवाऽऽगमि
ष्यति ॥ २८ ॥ इति श्रीस्कांदे महापुराण एकाशीतिसाहस्र्यां संहितायां पंचम आवन्त्यखण्डे रेवाखण्डे नारायणीतीर्थमाहात्म्यवर्णनंनाम
पंचनवतितमोऽध्यायः ॥ ९५ ॥ ॥ छ ॥ ॥ श्रीमार्कंडेय उवाच ॥ ॥ ततो गच्छेत्तु राजेंद्र तीर्थं कोटीश्वरं परम् ॥ ऋषिकोटिः समायाता
यत्र वै कुरुनन्दन ॥ १ ॥ कृष्णद्वैपायनस्यैव क्षेमार्थं मुनिपुंगवाः ॥ मन्त्रयित्वा द्विजैः सर्व्वैर्वेदमंगलपाठकैः ॥ २ ॥ स्थापितः शंकरस्तत्र कारणं
बन्धनाशनम् ॥ संसारच्छेदकरणं प्राणिनामार्त्तिनाशनम् ॥ ३ ॥ कोटीश्वरमिति प्रोक्तं पृथिव्यां नृपनन्दन ॥ स्नापयेत्तं तु यो भक्त्या पूर्णिमायां
नृपोत्तम ॥ ४ ॥ पितॄणां तर्प्पणं कृत्वा पिंडदानं यथाविधि ॥ श्रावणस्य विशेषेण पूर्णिमायां युधिष्ठिर ॥ ५ ॥ पितॄणामक्षया तृप्तिर्यावदाभूतसंप्लु
वम् ॥ पितॄणां परमं गुह्यं रेवातटसमाश्रितम् ॥ मोक्षदं सर्वजंतूनां निर्मितं मुनिसत्तमैः ॥ ६ ॥ इति श्रीस्कांदे महापुराण एकाशीतिसाहस्र्यां संहि
तायां पंचम आवन्त्यखण्डे रेवाखण्डे कोटीश्वरतीर्थमाहात्म्यवर्णनंनाम षण्णवतितमोऽध्यायः ॥ ९६ ॥ ॥ छ ॥ ॥ श्रीमार्कंडेय उवाच ॥ ॥

ततो गच्छेन्महीपाल व्यासतीर्थमनुत्तमम् ॥ दुर्लभं मनुजैः पुण्यमन्तरिक्षे व्यवस्थितम् ॥ १ ॥ ॥ युधिष्ठिर उवाच ॥ ॥ कस्माद्वै व्यासतीर्थं
तदन्तरिक्षे व्यवस्थितम् ॥ एतदाख्याहि संक्षेपात्त्यज ग्रन्थस्य विस्तरम् ॥ २ ॥ ॥ श्रीमार्कंडेय उवाच ॥ ॥ साधुसाधु महाबाहो धर्मवान्साधु
वत्सल ॥ स्वकर्मनिरतः पार्थ तीर्थयात्राकृतादरः ॥ ३ ॥ दुर्लभं सर्वजंतूनां व्यासतीर्थं नरेश्वर ॥ पीडितो वृद्धभावेन अकल्पोऽहं नृपात्मज ॥ ४ ॥
विसंज्ञो गतवित्तस्तु संजातः स्मृतिवर्जितः ॥ गुह्याद्गुह्यतरं तीर्थं नाऽऽख्यातं कस्य चिन्मया ॥ ५ ॥ कलिस्त्तत्रैव राजेंद्र न विशेद्व्याससंश्र
यात् ॥ अन्तरिक्षे तु संजातं रेवायाश्चेष्टितेन तु ॥ ६ ॥ विरिंचिर्नैव शक्नोति रेवाया गुणकीर्त्तनम् ॥ कथं ज्ञास्याम्यहं तात रेवामाहात्म्यमुत्त
मम् ॥ ७ ॥ व्यासतीर्थं विशेषेण लवमात्रं ब्रवीम्यतः ॥ प्रत्यक्षः प्रत्ययो यत्र दृश्यतेऽद्य कलौ युगे ॥ ८ ॥ विहंगो गच्छते नैव भित्त्वा
शूलं सुदारुणम् ॥ तस्योत्पत्तिं समासेन कथयामि नृपात्मज ॥ ९ ॥ आसीत्पूर्वं महीपाल मुनिर्मान्यः पराशरः ॥ तेनात्युग्रं तपश्चीर्णं
गंगांभसि महाफलम् ॥ १० ॥ प्राणायामेन सन्तस्थौ प्रविष्टो जाह्नवीजले ॥ पूर्णे द्वादशमे वर्षे निष्क्रांतो जलमध्यतः ॥ ११ ॥
भिक्षार्थी संचरेद्ग्रामं नावा[१] यत्रैव तिष्ठति ॥ तत्र तेन परा दृष्टा बाला चैव मनोहरा ॥ १२ ॥ तां दृष्ट्वा स च कामार्त्त उवाच मधुरं तदा ॥
मां नयस्व परं पारं काऽसि त्वं मृगलोचने ॥ १३ ॥ नावारूढे नदीतीरे मम चित्तप्रमाथिनि ॥ एवमुक्ता तु सा तेन प्रणम्य ऋषिपुंगवम् ॥
॥ १४ ॥ कथयामास चाऽऽत्मानं दृष्ट्वा तं काममोहितम् ॥ कैवर्त्तानां गृहे दासी कन्याऽहं द्विजसत्तम ॥ १५ ॥ नावासंरक्षणार्थाय आदिष्टा स्वामि
ना विभो ॥ मया विज्ञापितं वृत्तमशेषं ज्ञातुमर्हसि ॥ १६ ॥ एवमुक्तस्तया सोऽथ क्षणं ध्यात्वाऽब्रवीदिदम् ॥ १७ ॥ ॥ पराशर उवाच ॥ ॥
अहं ज्ञानबलाद्भद्रे तव जानामि संभवम् ॥ कैवर्त्तपुत्रिका न त्वं राजकन्याऽसि सुन्दरि ॥ १८ ॥ कन्योवाच ॥ ॥ कः पिता कथ्यतां
ब्रह्मन्कस्या वा ह्युदरोद्भवा ॥ कस्मिन्वंशे प्रसूताऽहं कैवर्त्ततनया कथम् ॥ १९ ॥ ॥ पराशर उवाच ॥ ॥ कथयामि समस्तं यत्त्वया पृष्टम
शेषतः ॥ वसुर्नामेति भूपालः सोमवंशविभूषणः ॥ २० ॥ जंबूद्वीपाऽधिपो भद्रे शत्रूणां भयवर्धनः ॥ शतानि सप्त भार्याणां पुत्राणां च दशैव
३ ॥ तु ॥ २१ ॥ धर्मेण पालयेल्लोकानीशवत्पूज्यते सदा ॥ म्लेच्छास्तस्याविधेयाश्च क्षीरद्वीपनिवासिनः ॥ २२ ॥ तेषामुत्सादनार्थाय ययावुल्लंघ्य ॥२५५॥
सागरम् ॥ संयुक्तः पुत्रभृत्यैश्च पौरुषे महति स्थितैः ॥ २३ ॥ समरं तैः समारब्धं म्लेच्छैश्च वसुना सह ॥ जिता म्लेच्छाः समस्तास्ते वसुना मृग

१ नावा—नौका—इत्यर्थः ।

लोचने ॥ २४ ॥ करदास्ते कृतास्तेन सपुत्रबलवाहनाः ॥ प्रधाना तस्य सा राज्ञी तव माता मृगेक्षणे ॥२५ ॥ प्रवासस्थे महीपाले संजाता सा रजस्वला ॥ नारीणां तु सदाकालं मन्मथो ह्यधिको भवेत् ॥ २६ ॥ विशेषेण ऋतोः काले भिद्यंते कामसायकैः ॥ मन्मथेन तु संतप्तार्चित यत्सा शुभेक्षणा ॥ २७ ॥ दूतं वै प्रेषयाम्यद्य वसुराज्ञः समीपतः ॥ आहूतः सत्वरं दूत गच्छ त्वं नृपसन्निधौ ॥ २८ ॥ ॥ दूत उवाच ॥ ॥ परतीरं गतो देवि वसुराजाऽरिशासनः ॥ तत्र गंतुमशक्येत जलयानैर्विना शुभे ॥ २९ ॥ तानि यानानि सर्वाणि गृहीतानि परे तटे ॥ दूतवाक्येन सा राज्ञी विषण्णा कामपीडिता ॥ ३० ॥ तत्सखी तामुवाचाऽथ कस्मात्त्वं परितप्यसे ॥ स्वलेखः प्रेष्यतां देवि शुकहस्ते यथार्थतः ॥ ३१ ॥ समुद्रं लंघयित्वा तु शकुंता यांति सुन्दरि ॥ सखिवाक्येन सा राज्ञी स्वस्था जाता नराधिप ॥ ३२ ॥ व्याहृतो लेखकस्तत्र लिख लेखं ममाज्ञया ॥ त्वद्धीना सत्यभामाद्य वसो राजन्न जीवति ॥ ३३ ॥ ऋतुकालोऽद्य संजातो लिख लेखं तु लेखकं ॥ लिखिते भूर्जपत्रे तु लेखे वै लेखकेन तु ॥ ३४ ॥ शुकः पंजरमध्यस्थ आनीतोद्धैव सन्निधौ ॥ ३५ ॥ ॥ सत्यभामोवाच ॥ ॥ नीत्वा लेखं गच्छ शीघ्रं वसुराज्ञः समीपतः ॥ शकुनिः प्रणतो भूत्वा गृहीत्वा लेखमुत्तमम् ॥ ३६ ॥ उत्पत्य सहसा राजञ्जगामाऽऽकाशमंडलम् ॥ ततः पक्षी गतः शीघ्रं वसुराजसमीपतः ॥ ३७ ॥ क्षिप्ते लेखे शुकेनैव सत्यभामाविसर्जिते ॥ वसुराज्ञा ततो लेखो गृह्य हस्तेऽवधारितः ॥ ३८ ॥ लेखार्थं चिंतयित्वा तु गृह्य वीर्यं नरेश्वरः ॥ अमोघं पुटिकां कृत्वा प्रतिलेखेन मिश्रितम् ॥ ३९ ॥ शुकस्य सोऽर्पयामास गच्छ राज्ञीसमीपतः ॥ प्रणम्य वसुराजानं बीजं गृह्योत्पपात ह ॥ ४० ॥ समुद्रोपरि संप्राप्तः शुकः श्येनेन वीक्षितः ॥ सामिषं तं शुकं ज्ञात्वा श्येनस्तमभ्यधावत ॥ ४१ ॥ हतश्चंचुप्रहारेण शुकः श्येनेन भारत ॥ मूर्च्छया तस्य तद्बीजं पतितं सागरांभसि ॥ ४२ ॥ मत्स्येन गिलितं तच्च बीजं वसुमहीपतेः ॥ कन्या मत्स्योदरे जाता तेन बीजेन सुन्दरि ॥ ४३ ॥ प्राप्तोऽसौ लुब्धकैर्मत्स्य आनीतः स्वगृहं ततः ॥ यावद्विदारितो मत्स्यस्तावद्दृष्टा त्वमुत्तमे ॥ ॥ ४४ ॥ शशिमंडलसंकाशा सूर्यतेजःसमप्रभा ॥ दृष्ट्वा त्वां हर्षिताः सर्वे कैवर्त्ता जाह्नवीतटे ॥ ४५ ॥ हर्षितास्ते गताः सर्वे प्रधानस्य[1] च मंदिरम् ॥ स्त्रीरत्नं कथयामासुर्गृहाण त्वं महाप्रभम् ॥ ४६ ॥ गृहीता तेन तन्वंगी ह्यपुत्रेण मृगेक्षणा ॥ भार्यां स्वामाह तन्वंगि पालयस्व मृगेक्षणे ॥ ४७ ॥ ततः सा चिंतयामास पराशरवचस्तदा ॥ एवमुक्ता तु सा तेन दत्ताऽऽत्मानं नरेश्वर ॥४८॥ उवाच साधु मे ब्रह्मन्मत्स्यगंधोऽनु वर्त्तते ॥

[1] प्रधानस्य—कैवर्तमुख्यस्य—इत्यर्थः ।

ततस्तेन तु सा बाला दिव्यगंधाधिवासिता ॥ ४९ ॥ कृता योगबलेनैव ज्वालयित्वा विभावसुम् ॥ कृत्वा प्रदक्षिणं वह्निमूढा तेन रसात्तदा ॥५०॥
जलयानस्य मध्ये तु कामस्थानान्यसंस्पृशत् ॥ ज्ञात्वा कामोत्सुकं विप्रं भीता सा धर्मनंदन ॥ ५१ ॥ हसंती तमुवाचाऽथ देव त्वं लोक
सन्निधौ ॥ न लज्जसे कथं धीमन्कुर्वाणः पामरोचितम् ॥५२॥ ततस्तेन क्षणं ध्यात्वा संस्मृता हृदि तामसी ॥ आगता तामसी माया यया व्याप्तं
चराचरम् ॥ ५३ ॥ ततः सा विस्मिता तेन कर्मणैव तु रंजिता ॥ ब्रह्मचर्याभितप्तेन स्त्रीसौख्यं क्रीडितं तदा ॥ ५४ ॥ ततः सा तत्क्षणादेव
गर्भभारेण पीडिता ॥ प्रसूता बालकं तत्र जटिलं दंडधारिणम् ॥ ५५ ॥ कमंडलुधरं शांतं मेखलाकटिभूषितम् ॥ उत्तरीयकृतस्कंधं त्रिष्णु
मायाविवर्जितम् ॥ ५६ ॥ ततोऽपि शंकिता पार्थ दृष्ट्वा तं कलबालकम् ॥ वेपमाना ततो बाला जगाम शरणं मुनेः ॥५७॥ रक्षरक्ष मुनिश्रेष्ठ पराशर
महामते॥जातं मेऽत्यद्भुतं पुत्रं कौपीनवरमेखलम् ॥ दंडहस्तं जटायुक्तमुत्तरीयविभूषितम् ॥५८॥ ॥ पराशर उवाच ॥॥ मा भैषीः स्वसुते जाते कुमारी
त्वं भविष्यसि ॥ नाम्ना योजनगंधेति द्वितीयं सत्यवत्यपि ॥५९॥ शंतनुर्नाम राजा यः स ते भर्त्ता भविष्यति ॥ प्रथमा महिषी तस्य सोमवंशविभू
षणा ॥६०॥ गच्छ त्वं स्वाश्रयं शुभ्रे पूर्वरूपेण संस्थिता ॥ मा विषादं कुरुष्वाऽत्र दृष्टं ज्ञानस्य मे बलम् ॥६१॥ इत्युक्त्वा प्रययौ विप्रः सा बाला पुत्रमा
श्रिता ॥ नत्वोचे मातरं भक्त्या साष्टांगं विनयानतः ॥ ६२ ॥ क्षम्यतां मातरुक्तं मे प्रसादः क्रियतामपि ॥ ईश्वराराधने यत्नं करिष्याम्यहमंबिके
॥६३॥ ततः सा पुत्रवाक्येन विषण्णा वाक्यमब्रवीत् ॥६४॥ ॥ योजनगंधोवाच ॥ ॥ मा त्यक्त्वा गच्छ वत्साद्य मातरं मामनागसम् ॥ त्वद्वियो
गेन मे पुत्र पंचत्वं भाव्यसंशयम् ॥६५॥ नास्ति पुत्रसमः स्नेहो नास्ति भ्रातृसमं कुलम् ॥ नाऽस्ति सत्यपरो धर्मो नानृतात्पातकं परम् ॥६६॥
बालभावे मया जात आधारः किल जायसे ॥ न मे भर्त्ता न मे पुत्रः पश्य कर्मविडंबनम्॥६७॥ ॥ व्यास उवाच ॥॥ मा विषादं कुरुष्वांतः सत्यमेत
न्मयेरितम् ॥ आपत्कालेऽस्मि ते देवि स्मर्त्तव्यः कार्यसिद्धये ॥ ६८ ॥ आपदस्तारयिष्यामि क्षम्यतां मे दुरुत्तरम् ॥ इत्युक्त्वा प्रययौ व्यासः कन्या
साऽपि गता गृहम् ॥ ६९ ॥ पराशरसुतस्तत्र विषण्णो वनमध्यतः ॥ त्रेतायुगावसाने तु द्वापरादौ नरेश्वर ॥ ७० ॥ व्यासार्थं चिंतयामासुर्देवाः
शक्रपुरोगमाः ॥ आख्यातो नारदेनैव पुत्रः पराशरस्य सः ॥ ७१ ॥ कैवर्त्तपुत्रिकाजातो ज्ञानी जह्नुसुतातटे ॥ ततो नारदवाक्येन आगताः सुरस
त्तमाः ॥ ७२ ॥ रामः पितामहः शक्रो मुनिसंघैः समावृताः ॥ आस्यादिकं पृथग्दत्त्वा साधुसाध्वित्युदीरयन् ॥ ७३ ॥ पितामहेन वै बालो गर्भा

१ रसात्–प्रेमतः–इत्यर्थः ।२ आस्यादिकम्–आसनादिकम्–इत्यर्थः ।

धानादिसंस्कृतः ॥ द्वीपायनो द्वीपजन्मा पाराशर्यः पराशरात् ॥ ७४ ॥ कृष्णांशात्कृष्णनामायं व्यासो वेदान्व्यसिष्यति ॥ विरंचिनाऽभिषिक्तो ऽसौ मुनिसंघैः पुनःपुनः ॥ ७५ ॥ व्यासस्त्वं सर्वलोकेषु इत्युक्त्वा प्रययुः सुराः ॥ तीर्थयात्रा समारब्धा कृष्णद्वैपायनेन तु ॥ ७६ ॥ गंगावगाहिता तेन केदारश्च सपुष्करः ॥ गया च नैमिषं तीर्थं कुरुक्षेत्रं सरस्वती ॥ ७७ ॥ उज्जयिन्यां महाकालं सोमनाथं प्रभासके ॥ पृथिव्यां सागरांतायां स्नात्वा यातो महामुनिः ॥ ७८ ॥ अमृतां नर्मदां प्राप्तो रुद्रदेहोद्भवां शुभाम् ॥ साह्लादो नर्मदां दृष्ट्वा चित्तविश्रांतिमाप च ॥ ७९ ॥ तपश्चचार विपुलं नर्मदातटमाश्रितः ॥ ग्रीष्मे पंचाग्निमध्यस्थो वर्षासु स्थंडिलेशयः ॥ ८० ॥ सार्द्रवासाश्च हेमंते तिष्ठन्दध्यौ महेश्वरम् ॥ स्वांतर्हृत्कमले स्थाप्य ध्यायते परमेश्वरम् ॥ ८१ ॥ सृष्टिसंहारकर्त्तारमच्छेद्यं वरदं शुभम् ॥ नित्यं सिद्धेश्वरं लिंगं पूजयेद्ध्यानतत्परः ॥ ८२ ॥ अर्चनात्सिद्धलिंगस्य ध्यानयोगप्रभावतः ॥ प्रत्यक्षः शंकरो जातः कृष्णद्वैपायनस्य सः ॥ ८३ ॥ ॥ ईश्वर उवाच ॥ ॥ तोषितोऽहं त्वया वत्स वरं वरय शोभनम् ॥ ८४ ॥ ॥ व्यास उवाच ॥ ॥ यदि तुष्टोऽसि मे देव यदि देयो वरो मम ॥ प्रत्यक्षो नर्म्मदातीरे स्वयमेव भविष्यसि ॥ अतीतानागतज्ञोऽहं त्वत्प्रसादादुमापते ॥ ८५ ॥ ॥ ईश्वर उवाच ॥ ॥ एवं भवतु ते पुत्र मत्प्रसादादसंशयम् ॥ त्वयि भक्तिगृहीतोऽहं प्रत्यक्षो नर्मदातटे ॥ ॥ ८६ ॥ सहस्रांशार्द्धभावेन प्रत्यक्षोऽहं त्वदाश्रमे ॥ इत्युक्त्वा प्रययौ देवः कैलासं नगमुत्तमम् ॥ ८७ ॥ पत्नीसंग्रहणं जातं कृष्णद्वैपायनस्य तु ॥ शास्त्रोक्तेन विधानेन पत्नी पालयतस्तथा ॥ ८८ ॥ पुत्रो जातो ह्यपुत्रस्य पराशरसुतस्य च ॥ देवैर्वर्द्धापितः सर्वैरिंद्रपुरोगमैः ॥ ८९ ॥ पुत्रजन्मन्यथाजग्मुर्वशिष्ठाद्या मुनीश्वराः ॥ तीर्थयात्राप्रसंगेन पराशरपुरोगमाः ॥ ९० ॥ मन्वत्रिविष्णुहारीतयाज्ञवल्क्योशनोंगिराः ॥ यमापस्तंबसंवर्त्ताः कात्यायनबृहस्पती ॥ ९१ ॥ एवमादिसहस्राणि लक्षकोटिशतानि च ॥ सशिष्याश्च महाभागा नर्मदातटमाश्रिताः ॥ ९२ ॥ व्यासाश्रमे शुभे रम्ये संतुष्टा आययुर्नृप ॥ दृष्ट्वा तान्सोऽपि विप्रेंद्रानभ्युत्थानकृतोद्यमः ॥ ९३ ॥ पितुः पूर्वं प्रणम्याऽदौ सर्वेषां च यथाविधि ॥ आसनानि ददौ भक्त्या पाद्यमर्घं न्यवेदयत् ॥ ९४ ॥ कृतांजलिपुटो भूत्वा वाक्यमेतदुवाच ह ॥ उद्धृतोऽहं न संदेहो युष्मत्संभाषणार्चनात् ॥ ९५ ॥ आरण्यानि च शाकानि फलान्यारण्यजानि च ॥ तानि दास्यामि युष्माकं सर्वेषां प्रीतिपूर्वकम् ॥ ९६ ॥ न्यमंत्रयत तान्सर्वान्प्रत्येकं प्रणिपत्य च ॥ ततस्ते प्रणतं दृष्ट्वा कृष्णद्वैपायनं मुनिम् ॥ ९७ ॥ वर्द्धयित्वा जयाशीर्भिरवलोक्य परस्परम् ॥ पराशरः समस्तैश्च वीक्षि

१ जन्म शब्दोऽकारान्तोऽपि कोशे दृश्यते । २ पितृपूर्वकम्--इ० पा० ।

तो मुनिपुंगवैः ॥ ९८ ॥ उत्तरं दीयतां तात कृष्णद्वैपायनस्य च ॥ एवमुक्तस्तु तैः सर्वैर्भगवान्स पराशरः ॥ प्रोवाच स्वात्मजं
व्यासमृषीणां यच्चिकीर्षितम् ॥ ॥ ९९ ॥ श्रीपराशर उवाच ॥ ॥ नेच्छंति दक्षिणे कूले व्रतभंगभयादथ ॥ भोजनं
भोक्तुकामास्ते श्राद्धे चैव विशेषतः ॥ १०० ॥ ॥ व्यास उवाच ॥ ॥ करोमि भवतामुक्तमत्रैव स्थीयतां क्षणम् ॥ यावत्प्रसाद्य
सरितं करोमि विधिमुत्तमम् ॥ १ ॥ एवमुक्त्वा शुचिर्भूत्वा नर्मदातटमास्थितः ॥ स्तोत्रं जगाद सहसा तन्निबोध नरेश्वर ॥ २ ॥
जय भगवति देवि नमो वरदे जय पापविनाशिनि बहुफलदे ॥ जय शुंभनिशुंभकपालधरे प्रणमामि तु देवनरार्त्तिहरे ॥ ३ ॥ जय चन्द्र
दिवाकरनेत्रधरे जय पावकभूषितवक्त्रवरे ॥ जय भैरवदेहनिलीनपरे जय अंधकरक्तविशोषकरे ॥ ४ ॥ जय महिषविमर्द्दिनि शूलकरे जय
लोकसमस्तकपापहरे ॥ जय देवि पितामहरामनते जय भास्करशक्रशिरोऽवनते ॥ ५ ॥ जय षण्मुखसायुधईशनुते जय सागरगामिनि
शंभुनुते ॥ जय दुःखदारिद्रविनाशकरे जय पुत्रकलत्रविवृद्धिकरे ॥ ६ ॥ जय देवि समस्तशरीरधरे जय नाकविदर्शिनि दुःखहरे ॥ जय व्याधि
विनाशिनि मोक्षकरे जय वांछितदायिनि सिद्धवरे ॥ ७ ॥ एतद्व्यासकृतं स्तोत्रं यः पठेच्छिवसन्निधौ ॥ गृहे वा शुद्धभावेन कामक्रोधवि
वर्जितः ॥ ८ ॥ तस्य व्यासो भवेत्प्रीतः प्रीतश्च वृषवाहनः ॥ प्रीता स्यान्नर्मदा देवी सर्वपापक्षयंकरी ॥ ९ ॥ न ते यांति यमालोकं यैः स्तुता
भुवि नर्मदा ॥ पितामहोऽपि मुह्येत देवि त्वद्गुणकीर्त्तनात् ॥ १० ॥ वाक्पतिर्नैव ते वक्तुं स्वरूपं वेद नर्मदे ॥ कथं गुणानहं देवि त्वदीयाञ्ज्ञातु
मुत्सहे ॥ ११ ॥ इति ज्ञात्वा शुचिं भावं वाङ्मनःकायकर्मभिः ॥ प्रसन्ना नर्मदा देवी ततो वचनमब्रवीत् ॥ १२ ॥ सत्यवादेन तुष्टाऽहं भोभो
व्यास महामुने ॥ यदीच्छसि वरं किंचित्तं ते सर्वं ददाम्यहम् ॥ १३ ॥ ॥ व्यास उवाच ॥ ॥ यदि तुष्टासि मे देवि यदि देयो वरो मम ॥
आतिथ्यमुत्तरे कूले ऋषीणां दातुमर्हसि ॥ १४ ॥ ॥ नर्मदोवाच ॥ ॥ अयुक्तं याचितं व्यास विमार्गे यत्प्रवर्तनम् ॥ इंद्रचन्द्रयमैः शक्या
मुन्मार्गे न प्रवर्त्तितुम् ॥ १५ ॥ याचस्वान्यं वरं पुत्र यत्किंचिद्भुवि दुर्लभम् ॥ ॥ एतच्छ्रुत्वा वचो देव्या व्यासो मूर्च्छां गतस्तदा ॥ १६ ॥
वृथा क्लेशोऽद्य मे जात इति मत्वा पपात ह ॥ धरणी चलिता सर्वा सशैलवनकानना ॥ १७ ॥ मूर्च्छापन्नं ततो व्यासं दृष्ट्वा देवाः सवा
सवाः ॥ हाहाकारमुखाः सर्वे तत्राऽऽजग्मुः सहस्रशः ॥ १८ ॥ व्यासमुत्थापयामासुर्वेदव्यसनतत्परम् ॥ ब्राह्मणार्थे च संक्लिष्टो नात्महेतोः

सरिद्वरे ॥ १९ ॥ गवार्थे ब्राह्मणार्थे च सद्यः प्राणान्परित्यजेत् ॥ एवं सा नर्मदा प्रोक्ता ब्रह्माद्यैः सुरसत्तमैः ॥ १२० ॥ सुशीतलैस्तं बहुभिश्च वातै रेवाभ्यर्षिंचत्स्वजलेन भीता ॥ सचेतनः सत्यवतीसुतोऽपि प्रणम्य देवान्सरितं जगाद ॥ २१ ॥ ॥ व्यास उवाच ॥ ॥ तीर्थैः समस्तैः किल सेवनाय फलं प्रदिष्टं मम मंदभाग्यात् ॥ यद्देवि पुण्या विफला ममाशा आरण्यपुष्पाणि यथा जनानाम् ॥ २२ ॥ ॥ नर्मदोवाच ॥ ॥ यतोयतो मां हि महानुभाव निनीषते चित्तमिलातलेऽत्र ॥ विंध्येन सार्द्धं तव मार्गमद्य यास्याम्यहं दंडधरस्य पृष्ठे ॥ २३ ॥ एवमुक्तो महातेजा व्यासः सत्यवतीसुतः ॥ दक्षिणे चालयामास स्वाश्रमस्य सरिद्वराम् ॥ २४ ॥ दंडहस्तो महातेजा हुंकारमकरोन्मुनिः ॥ व्यासहुंकारभीता सा चलिता रुद्रनंदिनी ॥ २५ ॥ दंडेन दर्शयन्मार्गं देवी तत्र प्रवर्त्तिता ॥ व्यासमार्गं गता देवी दृष्टा शक्रपुरोगमैः ॥ २६ ॥ पुष्पवृष्टिं ततो देवा व्यमुंचन्त्सह किंकरैः ॥ प्रोत्फुल्लनयना जाताः पराशरमुखा द्विजाः ॥ किं कुर्मो ब्रूहि मे पुत्र कर्मणा ते स्म रंजिताः ॥ २७ ॥ ॥ व्यास उवाच ॥ ॥ तपश्च विपुलं कृत्वा दानं दत्त्वा महाफलम् ॥ एतदेव नरैः कार्यं साधूनां यत्सुखावहम् ॥ २८ ॥ यदि तुष्टा महाभागा अनुग्राह्यो ह्यहं यदि ॥ तस्मान्ममाश्रमे सर्वैः स्थीयतां नाऽत्र संशयः ॥ २९ ॥ आतिथ्यं शाकपर्णेन रेवामृतविमिश्रितम् ॥ प्रतिपन्नं समस्तैर्वः पराशरमुखैर्मम ॥ स्थातव्यं स्वाश्रमे सर्वै रेवाया उत्तरे तटे ॥ १३० ॥ ॥ मार्कंडेय उवाच ॥ ॥ स्नानतर्पणनित्यानि[1] कृतानि द्विजसत्तमैः ॥ व्यासकुंडे ततो गत्वा होमः सर्वैः प्रकल्पितः ॥ १३१ ॥ श्रीफलैर्बिल्वपत्रैश्च जुहुवुर्जातवेदसम् ॥ गौतमो भृगुर्मांडव्यो नारदो लोमशस्तथा ॥ ॥ ३२ ॥ पराशरस्तथा शंखः कौशिकश्च्यवनो मुनिः ॥ पिप्पलादो वसिष्ठश्च नाचिकेतो महातपाः ॥ ३३ ॥ विश्वामित्रोऽप्यगस्त्यश्च उद्दालकयमौ तथा ॥ शांडिल्यो जैमिनिः कण्वो याज्ञवल्क्योशनोंगिराः ॥ ३४ ॥ शातातपो दधीचिश्च कपिलो गालवस्तथा ॥ जैगीषव्यस्तथा दक्षो भरतो मुद्गलस्तथा ॥ ३५ ॥ वात्स्यायनो महातेजाः संवर्त्तः शक्तिरेव च ॥ जातूकर्ण्यो भरद्वाजो वालखिल्यारुणिस्तथा ॥ ॥ ३६ ॥ एवमादिसहस्राणि जुह्वते जातवेदसम् ॥ अक्षमालाकरोत्कीर्णा ध्यानयोगपरायणाः ॥ ३७ ॥ एकचित्ता द्विजाः सर्वे चक्रुर्होमक्रियां तदा ॥ ततः समुत्थितं लिंगं मोक्षदं व्याधिनाशनम् ॥ ३८ ॥ अच्छेद्यं परमं देवं दृष्ट्वा व्यासस्तुतोष च ॥ पुष्पवृष्टिं ददुर्देवा आशीर्वादान्द्विजोत्तमाः ॥ ३९ ॥ साष्टांगं प्रणतो व्यासो देवं दृष्ट्वा त्रिलोचनम् ॥ ब्राह्मणान्पूजयामास शाकमूलफलेन च ॥ १४० ॥

१ नित्यानि—अकरणे प्रत्यवायकराणि—सन्ध्यावन्दनादीनि कर्माणि इत्यर्थः ।

पितृपूर्वं द्विजाः सर्वे भोजिताः पांडुनन्दन ॥ आशीर्वादांस्ततः पुण्यान्दत्त्वा विप्रा ययुः पुनः ॥ ४१ ॥ तदा प्रभृति तत्तीर्थं व्यासाख्यं प्रोच्यते बुधैः ॥ ४२ ॥ ॥ युधिष्ठिर उवाच ॥ ॥ व्यासतीर्थस्य यत्पुण्यं तत्सर्वं कथयस्व मे ॥ स्नानदानविधानं च यस्मिन्काले महाफलम् ॥ ४३ ॥ ॥ श्रीमार्कंडेय उवाच ॥ ॥ कथयामि समस्तं ते भ्रातृभिः सह पांडव ॥ कार्त्तिकस्य सिते पक्षे चतुर्दश्यां जितेन्द्रियः ॥ ४४ ॥ उपोष्य यो नरो भक्त्या रात्रौ कुर्वीत जागरम् ॥ स्नापयेदीश्वरं भक्त्या क्षौद्रक्षीरेण सर्प्पिषा ॥ ४५ ॥ दध्ना च खण्डयुक्तेन कुशतोयेन वै पुनः ॥ श्रीखंडेन सुगन्धेन गुंठयेत्परमेश्वरम् ॥ ४६ ॥ ततः सुगन्धकुसुमैर्बिल्वपत्रैश्च पूजयेत् ॥ मुचुकुन्देन कुन्देन कुशजातीप्रसूनकैः ॥ ४७ ॥ उन्मत्तमुनिपुष्पैश्च तथान्यैः कालसंभवैः ॥ अर्चयेत्परया भक्त्या द्वीपेश्वरमनुत्तमम् ॥ ४८ ॥ इक्षुगडुकदानेन तुष्यते परमेश्वरः ॥ गडुकाष्टकदानेन पातकं यात्यहोर्जितम् ॥ ४९ ॥ मासार्जितं च नश्येत गडुकाष्टशतेन च ॥ षाण्मासिकं सहस्रेण द्विगुणैरब्दिकं तथा ॥ ॥ ५० ॥ आजन्मजनितं पापमयुतेन प्रणश्यति ॥ द्विगुणैर्नश्यते व्याधिस्त्रिगुणैः स्याद्धनागमः ॥ ५१ ॥ षड्गुणैर्जायते वाग्मी सिद्धस्तद्द्विगुणैस्तथा ॥ रुद्रत्वं दशलक्षैश्च जायते नाऽत्र संशयः ॥ ५२ ॥ पौर्णमास्यां नृपश्रेष्ठ स्नानं कुर्वीत भक्तितः ॥ मन्त्रोक्तेन विधानेन सर्वपापक्षयंकरम् ॥ ५३ ॥ वारुणं च तथाग्नेयं ब्राह्मयं चैवाक्षयंकरम् ॥ देवान्पितॄन्मनुष्यांश्च विधिवत्तर्पयेद्बुधः ॥ ५४ ॥ ऋचा ऋग्वेदजं पुण्यं साम्ना सामफलं लभेत् ॥ यजुर्वेदस्य यजुषा गायत्र्या सर्वमाप्नुयात् ॥ ५५ ॥ अक्षरं च जपेन्मन्त्रं सौरं वा शिवदैवतम् ॥ अथवा वैष्णवं मन्त्रं द्वादशाक्षरसंज्ञितम् ॥ ५६ ॥ पूजयेद्ब्राह्मणान्भक्त्या सर्वलक्षणलक्षितान् ॥ स्वदारनिरतान्विप्रान्दंभलोभविवर्जितान् ॥ ५७ ॥ भिन्नवृत्तिकरान्पापान्पतिताञ्च्छूद्रसेवनान् ॥ शूद्रीग्रहणसंयुक्तान्वृषली यस्य मंदिरे ॥ ५८ ॥ परोक्षवादिनो दुष्टान्गुरुनिंदापरायणान् ॥ वेदद्वेषणशीलांश्च हैतुकान्बकवृत्तिकान् ॥ ५९ ॥ ईदृशान्वर्जयेच्छ्राद्धे दाने सर्वव्रतेषु च ॥ गायत्रीसारमात्रोऽपि वरं विप्रः सुयंत्रितः ॥ ६० ॥ नायंत्रितश्चतुर्वेदी सर्वाशी सर्वविक्रयी ॥ ईदृशान्पूजयेद्विप्राननन्नदानहिरण्यतः ॥ ६१ ॥ उपानहौ च वस्त्राणि शय्यां छत्रमथासनम् ॥ यो दद्याद्ब्राह्मणे भक्त्या सोऽपि स्वर्गे महीयते ॥ ६२ ॥ प्रत्यक्षा सुरभी तत्र जलधेनुस्तथाघृता ॥ तिलधेनुः प्रदातव्या महिष्यश्च तथैव च ॥ ६३ ॥ कृष्णाजिनप्रदाता यो दाता यस्तिलसर्पिषोः ॥ कन्यापुस्तकयोर्दाता सोऽक्षयं लोकमाप्नुयात् ॥ ६४ ॥ धूर्वाहौ सुरसंयुक्तौ धान्योपस्करसंयुतौ ॥ दापयेत्स्वर्गकामस्तु इति मे सत्यभाषितम् ॥ ६५ ॥ सूतेन [illegible] जगती [illegible] ॥ संहितं

परया भत्या परमेशमथापि वा ॥ ६६ ॥ प्रदक्षिणां विधानेन यः करोत्यत्र मानवः ॥ जम्बूप्लाक्षाह्वयौ द्वीपौ शाल्मलिश्चाऽपरो नृप ॥
॥ ६७ ॥ कुशः क्रौंचस्तथा काशः पुष्करश्चैव सप्तमः ॥ सप्तसागरपर्यंता देष्टिता तेन भारत ॥ ६८ ॥ द्वीपेश्वरे महाराज वृषोत्सर्गं च कारयेत् ॥
वृषेणाऽरुणवर्णेन माहेशं लोकमाप्नुयात् ॥ ६९ ॥ यस्तु वै पांडुरो वक्त्रे ललाटे पादयोस्तथा ॥ लांगूले यस्तु वै शुभ्रः स वै नाकस्य दर्शकः ॥
॥ ७० ॥ नीलोऽयमीदृशः प्रोक्तो यस्तु द्वीपेश्वरे त्यजेत् ॥ स समा रोमसंख्याता नाके वसति भारत ॥ ७१ ॥ सौरं च शांकरं लोकं वैरंचं
वैष्णवं क्रमात् ॥ भुनक्ति स्वेच्छया राजन्व्यासतीर्थप्रभावतः ॥ ७२ ॥ सपत्नीकं ततो विप्रं पूजयेत्तत्र भक्तितः ॥ सितरक्तानि वस्त्राणि यो
दद्यादग्रजन्मने ॥ ७३ ॥ कृत्वा प्रदक्षिणं युग्मं प्रीयतां मे जगद्गुरुः ॥ नाऽस्ति विप्रसमो बन्धुरिह लोके परत्र च ॥ ७४ ॥ यमलोके महाघोरे
पतंतं योऽभिरक्षति ॥ इतिहासपुराणज्ञं विष्णुभक्तं जितेंद्रियम् ॥ ७५ ॥ पूजयेत्परया भक्त्या सामगं वा विशेषतः ॥ द्वीपेश्वरं च ये भक्त्या संस्म
रंति गृहे स्थिताः ॥ ७६ ॥ न तेषां जायते शोको न हानिर्न च दुष्कृतम् ॥ प्रथमं पूजयेत्तत्र लिंगं सिद्धेश्वरं ततः ॥ ७७ ॥ यत्र सिद्धो महाभागा
व्यासः सत्यवतीसुतः ॥ अस्यैव पूजनात्सिद्धो धारासर्पो[1] महामतिः ॥७८॥ तत्र तीर्थे तु यो राजन्प्राणत्यागं करोति च ॥ सूर्यलोकमसौ भित्त्वा
प्रयाति शिवसन्निधौ ॥ ७९ ॥ समाः सहस्राणि च सप्त वै जले दशैकमग्नौ पतने च षोडश ॥ महाहवे षष्टिरशीति[2] गोग्रहे ह्यनाशके भारत
चाक्षया गतिः ॥ ८० ॥ पिता पितामहश्चैव तथैव प्रपितामहः ॥ वायुभूतं निरीक्षंते ह्यागच्छंतं स्वगोत्रजम् ॥ ८१ ॥ अस्मद्गोत्रेऽस्ति कः पुत्रो
यो नो दद्यात्तिलोदकम् ॥ कार्त्तिक्यां च विशेषेण वैशाख्यां वा तथैव च ॥ ८२ ॥ स्वर्गतिं च प्रयास्यामस्तत्र तीर्थोपसेवनात् ॥ एतत्ते कथितं
सर्वं द्वीपेश्वरमनुत्तमम् ॥ ८३ ॥ यः पठेत्परया भक्त्या शृणुयात्तद्गतो नृप ॥ सोऽपि पापविनिर्मुक्तो मोदते शिममंदिरे ॥ ८४ ॥ ऊषरं सर्व
तीर्थानां निर्मितं मुनिपुंगवैः ॥ कामप्रदं नृपश्रेष्ठ व्यासतीर्थं न संशयः ॥ ८५ ॥ इति श्रीस्कांदे महापुराण एकाशीतिसाहस्र्यां संहितायां
पञ्चम आवन्त्यखण्डे रेवाखण्डे व्यासतीर्थमाहात्म्यवर्णनंनाम सप्तनवतितमोऽध्यायः ॥ ९७ ॥ ॥ छ ॥ ॥ श्रीमार्कंडेय उवाच ॥ ॥ ततो
गच्छेत्तु राजेंद्र प्रभासेश्वरमुत्तमम् ॥ विख्यातं त्रिषु लोकेषु स्वर्गसोपानमुत्तमम् ॥ १ ॥ ॥ युधिष्ठिर उवाच ॥ ॥ प्रभासं तात मे ब्रूहि कथं
जातं महाफलम् ॥ स्वर्गसोपानदं दृश्यं संक्षेपात्वक्तुमर्हसि ॥ २ ॥ ॥ श्रीमार्कंडेय उवाच ॥ ॥ दुर्भगा रविपत्नी च प्रभानामेति विश्रुता ॥

१ धारासर्पः—इ० पा० । २ इत्यशीति—विभक्तिलोप आर्षः ।

तया चाऽऽराधितः शंभुरुग्रेण तपसा पुरा ॥ ३ ॥ वायुभक्षा स्थिता वर्षं वर्षं ध्यानपरायणा ॥ ततस्तुष्टो महादेवः प्रभायाः पांडुनन्दन ॥ ४ ॥
॥ ॥ ईश्वर उवाच ॥ ॥ कस्मात्संक्लिश्यसे बाले कथ्यतां यद्विवक्षितम् ॥ अहं हि भास्करोऽप्येको नानात्वं नैव विद्यते ॥ ५ ॥ ॥ प्रभोवाच ॥ ॥
नान्यो देवः स्त्रियः शंभो विना भर्त्रा क्वचित्प्रभो ॥ सगुणो निर्गुणो वाऽपि धनाढ्योवाप्यकिंचनः ॥ ६ ॥ प्रियो वा यदि वा द्वेष्यः स्त्रीणां भर्त्तैव
दैवतम् ॥ दुर्भगत्वेन दग्धाहं सखीमध्ये सुरेश्वर ॥ भर्त्तर्यलब्धसौख्यास्मि तेन क्लिश्याम्यहं भृशम् ॥ ७ ॥ ॥ ईश्वर उवाच ॥ ॥ वल्लभा
भास्करस्यैव मत्प्रसादाद्भविष्यसि ॥ ८ ॥ ॥ पार्वत्युवाच ॥ ॥ अप्रमाणं भवद्वाक्यं भास्करोऽपि करिष्यति ॥ वृथा क्लेशो भवेदस्याः प्रभायाः
परमेश्वर ॥९॥ उमावाक्यान्महेशान ध्यातस्तिमिरनाशनः ॥ आगतो गगनाद्भानुर्नर्मदोत्तररोधसि ॥ १० ॥ ॥ भानुरुवाच ॥ ॥ आहूतोऽस्मि
कथं देव ह्यन्धासुरनिषूदन ॥ ११ ॥ ॥ ईश्वर उवाच ॥ ॥ प्रभां पालय भो भानो संतोषेण परेण हि ॥ १२ ॥ ॥ उमोवाच ॥ ॥ प्रभाया
मंदिरे नित्यं स्थीयतां हिमनाशन ॥ अग्रपत्नी समस्तानां भार्याणां क्रियतां रवे ॥ १३ ॥ ॥ भानुरुवाच ॥ ॥ एवं देवि करिष्यामि तव
वाक्यं वरानने ॥ एतच्छ्रुत्वा प्रभाऽऽहूता प्रत्युवाच महेश्वरम् ॥ १४ ॥ ॥ प्रभोवाच ॥ ॥ स्वांशेन स्थीयतां देव मन्मथारे उमापते ॥
एकांशः स्थाप्यतामत्र तीर्थस्योन्मीलनाय च ॥ १५ ॥ ॥ श्रीमार्कंडेय उवाच ॥ ॥ सर्वदेवमयं लिंगं स्थापितं तत्र पांडव ॥ प्रभासेश इति
ख्यातं सर्वलोकेषु दुर्ल्लभम् ॥ १६ ॥ अन्यानि यानि तीर्थानि काले तानि फलंति वै ॥ प्रभासेशस्तु राजेंद्र सद्यः कामफलप्रदः ॥ १७ ॥ माघ
मासे सिते पक्षे सप्तम्यां च विशेषतः ॥ अश्वं यः स्पर्शयेत्तत्र यथोक्तब्राह्मणे नृप ॥ १८ ॥ इन्द्रत्वं प्राप्यते तेन भास्करस्याऽथवा पदम् ॥ स्नात्वा
परमया भक्त्या दानं दद्याद्द्विजातये ॥ १९ ॥ गोप्रदाता लभेत्स्वर्गं सत्यलोकं वरेश्वर ॥ सर्वांगसुन्दरीं शुभ्रां क्षीरिणीं तरुणीं शुभाम् ॥ २० ॥
सवत्सां घण्टासंयुक्तां कांस्यपात्रावदोहिनीम् ॥ ददते ये नृपश्रेष्ठ न ते यांति यमालयम् ॥ २१ ॥ अथ यः परया भक्त्या स्नानं देवस्य कारयेत् ॥
स प्राप्नोति परं लोकं यावदाभूतसंप्लवम् ॥ २२ ॥ दौर्भाग्यं नाशमायाति स्नानमात्रेण पांडव ॥ तत्र तीर्थे तु यो भक्त्या कन्यादानं प्रयच्छति ॥
॥ २३ ॥ ब्राह्मणाय विवाहेन दापयेत्पांडुनंदन ॥ समानवयसे देया कुलशीलधनैस्तथा ॥ २४ ॥ ये ददन्ते महाराज ह्यपि पातकसंयुताः ॥
तेषां पापानि लीयन्ते ह्युदके लवणं यथा ॥ २५ ॥ स्वामिद्रोहकृतं पापं निक्षेपस्याऽपहारिणि ॥ मित्रघ्ने च कृतघ्नेच कूटसाक्ष्यसमुद्भवम् ॥ २६ ॥

१ स्पर्शयेत्—दद्यात्—इत्यर्थः ।

तद्ग्रामोद्यानभेदोत्थं परदारनिषेवणम् ॥ वार्द्धुषिकस्य यत्पापं यत्पापं स्तेयसंभवम् ॥ २७ ॥ कूपभेदोद्भवं यच्च वैडालव्रतधारिणः ॥ दाम्भिकं वृक्षच्छेदोत्थं विवाहस्य निषेधजम् ॥ २८ ॥ आरामस्थतरुच्छेदमगम्यागमनोद्भवम् ॥ स्वभार्यात्यजने यच्च परभार्यासमीहनात् ॥ २९ ॥ ब्रह्मस्वहरणे यच्च गरदे गोविघातिनि ॥ विद्याविक्रयणोत्थं च संसर्गाद्यच्च पातकम् ॥ ३० ॥ श्वबिडालवधाद्घोरं सर्पशूद्रोद्भवं तथा ॥ भूमिहर्त्तुश्च यत्पापं भूमिहारिणि चैव हि ॥ ३१ ॥ मा ददस्वेति यत्पापं गोवह्निब्राह्मणेषु च ॥ तत्पापं याति विलयं कन्यादानेन पांडव ॥ ३२ ॥ स गत्वा भास्करं लोकं रुद्रलोके शुभे व्रजेत ॥ क्रीडते रुद्रलोकस्थो यावदिंद्राश्चतुर्दश ॥ ३३ ॥ सर्वपापक्षये जाते शिवे भवति भावना ॥ एतद्व्रजति यस्तीर्थं प्रभासं पांडुनंदन ॥ ३४ ॥ सर्वतीर्थफलं प्राप्य सोऽश्वमेधफलं लभेत् ॥ गोप्रदानं महापुण्यं सर्वपापक्षयं परम् ॥ प्रशस्तं सर्वकालं हि चतुर्दश्यां विशेषतः ॥ ३५ ॥ इति श्रीस्कान्दे महापुराण एकाशीतिसाहस्र्यां संहितायां पञ्चम आवन्त्यखण्डे रेवाखण्डे प्रभासतीर्थमाहात्म्यवर्णनं नामाष्टनवतितमोऽध्यायः ॥ ९८ ॥ ॥ छ ॥

॥ ॥ श्रीमार्कंडेय उवाच ॥ ॥ ततो गच्छेन्महीपाल नर्मदादक्षिणे तटे ॥ स्थापितं वासुकीशं तु समस्ताघौघनाशनम् ॥१॥ ॥ युधिष्ठिर उवाच ॥ कस्माच्च कारणात्तात रेवाया दक्षिणे तटे ॥ वासुकीशस्थापितो वै विस्तराद्वद मे गुरो ॥२॥ ॥ श्रीमार्कंडेय उवाच ॥ ॥ एतत्सर्वं समास्थाय नृत्यं शंभुश्चकार वै ॥३॥ श्रमादजायत स्वेदो गंगातोयविमिश्रितम् ॥ पतंतमुरगोऽश्नाति हरमौलिविनिर्गतम् ॥४॥ मंदाकिनी ततः क्रुद्धा व्यालस्योपरि भारत ॥ प्रामुह्यजगरत्त्वं हि भुजंग क्षुद्रजंतुक ॥ ५ ॥ ॥ वासुकिरुवाच ॥ ॥ अनुग्राह्योऽस्मि ते पापो दुर्नयोऽहं हराहृते ॥ त्रैलोक्यपावनी पुण्या सरित्त्वं शुभलक्षणा ॥ ६ ॥ संसारच्छेदनकरी ह्यार्त्तानामार्त्तिनाशनी ॥ स्वर्गद्वारे स्थिता त्वं हि दयां कुरु मयीश्वरि ॥ ७ ॥ ॥ गंगोवाच ॥ कुरुष्व विपुलं विंध्यं तपस्त्वं शंकरं प्रति ॥ ततः प्राप्स्यसि स्वं स्थानं पन्नगत्वं ममाज्ञया ॥ ८ ॥ ॥ श्रीमार्कंडेय उवाच ॥ ॥ ततोसौ त्वरितो विंध्यं नागो गत्वा नगं शुभम् ॥ तपस्तप्तुं समारेभे शंकराराधनोद्यतः ॥ ९ ॥ नित्यं दध्यौ महादेवं त्र्यक्षं डमरुकोद्यतम् ॥ ततो वर्षशते पूर्ण उपरुद्धो जगद्गुरुः ॥ आगतस्तत्समीपं तु श्लक्ष्णां वाणीमुदाहरत् ॥१०॥ वरं वरय मे वत्स पन्नग त्वं कृतादर ॥ ११ ॥ ॥ वासुकिरुवाच ॥ ॥ यदि

---

१ आरामस्थतरुच्छेदम्—आरामस्थतरुच्छेदजम्—इत्यर्थः । २ सर्पशूद्रोद्भवम्—सर्पशूद्रवधोद्भवम्—इत्यर्थः । ३ अयं वासुकीश्वर एव नागेश्वरः प्रसिद्धः अग्रेतन ग्रंथावलोकनात् । ४ एतत्सर्वं समास्थाय—एतत्सर्वं जगद्रक्षणेन प्रतिष्ठाप्य—इत्यर्थः । ५ हराहृते—शंकरसत्कृते ।

तुष्टोऽसि मे देव वरं दास्यसि शंकर ॥ प्रसादात्तव देवेश भूयान्निष्पापता मम ॥ तीर्थं किंचित्समाख्याहि सर्वपापप्रणाशनम् ॥१२॥ ॥ ईश्वर उवाच ॥ पन्नग त्वं महाबाहो रेवां गच्छ शुभंकरीम् ॥ याम्ये तस्यास्तटे पुण्ये स्नानं कुरु यथाविधि ॥ १३ ॥ इत्युक्त्वांतर्दधे देवो वासुकिस्त्वरयान्वितः ॥ रूपेणाऽजगरेणेव प्रविष्टो नर्मदाजलम् ॥ १४ ॥ मार्गेण तस्य संजातं जाह्नव्याः स्रोत उत्तमम् ॥ निर्धूतकल्मषः सर्पः संजातो नर्मदाजले ॥ ॥ १५ ॥ स्थापितः शंकरस्तत्र नर्मदायां युधिष्ठिर ॥ ततो नागेश्वरं लिंगं प्रसिद्धं पापनाशनम् ॥ १६ ॥ अष्टम्यां वा चतुर्दश्यां स्नापयेन्मधुना शिवम् ॥ विमुक्तकल्मषः सद्यो जायते नाऽत्र संशयः ॥ १७ ॥ अपुत्रा ये नराः पार्थ स्नानं कुर्वंति संगमे ॥ ते लभंते सुताञ्छ्रेष्ठान्कार्त्तवीर्योपमाञ्छुभान् ॥ १८ ॥ श्राद्धं तत्रैव यः कुर्यादुपवासपरायणः ॥ कुर्वन्प्रमोचयेत्प्रेतान्नरकान्नृपनंदन ॥१९॥ सर्पाणां च भयं वंशे ज्ञातिवर्गे न जायते ॥ निर्दोषं नंदते तस्य कुलं नागप्रसादतः ॥ २० ॥ एतत्ते सर्वमाख्यातं तव स्नेहान्नृपोत्तम ॥ २१ ॥ इति श्रीस्कांदे महापुराण एकाशीतिसाहस्र्यां संहितायां पञ्चम आवन्त्यखण्डे रेवाखण्डे नागेश्वरतीर्थमाहात्म्यवर्णनंनामैकोनशततमोऽध्यायः ॥ ९९ ॥ ॥ छ ॥ ॥ श्रीमार्कंडेय उवाच ॥ ॥ ततो गच्छेन्महीपाल तीर्थं परमरोचनम् ॥ मार्कंडेशमिति ख्यातं नर्मदादक्षिणे तटे ॥ १ ॥ उत्तमं सर्वतीर्थानां गीर्व्वाणैर्वंदितं शिवम् ॥ गुह्याद्गुह्यतरं पुत्र नाख्यातं कस्यचिन्मया ॥ २ ॥ स्थापितं तु मया पूर्वं स्वर्गसोपानसंनिभम् ॥ ज्ञानं तत्रैव मे जातं प्रसादाच्छंकरस्य च ॥३॥ अन्यस्तत्रैव यो गत्वा द्रुपदामंतर्जले जपेत् ॥ स पातकैरशेषैश्च मुच्यते पांडुनंदन ॥ ४ ॥ वाचिकैर्मानसैश्चैव कर्मजैरपि पातकैः ॥ पिंडिकां चाप्यवष्टभ्य याम्यामाशां च संस्थितः ॥ ५ ॥ योजयेच्छूलिनं भक्त्या द्वात्रिंशद्गुरुपिण्डम् ॥ देहपाते शिवं गच्छेदिति मे निश्चयो नृप ॥ ॥ ६ ॥ आज्येन बोधयेद्दीपमष्टम्यां निशि भारत ॥ स्वर्गलोकमवाप्नोति इत्येवं शंकरोऽब्रवीत् ॥ ७ ॥ श्राद्धं तत्रैव यो भक्त्या कुर्व्वीत नृपनंदन ॥ पितरस्तस्य तृप्यंति यावदाभूतसंप्लवम् ॥ ८ ॥ इंगुदैर्बदरैर्बिल्वैरक्षतेन जलेन वा ॥ तर्प्पयेत्तत्र यो वंश्यानाप्नुयाज्जन्मनः फलम् ॥९॥ इति श्रीस्कांदे महापुराण एकाशीतिसाहस्र्यां संहितायां पञ्चम आवंत्यखंडे रेवाखण्डे मार्कंडेश्वरतीर्थमाहात्म्यवर्णनंनाम शततमोऽध्यायः ॥ १०० ॥ ॥ ॥ श्रीमार्कंडेय उवाच ॥ ॥ ततो गच्छेत्तु राजेंद्र तीर्थं परमशोभनम् ॥ उत्तरे नर्मदाकूले यज्ञवाटस्य मध्यतः ॥ १ ॥ संकर्षणमिति ख्यातं पृथिव्यां पापनाशनम् ॥ तपश्चीर्णं पुरा राजन्बलभद्रेण तत्र वै ॥ २ ॥ गीर्वाणा अपि तत्रैव संनिधौ नृपनंदन ॥ उमया सहितः शंभुः स्थितस्तत्रैव केशवः ॥ ३ ॥ बलभद्रेण राजेंद्र प्राणिनामुपकारतः ॥ स्थापितः परया भक्त्या शंकरः पापनाशनः ॥ ४ ॥ यस्तत्र स्नाति वै भक्त्या जित

क्रोधो जितेंद्रियः ॥ एकादश्यां सिते पक्षे मधुना स्नापयेच्छिवम् ॥ ५ ॥ श्राद्धं तत्रैव यो भक्त्या पितॄणामथ दापयेत् ॥ स याति परमं स्थानं बलभद्रवचो यथा ॥ ६ ॥ इति श्रीस्कांदे महापुराण एकाशीतिसाहस्र्यां संहितायां पञ्चम आवन्त्यखण्डे रेवाखण्डे संकर्षणतीर्थमाहात्म्यवर्णनं नामेकाधिकशततमोऽध्यायः ॥ १०१ ॥ ॥ मार्कंडेय उवाच ॥ ॥ मन्मथेशं ततो गच्छेत्सर्वदेवनमस्कृतम् ॥ स्नानमात्रान्नरो राजन्यमलोकं न पश्यति ॥ १ ॥ अनपत्या या च नारी स्नायाद्वै पांडुनंदन ॥ पुत्रं सा लभते पार्थ सत्यसंधं दृढव्रतम् ॥ २ ॥ तत्र स्नात्वा नरो राजञ्छुचिः प्रयतमानसः ॥ उपोष्य रजनीमेकां गोसहस्रफलं लभेत् ॥ ३ ॥ कामिकं तीर्थराजं तु तादृशं न भविष्यति ॥ त्रिरात्रं कुरुते राजन्स गोलक्षफलं लभेत् ॥ ४ ॥ तत्र नृत्यं प्रकर्त्तव्यं तुष्यते परमेश्वरः ॥ गीतवादित्रनिर्घोषै रात्रौ जागरणेन च ॥ ५ ॥ एरंड्यां च महादेवो दृष्टो मे मन्मथेश्वरः ॥ किं समर्थो यमो रुष्टो भद्रो भद्राणि पश्यति ॥६॥ कामेन स्थापितः शंभुरेतस्मात्कामदो नृप ॥ सोपानः स्वर्गमार्गस्य पृथिव्यां मन्मथेश्वरः ॥ ७ ॥ विशेषश्चात्र संध्यायां श्राद्धदाने च भारत ॥ अन्नदानेन राजेंद्र कीर्त्तितं फलमुत्तमम् ॥ ८ ॥ एतत्ते सर्वमाख्यातं तव भक्त्या तु भारत ॥ पृथिव्यां सागरांतायां प्रख्यातो मन्मथेश्वरः ॥ ९ ॥ गोदानं पांडवश्रेष्ठ त्रयोदश्यां प्रकारयेत् ॥ चैत्रे मासि सिते पक्षे तत्र गत्वा जितेंद्रियः ॥ १० ॥ रात्रौ जागरणं कृत्वा देवस्याग्रे नृपोत्तम ॥ दीपं भक्त्या घृतेनैव देवस्याग्रे निवेदयेत् ॥ ११ ॥ स्त्र्यथ वा पुरुषो वाऽपि सममेतत्फलं स्मृतम् ॥ १२ ॥ इति श्रीस्कांदे महापुराण एकाशीतिसाहस्र्यां संहितायां पञ्चम आवन्त्यखंडे रेवाखण्डे मन्मथेश्वरतीर्थमाहात्म्यवर्णनंनाम द्व्यधिकशततमोऽध्यायः ॥ १०२ ॥ ॥ छ ॥ ॥ श्रीमार्कंडेय उवाच ॥ ॥ ततो गच्छेन्महीपाल एरंडीसंगमं परम् ॥ यच्छ्रुतं वै मया राजञ्छिवस्य वदतः पुरा ॥ १ ॥ एतदेव पुरा प्रश्नं गौर्या पृष्टस्तु शंकरः ॥ प्रोवाच नृपशार्दूल गुह्याद्गुह्यतरं शुभम् ॥ २ ॥ ईश्वर उवाच ॥ ॥ शृणु देवि परं गुह्यं नाऽऽख्यातं कस्यचिन्मया ॥ रेवायाश्चोत्तरे कूले तीर्थं परमशोभनम् ॥ भ्रूणहत्याहरं देवि कामदं पुत्रवर्द्धनम् ॥ ३ ॥ ॥ पार्वत्युवाच ॥ ॥ कथयस्व महादेव तीर्थं परमशोभनम् ॥ भ्रूणहत्याहरं कस्मात्कामदं स्वर्गदर्शनम् ॥ ४ ॥ ॥ ईश्वर उवाच ॥ ॥ अत्रिर्नाम महादेवि मानसो ब्रह्मणः सुतः ॥ अग्निहोत्ररतो नित्यं देवतातिथिपूजकः ॥ ५ ॥ सोमसंस्थाश्च सप्तैव कृता विप्रेण पार्वति ॥ अनसूयेति विख्याता भार्या तस्य गुणान्विता ॥ ६ ॥ पतिव्रता पतिप्राणा पत्युः कार्यहिते रता ॥ एवं याति ततः काले न पुत्रा

[1] किं समर्थः—अपि न इत्यर्थः यतः भद्रः पुण्यकृत्–भद्राणि शुभानि फलानि पश्यति । [2] प्रश्नशब्दस्यात्रनपुंसकत्वम् ।

न च पुत्रिका ॥ ७ अपराह्ने महादेवि सुखासीनौ तु सुन्दरि ॥ वदंतौ सुखदुःखानि पूर्ववृत्तानि यानि च ॥ ८ ॥ ॥ अत्रिरुवाच ॥ ॥
सौम्ये शुभे प्रिये कांते चारुसर्वांगसुन्दरि ॥ विद्याविनयसंपन्ने पद्मपत्रनिभेक्षणे ॥ ९ ॥ पूर्णचंद्रनिभाकारे पृथुश्रोणिभरालसे ॥ न त्वया सदृशी
नारी त्रैलोक्ये सचराचरे ॥ १० ॥ रतिपुत्रफला नारी पठ्यते वेदवादिभिः ॥ पुत्रहीनस्य यत्सौख्यं तत्सौख्यं मम सुन्दरि ॥ ११ ॥ यथाऽहं
न तथा पुत्रः समर्थः सर्वकर्मसु ॥ पुन्नामनरकाद्भद्रे जातमात्रेण सुन्दरि ॥ १२ ॥ पततं रक्षयेद्देवि महापातकिनं यदि ॥ महाघोरे गता वापि
दुष्टकर्मपितामहाः ॥ १३ ॥ तद्धरंति सुपुत्राश्च वैतरण्यां गतानपि ॥ पुत्रेण लोकाञ्जयति पौत्रेण परमा गतिः ॥ १४ ॥ अथ पुत्रस्य पौत्रेण
प्रगच्छेद्ब्रह्म शाश्वतम् ॥ नास्ति पुत्रसमो बंधुरिह लोके परत्र च ॥ १५ ॥ अहश्च मध्यरात्रे च चिंतयानस्य सर्वदा ॥ शुष्यंति मम गात्राणि
ग्रीष्मे नद्युदकं यथा ॥ १६ ॥ ॥ अनसूयोवाच ॥ ॥ यत्त्वया शोचितं विप्र तत्सर्वं शोचयाम्यहम् ॥ तवोद्वेगकरं यच्च तन्मे दहति चेतसि
॥ १७ ॥ येन पुत्रा भविष्यंति आयुष्मंतो गुणान्विताः ॥ तत्कार्यं च समीक्षस्व येन तुष्येत्प्रजापतिः ॥ १८ ॥ ॥ अत्रिरुवाच ॥ ॥ तपस्तप्तं
मया भद्रे जातमात्रेण दुष्करम् ॥ व्रतोपवासनियमैः शाकाहारेण सुन्दरि ॥ १९ ॥ क्षीणदेहस्तु तिष्ठामि ह्यशक्तोऽहं महाव्रते ॥ तेन शोचामि
चात्मानं रहस्यं कथितं मया ॥ २० ॥ ॥ अनसूयोवाच ॥ ॥ भर्तुः पतिव्रता नारी रतिपुत्रविवर्धिनी ॥ त्रिवर्गसाधना सा च श्लाघ्या च
विदुषां जने ॥ २१ ॥ जपस्तपस्तीर्थयात्रा मृडेज्यामंत्रसाधनम् ॥ देवताराधनं चैव स्त्रीशूद्रपतनानि षट् ॥ २२ ॥ ईदृशं तु महादोषं स्त्रीणां तु
व्रतसाधने ॥ वदंति मुनयः सर्वे यथोक्तं वेदभाषितम् ॥ २३ ॥ अनुज्ञाता त्वया ब्रह्मंस्तपस्तप्स्यामि दुष्करम् ॥ पुत्रार्थित्वं समुद्दिश्य तोषयामि
सुरोत्तमान् ॥ २४ ॥ ॥ अत्रिरुवाच ॥ ॥ साधुसाधु महाप्राज्ञे मम संतोषकारिणि ॥ आज्ञाता त्वं मया भद्रे पुत्रार्थं तप
आश्रय ॥ २५ ॥ देवतानां मनुष्याणां पितॄणामनृणो भवे ॥ न भार्यासदृशो बंधुस्त्रिषु लोकेषु विद्यते ॥ २६ ॥ ॥ तेन देवाः
प्रशंसंति न भार्यासदृशं सुखम् ॥ सन्मुखे मन्मुखाः पुत्राः विलोमे तु पराङ्मुखाः ॥ २७ ॥ तेन भार्यां प्रशंसंति सदे
॥ ८७ ॥ वासुरमानुषाः ॥ महाव्रते महाप्राज्ञे सत्त्ववति शुभेक्षणे ॥ २८ ॥ तपस्तपस्व शीघ्रं त्वं पुत्रार्थं तु ममाज्ञया ॥ एतद्वाक्यावसाने तु साष्टांगं प्रणताऽ ॥२६१॥
ब्रवीत् ॥ २९ ॥ त्वत्प्रसादेन विप्रेंद्र सर्वान्कामानवाप्नुयाम् ॥ हंसलीलागतिः सा च मृगाक्षी वरवर्णिनी ॥ ३० ॥ नियमस्था ततो भूत्वा संप्राप्ता
नर्मदां नदीम् ॥ शिवस्वेदोद्भवां देवीं सर्वपापप्रणाशनीम् ॥ ३१ ॥ यस्या दर्शनमात्रेण नश्यते पापसंचयः ॥ स्नानमात्रेण वै यस्या अश्वमेधफलं

लभेत् ॥ ३२ ॥ ये पिबंति महादेवि श्रद्दधानाः पयः शुभम् ॥ सोमपानेन तत्तुल्यं नाऽत्र कार्या विचारणा ॥ ३३ ॥ ये स्मरंति दिवा रात्रौ योजनानां शतैरपि ॥ मुच्यंते सर्वपापेभ्यो रुद्रलोकं प्रयांति ते ॥ ३४ ॥ नर्मदायाः समीपे तु तावुभौ योजनद्वये ॥ न पश्यंति यमं तत्र ये मृता वरवर्णिनि ॥ ३५ ॥ ततस्तदुत्तरे कूले एरंड्याः संगमे शुभे ॥ नियमस्था विशालाक्षी शाकाहारेण सुन्दरि ॥ ३६ ॥ तोषयन्ती त्रींश्च देवाञ्छुभैः स्तोत्रैर्व्रतैस्तथा ॥ ग्रीष्मेषु च महादेवि पञ्चाग्निं साधयेत्ततः ॥ ३७ ॥ वर्षाकाले चार्द्रवासाश्चरेच्चांद्रायणानि च ॥ हेमंते तु ततः प्राप्ते तोयमध्ये वसेत्सदा ॥ ३८ ॥ प्रातःस्नानं ततः संध्यां कुर्य्याद्देवर्षितर्पणम् ॥ देवानामर्चनं कृत्वा होमं कुर्याद्यथाविधि ॥ ३९ ॥ यजते वैष्णवांल्लोकान्स्नान जाप्यहुतेन च ॥ एवं वर्षशते प्राप्ते रुद्रविष्णुपितामहाः ॥ ४० ॥ संप्राप्ता द्विजरूपैस्तु ऐरंड्याः संगमे प्रिये ॥ पुरतः संस्थितास्तस्या वेदमभ्युद्धरंति च ॥ ४१ ॥ अनसूया जपं त्यक्त्वा निरीक्ष्य तान्मुहुर्मुहुः ॥ उत्थिता सा विशालाक्षी अर्घं दत्त्वा यथाविधि ॥ ४२ ॥ अद्य मे सफलं जन्म अद्य मे सफलं तपः ॥ दर्शनेन तु विप्राणां सर्वपापैः प्रमुच्यते ॥ ४३ ॥ प्रदक्षिणं ततः कृत्वा साष्टांगं प्रणताऽब्रवीत् ॥ कन्दमूलफलं शाकं नीवारानपि पावनान् ॥ प्रयच्छाम्यहमद्यैव मुनीनां भावितात्मनाम् ॥ ४४ ॥ ॥ विप्रा ऊचुः ॥ ॥ तपसा तु विचित्रेण तपः सत्येन सुव्रते ॥ तृप्ताः स्म सर्वकामैस्तु सुव्रते तव दर्शनात् ॥ ४५ ॥ अस्माकं कौतुकं जातं तापसेन व्रतेन यत् ॥ स्वर्गमोक्षसुतस्याऽर्थे तपस्तपसि दुष्करम् ॥ ४६ ॥ ॥ ॥ अनसूयोवाच ॥ ॥ तपसा सिध्यते स्वर्गस्तपसा परमा गतिः ॥ तपसा चार्थकामौ च तपसा गुणवान्सुतः ॥ तप एव च मे विप्राः सर्वकामफलप्रदम् ॥ ४७ ॥ ॥ विप्रा ऊचुः ॥ ॥ तन्वी श्यामा विशालाक्षी स्निग्धांगी रूपसंयुता ॥ हंसलीलागतिगमा त्वं च सर्वांगसुन्दरी ॥ ॥ ४८ ॥ किं च ते तपसा कार्यमात्मानं शोच्यसे कथम् ॥ ४९ ॥ ॥ अनसूयोवाच ॥ ॥ यदि रुद्रश्च विष्णुश्च स्वयं साक्षात्पितामहः ॥ गूढरूपधराः सर्वे तच्चिह्नमुपलक्षये ॥ ५० ॥ तस्या वाक्यावसाने तु स्वरूपं दर्शयंति ते ॥ स्वस्वरूपैः स्थिता देवाः सूर्यकोटिसमप्रभाः ॥ ५१ ॥ चतुर्भुजो महादेवि शंखचक्रगदाधरः ॥ अतसीपुष्पवर्णस्तु पीतवासा जनार्दनः ॥ ५२ ॥ गरुत्मान्वाहनं यस्य श्रिया च सहितो हरिः ॥ प्रसन्नवदनः श्रीमान्स्वयंरूपो व्यवस्थितः ॥ ५३ ॥ पीतवासा महादेवि चतुर्वदनपंकजः ॥ हंसोपरि समारूढो ह्यक्षमालाकरोद्यतः ॥ ५४ ॥ आगतो नर्मदातीरे ब्रह्मा लोकपितामहः ॥ योऽसौ सर्वजगद्व्यापी स्वयं साक्षान्महेश्वरः ॥ ५५ ॥ वृषभं तु समारूढो दशबाहुसमन्वितः ॥ भस्मांगरागशोभाढ्यः पंचवक्त्रस्त्रिलोचनः ॥ ५६ ॥ जटामुकुटसंयुक्तः कृतचंद्रार्द्धशेखरः ॥ एवंरूपधरो देवः सर्वव्यापी महेश्वरः ॥ ५७ ॥ अनसूया निरीक्ष्यै

तद्देवानां दर्शनं परम् ॥ वेपमाना ततः साध्वी सुरान्दृष्ट्वा मुहुर्मुहुः ॥ ५८ ॥ ॥ अनसूयोवाच ॥ ॥ किं व्यापारस्वरूपास्तु विष्णुरुद्रपिता
महाः ॥ एतद्वै श्रोतुमिच्छामि ह्यशेषं कथयंतु मे ॥ ५९ ॥ ॥ ब्रह्मोवाच ॥ ॥ प्रावृट्काले ह्यहं ब्रह्मा आपश्चैव प्रकीर्तिताः ॥ मेघरूपो ह्यहं
प्रोक्तो वर्षयामि च भूतले ॥६०॥ अहं सर्वाणि बीजानि प्राक्संध्यासूदिते रवौ ॥ एतद्वै कारणं सर्वं रहस्यं कथितं परम् ॥६१॥ ॥ विष्णुरुवाच ॥
हेमंतश्च भवेद्विष्णुर्विश्वरूपं चराचरम् ॥ पालनाय जगत्सर्वं विष्णोर्माहात्म्यमुत्तमम् ॥ ६२ ॥ ॥ रुद्र उवाच ॥ ॥ ग्रीष्मकालो ह्यहं
प्रोक्तः सर्वभूतक्षयंकरः ॥ कर्षयामि जगत्सर्वं रुद्ररूपस्तपस्विनि ॥ ६३ ॥ एवं ब्रह्मा च विष्णुश्च रुद्रश्चैव महाव्रते ॥ त्रयो देवास्त्रयः संध्यास्त्र
यः कालास्त्रयोऽग्नयः ॥ ६४ ॥ तथा ब्रह्मा च विष्णुश्च रुद्रश्चैकात्मतां गतः ॥ वरं दद्युश्च ते भद्रे यस्त्वया मनसीप्सितम् ॥ ६५ ॥
॥ ॥ अनसूयोवाच ॥ ॥ धन्या पुण्या ह्यहं लोके श्लाघ्या वंद्या च सर्वदा ॥ ब्रह्मा विष्णुश्च रुद्रश्च प्रसन्नवदनाः शुभाः ॥ ६६ ॥ यदि तुष्टास्त्रयो
देवा दयां कृत्वा ममोपरि ॥ अस्मिंस्तीर्थे तु सांनिध्याद्वरदाः सन्तु मे सदा ॥ ६७ ॥ ॥ रुद्र उवाच ॥ ॥ एवं भवतु ते वाक्यं यत्त्वया
प्रार्थितं शुभे ॥ प्रत्यक्षा वैष्णवी माया एरण्डीनाम नामतः ॥ ६८ ॥ यस्या दर्शनमात्रेण नश्यते पापसंचयः ॥ चैत्रमासे तु संप्राप्ते अहोरात्रो
षितो भवेत् ॥ ६९ ॥ एरंड्याः संगमे स्नात्वा ब्रह्महत्यां व्यपोहति ॥ रात्रौ जागरणं कुर्यात्प्रभाते भोजयेद्द्विजान् ॥ ७० ॥ यथोक्तेन विधानेन
पिंडं दद्याद्यथाविधि ॥ प्रदक्षिणां ततो दद्याद्धिरण्यं वस्त्रमेव च ॥ ७१ ॥ रजतं च तथा गावो भूमिदानमथाऽपि वा ॥ सर्वं कोटिगुणं प्रोक्तमिति
स्वायंभुवोऽब्रवीत् ॥ ७२ ॥ ये म्रियंति नरा देवि एरंड्याः संगमे शुभे ॥ यावद्युगसहस्रं तु रुद्रलोके वसन्ति ते ॥७३॥ अहोरात्रोषितो भूत्वा जपेद्रु
द्रांश्च वैदिकान् ॥ एकादशैकसंख्यांश्च स याति परमां गतिम् ॥ ७४ ॥ विद्यार्थी लभते विद्यां धनार्थी लभते धनम् ॥ पुत्रार्थी लभते पुत्राँल्लभेत्का
मान्यथेप्सितान् ॥ ७५ ॥ एरंड्याः संगमे स्नात्वा रेवाया विमले जले ॥ महापातकिनो वाऽपि ते यांति परमां गतिम् ॥ ७६ ॥ ॥ अनसूयो
वाच ॥ ॥ यदितुष्टास्त्रयो देवा मम भक्तिप्रचोदिताः ॥ मम पुत्रा भवन्त्वेव हरिरुद्रपितामहाः ॥ ७७ ॥ ॥ विष्णुरुवाच ॥ ॥ पूज्या यत्पु
त्रतां यांति न कदाचिच्छ्रुतं मया ॥ शुभे ददामि पुत्रांस्ते देवतुल्यपराक्रमान् ॥ रूपवंतो गुणोपेतान्यज्विनश्च बहुश्रुतान् ॥ ७८ ॥ ॥ अनसूयो
वाच ॥ ॥ ईप्सितं तच्च दातव्यं यन्मया प्रार्थितं हरे ॥ नान्यथा चैव कर्त्तव्या मम पुत्रैषणा तु या ॥ ७९ ॥ ॥ विष्णुरुवाच ॥ ॥ पूर्वं तु
भृगुसंवादे गर्भवास उपार्जितः ॥ तस्याहं चैव पारं तु नैव पश्यामि शोभने ॥८०॥ स्मरमाणः पुरा वृत्तं चिंतयामि पुनःपुनः ॥ एवं संचिंत्य ते देवाः

पितामहमहेश्वराः ॥ ८१ ॥ अयोनिजा भविष्यामस्तव पुत्रा वरानने ॥ योनिवासे महाप्राज्ञि देवा नैव व्रजंति च ॥ ८२ ॥ सांनिध्यात्संगमे देवि लोकानां तु वरप्रदाः ॥ एरण्डी वैष्णवी माया प्रत्यक्षा त्वं भविष्यसि ॥ ८३ ॥ त्रयो देवाः स्थिताः पार्थ रेवाया उत्तरे तटे ॥ वरप्राप्ता तु सा देवी गता माहेन्द्रपर्वतम् ॥ ८४ ॥ क्षीणांगी शुक्लदेहा च रूक्षकेशी सुदारुणा ॥ कृतयज्ञोपवीता सा तपोनिष्ठा शुभेक्षणा ॥ ८५ ॥ शिलातलनिविष्टोऽसौ दृष्टः कांतो महायशाः ॥ हृष्टचित्तोऽभवद्देवि उत्तिष्ठोत्तिष्ठ साऽब्रवीत् ॥ ८६ ॥ ॥ अत्रिरुवाच ॥ ॥ साधुसाधु महाप्राज्ञे ह्यनसूये महाव्रते ॥ अचिंत्यं गालवादीनां वरं प्राप्ताऽसि दुर्लभम् ॥ ८७ ॥ ॥ अनसूयोवाच ॥ ॥ त्वत्प्रसादेन देवर्षे वरं प्राप्ताऽस्मि दुर्लभम् ॥ तेन देवाः प्रशंसन्ति सिद्धाश्च ऋषयोऽमलाः ॥ ८८ ॥ एवमुक्ता तु सा देवी हर्षेण महता युता ॥ आलोकयेत्ततः कांतं तेनाऽपि शुभदर्शना ॥ ८९ ॥ ईक्षणाच्चैव संजातं ललाटे मंडलं शुभम् ॥ नवयोजनसाहस्रं मंडलं रश्मिभिर्वृतम् ॥ ९० ॥ कदंबगोलकाकारं त्रिगुणं परिमण्डलम् ॥ तस्य मध्ये तु देवेशि पुरुषो दिव्यरूपधृक् ॥९१॥ हेमवर्णोऽमृतमयः सूर्यकोटिसमप्रभः ॥ आद्यः पुत्रोऽनुसूयायाः स्वयं साक्षात्पितामहः ॥ ९२ ॥ चन्द्रमा इति विख्यातः सोमरूपो नृपात्मज ॥ इष्टापूर्ते च संपाति कलाषोडशकेन तु ॥ ९३ ॥ प्रतिपच्च द्वितीया च तृतीया च महेश्वरि ॥ चतुर्थी पंचमी चैव अव्यया षोडशी कला ॥ ९४ ॥ चतुर्विधस्य लोकस्य सूक्ष्मो भूत्वा वरानने ॥ आप्रीणाति जगत्सर्वं त्रैलोक्यं सचराचरम् ॥ ९५ ॥ सर्वे ते ह्युपजीवंति हुतं दत्तं शशिस्थितम् ॥ वनस्पतिगते[1] सोमे धनवांश्च वरानने ॥ ९६ ॥ भुंजन्परगृहे मूढो ददेदब्दकृतं शुभम्[2] ॥ वनस्पतिगते सोमे यस्तु छिंद्याद्वनस्पतीन् ॥ तेन पापेन देवेशि नरा यांति यमालयम् ॥ ९७ ॥ वनस्पतिगते सोमे मैथुनं यो निषेवते ॥ ब्रह्महत्या समं पापं लभते नाऽत्र संशयः ॥ ९८ ॥ वनस्पतिगते सोमे मंथानं योऽधिवाहयेत्[3] ॥ गावस्तस्य प्रणश्यंति याश्च वै पूर्वसंचिताः ॥ ९९ ॥ वनस्पतिगते सोमे ह्यऽध्वानं योऽधिगच्छति ॥ भवन्ति पितरस्तस्य तं मासं रेणुभोजनाः ॥ १०० ॥ अमावस्यां महादेवि यस्तु श्राद्धप्रदो भवेत् ॥ अब्दमेकं विशालाक्षि तृप्तास्तत्पितरो ध्रुवम् ॥१०१॥ हिरण्यं रजतं वस्त्रं यो ददाति द्विजातिषु ॥ सर्वं लक्षगुणं देवि लभते नाऽत्र संशयः ॥१०२॥

---

१ वनस्पतिगते सोमे--इत्यस्यार्थः--अमावास्यामातिथिः--इति । यत्--अमावस्यायां तिथौ सोमनामकवनस्पतौ सोमदेवः पूर्णतया तिष्ठति--अत एव तस्य सोमवनस्पतेः पूर्णिमायां तिथौ सर्वाणि पत्राणि परिपूर्णानि भवन्ति । अमायां च सोमवनस्पतिर्निष्पर्णो भवति । शुक्लपक्षे प्रतिपदादितिथिषु--एकैकं--पत्राणि पूर्णिमायां यावत्समुपचीयंते--कृष्णपक्षेऽमांयावद्गलंति च--अतः--वनस्पतिगते सोमे--इत्यनेनामावास्याबोद्धव्या--इति प्रतिभाति । २ शुभम्--पुण्यम्--इत्यर्थः । ३ अधिवाहयेत्--मंथानदंडेन मंथनं कुर्यात्--इत्यर्थः । एतेन--अमायां दधिमंथनं निषिद्धमिति बोद्धव्यम् ।

एवं गुणविशिष्टोऽसौ सोमरूपः प्रजापतिः ॥ संजातः प्रथमः पुत्रो ह्यनसूयासुनन्दनः ॥१०३॥ द्वितीयस्तु महादेवि दुर्वासानाम नामतः ॥ सृष्टि
संहारकर्त्ता च स्वयं साक्षान्महेश्वरः ॥१०४॥ ऋषिमध्यगतो देवि तपस्तपति दुष्करम् ॥ सोऽपि रुद्रत्वमायाति संप्राप्ते भूतविप्लवे॥१०५॥ इन्द्रोऽ
पिशप्तस्तेनैव दुर्वाससा वरानने ॥ द्वितीयस्य तु पुत्रस्य संभवः कथितो मया ॥ १०६ ॥ दत्तात्रेयस्वरूपेण भगवान्मधुसूदनः ॥ जगद्व्यापी जग
न्नाथः स्वयं साक्षाज्जनार्दनः ॥ १०७ ॥ एते देवास्त्रयः पुत्रा अनसूयाया महेश्वरि ॥ वरदानेन ते देवा ह्यवतीर्णा महीतले ॥ १०८ ॥ पुत्रप्राप्तिकरं
तीर्थं रेवायाश्चोत्तरे तटे ॥ अनसूयाकृतं पार्थ सर्वपापक्षयं परम् ॥१०९॥ ॥ श्रीमार्कंडेय उवाच ॥ ॥ आश्चर्यभूतं लोकेऽस्मिन्नर्मदायां पुरातनम् ॥
भ्रूणहत्या गता तत्र ब्राह्मणस्य नराधिप ॥११०॥ ॥ युधिष्ठिर उवाच ॥ ॥ इतिहासं द्विजश्रेष्ठ कथयस्व ममाऽनघ ॥ सर्वपापहरं लोके दुःखार्त्तस्य च
कथ्यताम् ॥ १११ ॥ ॥ श्रीमार्कंडेय उवाच ॥ ॥ सुवर्णशिलके ग्रामे गौतमान्वयसंभवः ॥ कृषीवलो महादेवि भार्यापुत्रसमन्वितः ॥ ११२ ॥
वसते तत्र गोविंदः संजातो विपुले कुले ॥ पुत्रदारसमोपेतो गृहक्षेत्ररतः सदा ॥ ११३ ॥ शकटं पूरयित्वा तु काष्ठानामगमद्गृहम् ॥ प्रक्षिप्तानि च
काष्ठानि ह्येकाकी क्षुधयाऽन्वितः ॥ ११४ ॥ रिंगमाणस्तदा पुत्रः पितुः शब्दात्समागतः ॥ न दृष्टस्तेन वै पुत्रः काष्ठैः सञ्च्छादितोऽवशः ॥
॥ ११५ ॥ आगतस्त्वरितो गेहे पिपासार्त्तो नराधिप ॥ शकटं मोच्य तद्द्वारि सवृषं रज्जुसंयुतम् ॥ ११६ ॥ भार्या तस्यैव या दृष्टा चित्तज्ञा वशव
र्त्तिनी ॥ दृष्ट्वा निपातितं पुत्रं काष्ठैर्निर्भिन्नमस्तकम् ॥११७॥ अजल्पमाना करुणं निक्षिप्तं झोलिकां शिशुम् ॥ शुश्रूषणे रता साध्वी प्रियस्य च
नराधिप ॥ ११८ ॥ ततः स्नानादिकं कृत्वा भोजनाच्छयनं शुभम् ॥ पुत्रं पुत्रवतां श्रेष्ठा ह्युत्थापयति शासनैः ॥ ११९ ॥ यदा च नोत्थितः सुप्तः
पुत्रः पंचत्वमागतः ॥ तदा सा दीनवदना रुरोद च मुमोह च ॥ १२० ॥ तच्छ्रुत्वा रुदितं शब्दं गोविंदस्त्रस्तमानसः ॥ किमेतदिति चोक्त्वा तु
पतितो धरणीतले ॥ १२१ ॥ द्वावेतौ मुक्तकेशौ तु भूमौ निपतितौ नृप ॥ विलेपाते च राजेंद्र निःश्वासोच्छ्वासितेन च ॥ १२२ ॥ कं पश्ये
प्रांगणे पुत्रं दृष्ट्वा क्रीडंतमातुरम् ॥ संधारयिष्ये हृदयं स्फुटितं तव कारणे ॥ १२३ ॥ त्वज्जन्मान्तं यशो नित्यमक्षयां कुलसंततिम् ॥ दृष्ट्वा किम
॥ ८९ ॥ तृणीभूतो यास्यामि परमां गतिम् ॥ १२४ ॥ मम वृद्धस्य दीनस्य गतिस्त्वं किल पुत्रक ॥ एते मनोरथाः सर्वे चिंतिता विफला गताः ॥ १२५ ॥ ॥२६३॥
इमां तु विकलां दीनां विहीनां सुतबांधवैः ॥ रुदंतीं पतितां पाहि मातरं धरणीतले ॥ १२६ ॥ पुन्नाम्नो नरकाद्यस्मात्पितरं त्रायते सुतः ॥ तेन
पुत्र इति प्रोक्तः स्वयमेव स्वयंभुवा ॥ १२७ ॥ अपुत्रस्य गृहं शून्यं दिशः शून्या ह्यबांधवाः ॥ मूर्खस्य हृदयं शून्यं सर्वशून्यं दरिद्रता ॥ १२८ ॥

मृषाऽयं वदते लोकश्चंदनं किल शीतलम् ॥ पुत्रगात्रपरिष्वंगश्चंदनादपि शीतलः ॥ १२९ ॥ श्मश्रुग्रहणक्रीडंतं धूलिधूसरिताननम् ॥ पुण्यहीना न पश्यंति निजोत्संगसमास्थितम् ॥ १३० ॥ दिगंबरं गतव्रीडं जटिलं धूलिधूसरम् ॥ पुण्यहीना न पश्यंति गंगाधरमिवात्मजम् ॥ १३१ ॥ वीणा वाद्यस्वरो लोके सुस्वरः श्रूयते किल ॥ रुदितं बालकस्यैव तस्मादाह्लादकारकम् ॥ १३२ ॥ मृगपक्षिषु काकेषु पशूनां स्वरयोनिषु ॥ पुत्रं तेषु समस्तेषु वल्लभं ब्रुवते बुधाः ॥ १३३ ॥ मत्स्याश्वप्रकाराश्चैव कूर्मग्राहादयोऽपि वा ॥ पुत्रोत्पत्तौ च हृष्यंति विपत्तौ यांति दुःखिताम् ॥ १३४ ॥ देवगंधर्वयक्षाश्च हृष्यंते पुत्रजन्मनि ॥ पंचत्वे तेऽपि शोचंति मंदभाग्योऽस्मि पुत्रक ॥ १३५ ॥ ऋषिमेलापकं चक्रे पुत्रार्थे राघवो नृप ॥ इंद्रस्थाने स्थितस्तस्य प्रोक्षते ह्यासनं यतः ॥ १३६ ॥ स्वर्गवासं सुताद्वाह्यं विद्यते न तु पांडव ॥ चक्रे दशरथस्तस्मात्पुत्रार्थं यज्ञमुत्तमम् ॥ १३७ ॥ रामो लक्ष्मणशत्रुघ्नौ भरतस्तत्र संभवात् ॥ कार्त्तवीर्यो जितो येन रामेणाऽमिततेजसा ॥ १३८ ॥ स रामो रामचंद्रेण अष्टवर्षेण निर्जितः ॥ एकाकिना हतो वाली प्लवगः शत्रुदुर्जयः ॥ १३९ ॥ रावणो ब्रह्मपुत्रो यस्त्रैलोक्यं यस्य शंकते ॥ हतः स रामचंद्रेण सपुत्रः सहबांधवः ॥ ॥ १४० ॥ एवं पुत्रं विना सौख्यं मर्त्त्यलोके न विद्यते ॥ वंशार्थे मैथुनं यस्य स्वर्गार्थे यस्य भारती ॥ १४१ ॥ मृष्टान्नं ब्राह्मणस्यार्थे स्वर्गे वासं तु यांति ते ॥ ब्रह्महत्याश्वमेधाभ्यां न परं पापपुण्ययोः ॥ १४२ ॥ पुत्रोत्पत्तिविपत्तिभ्यां न परं सुखदुःखयोः ॥ किं ब्रवीमीति भो वत्स न तु सौख्यं सुतं विना ॥ १४३ ॥ एवं बहुविधं दुःखं प्रलपित्वा पुनःपुनः ॥ जनैश्चाश्वासितो विप्रो बालं गृह्य बहिर्गतः ॥ १४४ ॥ ततः संस्कृत्य तं बालं विधिदृष्टेन कर्मणा ॥ समवेतौ तु दुःखार्त्तावागतौ स्वगृहं पुनः ॥ १४५ ॥ एवं गृहागते विप्रे रात्रिर्जाता युधिष्ठिर ॥ भूमौ प्रसुप्तो गोविंदः पुत्रशोकेन पीडितः ॥ १४६ ॥ यावन्निरीक्षते भार्या भर्त्तारं दुःखपीडितम् ॥ कृमिराशिगतं सर्वं गोविंदं समपश्यत ॥ १४७ ॥ दुःखाद्दुःखतरे मग्ना दृष्ट्वा तं पातकान्वितम् ॥ एवं दुःखनिमग्नायाः शर्वरी विगता तदा ॥ १४८ ॥ पशुपालस्तु महिषीमुक्त्वाऽरण्येगमद्गृहात् ॥ अरण्ये महिषीः सर्वा रक्षयित्वा गृहागतः ॥ १४९ ॥ विज्ञप्तः पशुपालेन गोविंदो ब्राह्मणोत्तमः ॥ यावद्द्रोक्ष्याम्यहं स्वामिन्महिषीस्त्वं च रक्षसे ॥ १५० ॥ ततः स त्वरितो विप्रो जगाम महिषीः प्रति ॥ न तत्र महिषीः पश्येत्पश्चात्क्षेत्राभिसन्मुखम् ॥ १५१ ॥ धावमानश्च विप्रस्तु एरंडीसंगमे गतः ॥ ततः प्रविष्टस्तु जले रेवैरंडयोस्तु संगमे ॥ १५२ ॥ तज्जलं पीतमात्रं तु त्वरया

१ येन रामेण—परशुरामेण—इत्यर्थः ।

चातितर्षितः ॥ अकामात्सलिलं पीत्वा प्रक्षाल्य नयने शुभे ॥ १६३ ॥ आजगाम ततः पश्चात्स्वनं दिवसक्षये ॥ भुक्त्वा दुःखान्वितो रात्रौ
गोविंदः शयनं ययौ ॥ १५४ ॥ निद्राभिभूतः शोकेन श्रमेणेव तु खेदितः ॥ पुनस्तत्रार्धरात्रे तु तस्य भार्या युधिष्ठिर ॥ १५५ ॥ कृमिभिर्वेष्टितं
गात्रं क्वचित्पश्यत्यवेष्टितम् ॥ पुनः सा विस्मयाऽविष्टा तस्य भार्या गुणान्विता ॥ उवाच दुष्कृतं तस्य साध्वसाविष्टचेतसा ॥ १५६ ॥
॥ ॥ भार्योवाच ॥ ॥ अतीते पंचमे चाह्नि त्विधनं क्षिपतस्तु ते ॥ गृहपश्चाद्गतो बालो ह्यज्ञानाद्घातितस्त्वया ॥ १५७ ॥ मया तत्पातकं घोरं
रहस्यं न प्रकाशितम् ॥ तेन प्रच्छन्नपापेन दह्यमाना दिवानिशम् ॥ १५८ ॥ न सुखं तव गात्रस्य पश्यामि न हि चात्मनः ॥ निद्रा मम शमं
याता रतिश्चैव त्वया सह ॥ १५९ ॥ श्रूयते मानवे शास्त्रे श्लोको गीतो महर्षिभिः ॥ स्मृत्वास्मृत्वा तु तं चित्ते परितापो न शाम्यति ॥ १६० ॥
कीर्त्तनान्नश्यते धर्म्मो वर्धतेऽसौ निगूहनात् ॥ इह लोके परे चैव पापस्याऽन्येवमेव च ॥ १६१ ॥ एवं संचिन्त्यमानाऽहं स्थिता रात्रौ भयातुरा ॥
कृमिराशिगतं त्वां हि कस्याऽहं कथयामि किम् ॥ १६२ ॥ पुनस्त्वं चाऽद्य मे दृष्टो भ्रूणहत्याकृमिश्रितः ॥ क्वचिद्भिंदंति ते गात्रं क्वचिन्नष्टाः समंत
तः ॥ १६३ ॥ एतत्संस्मृत्य संस्मृत्य विमृशामि पुनःपुनः ॥ न जाने कारणं किंचित्पृच्छंत्याः कथयस्व मे ॥१६४॥ तडागं वा सरिद्वाऽपि तीर्थं वा
देवतार्चनम् ॥ यं गतोऽसि प्रभावोऽयं तस्य नाऽन्यस्य मे स्थितम् ॥ १६५ ॥ एवमुक्तस्तुविप्रोऽसौकथयामास भारत ॥ भार्याया यद्दिवा वृत्तं शंक
मानोनृपोत्तम ॥ १६६ ॥ अद्याहं महिषीसार्थं एरंडीसंगमं गतः ॥ नाभिमात्रे जले गत्वा पीतवान्सलिलं बहु ॥ १६७ ॥ नान्यत्तीर्थं विजानामि
सरितं सर एव वा ॥ सत्यंसत्यं पुनः सत्यं कथितं तव भामिनि ॥ १६८ ॥ एवं ज्ञात्वा तु सा सर्वमुपवासकृतक्षणा ॥ सपत्नीको गतस्तत्र
संगमे वरवर्णिनि ॥ १६९ ॥ स्नात्वा तत्र जले रम्ये नत्वा देवं तु भास्करम् ॥ स्नापयामास देवेशं शंकरं चोमया सह ॥ १७० ॥ पंचगव्य
घृतक्षीरैर्दधिक्षौद्रघृतैर्जलैः ॥ गंधमाल्यादिधूपैश्च नैवेद्यैश्च सुशोभनैः ॥ १७१ ॥ पूज्य त्रयीमयं लिंगं देवीं कात्यायनीं शुभाम् ॥ रात्रौ जागरणं
कृत्वा पत्या सह पतिव्रता ॥ १७२ ॥ ततः प्रभाते विमले द्विजान्संपूज्य यत्नतः ॥ गोदानेन हिरण्येन वस्त्रेणान्नेन भारत ॥ १७३ ॥ गोविंदः
पूजयामास स्वशक्त्या ब्राह्मणाञ्छुभान् ॥ मुक्तपापो गृहायातः स्वभार्यासहितो नृप ॥ १७४ ॥ एवं यः शृणुते भक्त्या गोविंदाख्यानमुत्तमम् ॥
पठते परया भक्त्या भ्रूणहत्या प्रणश्यति ॥ १७५ ॥ क्रीडते शांकरे लोके यावदाभूतसंप्लवम् ॥ यश्चैवाश्वयुजे मासि चैत्रे वा नृपसत्तम ॥ १७६ ॥
सप्तम्यां च सिते पक्षे सोपवासो जितेंद्रियः ॥ सात्त्विकीं वासनां कृत्वा यो वसेच्छिवमंदिरे ॥ १७७ ॥ ध्यायमानो विरूपाक्षं त्रिशूलकरसंस्थि

तम् ॥ कंसासुरनिहंतारं शंखचक्रगदाधरम् ॥ १७८ ॥ पक्षिराजसमारूढं त्रैलोक्यवरदायकम् ॥ पितामहं ततो ध्यायेद्धंसस्थं चतुराननम् ॥ १७९ ॥ सर्गप्रदं समस्तस्य कमलाकरशोभितम् ॥ यो ह्येवं वसते तत्र त्रियमे स्थान उत्तमे ॥ १८० ततः प्रभाते विमले ह्यष्टम्यां च नराधिप ॥ ब्राह्मणान्पूजयेद्भक्त्या सर्वदोषविवर्जितान् ॥ १८१ ॥ सर्वावयवसंपूर्णान्सर्वशास्त्रविशारदान् ॥ वेदाभ्यासरतान्नित्यं स्वदारनिरतान्सदा ॥ १८२ ॥ श्राद्धे दाने व्रते योग्यान्ब्राह्मणान्पांडुनंदन ॥ प्रेतानां पूजनं तत्र देवपूर्वं समारभेत् ॥ १८३ ॥ प्रेतत्वान्मुच्यते शीघ्रमेरंडयां पिंडतर्पणैः ॥ दानानि तत्र देयानि ह्यन्नमुख्यानि सर्वदा ॥ १८४ ॥ हिरण्यभूमिकन्याश्च धूर्वाहौ शुभलक्षणौ ॥ सीरेण सहितौ पार्थ धान्यं द्रोणकसंख्यया ॥ १८५ ॥ अलंकृतां सवत्सां च क्षीरिणीं तरुणीं सिताम् ॥ रक्तां वा कृष्णवर्णां वा पाटलां कपिलां तथा ॥ १८६ ॥ कांस्यदोहनसंयुक्तां रुक्मखुरविभूषणाम् ॥ स्वर्णशृंगीं सवत्सां च ब्राह्मणायोपपादयेत् ॥ १८७ ॥ प्रीयतां मे जगन्नाथा हरकृष्णपितामहाः ॥ संसाररक्षणी देवी सुरभी मां समुद्धरेत् ॥ १८८ ॥ पुत्रार्थं याः स्त्रियः पार्थ ह्येरण्डीसंगमे नृप ॥ स्नाप्यन्ते रुद्रसूक्तैश्च चतुर्वेदोद्भवैस्तथा ॥ १८९ ॥ चतुर्भिर्ब्राह्मणैः शस्तं द्वाभ्यां योग्यैश्च कारयेत् ॥ एकेन सार्द्रकुम्भेन दांपत्यमभिषेचयेत् ॥ १९० ॥ दैवज्ञेनैव चैकेन अथवा सामगेन वा ॥ पंचरत्नसमायुक्तं कुम्भे तत्रैव कारयेत् ॥ १९१ ॥ गन्धतोयसमायुक्तं सर्व्वौषधिविमिश्रितम् ॥ आम्रपल्लवसंयुक्तमश्वत्थमधुकं तथा ॥ १९२ ॥ गुंठितं सितवस्त्रेण सितचन्दनचर्चितम् ॥ सितपुष्पैस्तु संच्छन्नं सिद्धार्थकृतमध्यमम् ॥ १९३ ॥ कांस्यपात्रे तु संस्थाप्य पुत्रार्थी देशिकोत्तमः ॥ अंगलग्नं तु यद्वस्त्रं कटकाभरणं तथा ॥ १९४ ॥ तत्सर्वं मण्डले त्याज्यं सिद्ध्यर्थं चात्मनस्तदा ॥ प्रणम्य भास्करं पश्चादाचार्यं रुद्ररूपिणम् ॥ १९५ ॥ मधुरं च ततोऽश्नीयाद्देव्या भुवन उत्तमे ॥ फलदानं च विप्राय छत्रं तांबूलमेव च ॥ १९६ ॥ उपानहौ च यानं च स भवेद्दुःखवर्जितः ॥ भास्करे क्रीडते लोके यावदाभूतसंप्लवम् ॥ १९७ ॥ दानं कोटिगुणं सर्वं शुभं वा यदि वाऽशुभम् ॥ यथा नदीनदाः सर्वे सागरे यांति संक्षयम् ॥ १९८ ॥ एवं पापानि नश्यंति ह्येरण्डीसंगमे नृणाम् ॥ समंताच्छेत्रपातेन[1] ह्येरण्डीसंगमे नृप ॥ १९९ ॥ भ्रूणहत्यासमं पापं नश्यते शंकरोऽब्रवीत् ॥ प्राणत्यागं च यो भक्त्या जातवेदसि कारयेत् ॥ २०० ॥ अनाशकं नृपश्रेष्ठ जले वा तदनन्तरम् ॥ पंचसाहस्रिकं मानं वर्षाणां जातवेदसि ॥२०१॥ जले त्रीणि सहस्राण्यनाशके षष्टि भुञ्जते ॥ काका बकाः कपोताश्च ह्युलूकाः पशवस्तथा ॥ २०२ ॥ संगमोदकसंस्पृष्टास्ते यांति परमां गतिम् ॥

१ समंताच्छेत्रपातेन—एरण्डीसंगमे स्थित्वा बाणादिशस्त्रे विसृष्टे सति तथाग्रं गत्वा पतति तावत्पर्यन्तभूप्रदेशस्य—तीर्थत्वमेव—इति तस्य महत्त्वं सूच्यते ।

वृक्षाश्च तत्पदं ज्ञात्वा यां गतिं यांति योगिनः ॥२०३॥ एरंडिका मया देवी दृष्टो मे मन्मथेश्वरः ॥ किं समर्थो यमो रुष्टो भद्रो भद्राणि पश्यति ॥ ॥ २०४ ॥ मृत्तिकां संगमोद्भूतां ये च गुण्ठंति नित्यशः ॥ भ्रूणहत्यादिपापानि नश्यंते नाऽत्र संशयः ॥ २०५ ॥ एरण्डीसंगमे मर्त्यो लुण्ठ्यमानो नराधिप ॥ सर्वपापैर्विनिर्मुक्तः पदं गच्छत्यनामयम् ॥ २०६ ॥ एरंड्याः संगमं मर्त्याः कीर्त्तयंत्याऽऽश्रमस्थिताः ॥ विमुक्तपापा जायन्ते सत्यं शंकरभाषितम् ॥ २०७ ॥ एरण्डीपादपाग्रैस्तु दृष्टैः पापं व्यपोहति ॥ २०८ ॥ तीर्थाख्यानमिदं पुण्यं ये पठिष्यन्ति मानवाः ॥ शृण्वन्ति चाऽपरे भक्त्या मुक्तपापा भवंति ते ॥ २०९ ॥ एतत्ते सर्वमाख्यातमेरण्डीसंगमं नृप ॥ भूयश्चाऽन्यत्प्रवक्ष्यामि सर्वपापक्षयंकरम् ॥ २१० ॥ इति श्रीस्कांदे महापुराण एकाशीतिसाहस्र्यां संहितायां पंचम आवन्त्यखण्डे रेवाखण्डे एरण्डीसंगमतीर्थफलमाहात्म्यवर्णनंनाम त्र्यधिकशततमोऽध्यायः ॥ १०३ ॥ ॥ छ ॥ ॥ श्रीमार्कंडेय उवाच ॥ ॥ ततो गच्छेन्महीपाल सौवर्णशिलमुत्तमम् ॥ प्रख्यातमुत्तरे कूले सर्वपापक्षयंकरम् ॥ १ ॥ समंतांच्छतपातेन[1] मुनिसंघैः पुरा कृतम् ॥ रेवायां दुर्लभं स्थानं संगमस्य समीपतः ॥ २ ॥ विभक्तं हस्तमात्रं च पुण्यक्षेत्रं नराधिप ॥ सुवर्णशिलके स्नात्वा पूजयित्वा महेश्वरम् ॥ ३ ॥ नत्वा तु भास्करं देवं होतव्यं च हुताशने ॥ बिल्वेनाऽऽज्यविमिश्रेण बिल्वपत्रैरथाऽपि वा ॥ ४ ॥ प्रीयतां मे जगन्नाथो व्याधिर्नश्यतु मे ध्रुवम् ॥ द्विजाय कांचने दत्ते यत्फलं तच्छृणुष्व मे ॥ ५ ॥ बहुस्वर्णस्य यत्प्रोक्तं यागस्य फलमुत्तमम् ॥ तथाऽसौ लभते सर्वं कांचनं यः प्रयच्छति ॥ ६ ॥ तेन दानेन पूतात्मा मृतः स्वर्गमवाप्नुयात् ॥ रुद्रस्यानुचरस्तावद्यावदिन्द्राश्चतुर्दश ॥ ७ ॥ ततः स्वर्गावतीर्णस्तु जायते विशदे कुले ॥ धनधान्यसमोपेतः पुनः स्मरति तज्जलम् ॥ ८ ॥ इति श्रीस्कांदे महापुराण एकाशीतिसाहस्र्यां संहितायां पञ्चम आवन्त्यखण्डे रेवाखण्डे सुवर्णशिलातीर्थमाहात्म्यवर्णनंनाम चतुरधिकशततमोऽध्यायः ॥ १०४ ॥ ॥ छ ॥ ॥ ॥ श्रीमार्कंडेय उवाच ॥ ॥ करंजाख्यं ततो गच्छेत्सोपवासो जितेंद्रियः ॥ तत्र स्नात्वा तु राजेंद्र सर्वपापैः प्रमुच्यते ॥ १ ॥ अर्चयित्वा महादेवं दत्त्वा दानं तु भक्तितः ॥ सुवर्णं रजतं वाऽपि मणिमौक्तिकविद्रुमान् ॥ २ ॥ पादुकोपानहौ छत्रं शय्यां प्रावरणानि च ॥ कोटिकोटिगुणं सर्वं जायते नाऽत्र संशयः ॥ ३ ॥ इति श्रीस्कांदे महापुराण एकाशीतिसाहस्र्यां संहितायां पञ्चम आवन्त्यखण्डे रेवाखण्डे करंजतीर्थमाहात्म्यवर्णनंनाम पंचाधिकशततमोऽध्यायः ॥ १०५ ॥ ॥ छ ॥ ॥ श्रीमार्कंडेय उवाच ॥ ॥ ततो गच्छेन्महीपाल तीर्थं

१ शतपातेन—शतपादक्रमप्रक्षेपपरिमितप्रांतरूपम्—इत्यर्थः ।

परमशोभनम् ॥ सौभाग्यकरणं दिव्यं नरनारीमनोरमम् ॥ १ ॥ तत्र या दुर्भगा नारी नरो वा नृपसत्तम ॥ स्नात्वाऽर्चयेदुमारुद्रौ सौभाग्यं तस्य जायते ॥ २ ॥ तृतीयायामहोरात्रं सोपवासो जितेंद्रियः ॥ निमंत्रयेद्द्विजं भक्त्या सपत्नीकं सुरूपिणम् ॥ ३ ॥ गन्धमाल्यैरलंकृत्य वस्त्र धूपादिवासितम् ॥ भोजयेत्पायसान्नेन कृसरेणाऽथ भक्तितः ॥ ४ ॥ भोजयित्वा यथान्यायं प्रदक्षिणमुदाहरेत् ॥ प्रीयतां मे महादेवः सपत्नीको वृषध्वजः ॥ ५ ॥ यथा ते देवदेवेश न वियोगः कदाचन ॥ ममाऽपि करुणां कृत्वा तथास्त्विति विचिंतयेत् ॥ ६ ॥ एवं कृते ततस्त स्य यत्पुण्यं समुदाहृतम् ॥ तत्ते सर्वं प्रवक्ष्यामि यथा देवेन भाषितम् ॥ ७ ॥ दौर्भाग्यं दुर्गतिश्चैव दारिद्र्यं शोकबन्धनम् ॥ वंध्यत्वं सप्तजन्मानि जायते न युधिष्ठिर ॥ ८ ॥ ज्येष्ठमासे सिते पक्षे तृतीयायां विशेषतः ॥ तत्र गत्वा तु यो भक्त्या पंचाग्निं साधयेत्ततः ॥ ९ ॥ सोऽपि पापैरशेषैस्तु मुच्यते नाऽत्र संशयः ॥ गुग्गुलं दहते यस्तु द्विधाचित्तविवर्जितः[1] ॥ १० ॥ शरीरं भेदयेद्यस्तु गौर्याश्चैव समीपतः ॥ तस्मिन्कर्मप्रविष्टस्य[2] उत्क्रांतिर्जायते[3] यदि ॥ ११ ॥ देहपाते व्रजेत्स्वर्गमित्येवं शंकरोऽब्रवीत् ॥ सितरक्तैस्तथा पीतैर्वस्त्रैश्च विविधैः शुभैः ॥ १२ ॥ ब्राह्मणीं ब्राह्मणं चैव पूजयित्वा यथाविधि ॥ पुष्पैर्नानाविधैश्चैव गंधधूपैः सुशोभनैः ॥ १३ ॥ कण्ठसूत्रकसिंदूरैः कुंकुमेन विलेपयेत् ॥ कल्पयेत स्त्रियं गौरीं ब्राह्मणं शिवरूपिणम् ॥ १४ ॥ तेषां तद्रूपकं कृत्वा दानमुत्सृज्यते ततः ॥ कंकणं कर्णवेष्टं च कण्ठिकां मुद्रिकां तथा ॥ १५ ॥ सप्तधान्यं तथा चैव भोजनं नृपसत्तम ॥ अन्यान्यपि च दानानि तस्मिंस्तीर्थे ददाति यः ॥ १६ ॥ सर्वदानैश्च यत्पुण्यं प्राप्नुयान्नात्र संशयः ॥ सहस्रगुणितं सर्वं नात्र कार्या विचारणा ॥ १७ ॥ शंकरेण समं तस्माद्भोगं भुंक्ते ह्यनुत्तमम् ॥ सौभाग्यं तस्य विपुलं जायते नाऽत्र संशयः ॥१८॥ अपुत्रो लभते पुत्रमधनो धन माप्नुयात् ॥ राजेंद्र कामदं तीर्थं नर्मदायां व्यवस्थितम् ॥ १९ ॥ इति श्रीस्कांदे महापुराण एकाशीतिसाहस्र्यां संहितायां पञ्चम आवंत्य खण्डे रेवाखण्डे कामदतीर्थमाहात्म्यवर्णनंनाम षडुत्तरशततमोऽध्यायः ॥ १०६ ॥ ॥ छ ॥ ॥ ॥ श्रीमार्कंडेय उवाच ॥ ॥ ततो गच्छेत राजेंद्र भण्डारीतीर्थमुत्तमम् ॥ दरिद्रच्छेदकरणं युगान्येकोनविंशतिः ॥ १ ॥ धनदेन तपस्तप्त्वा प्रसन्ने पद्मसंभवे ॥ तत्रैव स्वल्पदानेन प्राप्तं वित्तस्य रक्षणम्[4] ॥ २ ॥ तत्र गत्वा तु यो भक्त्या स्नात्वा वित्तं प्रयच्छति ॥ तस्य वित्तपरिच्छेदो न कदाचिद्भविष्यति ॥ ३ ॥ इति श्रीस्कांदे महापुराण एकाशीतिसाहस्र्यां संहितायां पञ्चम आवन्त्यखण्डे रेवाखण्डे भण्डारीतीर्थमाहात्म्यवर्णनंनाम सप्तोत्तरशततमोऽध्यायः ॥ १०७ ॥ ॥ छ ॥ ॥

१ द्विधाचित्तविवर्जितः—एकाग्रमानसः—इत्यर्थः । २ कर्मप्रविष्टस्य—कर्मारम्भकरस्य—इत्यर्थः । ३ उत्क्रान्तिः—प्राणोत्क्रमणम्—इत्यर्थः । ४ वित्तस्य रक्षणम्—वित्तेशता—इत्यर्थः ।

॥ ॥ श्रीमार्कंडेय उवाच ॥ ॥ ततो गच्छेन्महीपाल रोहिणीतीर्थमुत्तमम् ॥ विख्यातं त्रिषु लोकेषु सर्वपापहरं परम् ॥ १ ॥ ॥ युधिष्ठिर उवाच ॥ ॥ रोहिणीतीर्थमाहात्म्यं सर्वपापप्रणाशनम् ॥ श्रोतुमिच्छामि तत्त्वेन तन्मे त्वं वक्तुमर्हसि ॥ २ ॥ ॥ श्रीमार्कंडेय उवाच ॥ ॥ तस्मिन्नेकार्णवे घोरे नष्टे स्थावरजंगमे ॥ उदधौ च शयानस्य देवदेवस्य चक्रिणः ॥ ३ ॥ नाभौ समुत्थितं पद्मं रविमंडलसन्निभम् ॥ कर्णिकाकेसरोपेतं पत्रैश्च समलंकृतम् ॥ ४ ॥ तत्र ब्रह्मा समुत्पन्नश्चतुर्वदनपंकजः ॥ किं करोमीति देवेश आज्ञा मे दीयतां प्रभो ॥ ५ ॥ एवमुक्तस्तु देवेशः शंखचक्रगदाधरः ॥ उवाच मधुरां वाणीं तदा देवं पितामहम् ॥ ६ ॥ सरस्वत्यां महाबाहो लोकं कुरु ममाज्ञया ॥ भूतग्राममशेषस्य उत्पादनविधिक्षयम् ॥ ७ ॥ एतच्छ्रुतं तु वचनं पद्मनाभस्य भारत ॥ चिंतयामास भगवान्सप्तर्षीन्हितकाम्यया ॥ ८ ॥ क्रमात्ते चिंतिताः प्राज्ञाः पुलस्त्यः पुलहः क्रतुः ॥ प्राचेतसो वसिष्ठश्च भृगुर्नारद एव च ॥ ९ ॥ यज्ञे प्राचेतसो दक्षो महातेजाः प्रजापतिः ॥ दक्षस्यापि तथा जाताः पंचाशद्दुहितरोऽनघ ॥ १० ॥ ददौ स दश धर्माय कश्यपाय त्रयोदश ॥ तथैव स महाभागः सप्तविंशतिमिंदवे ॥ ११ ॥ रोहिणीनाम या तासां मध्ये तस्य नराधिप ॥ अनिष्टा सर्वनारीणां भर्तुश्चैव विशेषतः ॥ १२ ॥ ततः सा परमं कृत्वा वैराग्यं नृपसत्तम ॥ आगत्य नर्मदातीरे चचार विपुलं तपः ॥१३॥ एकरात्रैस्त्रिरात्रैश्च षड्द्वादशभिरेव च ॥ पक्षमासोपवासैश्च कर्शयन्ती कलेवरम् ॥ १४ ॥ आराधयन्ती सततं महिषासुरनाशिनीम् ॥ देवीं भगवतीं तात सर्वार्त्तिविनिवारणीम् ॥ १५ ॥ स्नात्वास्नात्वा जले नित्यं नर्मदायाः शुचिस्मिता ॥ ततस्तुष्टा महाभागा देवी नारायणी नृप ॥ ॥ १६ ॥ प्रसन्ना ते महाभागे व्रतेन नियमेन च ॥ एतच्छ्रुत्वा तु वचनं रोहिणी शशिनः प्रिया ॥१७॥ यथा भवामि न चिरात्तथा भवतु मानदे ॥ एवमस्त्विति सा चोक्त्वा भवानी भक्तवत्सला ॥ १८ ॥ स्तूयमाना मुनिगणैस्तत्रैवांतरधीयत ॥ तदाप्रभृति तत्तीर्थं रोहिणी शशिनः प्रिया ॥ ॥ १९ ॥ संजाता सर्वकालं तु वल्लभा नृपसत्तम ॥ तत्र तीर्थे तु या नारी नरो वा स्नाति भक्तितः ॥ २० ॥ वल्लभा जायते सा तु भर्त्तुर्वै रोहिणी यथा ॥ तत्र तीर्थे तु यः कश्चित्प्राणत्यागं करोति वै ॥ २१ ॥ सप्तजन्मानि दांपत्यवियोगो न भवेत्क्वचित् ॥ २२ ॥ इति श्रीस्कांदे महापुराण एकाशीतिसाहस्र्यां संहितायां पञ्चम आवन्त्यखंडे रेवाखंडे रोहिणीसोमनाथतीर्थमाहात्म्यवर्णनं नामाष्टोत्तरशततमोऽध्यायः ॥ १०८ ॥ ॥ ॥ छ ॥ ॥ श्रीमार्कंडेय उवाच ॥ ॥ ततो गच्छेन्महीपाल चक्रतीर्थमनुत्तमम् ॥ सेनापुरमितिख्यातं सर्वपापक्षयंकरम् ॥ १ ॥

१ तस्मिन्—कल्पान्तकाले—इत्यर्थः। २ विख्यातम्—इति शेषः। ३ नरश्रेष्ठायाः—इति स्यादेवाक्षिप्यते।

सेनापत्याभिषेकाय देवेदेवेन चक्रिणा ॥ आनीतश्च महासेनो देवैः सेंद्रपुरोगमैः ॥ २ ॥ दानवानां वधार्थाय जयाय च दिवौकसाम् ॥
भूमिदानेन विप्रेंद्रांस्तर्पयित्वा यथाविधि ॥ ३ ॥ शंखभेरीनिनादैश्च पटहानां च निस्वनैः ॥ वीणावेणुमृदंगैश्च झल्लरीस्वरमंगलैः ॥ ४ ॥
ततः कृत्वा स्वनं घोरं दानवो बलदर्पितः ॥ रुरुर्नाम विघातार्थमभिषेकस्य चागतः ॥ ५ ॥ हस्त्यश्वरथपत्त्याद्यैः पूरयन्वै दिशो दश ॥ तत्र तेन
महद्युद्धं प्रवृत्तं किल भारत ॥ ६ ॥ शक्त्यृष्टिपाशमुशलैः खड्गैस्तोमरटंकनैः ॥ भल्लैः कर्णिकनाराचैः कबंधपटसंकुलैः ॥ ७ ॥ ततस्तु तां शत्रुबल
स्य सेनां क्षणेन चापच्युतबाणघातैः ॥ विध्वस्तहस्त्यश्वरथान्महात्मा जग्राह चक्रं रिपुसंघनाशनः ॥ ८ ॥ ज्वलच्च चक्रं निशितं भयंकरं सुरासुरा
णां च सुदर्शनं रणे ॥ चकर्त दैत्यस्य शिरस्तदानीं करात्प्रमुक्तं मधुघातिनश्च तत् ॥ ९ ॥ तं दृष्ट्वा सहसा विघ्नमभिषेके षडाननः ॥ त्यक्त्वा तु तत्र
संस्थानं चचार विपुलं तपः ॥ १० ॥ मुक्तं चक्रं विनाशाय हरिणा लोकधारिणा ॥ द्विदलं दानवं कृत्वा पपात विमले जले ॥ ११ ॥ तदा प्रभृति
तत्तीर्थं चक्रतीर्थमिति श्रुतम् ॥ सर्वपापविनाशाय निर्मितं विश्वमूर्त्तिना ॥ १२ ॥ चक्रतीर्थे तु यः स्नात्वा पूजयेद्देवमच्युतम् ॥ पुंडरीकस्य यज्ञस्य
फलमाप्नोति मानवः ॥१३॥ तत्र तीर्थे तु यः स्नात्वा पूजयेद्ब्राह्मणाञ्छुभान् ॥ शांतदांतजितक्रोधान्स लभेत्कोटिजं फलम् ॥ १४ ॥ तत्र तीर्थे तु
यो भक्त्या त्यजते देहमात्मनः ॥ विष्णुलोकं मृतो याति जयशब्दादिमंगलैः ॥ १५ ॥ क्रीडयित्वा यथाकामं देवगंधर्वपूजितः ॥ इहागत्य च
भूयोपि जायते विपुले कुले ॥ १६ ॥ एतत्पुण्यं पापहरं धन्यं दुःखप्रणाशनम् ॥ कथितं ते महाभाग भूयश्चान्यच्छृणुष्व मे ॥ १७ ॥
इति श्रीस्कांदे महापुराण एकाशीतिसाहस्र्यां संहितायां पञ्चम आवंत्यखण्डे रेवाखण्डे सेनापुरे चक्रतीर्थमाहात्म्यवर्णनंनाम नवोत्तरशततमोऽध्यायः
॥ १०९ ॥ ॥ छ ॥ ॥ श्रीमार्कंडेय उवाच ॥ ॥ धौतपापं ततो गच्छेन्महापातकनाशनम् ॥ समीपे चक्रतीर्थस्य विष्णुना निर्म्मितं पुरा
॥ १ ॥ निहतैर्दानवैर्घोरैर्देवदेवो जनार्द्दनः॥ तत्पापस्य विनाशार्थं दानवान्तोद्भवस्य च ॥२॥ तत्र तीर्थे जितक्रोधश्चचार विपुलं तपः॥ दुश्चरं मौन
मास्थाय ह्यशक्यं देवदानवैः ॥ ३ ॥ स्नात्वा दत्त्वा द्विजातिभ्यो दानानि विविधानि च ॥ तत्क्षणान्मुपापस्तु गतस्त्रैष्णवं पदम् ॥ ४ ॥ एवं
युक्तस्तु यस्तत्र पापं कृत्वा सुदारुणम् ॥ स्नात्वा जप्त्वा विधानेन मुच्यते सर्वपातकैः ॥ ५ ॥ इति श्रीस्कान्दे महापुराण एकाशीतिसाहस्र्यां संहि
तायां पञ्चम आवन्त्यखण्डे रेवाखण्डे धौतपापतीर्थमाहात्म्यवर्णनंनाम दशोत्तरशततमोऽध्यायः ॥ ११० ॥ छ ॥ ॥ श्रीमार्कंडेय उवाच ॥ ॥

१ दानवान्तोद्भवस्य—दानववधजनितस्य—इत्यर्थः । तस्य पापविनाशार्थं दानवस्य च भारत—इ०पा० ।

नर्मदादक्षिणे कूले तीर्थं परमशोभनम् ॥ स्कंदेन निर्मितं पूर्वं तपः कृत्वा सुदारुणम् ॥ १ ॥ ॥ युधिष्ठिर उवाच ॥ ॥ स्कंदस्य चरितं सर्वमा
जन्म द्विजसत्तम ॥ तीर्थस्य च विधिं पुण्यं कथयस्व यथार्थतः ॥ २ ॥ ॥ श्रीमार्कंडेय उवाच ॥ ॥ देवदेवेन वै तप्तं तपः पूर्वं युधिष्ठिर ॥ विज्ञप्तेन
सुरैः सर्वैरुमादेवी विवाहिता ॥ ३ ॥ नास्ति सेनापतिः कश्चिद्देवानां सुरसत्तम ॥ नीयंते दानवैर्घोरैः सर्वे देवाः सवासवाः ॥ ४ ॥ यथा निशा
विना चंद्रं दिवसो भास्करं विना ॥ न शोभते मुहूर्तं वै तथा सेना निनायका ॥ ५ ॥ एवं ज्ञात्वा महादेव परया दयया विभो ॥ सेनानीर्दीयतां
कश्चित्त्रिषु लोकेषु विश्रुतः ॥ ६ ॥ एतच्छ्रुत्वा शुभं वाक्यं देवानां परमेश्वरः ॥ कामयान उमां देवीं सस्मार मनसा स्मरम् ॥ ७ ॥ तेन मूर्च्छितस
र्वांगः कामरूपो जगद्गुरुः ॥ कामयामास रुद्राणीं दिव्यं वर्षशतं किल ॥ ८ ॥ देवराजस्ततो ज्ञात्वा महामैथुनगं हरम् ॥ संमंत्र्य दैवतैः सार्द्धं
प्रैषयज्जातवेदसम् ॥ ९ ॥ तेन गत्वा महादेवः परमानंदसंस्थितः ॥ सहसा तेन दृष्टोऽसो हाहेत्युक्त्वा समुत्थितः ॥ १० ॥ ततः क्रुद्धा महादेवी शाप
वाचमुवाच ह ॥ वेपमाना महाराज शृणु यत्ते वदाम्यहम् ॥११॥ अहं यस्मात्सुरैः सर्वैर्याचिता पुत्रजन्मनि ॥ कृता रतिश्च विफला संप्रेष्य जातवेद
सम् ॥ १२ ॥ तस्मात्सर्वे पुत्रहीना भविष्यंति न संशयः ॥ हरेणोक्तस्ततो वह्निरस्माकं बीजमावह ॥ १३ ॥ यथा भवति लोकेषु तथा त्वं कर्तुं
मर्हसि ॥ मम तेजस्त्वया शक्यं गृहीतुं सुरसत्तम ॥ देवकार्यार्थसिद्ध्यर्थं नाऽन्यः शक्तो जगत्त्रये ॥ १४ ॥ ॥ अग्निरुवाच ॥ ॥ तेजसस्तव मे देव
का शक्तिर्धारणे विभो ॥ करोति भस्मसात्सर्वं त्रैलोक्यं सचराचरम् ॥ १५ ॥ ॥ ईश्वर उवाच ॥ ॥ उदरस्थेन बीजेन यदि ते जायते रुजा ॥ तदा
क्षिपस्व तत्तेजो गंगातोये हुताशन ॥१६॥ एवमुक्त्वा महादेवो अमोघं बीजमुत्तमम् ॥ हव्यवाहमुखे सर्वं प्रक्षिप्यांतरधीयत ॥१७॥ गते चादर्शनं देवे
दह्यमानो हुताशनः ॥गंगातोये विनिक्षिप्य जगाम स्वंनिवेशनम्॥१८॥ असहंती तु तत्तेजो गंगाऽपि सरितां वरा ॥ शरस्तंबे विनिक्षिप्य जगामाशु
यथागतम् ॥१९॥ तत्र जातं तु तद्दृष्ट्वा सर्वे देवाः सवासवाः ॥ कृत्तिकां प्रेसयामासुः स्तन्यं पाययितुं तदा ॥२०॥ दृष्ट्वा ता आगताः सर्वा गंगागर्भे
महामतेः ॥ षण्मुखैः षण्मुखो भूत्वा पिपासुरपिबत्स्तनम् ॥ २१ ॥ जातकर्मादिसंस्कारान्वेदोक्तान्पद्मसंभवः ॥ चकार सर्वान्राजेंद्र विधिदृष्टेन
कर्मणा ॥ २२ ॥ षण्मुखात्षण्मुखो नाम कर्त्तिकेयस्तु कृत्तिकात् ॥ कुमारश्च कुमारत्वाद्गंगागर्भोऽग्निजोऽपरः ॥ २३ ॥ एवं कुमारः संभूतो

१ स्कंदेन निर्मितन् अत एव स्कन्दतीर्थम्—इति प्रसिद्धम् । २ निनायका—नायकरहिता—इत्यर्थः । 'नि' इत्यस्योपसर्गस्य अत्र अभावार्थकत्वम् । निर्नायका—इ० पा० समुचितः । छन्दोवैकल्यंत्वार्षत्वात्सह्यं स्यादेव । ३ सुराः इति शेषः ।

ह्यनधीत्य स वेदवित् ॥ शास्त्राण्यनेकानि वेद चचार विपुलं तपः ॥ २४ ॥ देवाऽरण्येषु सर्वेषु नदीषु च नदेषु च ॥ पृथिव्यां यानि तीर्थानि
समुद्राद्यानि भारत ॥ २५ ॥ ततः पर्याययोगेन नर्मदातटमाश्रितः ॥ नर्मदादक्षिणे कूले चचार विपुलं तपः ॥ २६ ॥ ऋग्यजुःसामविहितं
जपञ्जाप्यमहर्निशम् ॥ ध्यायमानो महादेवं शुचिर्धमनिसंततः ॥ २७ ॥ ततो वर्षसहस्रांते पूर्णे देवो महेश्वरः ॥ उमया सहितः काले तदा
वचनमब्रवीत् ॥ २८ ॥ ॥ ईश्वर उवाच ॥ ॥ अहं ते वरदस्तात गौरी माता पिता ह्यहम् ॥ वरं वृणीष्व यच्चेष्टं त्रिषु लोकेषु दुर्लभम् ॥ २९ ॥
॥ ॥ षण्मुख उवाच ॥ ॥ यदि तुष्टो महादेव उमया सह शंकर ॥ वृणोमि मातापितरौ नान्या गतिर्मतिर्मम ॥ ३० ॥ एतच्छ्रुत्वा शुभं वाक्यं
पुत्रस्य वदनाच्युतम् ॥ तथेत्युक्त्वा तु स्नेहेन प्रेम्णा तं परिषस्वजे ॥ ३१ ॥ ततस्तं मूर्ध्न्युपाघ्राय ह्युमयोवाच शंकरः ॥ ३२ ॥ ॥ ईश्वर उवाच ॥ ॥
अक्षयश्चाव्ययश्चैव सेनानीस्त्वं भविष्यसि ॥ ३३ ॥ शिखी च ते वाहनं दिव्यरूपो दत्तो मया शक्तिधरस्य संख्ये ॥ सुरासुरादींश्च जयेति चोक्त्वा
जगाम कैलासवरं महात्मा ॥ ३४ ॥ गते चाऽदर्शनं देवे तदा स शिखिवाहनः ॥ स्थापयित्वा महादेवं जगाम सुरसन्निधौ ॥ ३५ ॥ तदाप्रभृति
तत्तीर्थं स्कन्दतीर्थमिति श्रुतम् ॥ सर्वपापहरं पुण्यं मर्त्यानां भुवि दुर्लभम् ॥ ३६ ॥ तत्र तीर्थे तु यो राजन्भक्त्या स्नात्वाऽर्चयेच्छिवम् ॥
गंधमाल्याभिषेकैश्च याज्ञिकं स लभेत्फलम् ॥ ३७ ॥ स्कन्दतीर्थे तु यः स्नात्वा पूजयेत्पितृदेवताः ॥ तिलमिश्रेण तोयेन तस्य पुण्यफलं शृणु ॥
॥ ३८ ॥ पिंडदानेन चैकेन विधियुक्तेन भारत ॥ द्वादशाब्दानि तुष्यंति पितरो नाऽत्र संशयः ॥ ३९ ॥ तत्र तीर्थे तु राजेंद्र शुभं वा यदि वा
शुभम् ॥ इह लोके परे चैव तत्सर्वं जायतेऽक्षयम् ॥ ४० ॥ तत्र तीर्थे तु यः कश्चित्प्राणत्यागं करिष्यति ॥ शास्त्रयुक्तेन विधिना स गच्छेच्छिव
मंदिरम् ॥ ४१ ॥ कल्पमेकं वसित्वा तु देवगंधर्वपूजितः ॥ अत्र भारतवर्षे तु जायते विमले कुले ॥ ४२ ॥ वेदवेदांगतत्त्वज्ञः सर्वव्याधिविवर्जितः ॥
जीवेद्वर्षशतं साग्रं पुत्रपौत्रसमन्वितः ॥ ४३ ॥ इदं ते कथितं राजन्स्कंदतीर्थस्य संभवम् ॥ धन्यं यशस्यमायुष्यं सर्वदुःखप्रमुत्तमम् ॥
सर्वपापहरं पुण्यं देवदेवेन भाषितम् ॥ ४४ ॥ इति श्रीस्कांदे महापुराण एकाशीतिसाहस्र्यां संहितायां पञ्चम आवंत्यखंडे रेवाखण्डे स्कंदतीर्थ
माहात्म्यवर्णनंनामैकादशोत्तरशततमोऽध्यायः ॥ १११ ॥ ॥ श्रीमार्कंडेय उवाच ॥ ॥ ततो गच्छेत्तु राजेंद्र तीर्थमांगिरसस्य तु ॥ उत्तरे
नर्मदाकूले सर्वपापविनाशनम् ॥ १ पुरासीदंगिरानाम ब्राह्मणो वेदपारगः ॥ पुत्रहेतोर्भृगस्याऽदौ चचार विपुलं तपः ॥ २ ॥ नित्यं त्रिषवणस्नायी
जपन्देवं सनातनम् ॥ पूजयंश्च महादेवं कृच्छ्रचांद्रायणादिभिः ॥ ३ ॥ द्वादशाब्दे ततः पूर्णे तुतोष परमेश्वरः ॥ वरेण च्छंदयामास द्विजमां

गिरसं वरम् ॥ ४ ॥ वव्रे स तु महादेवं पुत्रं पुत्रवतां वरम् ॥ वेदविद्याव्रतस्नातं सर्वशास्त्रविशारदम् ॥५॥ देवानां मंत्रिणं राजन्सर्वलोकेषु पूजितम् ॥
ब्रह्मलक्ष्म्याः सदावासमक्षयं चाव्ययं सुतम् ॥ ६ ॥ तथाभिलषितः पुत्रः सर्वविद्याविशारदः ॥ भविष्यति न संदेहश्चैवमुक्त्वा ययौ हरः ॥७॥ वरैरंगि
रसश्चाऽपि बृहस्पतिरजायत ॥ यथाभिलषितः पुत्रो वेदवेदांगपारगः ॥ ८ ॥ जाते पुत्रेंगिरास्तत्र स्थापयामास शंकरम् ॥ हृष्टतुष्टमना भूत्वा
जगामोत्तरपर्वतम् ॥ ९ ॥ तत्र चांगिरसे तीर्थे यः स्नात्वा पूजयेच्छिवम् ॥ सर्वपापविनिर्मुक्तो रुद्रलोकं स गच्छति ॥ १० ॥ अपुत्रो लभते
पुत्रमधनो धनमाप्नुयात् ॥ इच्छते यश्च यं कामं स तं लभति मानवः ॥ ११ ॥ इति श्रीस्कांदे महापुराण एकाशीतिसाहस्र्यां संहितायां पञ्चम
आवन्त्यखण्डे रेवाखण्डेऽङ्गिरसतीर्थमाहात्म्यवर्णनंनाम द्वादशाधिकशततमोऽध्यायः ॥ ११२ ॥ ॥ छ ॥ ॥ श्रीमार्कंडेय उवाच ॥ ॥
ततो गच्छेत्तु राजेंद्र कोटितीर्थमनुत्तमम् ॥ ऋषिकोटिर्गता तत्र धरा[1] सिद्धिमुपागता ॥ १ ॥ तत्र तीर्थे तु यः स्नात्वा भोजयेद्ब्राह्मणा
ञ्छुचिः ॥ एकस्मिन्भोजिते विप्रे कोटिर्भवति भोजिता ॥ २ ॥ तत्र तीर्थे तु यः स्नात्वा पूजयेत्पितृदेवताः ॥ पूजिते तु महादेवे वाजपेयफलं
लभेत् ॥ ३ ॥ इति श्रीस्कांदे महापुराण एकाशीतिसाहस्र्यां संहितायां पञ्चम आवंत्यखण्डे रेवाखण्डे कोटितीर्थमाहात्म्यवर्णनं
नाम त्रयोदशाधिकशततमोऽध्यायः ॥ ११३ ॥ ॥ छ ॥ ॥ श्रीमार्कंडेय उवाच ॥ ॥ ततो गच्छेत्तु राजेंद्र तीर्थं परमशोभनम् ॥ अयो
निजं महापुण्यं सर्वपापप्रणाशनम् ॥ १ ॥ अयोनिजे नरः स्नात्वा पूजयेत्परमेश्वरम् ॥ पितृदेवार्चनं कृत्वा मुच्यते सर्वकिल्बिषैः ॥ २ ॥ तत्र
तीर्थे तु विधिना प्राणत्यागं करोति यः ॥ स कदाचिन्महाराज योनिद्वारं न पश्यति ॥ ३ ॥ इति श्रीस्कांदे महापुराण एकाशीतिसाहस्र्यां
संहितायां पञ्चम आवंत्यखंडे रेवाखंडे अयोनिसम्भवतीर्थमाहात्म्यवर्णनंनाम चतुर्दशाधिकशततमोऽध्यायः ॥ ११४ ॥ ॥ छ ॥ ॥
॥ ॥ श्रीमार्कंडेय उवाच ॥ ॥ ततो गच्छेन्महाराज तीर्थमांगारकं परम् ॥ रूपदं सर्वलोकानां विश्रुतं नर्मदातटे ॥ १ ॥ अंगारकेण
राजेंद्र पुरा तप्तं तपः किल ॥ अर्बुदं च निखर्वं च प्रयुतं वर्षसंख्यया ॥ २ ॥ ततस्तुष्टो महादेवः परया कृपया नृप ॥ प्रत्यक्षदर्शी भगवा
नुवाच क्षितिनन्दनम् ॥३॥ वरदोऽस्मि महाभाग दुर्लभं त्रिदशैरपि ॥ वरं दास्याम्यहं वत्स ब्रूहि यत्ते विवक्षितम् ॥ ४ ॥ ॥ अंगारक उवाच ॥ ॥
तव प्रसादाद्देवेश सर्वलोकमहेश्वर ॥ ग्रहमध्यगतो नित्यं विचरामि नभस्तले ॥ ५ ॥ यावद्धराधरो लोके यावच्चंद्रदिवाकरौ ॥ नद्यो नदाः समुद्राश्च

१ धराधरः—मेरुः । धराधरः—इ० पा० ।

वरो मे चाऽक्षयो भवेत् ॥ ६ ॥ एवमस्त्विति देवेशो दत्त्वा वरमनुत्तमम् ॥ जगामाकाशमाविश्य वन्द्यमानः सुरासुरैः ॥ ७ ॥ भूमिपुत्रस्ततस्तस्मिन्स्थापयामास शंकरम् ॥ गतः सुरालये लोके ग्रहभावे निवेशितः ॥ ८ ॥ तत्र तीर्थे तु यः स्नात्वा पूजयेत्परमेश्वरम् ॥ हुतहोमो जितक्रोधः सोऽश्वमेधफलं लभेत् ॥ ९ ॥ चतुर्थ्यंगारके यस्तु स्नात्वा चाभ्यर्चयेद्ग्रहम् ॥ अंगारकं विधानेन सप्तजन्मानि भारत ॥ १० ॥ दशयोजनविस्तीर्णे मंडले रूपवान्भवेत् ॥ तत्रैव तु मृतो जंतुः कामतोऽकामतोऽपि वा ॥ रुद्रस्याऽनुचरो भूत्वा तेनैव सह मोदते ॥ ११ ॥ इति श्रीस्कांदे महापुराण एकाशीतिसाहस्र्यां संहितायां पञ्चम आवन्त्यखण्डे रेवाखण्डे अंगारकतीर्थमाहात्म्यवर्णनंनाम पञ्चदशोत्तरशततमोऽध्यायः॥ ११५ ॥ ॥ ॥ छ ॥ ॥ मार्कंडेय उवाच ॥ ॥ पांडुतीर्थं ततो गच्छेत्सर्वपापविनाशनम् ॥ तत्र स्नात्वा नरो राजन्मुच्यते सर्वकिल्बिषैः ॥ १ ॥ तत्र तीर्थे तु यः स्नात्वा दापयेत्कांचनं शुचिः ॥ भ्रूणहत्यादिपापानि नश्यंते नाऽत्र संशयः ॥ २ ॥ पिंडोदकप्रदानेन वाजपेयफलं लभेत् ॥ पितरः पितामहाश्च नृत्यंते च प्रहर्षिताः ॥ ३ ॥ इति श्रीस्कांदे महापुराण एकाशीतिसाहस्र्यां संहितायां पञ्चम आवंत्यखण्डे रेवाखण्डे पांडुतीर्थमाहात्म्यवर्णनंनाम षोडशाधिकशततमोऽध्यायः ॥ ११६ ॥ ॥ श्रीमार्कंडेय उवाच ॥ ॥ ततो गच्छेत्तु राजेंद्र पुण्यं तीर्थं त्रिलोचनम् ॥ तत्र तिष्ठति देवेशः सर्वलोकनमस्कृतः ॥ १ ॥ तत्र तीर्थे तु यः स्नात्वा भक्त्यार्चयति शंकरम् ॥ रुद्रस्य भवनं याति मृतो नास्त्यत्र संशयः ॥ २ ॥ कल्पक्षये ततः पूर्णे क्रीडित्वा च इहागतः ॥ आवियोगेन तिष्ठेत पूज्यमानः शतं समाः ॥ ३ ॥ इति श्रीस्कांदे महापुराण एकाशीतिसाहस्र्यां संहितायां पञ्चम आवन्त्यखण्डे रेवाखण्डे त्रिलोचनतीर्थमाहात्म्यवर्णनंनाम सप्तदशोत्तरशततमोऽध्यायः ॥ ११७ ॥ ॥ छ ॥ ॥ श्रीमार्कंडेय उवाच ॥ ॥ ततो गच्छेत्तु राजेंद्र तीर्थं परमशोभनम् ॥ इन्द्रतीर्थेतिविख्यातं नर्मदादक्षिणे तटे ॥ १ ॥ ॥ युधिष्ठिर उवाच ॥ ॥ नर्मदा दक्षिणे कूले इन्द्रतीर्थं कथं भवेत् ॥ श्रोतुमिच्छामि विप्रेंद्र ह्यादिमध्यांतविस्तरैः ॥ २ ॥ एतच्छ्रुत्वा तु वचनं धर्मपुत्रस्य धीमतः ॥ कथयामास तद्वृत्तमितिहासं पुरातनम् ॥ ३ ॥ ॥ श्रीमार्कंडेय उवाच ॥ ॥ विश्वासयित्वा सुचिरं धर्मशत्रुं महाबलम् ॥ वृत्रं जित्वाऽथ हत्वा तु गच्छमानं शचीपतिम् ॥ ४ ॥ निष्काममाणं मार्गेण ब्रह्महत्यादुरासदा ॥ अहोरात्रमविश्रांता जगाम भुवनत्रयम् ॥ ५ ॥ यतोयतो ब्रह्महणं याति यानेन शोभनम् ॥ दिशो भागं सुरैः सार्द्धं ततो हत्या न मुञ्चति ॥ ६ ॥ ब्रह्महत्या सुरापानं स्तेयं गुर्वंगनागमः ॥ पातकानां गतिर्दृष्टा न तु विश्वासघातिनाम् ॥ ७ ॥ पापकर्मसुखं दृष्ट्वा स्नानदानैर्विशुध्यति ॥ नारी वा पुरुषो वाऽपि नैव विश्वासघातिनः ॥८॥ एवमादीनि चाऽन्यानि श्रुत्वा वाक्यानि

देवराद् ॥ वचनं तद्विधैरुक्तं विषादमगमत्परम् ॥९॥ त्यक्त्वा राज्यं सुरैः सार्धं जगाम तप उत्तमम् ॥ पुत्रदारगृहं राज्यं वसूनि विविधानि च ॥१०॥
फलान्येतानि धर्मस्य शोभयन्ति जनेश्वरम् ॥ फलं धर्मस्य भुंजेति सुहृत्स्वजनबांधवाः ॥ ११ ॥ पश्यतां सर्वमेतेषां पापमेकेन भुज्यते ॥ परं
हि सुखमुत्सृज्य कर्शयन्वै कलेवरम् ॥ १२ ॥ देवराजो जगामासौ तीर्थान्यायतनानि च ॥ गंगातीर्थेषु सर्वेषु यामुनेषु तथैव च ॥ १३ ॥ सारस्व
तेषु सर्वेषु सामुद्रेषु पृथक्पृथक् ॥ नदीषु देवखातेषु तडागेषु सरःसु च ॥ १४ ॥ पापं न मुञ्चते सर्वे पश्चाद्देवसमागमे ॥ रेवाप्रभवतीर्थेषु
कूलयोरुभयोरपि ॥ १५ ॥ पूजयन्वै महादेवं स्कंदतीर्थं समासदत् ॥ तत्र स्थित्वोपवासैश्च कृच्छ्रचांद्रायणादिभिः ॥ १६ ॥ कर्शयन्वै स्वकं देहं
न लेभे शर्म वै क्वचित् ॥ ग्रीष्मे पंचाग्निमध्यस्थो वर्षासु स्थंडिलेशयः ॥ १७ ॥ आर्द्रवासास्तु हेमंते चचार विपुलं तपः ॥ एवं तु तपतस्तस्य
इंद्रस्य विदितात्मनः ॥ १८ ॥ वत्सराणां सहस्राणि गतानि दश भारत ॥ ततस्त्वेकादशे प्राप्ते वर्षे तु नृपसत्तम ॥ १९ ॥ सहसा भगवान्देवस्तु
तोष परमेश्वरः ॥ तथा ब्रह्मर्षयः सिद्धा ब्रह्मविष्णुपुरोगमाः ॥ २० ॥ तत्राऽऽजग्मुः सुराः सर्वे यत्र देवः शतक्रतुः ॥ दृष्ट्वा समागतान्देवानृषींश्चैव
महामतिः ॥ २१ ॥ उवाच प्रणतो भूत्वा सर्वदेवपुरोहितः ॥ विदितं सर्वमेतेषां यथा वृत्रवधः कृतः ॥ २२ ॥ युष्माकं चाऽऽज्ञया पूर्वं ब्रह्मविष्णुम
हेश्वराः ॥ तथाप्येवं ब्रह्महणं मत्त्वा पापस्य कारिणम् ॥ २३ ॥ भ्रमंतं सर्वतीर्थेषु ब्रह्महत्या न मुंचति ॥ न नंदति जगत्सर्वं त्रैलोक्यं सचराच
रम् ॥ २४ ॥ यथा विहीनचंद्रार्कं तथा राज्यमनायकम् ॥ तस्मात्सर्वे सुरश्रेष्ठा विज्ञाप्यं मम संप्रति ॥ २५ ॥ कुर्वंतु शक्रं निर्दोषं तथा सर्वे मह
र्षयः ॥ बृहस्पतिमुखोद्गीर्णं श्रुत्वा तद्वचनं शुभम् ॥ २६ ॥ ततः प्रोवाच भगवान्ब्रह्मा लोकपितामहः ॥ एतत्पापं महाघोरं ब्रह्महत्यासमुद्भवम् ॥
॥ २७ ॥ देवतेभ्योऽथ भूतेभ्यश्चतुर्भागं क्षिपाम्यहम् ॥ एवं मुक्त्वाक्षिपच्चैनो जलोपरि महामतिः ॥ २८ ॥ अवगाह्य ततः पेया आपो वै नान्यथा
बुधैः ॥ धरायामक्षिपद्भागं द्वितीयं पद्मसंभवः ॥ २९ ॥ अभक्ष्या तेन संजाता सदाकालं वसुंधरा ॥ तदार्धमर्द्धं नारीणां द्वितीयेऽह्नि युधिष्ठिर ॥
॥ ३० ॥ निक्षिप्य भगवान्देवः पुनरन्यज्जगाद ह ॥ असंग्राह्या त्वसंग्राह्या तेन जाता रजस्वला ॥ ३१ ॥ चतुर्दिनानि सा प्राज्ञैः पापस्य महतो
॥ ९५ ॥ महात्[1] ॥ चतुर्थं तु ततो भागं विभज्य परमेश्वरः ॥ ३२ ॥ कृषिगोरक्ष्यवाणिज्यैः शूद्रसेवाकरे द्विजे ॥ ततोऽभिनंदयामासुः सर्वे देवा महर्षयः ॥ ॥२६९॥
॥ ३३ ॥ देवेंद्रं वाग्भिरिष्टाभिर्नर्मदाजलसंस्थितम् ॥ वरेण च्छन्दयामास ततस्तुष्टो महेश्वरः ॥ ३४ ॥ वरं दास्यामि देवेश वरं वृणु यथेप्सि

१ महात्—माहात्म्यात्—इत्यर्थः ।

तम् ॥ ३५ ॥ ॥ इंद्र उवाच ॥ ॥ यदि तुष्टोऽसि देवेश यदि देयो वरो मम ॥ अत्र संस्थापयिष्यामि सदा सन्निहितो भव ॥ ३६ ॥ एवमस्त्विति चोक्ता तं ब्रह्मविष्णुमहेश्वराः ॥ जग्मुराकाशमाविश्य स्तूयमाना महर्षिभिः ॥ ३७ ॥ गतेषु देवदेवेषु देवराजः शतक्रतुः ॥ स्थापयित्वा महादेवं जगाम त्रिदशालयम् ॥ ३८ ॥ इंद्रतीर्थे तु यः स्नात्वा तर्प्पयेत्पितृदेवताः ॥ महापातकयुक्तोऽपि मुच्यते सर्वपातकैः ॥ ३९ ॥ इंद्रतीर्थे तु यः स्नात्वा पूजयेत्परमेश्वरम् ॥ सोऽश्वमेधस्य यज्ञस्य पुष्कलं फलमश्नुते ॥ ४० ॥ एतत्ते कथितं सर्वं तीर्थमाहात्म्यमुत्तमम् ॥ श्रुतमात्रेण येनैव मुच्यंते पातकैर्नराः ॥ ४१ ॥ इति श्रीस्कांदे महापुराण एकाशीतिसाहस्र्यां संहितायां पञ्चम आवन्त्यखण्डे रेवाखण्डे इंद्रतीर्थमाहात्म्यवर्णनंनामा ष्टादशोत्तरशततमोऽध्यायः ॥ ११८ ॥ ॥ छ ॥ ॥ श्रीमार्कंडेय उवाच ॥ ॥ ततो गच्छेत्तु राजेंद्र कह्लोडीतीर्थमुत्तमम् ॥ रेवायाश्चोत्तरे कूले सर्वपापविनाशनम् ॥ १ ॥ हितार्थं सर्वभूतानामृषिभिः स्थापितं पुरा ॥ तपसा तु समुद्धृत्य नर्मदायां महांभसि ॥ २ ॥ स्नात्वा तु कपिला तीर्थे कपिलां यः प्रयच्छति ॥ श्रुत्वा चाऽऽख्यानकं दिव्यं ब्राह्मणाञ्छृणु यत्फलम् ॥ ३ ॥ सर्वेषामेव दानानां कपिलादानमुत्तमम् ॥ ब्राह्मणान्वेषितं पूर्वमृषिदेवसमागमे ॥ ४ ॥ सद्यः प्रसूतां कपिलां शोभनां यः प्रयच्छति ॥ सोपवासो जितक्रोधस्तस्य पुण्यफलं शृणु ॥ ५ ॥ ससमुद्रगुहा तेन सशैलवनकानना ॥ दत्ता चैव महाबाहो पृथिवी नात्र संशयः ॥ ६ ॥ वाचिकं मानसं पापं कर्मणा यत्पुरा कृतम् ॥ नश्यते कपिलां दत्त्वा सप्तजन्मार्जितं नृप ॥ ७ ॥ भूमिदानं धनं धान्यं हस्त्यश्वकनकादिकम् ॥ कपिलादानस्यैकस्य कलां नार्हति षोडशीम् ॥ ८ ॥ तत्र तीर्थे नरः स्नात्वा कपिलां यः प्रयच्छति ॥ मृतो विष्णुपुरं याति गीयमायोऽप्सरोगणैः ॥ ९ ॥ यावंति तस्या रोमाणि सवत्सायास्तु भारत ॥ तावद्वर्षसहस्राणि स स्वर्गे क्रीडते चिरम् ॥ १० ॥ ततोऽवकीर्णकालेन त्विह मानुष्यतां गतः ॥ धनधान्यसमोपेतो जायते विपुले कुले ॥ ११ ॥ वेदविद्याव्रतस्नातः सर्वशास्त्रविशारदः ॥ व्याधिशोकविनिर्मुक्तो जीवेच्च शरदां शतम् ॥ १२ ॥ एतत्ते सर्वमाख्यातं कल्होडीतीर्थमुत्तमम् ॥ यत्कृत्वा सर्वपापेभ्यो मुच्यते नाऽत्र संशयः ॥ १३ ॥ इति श्रीस्कांदे महापुराण एकाशीतिसाहस्र्यां संहितायां पञ्चम आवंत्यखंडे रेवाखण्डे कह्लोडीतीर्थमाहात्म्यवर्णनंनामैकोनविंशत्युत्तरशततमोऽध्यायः ॥११९॥ ॥छ॥ ॥ श्रीमार्कंडेय उवाच ॥ ॥ अतः परं प्रवक्ष्यामि कम्बुकेश्वरमुत्तमम् ॥ हिरण्यकशिपुर्दैत्यो दानवो बलदर्पितः ॥१॥ अवध्यः सर्वलोकानां त्रिषु लोकेषु विश्रुतः ॥ तस्य पुत्रो महातेजाः प्रह्लादो नाम नामतः ॥२॥ विष्णुप्रसादाद्भक्त्या

१ कपिलादानमुत्तमम् ।

 च तस्य राज्ये प्रतिष्ठितः ॥ विरोचनस्तस्य सुतस्तस्याऽपि बलिरेव च ॥ ३ ॥ बलिपुत्रोऽभवद्बाणस्तस्मादपि च शंबरः ॥ शंबरस्याऽन्वये 
॥२७०॥ जातः कंबुर्नाम महासुरः ॥ ४ ॥ ज्ञात्वा विष्णुमयं घोरं महद्भयमुपस्थितम् ॥ दानवानां विनाशाय नाऽन्यो हेतुः कदाचन ॥ ५ ॥ स त्यक्त्वा पुत्र (रेवाखं०३)
दारांश्च सुहृद्बंधुपरिग्रहान् ॥ चचार मौनमास्थाय तपः कंबुर्महामतिः ॥ ६ ॥ अक्षसूत्रकरो भूत्वा दंडी मुंडी च मेखली ॥ शाकयावकभक्षश्च वल्क अ० १२०
लाजिनसंवृतः ॥ ७ ॥ स्नात्वा नित्यं धृतिपरो नर्मदाजलमाश्रितः ॥ पूजयंस्तु महादेवमर्बुदं वर्षसंख्यया ॥ ८ ॥ ततस्तुतोष भगवान्देवदेवो महे
श्वरः ॥ उवाच दानवं काले मेघगंभीरया गिरा ॥ ९ ॥ भोभोः कंबो महाभाग तुष्टोऽहं तव सुव्रत ॥ इदं व्रतानां परमं मौनं सर्वार्थसाधनम् ॥ १० ॥
चरितं च त्वया लोके देवदानवदुश्चरम् ॥ वरं वृणीष्व भद्रं ते यत्ते मनसि रोचते ॥ ११ ॥ ॥ कंबुरुवाच ॥ ॥ यदि प्रसन्नो देवेश यदि देयो
वरो मम ॥ अक्षय्यश्चाव्ययश्चैव स्वेच्छया विचराम्यहम् ॥ १२ ॥ दैत्यदानवसंघानां संयुगेष्वपलायिता ॥ भयं चान्यन्न विद्येत मुक्त्वा देवं गदा
धरम् ॥ १३ ॥ तस्याऽहं संयुगे साध्यो येनोपायेन शंकर ॥ भवामि न सदा कालं तं वदस्व वरं मम ॥ १४ ॥ ॥ ईश्वर उवाच ॥ ॥ मम सन्नि
हितो यत्र त्वं भविष्यसि दानव ॥ तत्र विष्णुभयं नास्ति वसात्राविगतज्वरः ॥ १५ ॥ तस्य देवाधिदेवस्य वेदगर्भस्य संयुगे ॥ शंखचक्रधरस्येशा
नाऽहं सर्वे सुरासुराः ॥ १६ ॥ किं पुनर्यो द्विषत्येनं लोकालोकप्रभुं हरिम् ॥ स सुखी वर्त्तते कालं न निमेषं मतं मम ॥ १७ ॥ तस्मात्त्वं परया
भक्त्या सर्वभूतहिते रतः ॥ वसिष्यसि चिरं कालमित्युक्त्वाऽदर्शनं गतः ॥ १८ ॥ गते चाऽदर्शनं देवे तत्र तीर्थे महामतिः ॥ स्थापयामास देवेशं
शिवं शांतमनामयम् ॥ १९ ॥ तस्मिंस्तीर्थे महादेवं स्थापयित्वा दिवं गतः ॥ तदाप्रभृति तत्पार्थ कंबुतीर्थमिति श्रुतम् ॥ विख्यातं सर्वलोकेषु
महापातकनाशनम् ॥ २० ॥ कंबुतीर्थे नरः स्नात्वा विधिनाऽभ्यर्च्य भास्करम् ॥ ऋग्यजुःसाममंत्रैश्च स्तूयमानो नृपोत्तम ॥ २१ ॥ तस्य पुण्यं
समुद्दिष्टं ब्राह्मणैर्वेदपारगैः ॥ तत्सर्वं तु शृणुष्वाऽद्य ममैव गदतो नृप ॥ २२ ॥ ऋग्यजुःसामगीतेषु सांगोपांगेषु यत्फलम् ॥ तत्फलं सम
वाप्नोति गायत्रीमात्रमंत्रवित् ॥ २३ ॥ तत्र तीर्थे तु यः स्नात्वा तर्पयेत्पितृदेवताः ॥ पूजयेद्देवमीशानं सोऽग्निष्टोमफलं लभेत् ॥ २४ ॥ अकामो
॥ ९६ ॥ वा सकामो वा तत्र तीर्थे कलेवरम् ॥ यस्त्यजेन्नात्र संदेहो रुद्रलोकं स गच्छति ॥ २५ ॥ इति श्रीस्कांदे महापुराण एकाशीतिसाहस्र्यां संहि ॥२७०॥
तायां पञ्चम आवन्त्यखण्डे रेवाखंडे कंबुकेश्वरतीर्थमाहात्म्यवर्णनंनामविंशत्युत्तरशततमोऽध्यायः ॥ १२० ॥ ॥ ७ ॥ ॥ ॥

१ रथोत्तमम्—इ० पा० ।

मार्कंडेय उवाच ॥ ॥ ततो गच्छेन्महीपाल चंद्रहासमतः परम् ॥ यत्र सिद्धिं परां प्राप्तः सोमराजः सुरोत्तमः ॥ १ ॥ ॥ युधिष्ठिर उवाच ॥ ॥
कथं सिद्धिं परां प्राप्तः सोमनाथो जगत्पतिः ॥ तत्सर्वं श्रोतुमिच्छामि कथयस्व ममाऽनघ ॥ २ ॥ ॥ श्रीमार्कंडेय उवाच ॥ ॥ पुरा शप्तो मुनीं
द्रेण दक्षेण किल भारत ॥ असेवनाद्धि दाराणां क्षयरोगी भविष्यसि ॥ ३ ॥ उद्वाहितानां पत्नीनां ये न कुर्वंति सेवनम् ॥ या निष्ठा जायते नृणां
तां शृणुष्व नराधिप ॥ ४ ॥ ऋतावृतौ हि नारीणां सेवनाज्जायते सुतः ॥ सुतात्स्वर्गश्च मोक्षश्च इत्येवं श्रुतिभाषितम् ॥ ५ ॥ तत्कालोचितधर्मेण
वेष्टितो रौरवे पतेत् ॥ तस्यास्तद्रुधिरं पापः पिबते कालमीप्सितम् ॥ ६ ॥ ततोऽवतीर्णः कालेन यांयां योनिं प्रयास्यति ॥ तस्यांतस्यां स दुष्टा
त्मा दुर्भगो जायते सदा ॥ ७ ॥ नारीणां तु सदा कामोऽभ्यधिकः परिवर्त्तते ॥ विशेषेण ऋतौ काले पीड्यते कामसायकैः ॥ ८ ॥ परिभूता हि
ता भर्त्रा ध्यायंतेऽन्यं पतिं स्त्रियः ॥ ततः पुत्रः समुत्पन्नो घ्नटते कुलमुत्तमम् ॥ ९ ॥ स्वर्गस्थास्तेन पितरः पूर्वजास्ते पितामहाः ॥ पतंति जात
मात्रेण कुलटस्तेन चोच्यते ॥ १० ॥ तेन कर्मविपाकेन क्षयरोग्यभवच्छशी ॥ त्यक्त्वा लोकं सुरेंद्राणां मर्त्यलोकमुपागतः ॥ ११ ॥
ततस्तीर्थान्यनेकानि पुण्यान्यायतनानि च ॥ भ्रमन्वै नर्मदां प्राप्तः सर्वपापप्रणाशनीम् ॥ १२ ॥ उपवासं च दानानि व्रतानि
नियमांस्तथा ॥ चचार द्वादशाब्दानि ततो मुक्तः स किल्बिषैः ॥ १३ ॥ स्नापयित्वा महादेवं सर्वपातकनाशनम् ॥ जगाम प्रभया
पूर्णः स च लोकमनुत्तमम् ॥ १४ ॥ येनैव स्थापितो देवः पूज्यते वर्षसंख्यया ॥ तावद्वर्षसहस्राणि रुद्रलोके स पूज्यते ॥ १५ ॥
तेन देवान्विधानोक्तान्स्थापयंति नरा भुवि ॥ अक्षयं चाव्ययं यस्मात्कालं भुंजंति मानवाः ॥ १६ ॥ सोमतीर्थे नरः स्नात्वा पूजयेद्देव
मीश्वरम् ॥ स भ्राजते नरो लोके सोमवत्प्रियदर्शनः ॥ १७ ॥ चंद्रहासे तु यो गत्वा ग्रहणे चंद्रसूर्ययोः ॥ स्नानं समाचरेद्भक्त्या मुच्यते सर्वकि
ल्बिषैः ॥ १८ ॥ तत्र स्नानं च दानं च चंद्रहासे शुभाऽशुभम् ॥ कृतं नृपवरश्रेष्ठ सर्वं भवति चाक्षयम् ॥१९॥ ते धन्यास्ते महात्मानस्तेषां जन्म
सुजीवितम् ॥ चन्द्रहासे तु ये स्नात्वा पश्यंति ग्रहणं नराः ॥ २० ॥ वाचिकं मानसं पापं कर्मजं यत्पुराकृतम् ॥ स्नानमात्रेण राजेंद्र तत्र तीर्थे
प्रणश्यति ॥ २१ ॥ बहवस्तं न जानंति महामोहसमन्विताः ॥ देहस्थमिव सर्वेषां परमानंदरूपिणम् ॥ २२ ॥ पश्चिमे सागरे गत्वा सोमतीर्थे
तु यत्फलम् ॥ तत्समग्रमवाप्नोति चन्द्रहासे न संशयः ॥ २३ ॥ संक्रांतौ च व्यतीपाते अयने विषुवे तथा ॥ चन्द्रहासे नरः स्नात्वा सर्वपापैः
प्रमुच्यते ॥ २४ ॥ ते मूढास्ते दुराचारास्तेषां जन्म निरर्थकम् ॥ चंद्रहासं न जानंति ये रेवायां व्यवस्थितम् ॥ २५ ॥ चंद्रहासे तु यः कश्चित्सं

न्यासं कुरुते द्विजः ॥ अनिवर्त्तिका गतिस्तस्य सोमलं कात्र संशयः ॥ २६ ॥ इति श्रीस्कान्दे महापुराण एकाशीतिसाहस्र्यां संहितायां पञ्चम
आवन्त्यखण्डे रेवाखण्डे सोमतीर्थमाहात्म्यवर्णनंनामैकविंशत्युत्तरशततमोऽध्यायः ॥ १२१ ॥ ॥ छ ॥ ॥ श्रीमार्कंडेय उवाच ॥ ॥ ततो
गच्छेन्महीपाल कोहनस्वेति विश्रुतम् ॥ सर्वपापहरं पुण्यं तीर्थं मृत्युविनाशनम् ॥ १ ॥ पुरा तत्र द्विजः कश्चिद्वेदवेदांगपारगः ॥ पत्नीपुत्रसुहृद्वर्गैः
स्वकर्मनिरतोऽवसत् ॥ २ ॥ ॥ युधिष्ठिर उवाच ॥ ॥ ब्राह्मणस्य तु यत्कर्म उत्पत्तिः क्षत्रियस्य तु ॥ वैश्यस्यापि च शूद्रस्य तत्सर्वं कथयस्व
मे ॥ ३ ॥ धर्मस्यार्थस्य कामस्य मोक्षस्य च परं विधिम् ॥ निखिलं ज्ञातुमिच्छामि नान्यो वेत्ता मतिर्मम ॥ ४ ॥ ॥ मार्कंडेय उवाच ॥ ॥
उत्पत्तिकारणं ब्रह्मा देवदेवः प्रकीर्त्तितः ॥ प्रथमं सर्वभूतानां चराचरजगद्गुरुः ॥ ५ ॥ द्विजातयो मुखाज्जाताः क्षत्रिया बाहुयंत्रतः ॥ ऊरुप्रदेशाद्वै
श्यास्तु शूद्राः पादेष्वथाऽभवन् ॥ ६ ॥ ततस्त्वन्ये पृथग्वर्णाः पृथग्धर्मान्समाचरन् ॥ पर्यायेण समुत्पन्ना ह्यनुलोमविलोमतः ॥ ७ ॥ तेषां धर्मं
प्रवक्ष्यामि श्रुतिस्मृत्यर्थचोदितम् ॥ येन सम्यक्कृतेनैव सर्वे यांति परां गतिम् ॥ ८ ॥ गतिर्ध्यानं विना भक्तैर्ब्राह्मणैः प्राप्यते नृप ॥ अध्याप
यन्यतो वेदान्वेदं वाऽपि यथाविधि ॥ ९ ॥ कुलजां रूपसंपन्नां सर्वलक्षणलक्षिताम् ॥ उद्वाहयेत्ततः पत्नीं गुरुणाऽनुमते तदा ॥ १० ॥ ततः स्मार्त्तं
विवाहाग्निं श्रौतं वा पूजयेत्क्रमात् ॥ प्रतिग्रहधनो भूत्वा दंभलोभविवर्जितः ॥ ११ ॥ पंचयज्ञविधानानि कारयेद्वै यथाविधि ॥ वनं गच्छेत्ततः
पश्चाद्द्वितीयाश्रमसेवनात् ॥१२॥ पुत्रेषु भार्यां निक्षिप्य सर्वसंगविवर्जितः ॥ इष्टाँल्लोकानवाप्नोति न चेह जायते पुनः ॥ १३ ॥ क्षत्रियस्तु स्थितो
राज्ये पालयित्वा वसुन्धराम् ॥ शश्वद्धर्ममनाश्चैव प्राप्नोति परमां गतिम् ॥ १४ ॥ वैश्यधर्मो न संदेहः कृषिगोरक्षणे रतः ॥ सत्यशौचसमो
पेतो गच्छते स्वर्गमुत्तमम् ॥ १५ ॥ न शूद्रस्य पृथग्धर्मो विहितः परमेष्ठिना ॥ न मन्त्रो न च संस्कारो न विद्यापरिसेवनम् ॥ १६ ॥ न शब्द
विद्यासमयो देवताभ्यर्चनानि च ॥ यथा जातेन सततं वर्त्तितव्यमहर्निशम् ॥ १७ ॥ स धर्मः सर्ववर्णानां पुरा सृष्टः स्वयंभुवा ॥ मन्त्रसंस्कारसंप
न्नास्त्रयो वर्णा द्विजातयः ॥ १८ ॥ तेषां मतमनादृत्य यदि वर्त्तेत कामतः ॥ स मृतो जायते श्वा वै गतिरूर्ध्वा न विद्यते ॥ १९ ॥ न तेषां प्रेषणं
 नित्यं तेषां मतमनुस्मरन् ॥ यशोभागी स्वधर्मस्थः स्वर्गभागी स जायते ॥ २० ॥ एवं गुणगणाकीर्णोऽवसद्विप्रः स भारत ॥ हनस्वेतिहन 
स्वेति शृणोति वाक्यमीदृशम् ॥ २१ ॥ ततो निरीक्षते चोर्ध्वमधश्चव दिशो दश ॥ वेपमानः स भीतश्च प्रस्खलंश्च पदेपदे ॥ २२ ॥ शृंखलायुध
हस्तैश्च पाशैश्चैव सुदारुणैः ॥ वेष्टितं महिषारूढं नरं पश्यति मन्मुखम् ॥ २३ ॥ कृष्णांजनचयप्रख्यं कृष्णांबरविभूषितम् ॥ रक्ताक्षमायतभुजं

सर्वलक्षणलक्षितम् ॥ २४ ॥ दृष्ट्वा तं तु समायांतं निरीक्ष्यात्मानमात्मना ॥ जपञ्जाप्यं च परमं शतरुद्रीयसंस्तवम् ॥ २५ ॥ ततः प्रोवाच भगवान्यमः संयमनो महान् ॥ शृणु वाक्यमतो ब्रह्मन्यमोऽहं सर्वजन्तुषु ॥ २६ ॥ संहरस्व महाभाग रुद्रजाप्यं सुदुर्भिदम् ॥ येनाहं काल पाशैस्त्वां संयमामि गतव्यथः ॥ २७ ॥ तच्छ्रुत्वा निष्ठुरं वाक्यं यमस्य मुखनिर्गतम् ॥ महाभयसमोपेतो ब्राह्मणः प्रपलायितः ॥ २८ ॥ तस्य मार्गे गताः सर्वे यमेन सह किंकराः ॥ तिष्ठतिष्ठेति तं विप्रमूचुस्ते सोऽप्यधावत ॥ २९ ॥ त्वरमाणः परिश्रांतो हा हतोऽहं दुरात्मभिः ॥ रक्षरक्ष महादेव शरणागतवत्सल ॥ ३० ॥ एवमुक्त्वाऽपतद्भूमौ लिंगमालिंग्य भारत ॥ गतसत्त्वः स विप्रेंद्रः समाश्रित्य सुरेश्वरम् ॥ ३१ ॥ तं दृष्ट्वा पतितं भूमौ देवदेवो महेश्वरः ॥ को हनिष्यति माभैस्त्वं हुंकारमकरोत्तदा ॥ ३२ ॥ तेन ते किंकराः सर्वे यमेन सह भारत ॥ हुं कारेण गताः सर्वे मेघा वातहता यथा ॥ ३३ ॥ तदाप्रभृति तत्तीर्थं कोहनस्वेति विश्रुतम् ॥ सर्वपापहरं पुण्यं सर्वतीर्थेष्वनुत्तमम् ॥ ३४ ॥ तत्र तीर्थे तु यः स्नात्वा पूजयेत्परमेश्वरम् ॥ अग्निष्टोमस्य यज्ञस्य फलमाप्नोत्यनुत्तमम् ॥ ३५ ॥ तत्र तीर्थे तु राजेंद्र प्राणत्यागं करोति यः ॥ न पश्यति यमं देवमित्येवं शंकरोऽब्रवीत् ॥ ३६ ॥ अग्निप्रवेशं यः कुर्याज्जले वा नृपसत्तम ॥ अग्निलोके वसेत्तावद्यावत्कल्पशतत्रयम् ॥ ३७ ॥ एवं वरुणलोकेऽपि वसित्वा कालमीप्सितम् ॥ इह लोकमनुप्राप्तो महाधनपतिर्भवेत् ॥ ३८ ॥ इति श्रीस्कांदे महापुराण एकाशीतिसाहस्र्यां संहितायां पञ्चम आवंत्यखण्डे रेवाखण्डे कोहनतीर्थमाहात्म्यवर्णनंनाम द्वाविंशत्युत्तरशततमोऽध्यायः ॥ १२२ ॥ ॥ छ ॥ ॥ ॥ ॥ मार्कंडेय उवाच ॥ ॥ ततो गच्छेत्तु राजेंद्र कर्मदीतीर्थमुत्तमम् ॥ यत्र तिष्ठति विघ्नेशो गणनाथो महाबलः ॥ १ ॥ तत्र तीर्थे नरः स्नात्वा चतुर्थ्यां वा ह्युपोषितः ॥ विघ्नं न विद्यते तस्य सप्तजन्मनि भारत ॥ २ ॥ तत्र तीर्थे हि यत्किंचिद्दीयते नृपसत्तम ॥ तदक्षयफलं सर्वं जायते नाऽत्र संशयः ॥ ३ ॥ इति श्रीस्कांदे महापुराण एकाशीतिसाहस्र्यां संहितायां पञ्चम आवन्त्यखण्डे रेवाखण्डे कर्मदेश्वरतीर्थमाहत्म्यवर्णनंनाम त्रयो विंशत्युत्तरशततमोऽध्यायः ॥ १२३ ॥ ॥ छ ॥ ॥ ॥ श्रीमार्कंडेय उवाच ॥ ॥ ततो गच्छेन्महीपाल नर्मदेश्वरमुत्तमम् ॥ तत्र तीर्थे नरः स्नात्वा मुच्यते सर्वकिल्बिषैः ॥ १ ॥ अग्निप्रवेशश्च जलेऽथवा मृत्युरनाशके ॥ अनिवर्त्तिका गतिस्तस्य यथा मे शंकरोऽब्रवीत् ॥ २ ॥ इति श्रीस्कांदे महापुराण एकाशीतिसाहस्र्यां संहितायां पञ्चम आवन्त्यखंडे रेवाखंडे नर्मदेश्वरतीर्थमाहात्म्यवर्णनं नाम चतुर्विंशत्युत्तरशत तमोऽध्यायः॥ १२४ ॥ ॥ छ ॥ ॥ श्रीमार्कंडेय उवाच ॥ ॥ ततो गच्छेन्महीपाल रवितीर्थमनुत्तमम् ॥ यत्र देवः सहस्रांशुस्तप्तस्तप्त्वा

दिवं गतः ॥ १ ॥ ॥ युधिष्ठिर उवाच ॥ ॥ कथं देवो जगद्धाता सर्वदेवनमस्कृतः ॥ तपस्तपति देवेशस्तापसो भास्करो रविः ॥२॥ आराध्यःसर्वभूतानां सर्वदेवैश्च पूजितः ॥ प्रत्यक्षो दृश्यते लोके सृष्टिसंहारकारकः ॥३॥ आदित्यत्वं कथं प्राप्तः कथं भास्कर उच्यते ॥ सर्वमेतत्समासेन कथयस्व ममाऽनघ ॥ ४ ॥ ॥ मार्कंडेय उवाच ॥ ॥ महाप्रश्नो महाराज यस्त्वया परिपृच्छितः ॥ तत्सर्वं संप्रवक्ष्यामि नमस्कृत्य स्वयंभुवम् ॥ ५ ॥ आसीदिदं तमोभूतमप्रज्ञातमलक्षणम् ॥ अप्रतर्क्यमविज्ञेयं प्रसुप्तमिव सर्वतः ॥ ६ ॥ ततस्तेजश्च दिव्यं च तप्तपिंडमनुत्तमम् ॥ आकाशात्तु यथैवोल्कासृष्टिहेतोरधोमुखी ॥७॥ तत्तेजसोऽतः पुरुषः संजातः सर्वभूषितः ॥ स शिवोऽपाणिपादश्च येन सर्वमिदं ततम्॥ ८ ॥ तस्योत्पन्नस्य भूतस्य तेजोरूपस्य भारत ॥ पश्चात्प्रजापतिर्भूयः कालः कालांतरेण वै ॥ ९ ॥ अग्निर्जातः स भूतानां मनुष्यासुररक्षसाम ॥ सर्वदेवाधिदेवश्च आदित्यस्तेन चोच्यते ॥१०॥ आदौ तस्य नमस्कारोन्येषां च तदनंतरम् ॥ क्रियते देवतैः सर्वैस्तेन सर्वैर्महर्षिभिः ॥११॥ तिस्रः संध्यास्त्रयो देवाः सांन्निध्याः[1] सूर्यमण्डले ॥ नमस्कृतेन सूर्येण सर्वे देवा नमस्कृताः ॥ १२ ॥ न दिवा न भवेद्रात्रिः षण्मासा दक्षिणायनम् ॥ अयनं चोत्तरं चाऽपि भास्करेण विना नृप ॥ १३ ॥ स्नानं दानं जपो होमः स्वाध्यायो देवतार्चनम् ॥ न वर्त्तते विना सूर्यं तेन पूज्यतमो रविः ॥ १४ ॥ शब्दगाः श्रुतिमुख्याश्च ब्रह्मविष्णुमहेश्वराः ॥ प्रत्यक्षो भगवान्देवो दृश्यते लोकपावनः ॥ १५ ॥ उत्पत्तिः प्रलयस्थानं निधानं बीजमव्ययम् ॥ हेतुरेको जगन्नाथो नाऽन्यो विद्येत भास्करात् ॥ १६ ॥ एवमात्मभवं कृत्वा जगत्स्थावरजंगमम् ॥ लोकानां तु हितार्थाय स्थापयेद्धर्मपद्धतिम् ॥ १७ ॥ नर्मदातटमाश्रित्य स्थापयित्वाऽत्मनस्तनुम् ॥ सहस्रांशुं निधिं धाम्नां जगामाऽऽकाशमव्ययम् ॥ १८ ॥ तत्र तीर्थे तु यः स्नात्वा पूजयेत्परमेश्वरम् ॥ सहस्रकिरणं देवं नाममन्त्रविधानतः ॥ १९ ॥ तेन तप्तं हुतं तेन तेन सर्वमनुष्ठितम् ॥ तेन सम्यग्विधानेन संप्राप्तं परमं पदम् ॥ २० ॥ ते धन्यास्ते महात्मानस्तेषां जन्म सुजीवितम् ॥ स्नात्वा ये नर्मदातोये देवं पश्यंति भास्करम् ॥ २१ ॥ तथा देवस्य राजेंद्र ये कुर्वंति प्रदक्षिणम् ॥ अनन्यभक्त्या सततं त्रिरक्षरसमन्विताः[2] ॥ २२ ॥ तेन पूतशरीरास्ते मंत्रेण गतपातकाः ॥ यत्पुण्यं च भवेत्तेषां तदिहैकमनाः शृणु ॥ २३ ॥ ससमुद्रगुहा तेन सशैलवनकानना ॥ प्रदक्षिणीकृता सर्वा पृथिवी नाऽत्र संशयः ॥ २४ ॥ मंत्रमूलमिदं सर्वं त्रैलोक्यं सचराचरम् ॥ तेन मंत्रविहीनं तु कार्यं लोके न सिद्धयति ॥ २५ ॥ यथा काष्ठमयो हस्ती यथा चर्ममयो मृगः ॥ कार्यार्थं नैव सिद्ध्येत तथा कर्म ह्यमंत्रकम् ॥ २६ ॥ यथा

१ सान्निध्याः—कृतसंनिधाना—इत्यर्थः । ३ त्रिः - त्रिवारम्—अक्षरसमन्विताः—मन्त्रजपकर्तारः—इत्यर्थः ।

भस्महुतं पार्थ यथा तोयविवर्जितम् ॥ निष्फलं जायते दानं तथा मंत्रविवर्जितम् ॥ २७ ॥ काष्ठपाषाणलोष्ठेषु मृन्मयेषु विशेषतः ॥ मं
त्रेण लोके पूजां तु कुर्वन्ति न ह्यमंत्रतः ॥ २८ ॥ द्वादशाब्दान्नमस्काराद्भक्त्या यल्लभते फलम् ॥ मंत्रयुक्तनमस्कारात्सकृत्तल्लभते फलम् ॥ २९ ॥
संक्रांतौ च व्यतीपाते अयने विषुवे तथा ॥ नर्मदाया जले स्नात्वा यस्तु पूजयते रविम् ॥ ३० ॥ द्वादशाब्देन यात्पापमज्ञानज्ज्ञानसंचितम् ॥
तत्क्षणान्नश्यते सर्वं वह्निना तु तुषं यथा ॥ ३१ ॥ चन्द्रसूर्यग्रहे स्नात्वा सोपवासो जितेंद्रियः ॥ तत्रादित्यमुखं दृष्ट्वा मुच्यते सर्वकिल्बिषैः ॥
॥ ३२ ॥ माघमासे तु संप्राप्ते सप्तम्यां नृपसत्तम ॥ सोपवासो जितक्रोध उषित्वा सूर्यमंदिरे ॥ ३३ ॥ प्रातः स्नात्वा विधानेन ददात्यर्घं
दिवाकरे ॥ विधिना मंत्रयुक्तेन स लभेत्पुण्यमुत्तमम् ॥ ३४ ॥ पितृदेवमनुष्याणां कृत्वा ह्युदकतर्पणम् ॥ मंदिरे देवदेवस्य ततः पूजां समाचरेत्
॥ ३५ ॥ गंधैः पुष्पैस्तथा धूपैर्दीपनैवेद्यशोभनैः ॥ पूजयित्वा जगन्नाथं ततो मंत्रमुदीरयेत् ॥ ३६ ॥ विष्णुः शक्रो यमो धाता मित्रोऽथ वरुण
स्तथा ॥ विवस्वान्सविता पूषा चंडांशुर्भर्ग एव च ॥ ३७ ॥ इति द्वादशनामानि जपन्कृत्वा प्रदक्षिणाम् ॥ यत्फलं लभते पार्थ तदिहैकमनाः
शृणु ॥ ३८ ॥ दरिद्रो व्याधितो मूको बधिरो जड एव च ॥ न भवेत्सप्त जन्मानि इत्येवं शंकरोऽब्रवीत् ॥ ३९ ॥ एवं ज्ञात्वा विधानेन जपन्मंत्रं
विचक्षणः ॥ आराधयेद्रविं भक्त्या य इच्छेत्पुण्यमुत्तमम् ॥ ४० ॥ मंत्रहीनां तु यः कुर्याद्भक्तिं देवस्य भारत ॥ स विडंबति चात्मानं पशु
कीटपतंगवत् ॥ ४१ ॥ तत्र तीर्थे तु यः कश्चित्त्यजते देहमुत्तमम् ॥ स गतस्तत्र देवैस्तु पूज्यमानो महर्षिभिः ॥४२॥[1]स्वेच्छया सुचिरं कालमिह
लोके नृपो भवेत् ॥ ४३ ॥ पुत्रपौत्रसमायुक्तो हस्त्यश्वरथसंकुलः ॥ दासीदासशतोपेतो जायते विपुले कुले ॥ ४४ ॥ इति श्रीस्कांदे महापुराण
एकाशीतिसाहस्र्यां संहितायां पञ्चम आवन्त्यखण्डे रेवाखंडे रवितीर्थमाहत्म्यवर्णनंनाम पञ्चविंशत्युत्तरशततमोऽध्यायः ॥ १२५ ॥ ॥ छ ॥ ॥
मार्कंडेय उवाच ॥ ॥ ततो गच्छेत्तु राजेंद्र परं तीर्थमयोनिजम् ॥ स्नातमात्रो नरस्तत्र न पश्येद्योनिसंकटम् ॥ १ ॥ तत्र तीर्थे नरः स्नात्वा
पूजयेद्देवमीश्वरम् ॥ अयोनिजो महादेव यथा त्वं परमेश्वर ॥ २ ॥ तथा मोचय मां देव संभवाद्योनिसंकटात् ॥ गंधपुष्पादिधूपैश्च स मुच्येत्सर्व
पातकैः ॥ ३ ॥ तस्य देवस्य यो भक्त्या कुरुते [2]लिंगपूरणम् ॥ स वसेद्देवदेवस्य यावत्सिक्थस्य संख्यया ॥ ४ ॥ अयोनिजे महादेवं स्नापयेद्गंध

---

१ मूर्खः—इ० पा० । २ दध्योदनेन—इति सांप्रदायिकाचारस्मरणात् ।

वारिणा ॥ मधुक्षीरेण दध्ना वा स लभेद्विपुलां श्रियम् ॥ ५ ॥ अष्टम्यां च सिते पक्षे असितां वा चतुर्दशीम् ॥ पूजयित्वा महादेवं प्रीणयेद्गीतवा
द्यकैः ॥ ६ ॥ वसेत्स च शिवे लोके ये कुर्वंति मनोहरम् ॥ ते वसंति शिवे लोके यावदाभूतसंप्लवम् ॥ ७ ॥ तस्य देवस्य भक्त्या तु यः करोति
प्रदक्षिणाम् ॥ विज्ञापयंश्च सततं मंत्रेणानेन भारत ॥ ८ ॥ तस्य यत्फलमुद्दिष्टं पारंपर्येण मानवैः ॥ सकाशादेवदेवस्य तच्छृणुष्व समा[ ]ना ॥ ९ ॥
अयोनिजो महादेव यथा त्वं परमेश्वर ॥ तथा मोचय मां शर्व संभवाद्योनिसंकटात् ॥ १० ॥ किं तस्य बहुभिर्मंत्रैः कंठशोषणतत्परैः ॥ येनों
नमः शिवायेति प्रोक्तं देवस्य सन्निधौ ॥ ११ ॥ तेनाऽधीतं श्रुतं तेन तेन सर्वमनुष्ठितम् ॥ येनोंनमः शिवायेति मंत्राभ्यासः स्थिरीकृतः ॥ १२ ॥
न तत्फलमवाप्नोति सर्वदेवेषु वै द्विजः ॥ यत्फलं समवाप्नोति षडक्षर उदीरणात् ॥ १३ ॥ तत्र तीर्थे तु यः स्नात्वा पूजयेच्छिवयोगिनम् ॥ द्विजा
नामयुतं साग्रं स लभेत्फलमुत्तमम् ॥ १४ ॥ अथवा भक्तियुक्तस्तु तेषां दांते जितेंद्रिये ॥ संस्कृत्य ददते भिक्षां फलं तस्य ततोधिकम् ॥ १५ ॥
यतिहस्ते जलं दद्याद्भिक्षां दत्त्वा पुनर्जलम् ॥ सा भिक्षा मेरुणा तुल्या तज्जलं सागरोपमम् ॥ १६ ॥ इति श्रीस्कांदे महापुराण एकाशीतिसाह
स्र्यां संहितायां पञ्चम आवन्त्यखण्डे रेवाखण्डे अयोनिप्रभवतीर्थमाहात्म्यवर्णनंनाम षड्विंशत्युत्तरशततमोऽध्यायः ॥ १२६ ॥ ॥ छ ॥ ॥
मार्कंडेय उवाच ॥ ॥ ततो गच्छेत्तु राजेंद्र अग्नितीर्थमनुत्तमम् ॥ तत्र स्नात्वा तु पक्षादौ मुच्यते सर्वकिल्बिषैः ॥ १ ॥ तत्र तीर्थे तु यः कन्यां
दद्यात्स्वयमलंकृताम् ॥ तस्य यत्फलमुद्दिष्टं तच्छृणुष्व नरोत्तम ॥ २ ॥ अग्निष्टोमातिरात्राभ्यां शतं शतगुणीकृतम् ॥ प्राप्नोति पुरुषो दत्त्वा यथा
शक्त्या ह्यलंकृताम् ॥ ३ ॥ तस्याः पुत्रप्रपौत्राणां या भवेद्रोमसंगतिः ॥ स याति तेन मानेन शिवलोके परां गतिम् ॥ ४ ॥ इति श्रीस्कांदे महा
पुराण एकाशीतिसाहस्र्यां संहितायां पञ्चम आवन्त्यखंडे रेवाखंडे अग्नितीर्थमाहात्म्यवर्णनंनाम सप्तविंशत्युत्तरशततमोऽध्यायः ॥ १२७ ॥
॥ छ ॥ ॥ मार्कंडेय उवाच ॥ ॥ ततो गच्छेत्तु राजेंद्र भृकुटेश्वरमुत्तमम् ॥ यत्र सिद्धो महाभागो भृगुः परमकोपनः ॥ १ ॥
तेन वर्षशतं साग्रं तपश्चीर्णं पुराऽनघ ॥ पुत्रार्थं वरयामास पुत्रं पुत्रवतां वरः ॥ २ ॥ वरो दत्तो महाभाग देवेनांधकघातिना ॥
॥ ९९ ॥ तत्र तीर्थे तु यः स्नात्वा पूजयेत्परमेश्वरम् ॥ ३ ॥ अग्निष्टोमस्य यज्ञस्य फलमष्टगुणं लभेत् ॥ भृकुटेशं तु यः कश्चिद्घृतेन मधुना ॥२७१॥

१ मनोहरम्--लीलाचरित्रानुसंधनं- इत्यर्थोऽनुमानात्प्राप्ति । २ अनेन--अयोनिज महादेव इत्यादिना वक्ष्यमाणेन--इत्यर्थः । ३ असन्धिरत्रार्षः। ४ तेन मानेन तद्रोमपरिमितवर्षप्रमाणेन--इत्यर्थः ।

सह ॥ ४ ॥ पुत्रार्थी स्नापयेद्भक्त्या स लभेत्पुत्रमीप्सितम् ॥ तत्र तीर्थे तु यः स्नात्वा दद्याद्विप्राय कांचनम् ॥ ५ ॥ गोदानं वा महीं वाऽपि तस्य पुण्यफलं शृणु ॥ ६ ॥ ससमुद्रगुहा तेन सशैलवनकानना ॥ दत्ता पृथ्वी न संदेहस्तेन सर्वा नृपोत्तम ॥ ७ ॥ तेन दानेन स स्वर्गे क्रीडयित्वा यथासुखम् ॥ मर्त्ये भवति राजेंद्रो ब्राह्मणो वा सुपूजितः ॥ ८ ॥ इति श्रीस्कांदे महापुराण एकाशीतिसाहस्र्यां संहितायां पंचम आवन्त्यखण्डे रेवाखण्डे भृकुटेश्वरतीर्थमाहात्म्यवर्णनंनामाष्टाविंशत्युत्तरशततमोऽध्यायः ॥ १२८ ॥ ॥ छ ॥ ॥ श्रीमार्कंडेय उवाच ॥ ॥ ततो गच्छेन्महीपाल ब्रह्मतीर्थमनुत्तमम् ॥ अन्येषां चैव तीर्थानां परात्परतरं महत् ॥ १ ॥ तत्र तीर्थे सुरश्रेष्ठो ब्रह्मा लोकपितामहः॥ चतुर्णामपि वर्णानां नर्मदातटमाश्रितः ॥ २ ॥ वाचिकं मानसं पापं कर्मजं यत्पुराकृतम् ॥ तत्क्षालयति देवेशो दर्शनादेव पातकम् ॥ ३ ॥ श्रुतिस्मृत्युदितान्येव तत्र स्नात्वा द्विजर्षभाः ॥ प्रायश्चित्तानि कुर्वंति तेषां वासस्त्रिविष्टपे ॥ ४ ॥ ये पुनः शास्त्रमुत्सृज्य कामलोभप्रपीडिताः ॥ प्रायश्चित्तं वदिष्यंति ते वै निरयगामिनः ॥ ५ ॥ स्नात्वाऽदौ पातकी ब्रह्मन्नत्वा तु कीर्त्तयेदघम् ॥ तस्य तन्नश्यते क्षिप्रं तमः सूर्योदये यथा ॥ ६ ॥ तत्र तीर्थे तु यः स्नात्वा पूजयेत्पितृदेवताः ॥ अग्निष्टोमस्य यज्ञस्य स लभेत्फलमुत्तमम् ॥ ७ ॥ तत्र तीर्थे तु यद्दानं ब्रह्मोद्दिश्य[1] प्रयच्छति ॥ तदक्षयफलं सर्वमित्येवं शंकरोऽब्रवीत् ॥ ८ ॥ गायत्रीसारमात्रोऽपि तत्र यः क्रियते जपः ॥ ऋग्यजुःसाममहितः स भवेन्नात्र संशयः ॥ ९ ॥ तत्र तीर्थे तु यो भक्त्या त्यजेद्देहं सुदुस्त्यजम् ॥ अनिवर्त्तिका गतिस्तस्य ब्रह्मलोकान्न संशयः ॥ १० ॥ यावदस्थीनि तिष्ठंति ब्रह्मतीर्थे च देहिनाम् ॥ तावद्वर्षसहस्राणि देवलोके महीयते ॥ ११ ॥ अवतीर्णस्ततो लोके ब्रह्मज्ञो जायते कुले ॥ उत्तमः सर्ववर्णानां देवानामिव देवता ॥ १२ ॥ विद्यास्थानानि सर्वाणि वेत्ति वेदांगपारगः ॥ जायते पूजितो लोके राजभिः स न संशयः ॥ १३ ॥ पुत्रपौत्रसमोपेतः सर्वव्याधिविवर्जितः ॥ जीवेद्वर्षशतं साग्रं ब्रह्मतीर्थप्रभावतः ॥ १४ ॥ एतत्पुण्यं पापहरं तीर्थं ज्ञानवतां वरम् ॥ ये पश्यंति महात्मानो ह्यमृतत्वं प्रयांति ते ॥ १५ ॥ इति श्रीस्कांदे महापुराण एकाशीतिसाहस्र्यां संहितायां पंचम आवन्त्यखण्डे रेवाखण्डे ब्रह्मतीर्थमाहात्म्यवर्णनंनामैकोनत्रिंशदधिकशततमोऽध्यायः ॥ ॥ १२९ ॥ ॥ छ ॥ ॥ श्रीमार्कंडेय उवाच ॥ ॥ नर्मदादक्षिणे कूले देवतीर्थमनुत्तमम् ॥ तत्र देवैः समागत्य तोषितः परमेश्वरः ॥ १ ॥

---

१ ब्र॰ ।दिश्य—ब्रह्मार्पणमस्तु—इत्युक्त्वा—इत्यर्थः ।

तत्र तीर्थे तु यः स्नात्वा कामक्रोधविवर्जितः ॥ स लभेन्नात्र संदेहो गोसहस्रफलं ध्रुवम् ॥ २ ॥ इति श्रीस्कान्दे महापुराण एकाशीतिसाहस्र्यां संहि
तायां पञ्चम आवन्त्यखण्डे रेवाखण्डे देवतीर्थमाहात्म्यवर्णनंनाम त्रिंदशदधिकशततमोऽध्यायः ॥ १३० ॥ ॥ छ ॥ ॥ श्रीमार्कंडेय
उवाच ॥ ॥ नर्मदादक्षिणे कूले नागतीर्थमनुत्तमम् ॥ यत्र सिद्धा महानागा भये जाते ततो नृप ॥ १ ॥ ॥ युधिष्ठिर उवाच ॥ ॥ महाभयानां
लोकस्य नागानां द्विजसत्तम ॥ कथं जातं भयं तीव्रं येन ते तपसि स्थिताः ॥ २ ॥ भूतं भव्यं भविष्यच्च यत्सुरासुरमानवे ॥ तात ते विदितं सर्वं
तेन मे कौतुकं महत् ॥ ३ ॥ मम संतापजं दुःखं दुर्योधनसमुद्भवम् ॥ तव वक्त्रांबुजौघेन प्लावितं निर्वृतिं गतम् ॥ ४ ॥ श्रुत्वा तव मुखोद्गीतां कथां
पापप्रणाशनीम् ॥ भूयोभूयः स्मृतिर्जाता श्रवणे मम सुव्रत ॥ ५ ॥ न क्लेशत्वं द्विजे युक्तं न चान्यो जानते फलम् ॥ विद्यादानस्य महतः श्रावित
स्य सुतस्य च ॥ ६ ॥ एवं ज्ञात्वा यथान्यायं यः प्रश्नःपृच्छितो मया ॥ कथा तु कथ्यतां विप्र दयां कृत्वा ममोपरि ॥ ७ ॥ ॥ मार्कंडेय उवाच ॥
यथायथा त्वं नृप भाषसे च तथा तथा मे सुखमेति भारती ॥ शैथिल्यभावाज्जरयाऽन्वितस्य त्वत्सौहृदं नश्यति नैव तात ॥ ८ ॥ कथयामियथा
वृत्तमितिहासं पुरातनम् ॥ कथितं पूर्वतो वृद्धैः पारंपर्येण भारत ॥ ९ ॥ द्वे भार्ये कश्यपस्याऽऽस्तां सर्वलोकेष्वनुत्तमे ॥ गरुत्मतो वै विनता सर्पाणां
कद्रुरेव च ॥ १० ॥ अश्वसंदर्शनात्ताभ्यां कलिरूपं व्यवस्थितम् ॥ प्रभातकाले राजेंद्र भास्कराकारवर्चसम् ॥ ११ ॥ तं दृष्ट्वा विनता
रूपमश्वं सर्वत्र पांडुरम् ॥ अथ तां कद्रूमवोचत्सा पश्य पश्य वरानने ॥ १२ ॥ उच्चैःश्रवसः सादृश्यं पश्य सर्वत्र पांडुरम् ॥ धाव
मानमविश्रांतं जवेन पवनोपमम् ॥ १३ ॥ तं दृष्ट्वा सहसा यांतमीर्ष्याभावेन मोहिता ॥ कृष्णं मत्वा तथाऽजल्पत्तया सह नृपो
त्तम ॥ १४ ॥ विनते त्वं मृषा लोके नृशंसे कुलपांसनि ॥ कृष्णं चैनं वद श्वेतं नरकं यास्यसे परम् ॥ १५ ॥ ॥ विनतोवाच ॥
सत्याऽनृते तु वचने पणोऽयं ते ममैव तु ॥ सहस्रं वत्सरान्दासी भवेयं तव वेश्मनि ॥ १६ ॥ तथेति ते प्रतिज्ञाय रात्रौ गत्वा स्वकं गृहम् ॥ परि
त्यज्य उभे ते तु क्रोधमूर्छितमूर्छिते ॥ १७ ॥ बन्धुगर्वस्य गत्वा तु कथयामास तं पणम् ॥ कद्रूर्विनतया सार्द्धं यद्वृत्तं प्रमदालये ॥ १८ ॥
॥१००॥ तच्छ्रुत्वा बांधवाः सर्वे कद्रूपुत्रास्तथैव च ॥ न मन्यंते हितं कार्यं कृतं मात्रा विगर्हितम् ॥ १९ ॥ अकृष्णः कृष्णतामेव कथं गच्छेद्धयोत्तमः ॥ ॥२७४॥

१ एतदध्यायकथाभागः पूर्वं–प्रोक्त एव–पुनरत्रोच्यते–पूर्वत्र–वासुकिचरित्रम्--अत्र च सर्वनागचरित्रमस्ति--किंचित्पदरचनायां विशेषश्चास्ति कद्रूविनताचरितं तूभयत्र समानम् । २ माता--इति शेषः ।
३ अत्रापि–माता--इत्येवाधारः । ४ वदसि चेत्--इत्यध्याहारः ।

दासत्वं प्राप्स्यसे त्वं हि पणेनाऽनेन सुव्रते ॥ २० ॥ ॥ कद्रूरुवाच ॥ ॥ भवेयं न यथादासी तत्कुरुध्वं हि सत्वरम् ॥ विशध्वं रोमकूपेषु तस्याश्वस्य मतिर्मम ॥ २१ ॥ क्षणमात्रं कृते कार्ये सा दासी च भवेन्मम ॥ ततः स्वस्थोरगाः सर्वे भविष्यथ यथासुखम् ॥ २२ ॥ ॥ सर्पा ऊचुः ॥ ॥ यथा त्वं जननी देवि पन्नगानां मता भुवि ॥ तथाऽपि सा विशेषेण वंचितव्या न कर्हिचित् ॥ २३ ॥ ॥ कद्रूरुवाच ॥ ॥ मम वाक्यमकुर्वाणा ये केचिद्भुवि पन्नगाः ॥ हव्यवाहमुखं सर्वे ते यास्यंत्यविचारिताः ॥ २४ ॥ एतच्छ्रुत्वा तु वचनं घोरं मातृमुखोद्भवम् ॥ केचित्प्रविष्टा रोमाणि तथाऽन्ये गिरिसंस्थिताः ॥ २५ ॥ केचित्प्रविष्टा जाह्नव्यामन्ये च तपसि स्थिताः ॥ २६ ॥ ततो वर्षसहस्रांते तुतोष परमेश्वरः ॥ महादेवो जगद्धाता ह्युवाच परया गिरा ॥ २७ ॥ भो भोः सर्पा निवर्त्तध्वं तपसोऽस्य महत्फलम् ॥ यमिच्छथ ददाम्यद्य नाऽत्र कार्या विचारणा ॥ २८ ॥ ॥ सर्पा ऊचुः ॥ ॥ कद्रूशापभयाद्भीता देवदेव महेश्वर ॥ तव पार्श्वे वसिष्यामो यावदाभूतसंप्लवम् ॥ २९ ॥ ॥ देवदेव उवाच ॥ ॥ एकश्चायं महाबाहुर्वासुकिर्भुजगोत्तमः ॥ मम पार्श्वे वसेन्नित्यं सर्वेषां भयरक्षकः ॥ ३० ॥ अन्येषां चैव सर्पाणां भयं नाऽस्ति ममाऽऽज्ञया ॥ आप्लुत्य नर्मदातोये भुजगास्ते च रक्षिताः ॥ ३१ ॥ नास्ति मृत्युभयं तेषां वसध्वं यत्र चेप्सितम् ॥ कद्रूशापभयं नाऽस्ति ह्येष मे विस्तरः परः ॥ ३२ ॥ एवं दत्त्वा वरं तेषां देवदेवो महेश्वरः ॥ जगामाऽऽकाशमाविश्य कैलासं धरणीधरम् ॥ ३३ ॥ गते चादर्शनं देवे वासुकिप्रमुखा नृप ॥ स्थापयित्वा तथा जग्मुर्देवदेवं महेश्वरम् ॥ ३४ ॥ तत्र तीर्थे तु यः कश्चित्पंचम्यामर्चयेच्छिवम् ॥ तस्य नागकुलान्यष्टौ न हिंसंति कदाचन ॥ ३५ ॥ मृतः कालेन महता तत्र तीर्थे नरेश्वर ॥ शिवस्यानुचरो भूत्वा वसते कालमीप्सितम् ॥ ३६ ॥ इति श्रीस्कांदे महापुराण एकाशीतिसाहस्र्यां संहितायां पंचम आवन्त्यखण्डे रेवाखण्डे नागेश्वरतीर्थमाहात्म्यवर्णनं नामैकत्रिंशदधिकशततमोऽध्यायः ॥ १३१ ॥ ॥ छ ॥ ॥ ॥ श्रीमार्कंडेय उवाच ॥ ॥ ततो गच्छेत्तु राजेंद्र उत्तरे नर्मदातटे ॥ सर्वपापहरं तीर्थं वाराहंनाम नामतः ॥ १ ॥ तत्र देवो जगद्धाता वाराहं रूपमास्थितः ॥ स्थितो लोकहितार्थाय संसारार्णवतारकः ॥ २ ॥ तत्र तीर्थे तु यः स्नात्वा पूजयेद्धरणीधरम् ॥ गंधमाल्यविशेषैश्च जयशब्दादिमंगलैः ॥ ३ ॥ उपवासपरो भूत्वा द्वादश्यां नृपसत्तम ॥ वृषलाः पापकर्माणस्तथैवांधपिशाचिनः ॥ ४ ॥ आलापाद्गात्रसंपर्कान्निःश्वासात्सहभोजनात् ॥ पापं संक्रमते यस्मात्तस्मात्तान्परिवर्जयेत् ॥ ५ ॥ ब्राह्मणान्पूजयेद्भक्त्या यथाशक्त्या यथाविधि ॥ रात्रौ जागरणं कार्यं कथायां तत्र भारत ॥ ६ ॥ प्रभाते विमले स्नात्वा तत्र तीर्थे जगद्गुरुम् ॥ ये पश्यंति जितक्रोधास्ते मुक्ताः सर्वपातकैः ॥ ७ ॥ यथा तु दृष्ट्वा भुजगाः सुपर्णं

नश्यंति मुक्ता विषमुग्रतेजः ॥ नश्यंति पापानि तथैव शीघ्रं दृष्ट्वा मुखं शूकररूपिणस्तु ॥८॥ नभोगतं नश्यति चांधकारं दृष्ट्वा रविं देववरं तथैव ॥
नश्यंति पापानि सुदुस्तराणि दृष्ट्वा मुखं पार्थ धराधरस्य ॥ ९ ॥ किं तस्य बहुभिर्मंत्रैर्भक्तिर्यस्य जनार्दने ॥ नमो नारायणायेति मंत्रः सर्वार्थसा
धकः ॥ १० ॥ एकोऽपि कृष्णस्य कृतः प्रणामो दशाश्वमेधावभृथेन तुल्यः ॥ दशाश्वमेधी पुनरेति जन्म कृष्णप्रणामी न पुनर्भवाय ॥ ११ ॥
ध्यायमाना महात्मानो रूपं नारायणं हरेः ॥ ये त्यजंति स्वकं देहं तत्र तीर्थे जितेंद्रियाः ॥ १२ ॥ ते गच्छन्त्यमलं स्थानं यत्सुरैरपि दुर्लभम् ॥
क्षराक्षरविनिर्मुक्तं तद्विष्णोः परमं पदम् ॥ १३ ॥ इति श्रीस्कांदे महापुराण एकाशीतिसाहस्र्यां संहितायां पंचम आवन्त्यखण्डे रेवा
खण्डे आदिवाराहतीर्थमाहात्म्यवर्णनंनाम द्वात्रिंशदधिकशततमोऽध्यायः ॥ १३२ ॥ ॥ छ ॥ ॥ श्रीमार्कंडेय उवाच ॥ ॥
ततो गच्छेन्महीपाल परं तीर्थचतुष्टयम् ॥ येषां दर्शनमात्रेण सर्वपापक्षयो भवेत् ॥ १ ॥ कौबेरं वारुणं याम्यं वायव्यं तु ततः परम् ॥
यत्र सिद्धा महाप्राज्ञा लोकपाला महाबलाः ॥ २ ॥ ॥ युधिष्ठिर उवाच ॥ ॥ किमर्थं लोकपालैश्च तपश्चीर्णं पुराऽनघ ॥ नर्मदातटमाश्रित्य
ह्येतन्मे वक्तुमर्हसि ॥ ३ ॥ ॥ श्रीमार्कंडेय उवाच ॥ ॥ अधिष्ठानं समिच्छन्ति ह्यचलं निर्बले सति ॥ संसारे सर्वभूतानां तृणबिन्दुवदस्थिरे ॥
॥ ४ ॥ कदलीसारनिःसारे मृगतृष्णेव चंचले ॥ स्थावरे जंगमे सर्वे भूतग्रामे चतुर्विधे ॥ ५ ॥ धर्मो माता पिता धर्मो धर्मो बन्धुः सुहृत्तथा ॥
आधारः सर्वभूतानां त्रैलोक्ये सचराचरे ॥ ६ ॥ एवं ज्ञात्वा तु ते सर्वे लोकपालाः कृतक्षणाः ॥ तपस्ते चक्रुरतुलं मारुताहारतत्पराः ॥ ७ ॥ तत
स्तुष्टो महादेवः कृतस्यार्द्धे गते तदा ॥ अनुरूपेण राजेंद्र युगस्य परमेश्वरः॥ ८ ॥ वरेण च्छंदयामास लोकपालान्महाबलान् ॥ यो यमिच्छति कामं
वै तंतं तस्य ददाम्यहम् ॥ ९ ॥ एतच्छ्रुत्वा वचस्तस्य लोकपाला जगद्धिताः ॥ वरदं प्रार्थयामासुर्देवं वरमनुत्तमम् ॥ १० ॥ ॥ कुवेर उवाच ॥ ॥
यदि तुष्टो महादेव यदि देयो वरो मम ॥ यक्षाणामीश्वरश्चाहं भवामि धनदस्त्विति ॥ ११ ॥ ततः प्रोवाच देवेशं यमः संयमने रतः ॥ तत्र प्रधानो
भगवान्भवेयं सर्वजंतुषु ॥ १२ ॥ वरुणोऽनंतरं प्राह प्रणम्य तु महेश्वरम् ॥ क्रीडेयं वारुणे लोके यादोगणसमन्वितः ॥ १३ ॥ जगादाऽऽशु ततो
वायुः प्रणम्य तु महेश्वरम् ॥ व्यापकत्वं त्रिलोकेषु प्रार्थयामास भारत ॥ १४ ॥ तेषां यदीप्सितं काममुमया सह शंकरः ॥ सर्वेषां लोकपालानः
दत्त्वा चादर्शनं गतः ॥ १५ ॥ गते महेश्वरे देवे यथास्थानं तु ते स्थिताः ॥ स्थापना च कृता सर्वैः स्वनाम्नैव पृथक्पृथक् ॥ १६ ॥ कुवेरश्च
कुवेरेशं यमश्चैव यमेश्वरम् ॥ वरुणो वरुणेशं तु वातो वातेश्वरं नृप ॥१७॥ तर्पणं विदधुः सर्वे मंत्रैश्च विविधैः शुभैः ॥ सर्वे सर्वेश्वरं देव पूजयित्वा

यथाविधि ॥ १८ ॥ आह्वयामासुस्तान्विप्रान्सर्वे सर्वेश्वराइव ॥ क्षांतदांतजितक्रोधान्सर्वभूताभयप्रदान् ॥ १९ ॥ वेदविद्याव्रतस्नातान्सर्वशास्त्रविशारदान् ॥ ऋग्यजुःसामसंयुक्तांस्तथाऽथर्व्वविभूषितान् ॥ २० ॥ चातुर्विध्यं तु सर्वेषां दानं दास्याम गृह्णत ॥ एवमुक्ता तु सर्व्वेषां विप्राणां दानमुत्तमम् ॥ २१ ॥ तत्र स्थाने ददुस्तेषां भूमिदानमनुत्तमम् ॥ यावच्चंद्रश्च सूर्यश्च यावत्तिष्ठति मेदिनी ॥ २२ ॥ तावद्दानं तु युष्माकं परिपंथी न कश्चन ॥ राजा वा राजतुल्यो वा लोकपालैरनुत्तमम् ॥ २३ ॥ दत्तं लोपयते मूढः श्रूयतां तस्य यो विधिः ॥ शोषयेद्धनदो वित्तं तस्य पापस्य भारत ॥ २४ ॥ शरीरं वरुणो देवः संततीं श्वसनस्तथा ॥ आयुर्नयति तस्याऽऽशु यमः संयमनो महान् ॥ २५ ॥ निःशेषं भस्मसात्कृत्वा हुतभुग्याति भारत ॥ तस्मात्सर्वप्रयत्नेन ब्राह्मणेभ्यो युधिष्ठिर ॥ भक्तिः कार्या नृपैः सर्वैरिच्छद्भिः श्रेय आत्मनः ॥ २६ ॥ राजा वृक्षो ब्राह्मणास्तस्य मूलं भृत्याः पर्णा मंत्रिणस्तस्य शाखाः ॥ तस्मान्मूलं यत्नतो रक्षणीयं मूले गुप्ते नास्ति वृक्षस्य नाशः ॥ २७ ॥ षष्टिवर्षसहस्राणि स्वर्गे तिष्ठति भूमिदः ॥ आच्छेत्ता चाऽवमंता च तान्येव[1] नरके वसेत् ॥ २८ ॥ स्वदत्ता परदत्ता वा पालनीया वसुन्धरा ॥ यस्ययस्य यदा भूमिस्तस्य तस्य तदा फलम् ॥ २९ ॥ देवताज्ञामनुस्मृत्य राजानो येऽपि तां नृप ॥ पालयिष्यंति सततं तेषां वासस्त्रिविष्टपे ॥ ३० ॥ स्वदत्ता परदत्ता वा यत्नाद्रक्ष्या युधिष्ठिर ॥ मही महीक्षिता नित्यं दानाच्छ्रेयोऽनुपालनम् ॥ ३१ ॥ आयुर्यशो बलं वित्तं संततिश्चाऽक्षया नृप ॥ तेषां भविष्यते नूनं ये प्रजापालने रताः ॥ ३२ ॥ एवमुक्ता तु तान्सर्वांल्लोकपालान्द्विजोत्तमान् ॥ पूजयित्वा विधानेन प्रणिपत्य व्यसर्जयन् ॥ ३३ ॥ गतेषु विप्रमुख्येषु स्नात्वा हुतहुताशनाः ॥ लोकपालाः क्षुधाविष्टाः पर्यटन्भैक्षमात्मनः ॥ ३४ ॥ अस्थिचर्मावशेषांगाः कपालोद्धतपाणयः ॥ अलब्धग्रासमर्द्धार्धं निर्ययुर्नगराद्बहिः ॥ ३५ ॥ शापं दत्त्वा तदा क्रोधाद्ब्राह्मणाय युधिष्ठिर ॥ दरिद्राः सततं मूर्खा भवेयुश्च ययुर्गृहान् ॥ ३६ ॥ तदाप्रभृति ते सर्वे ब्राह्मणा धनवर्जिताः ॥ शापदोषेण कौबेर्यां संजाता दुःखभाजनाः ॥ ३७ ॥ न धनं पैतृकं पुत्रैर्न पिता पुत्रपौत्रिकम् ॥ भुञ्जते सकलं कालमित्येवं शंकरोऽब्रवीत् ॥ ३८ ॥ कुबेरेशे नरः स्नात्वा यस्तु पूजयते शिवम् ॥ गंधधूपनमस्कारैः सोऽश्वमेधफलं लभेत् ॥ ३९ ॥ यमतीर्थे तु यः स्नात्वा संपश्यति यमेश्वरम् ॥ सर्वपापैः प्रमुच्येत सप्तजन्मांतरार्जितैः ॥ ४० ॥ पूर्णमास्याममावास्यां स्नात्वा तु पितृतर्पणम् ॥ यः करोति तिलैः स्नानं तस्य पुण्यफलं शृणु ॥ ४१ ॥ सुतृप्तास्तेन तोयेन पितरश्च पितामहाः ॥ स्वर्गस्था द्वादशाब्दानि क्रीडन्ति

१ तान्येव–षष्टिवर्षसहस्राणि–इत्यर्थः ।

प्रपितामहाः ॥ ४२ ॥ वरुणेशे नरः स्नात्वा ह्यर्चयित्वा महेश्वरम् ॥ वाजपेयस्य यज्ञस्य फलं प्राप्नोति पुष्कलम् ॥ ४३ ॥ मृतां
कालेन महता लोके यत्र जलेश्वरः ॥ स गच्छेत्तत्र यानेन गीयमानोऽप्सरोगणैः ॥ ४४ ॥ धातेश्वरे नरः स्नात्वा संपूज्य च महेश्वरम् ॥
जायते कृतकृत्योऽसौ लोकपालानवेक्षयन् ॥ ४५ ॥ किं तस्य बहुभिर्यज्ञैर्दानैर्वा बहुदक्षिणैः ॥ स्नात्वा चतुष्टये लोके अवाप्तं जन्मनः
फलम् ॥ ४६ ॥ ते धन्यास्ते महात्मानस्तेषां जन्म सुजीवितम् ॥ नित्यं वसंति कौरित्यां[1] लोकपालान्निमंत्र्य ये ॥ ४७ ॥ एतत्पुण्यं
पापहरं धन्यमायुर्विवर्धनम् ॥ पठतां शृण्वतां चैव सर्वपापक्षयो भवेत् ॥ इति श्रीस्कांदे महापुराण एकाशीतिसाहस्र्यां संहितायां पञ्चम आवन्त्य
खंडे रेवाखंडे कुबेरादितीर्थचतुष्टयमाहात्म्यवर्णनंनाम त्रयस्त्रिंशदधिकशततमोऽध्यायः ॥ १३३ ॥ ॥ छ ॥ ॥ श्रीमार्कंडेय उवाच ॥ ॥
नर्मदादक्षिणे कूले रामेश्वरमनुत्तमम् ॥ तीर्थं पापहरं पुण्यं सर्वदुःखघ्नमुत्तमम् ॥ १ ॥ तत्र तीर्थे तु ये स्नात्वा पूजयंति महेश्वरम् ॥ महादेवं
महात्मानं मुच्यंते सर्वकिल्बिषैः ॥ २ ॥ इति श्रीस्कांदे महापुराण एकाशीतिसाहस्र्यां संहितायां पंचम आवन्त्यखंडे रेवाखण्डे रामेश्वरतीर्थमाहा
त्म्यवर्णनंनाम चतुस्त्रिंशदधिकशततमोऽध्यायः ॥ १३४ ॥ ॥ छ ॥ ॥ श्रीमार्कंडेय उवाच ॥ ॥ तस्यैवानंतरं चान्यत्सिद्धेश्वरमनुत्तमम् ॥
तीर्थं सर्वगुणोपेतं सर्वलोकेषु पूजितम्[2] ॥ १ ॥ तत्र तीर्थे तु यः स्नात्वा ह्युमारुद्रं प्रपूजयेत् ॥ वाजपेयस्य यज्ञस्य स लभेत्फलमुत्तमम् ॥ २ ॥
तेन पुण्येन महता मृतः स्वर्गमवाप्नुयात् ॥ अप्सरोगणसंवीतो जयशब्दादिमंगलैः ॥ ३ ॥ सहस्रवत्सरांस्तत्र क्रीडयित्वा यथासुखम् ॥ धनधान्य
समोपेते कुले महति जायते ॥ ४ ॥ पूज्यमानो नरश्रेष्ठ वेदवेदांगपारगः ॥ व्याधिशोकविनिर्मुक्तो जीवेच्च शरदां शतम् ॥ ५ ॥ इति श्रीस्कांदे
महापुराण एकाशीतिसाहस्र्यां संहितायां पंचम आवन्त्यखंडे रेवाखंडे सिद्धेश्वरमाहात्म्यवर्णनंनाम पंचत्रिंशदधिकशततमोऽध्यायः ॥ १३५ ॥
॥ छ ॥ ॥ श्रीमार्कंडेय उवाच ॥ ॥ ततो गच्छेन्महीपाल चाहल्येश्वरमुत्तमम् ॥ यत्र सिद्धा महाभागा त्वहल्या तापसी पुरा ॥ १ ॥ गौतमो
ब्राह्मणस्त्वासीत्साक्षाद्ब्रह्मेव चाऽपरः ॥ सत्यधर्मसमायुक्तो वानप्रस्थाश्रमे रतः ॥ २ ॥ तस्य पत्नी महाभागा ह्यहल्यानाम विश्रुता ॥ रूपयौवनसंपन्ना
॥१०२॥ त्रिषु लोकेषु विश्रुता ॥ ३ ॥ अस्या अप्यतिरूपेण देवराजः शतक्रतुः ॥ मोहितो लोभयामास ह्यहल्यां बलसूदनः ॥ ४ ॥ मां भजस्व ॥२७६॥
वरारोहे देवराजमनिंदिते ॥ क्रीडयस्व मया सार्द्धं त्रिषु लोकेषु पूजिता ॥ ५ ॥ किं करिष्यसि विप्रेण शौचाचारकृशेन तु ॥ तपःस्वाध्या

१ कौरित्याम्—कौवेर्याम्—इत्यर्थः । २ सर्वलोकेषु पूजितम्—इ०पा० ।

यशीलेन क्लिश्यंतीव सुलोचने ॥ ६ ॥ एवमुक्ता वरारोहा स्त्रीस्वभावात्सुचंचला ॥ मनसाऽध्याय शक्रं सा कामेन कलुषीकृता ॥ ७ ॥ तस्या विदित्वा तं भावं स देवः पाकशासनः ॥ गौतमं वंचयामास दुष्टभावेन भावितः ॥ ८ ॥ विदित्वा चांतरं तस्य गृहीत्वा वेषमुत्तमम् ॥ अहल्यां रमयामास विश्वस्तां मंदिरांतिके ॥ ९ ॥ क्षणमात्रांतरे तत्र देवराजस्य भारत ॥ आजगाम मुनिश्रेष्ठो मंदिरं त्वरयाऽन्वितः ॥ १० ॥ आगतं गौतमं दृष्ट्वा भीतभीतः पुरंदरः ॥ निर्गतः स ततो दृष्ट्वा शक्रोऽयमिति चिंतयन् ॥ ११ ॥ ततः शशाप देवेंद्रं गौतमः क्रोधमूर्च्छितः ॥ अजितें द्रियोऽसि यस्मात्त्वं तस्माद्बहुभगो भव ॥ १२ ॥ एवमुक्तस्तु देवेंद्रस्तत्क्षणादेव भारत ॥ भगानां तु सहस्रेण तत्क्षणादेव वेष्टितः ॥ १३ ॥ त्यक्त्वा राज्यं सुरैः सार्द्धं गतश्रीको जगाम ह ॥ तपश्चचार विपुलं गौतमेन महीतले ॥ १४ ॥ अहल्याऽपि ततः शप्ता यस्मात्त्वं दुष्टचारिणी ॥ प्रेक्ष्य मां रमसे शक्रं तस्मादश्ममयी भव ॥ १५ ॥ गते वर्षसहस्रांते रामं दृष्ट्वा यशस्विनम् ॥ तीर्थयात्राप्रसंगेन धौतपापा भविष्यसि ॥ १६ ॥ एवं गते ततः काले दृष्टा रामेण धीमता ॥ विश्वामित्रसहायेन त्यक्त्वा साऽश्ममयीं तनुम् ॥ १७ ॥ पूजयित्वा यथान्यायं गतपापा विमत्सरा ॥ आगता नर्मदातीरे तीर्थे स्नात्वा यथाविधि ॥ १८ ॥ कृतं चांद्रायणं मासं कृच्छ्रं चाऽन्यं ततः परम् ॥ ततस्तुष्टो महादेवो दत्त्वा वरमनुत्त मम् ॥ १९ ॥ जगामाऽदर्शनं भूयो रेमे चोमापतिश्चिरम् ॥ अहल्या तु गते देवे स्थापयित्वा जगद्गुरुम् ॥ २० ॥ अहल्येश्वरनामानं स्वगृहे चागमत्पुनः ॥ तत्र तीर्थे तु यः स्नात्वा पूजयेत्परमेश्वरम् ॥ २१ ॥ स मृतः स्वर्गमाप्नोति यत्र देवो महेश्वरः ॥ क्रीडयित्वा यथाकामं तत्र लोके महातपाः ॥ २२ ॥ गते वर्षसहस्रांते मानुष्यं लभते पुनः ॥ धनधान्यचयोपेतः पुत्रपौत्रैसमन्वितः ॥ २३ ॥ वेदविद्याऽऽश्रयो धीमाञ्जायते विमले कुले ॥ रूपसौभाग्यसंपन्नः सर्वव्याधिविवार्जितः ॥ जीवेद्वर्षशतं साग्रमहल्यातीर्थसेवनात् ॥ २४ ॥ इति श्रीस्कांदे महापुराण एका शीतिसाहस्र्यां संहितायां पञ्चम आवन्त्यखण्डे रेवाखण्डे अहल्यातीर्थमाहात्म्यवर्णनंनाम षट्त्रिंशदधिकशततमोऽध्यायः ॥ १३६ ॥ छ ॥

॥ ॥ मार्कंडेय उवाच ॥ ॥ धर्मपुत्र ततो गच्छेत्कर्कटेश्वरमुत्तमम् ॥ उत्तरे नर्मदाकूले सर्वपापक्षयं करम् ॥ १ ॥ तत्र स्नात्वा विधानेन यस्तु पूजयते शिवम् ॥ अनिवर्त्तिका गतिस्तस्य रुद्रलोकादसंशयम् ॥ २ ॥ तस्य तीर्थस्य माहात्म्यं पुराणे यच्छ्रुतं मया ॥ न तद्वर्णयितुं शक्यं संक्षेपेण वदाम्यतः ॥ ३ ॥ तत्र तीर्थे तु यः कुर्यात्किंचित्कर्म शुभाशुभम् ॥ हर्षान्मदान्महाराज तत्सर्वं जायतेऽक्षयम् ॥ ॥ ४ ॥ तत्र तीर्थे तपस्तप्त्वा वालखिल्या मरीचयः ॥ रमंतेऽद्यापि लोकेषु स्वेच्छया कुरुनन्दन ॥ ५ ॥ तत्रस्थास्तत्र जानन्ति नरा

ज्ञानबहिष्कृताः ॥ शरीरस्थमिवाऽऽत्मानमक्षयं ज्योतिरव्ययम् ॥ ६ ॥ तत्र तीर्थे नृपश्रेष्ठ देवी नारायणी पुरा ॥ अद्यापि तपते घोरं तपो यावत्किलार्बुदम् ॥ ७ ॥ तत्र तीर्थे तु यः स्नात्वा तर्प्पयेत्पितृदेवताः ॥ तस्य ते द्वादश।ब्दानि तृप्तिं यांति पितामहाः ॥ ८ ॥ इति श्रीस्कांदे महापुराण एकाशीतिसाहस्र्यां संहितायां पंचम आवन्त्यखण्डे रेवाखण्डे कर्कटेश्वरती माहात्म्यवर्णनंनाम सप्तत्रिंशदधिकशततमोऽध्यायः ॥ १३७ ॥ ॥ छ ॥ ॥ श्रीमार्कंडेय उवाच ॥ ॥ ततो गच्छेत्पांडुपुत्र शक्रतीर्थमनुत्तमम् ॥ यत्र सिद्धो महाभागो देवराजः शतक्रतुः ॥ १ ॥ गौतमेन पुरा शप्तं ज्ञात्वा देवाः सुरेश्वरम् ॥ ज्ञात्वा देवताः सर्व ऋषयश्च तपोधनाः ॥ २ ॥ गौतमं प्रार्थयामासुर्वाक्यैः सानुनयैः शुभैः ॥ गतराज्यं गतश्रीकं शक्रं प्रति मुनीश्वर ॥ ३ ॥ इन्द्रेण रहितं राज्यं न कश्चित्कामयेद्दिज ॥ देवो वा मानवो वाऽपि एतत्ते विदितं प्रभो ॥ ४ ॥ तस्य त्वं भगयुक्तस्य दयां कुरु द्विजोत्तम ॥ गतश्चादर्शनं शक्रो दूषितः स्वेन पाप्मना ॥ ५ ॥ देवानां वचनं श्रुत्वा गौतमो वेदवित्तमः ॥ तथेति कृत्वा शक्रस्य वरं दातुं प्रचक्रमे ॥ ६ ॥ एतद्भगसहस्रं तु पुरा जातं शतक्रतो ॥ तल्लोचनसहस्रं तु मत्प्रसादाद्भविष्यति ॥ ७ ॥ एवमुक्तः सहस्राक्षः प्रणम्य मुनिसत्तमम् ॥ ब्राह्मणांस्तान्महाभागान्नर्मदां प्रत्यगात्ततः ॥ ८ ॥ स्नात्वा स विमले तोये संस्थाप्य त्रिपुरांतकम् ॥ जगाम त्रिदशावासं पूज्यमानोऽप्सरोगणैः ॥ ॥ ९ ॥ तत्र तीर्थे तु यः स्नात्वा पूजयेत्परमेश्वरम् ॥ परदाराभिगमनान्मुच्यते पातकान्नरः ॥ १० ॥ इति श्रीस्कान्दे महापुराण एकाशीतिसाहस्र्यां संहितायां पञ्चम आवन्त्यखण्डे रेवाखण्डे शक्रतीर्थमाहात्म्यवर्णनंनामाष्टत्रिंशदधिकशततमोऽध्यायः ॥ १३८ ॥ ॥ छ ॥ ॥ श्रीमार्कंडेय उवाच ॥ ॥ ततो गच्छेन्महाराज सोमतीर्थमनुत्तमम् ॥ यत्र सोमस्तपस्तप्त्वा नक्षत्रपथमास्थितः ॥ १ ॥ तत्र तीर्थे तु यः स्नायादाचम्य विधिपूर्वकम् ॥ कृतजाप्यो रविं ध्यायेत्तस्य पुण्यफलं शृणु ॥ २ ॥ ऋग्वेदयजुर्वेदाभ्यां सामवेदेन भारत ॥ जपतो यत्फलं प्रोक्तं गायत्र्या चाऽत्र तत्फलम् ॥ ३ ॥ तत्र तीर्थे तु यो भक्त्या ब्राह्मणान्भोजयेच्छुचिः ॥ तेन सम्यग्विधानेन कोटिर्भवति भोजिता ॥ ४ ॥ पादुकोपानहौ छत्रं वस्त्रं कंबलवाजिनः ॥ यो दत्ते विप्रमुख्याय तस्य तत्कोटिसंमितम् ॥ ५ ॥ सहस्रं तु सहस्राणामनृचां यस्तु भोजयेत् ॥ एकस्य मंत्रयुक्तस्य कलां

॥१०३॥ नार्हति षोडशीम्॥ ६ ॥एवं तु भोजयेत्तत्र बह्वृचं वेदपारगम् ॥ शाखांतगमथाध्वर्युं छंदोगं वा समाप्तिगम् ॥ ७ ॥ अग्निहोत्रसहस्रस्य यत्फलं प्राप्यते ॥२७७॥

बुधैः ॥ समं तद्वेदविदुषा तीर्थे सोमस्य तत्फलम् ॥ ८ ॥ भोजयेद्यः शतं तेषां सहस्रं लभते नरः ॥ एकस्य योगयुक्तस्य तत्फलं कवयो विदुः॥९॥

१ अध्वर्युं—यजुर्वेदिनम्—इत्यर्थः । आध्वर्यवं यजुर्वेदिनामेव—सर्वत्र यज्ञेषु ।

सन्निरुध्येंद्रियग्रामं यत्रयत्र वसेन्मुनिः ॥ तत्रतत्र कुरुक्षेत्रं नैमिषं पुष्कराणि च ॥ १० ॥ तस्मात्सर्वप्रयत्नेन ग्रहणे चंद्रसूर्ययोः ॥ संक्रांतौ च व्यतीपाते योगी भोज्यो विशेषतः ॥ ११ ॥ संन्यासं कुरुते यस्तु तत्र तीर्थे युधिष्ठिर ॥ विमानेन महाभागाः स याति त्रिदिवं नरः ॥ १२ ॥ सोमस्याऽनुचरो भूत्वा तेनैव सह मोदते ॥ १३ ॥ इति श्रीस्कांदे महापुराण एकाशीतिसाहस्र्यां संहितायां पंचम आवन्त्यखण्डे रेवाखण्डे सोमतीर्थमाहात्म्यवर्णनंनामैकोनचत्वारिंशदधिकशततमोऽध्यायः ॥ १३९ ॥ ॥छ॥ ॥ मार्कंडेय उवाच ॥ ॥ ततो गच्छेन्महाराज नंदाह्रदमनुत्तमम् ॥ यत्र सिद्धा महाभागा नंदादेवी वरप्रदा ॥ १ ॥ महिषासुरे महाकये पुरा देवभयंकरे ॥ शूलिन्या शूलभिन्नांगे कृते दानवसत्तमे ॥ २ ॥ येनैकादश रुद्राश्च ह्यादित्याः समरुद्गणाः ॥ वसवो वायुना सार्द्धं चन्द्रादित्यौ सुरेश्वर ॥ ३ ॥ बलिना निर्जिता येन ब्रह्मविष्णुमहेश्वराः ॥ संग्रामे सुमहाघोरे कृते देवभयंकरे ॥ ४ ॥ कृत्वा तत्कदनं घोरं नंदा देवी सुरेश्वरी ॥ यस्मात्स्नाता विशालाक्षी तेन नंदाह्रदः स्मृतः ॥ ५ ॥ तत्र तीर्थे तु यः स्नात्वा नंदामुद्दिश्य भारत ॥ ददाति दानं विप्रेभ्यः सोऽश्वमेधफलं लभेत् ॥ ६ ॥ भैरवं चैव केदारं तथा रुद्रं महालयम् ॥ नंदाह्रदश्चतुर्थः स्यात्पंचमं भुवि दुर्लभम् ॥ ७ ॥ बहवस्तं न जानंति कामरागसमन्विताः ॥ नर्मदायां ह्रदं पुण्यं सर्वपातकनाशनम् ॥ ८ ॥ तत्र तीर्थे तु यः स्नात्वा नंदां देवीं प्रपूजयेत् ॥ किं तस्य हिमवन्मध्यगमनेन प्रयोजनम् ॥ ९ ॥ परमार्थमविज्ञाय पर्यटंति तमोवृताः ॥ तेषां समागमे पार्थ श्रम एव हि केवलम् ॥ १० ॥ पृथिव्यां सागरांतायां स्नानदानेन यत्फलम् ॥ तत्फलं समवाप्नोति स्नात्वा नंदाह्रदे नृप ॥ ११ ॥ इति श्रीस्कान्दे महापुराण एकाशीतिसाहस्र्यां संहितायां पंचम[१] आवन्त्यखण्डे रेवाखण्डे नन्दाह्रदतीर्थमाहात्म्यवर्णनंनाम चत्वारिंशदधिकशततमोऽध्यायः ॥ १४० ॥ ॥ छ ॥ ॥ श्रीमार्कंडेय उवाच ॥ ॥ ततो गच्छेन्महीपाल तापेश्वरमनुत्तमम् ॥ यत्र सा हरिणी सिद्धा व्याधभीता नरेश्वर ॥ १ ॥ जले प्रक्षिप्य गात्राणि ह्यंतरिक्षं गता तु सा ॥ व्याधो विस्मितचित्तस्तु तां मृगीमवलोक्य च ॥२॥ विमुच्य सशरं चापं प्रारेभे तप उत्तमम् ॥ दिव्यं वर्षसहस्रं तु व्याधेनाऽऽचरितं तपः ॥ ३ ॥ अतीते तु ततः काले परितुष्टो महेश्वरः ॥ वरं ब्रूहि महाव्याध यत्ते मनसि रोचते ॥ ॥ ४ ॥ ॥ व्याध उवाच ॥ ॥ यदि तुष्टोऽसि,देवेश यदि देयो वरो मम ॥ तव पार्श्वे महादेव वासो मे प्रतिदीयताम् ॥ ५ ॥ ॥ ईश्वर उवाच ॥ ॥ एवं भवतु ते व्याध यस्त्वया कांक्षितो वरः ॥ देवदेवो महादेव इत्युक्त्वांतरधीयत ॥ गते चाऽदर्शनं देवे स्थापयित्वा महेश्वरम् ॥ ६ ॥

१ छंदोगम्–सामवेदाध्यायिनम् ।

पूजयित्वा विधानेन गतो व्याधस्ततो दिवम् ॥ तदाप्रभृति तत्तीर्थं त्रिषु लोकेषु विश्रुतम् ॥ ७ ॥ व्याधानुतापसंजातं तापेश्वरमिति श्रुतम् ॥ तत्र तीर्थे तु यः स्नात्वा संपूजयति शंकरम् ॥ ८ ॥ शिवलोकमवाप्नोति मामुवाच महेश्वरः ॥ ये स्नाता नर्मदातोये तीर्थे तापेश्वरे नराः ॥ ९ ॥ तापत्रय विमुक्तास्ते नाऽत्र कार्या विचारणा ॥ अष्टम्यां च चतुर्दश्यां तृतीयायां विशेषतः ॥ १० ॥ स्नानं समाचरेन्नित्यं सर्वपातकशांतये ॥ ११ ॥ इति श्रीस्कांदे महापुराण एकाशीतिसाहस्र्यां संहितायां पञ्चम आवन्त्यखण्डे रेवाखण्डे तापेश्वरतीर्थमाहात्म्यवर्णनंनामैकचत्वारिंशदधिकशततमोऽध्यायः ॥ १४१ ॥ ॥ छ ॥ ॥ श्रीमार्कंडेय उवाच ॥ ॥ ततो गच्छेन्महाराज रुक्मिणीतीर्थमुत्तमम् ॥ यत्रैव स्नानमात्रेण रूपवान्सुभगो भवेत् ॥ १ ॥ अष्टम्यां च चतुर्दश्यां तृतीयायां विशेषतः ॥ स्नानं समाचरेत्तत्र न चेह जायते पुनः ॥ २ ॥ यः स्नात्वा रुक्मिणीतीर्थे दानं दद्यात्तु कांचनम् ॥ तत्तीर्थस्य प्रभावेन शोकं नाप्नोति मानवः ॥ ३ ॥ ॥ युधिष्ठिर उवाच ॥ ॥ तीर्थस्याऽस्य कथं जातो महिमेदृङ्मुनीश्वर ॥ रूपसौभाग्यदं येन तीर्थमेतद्ब्रवीहि मे ॥ ४ ॥ ॥ मार्कंडेय उवाच ॥ ॥ कथयामि यथावृत्तमितिहासं पुरातनम् ॥ कथितं पूर्वतो वृद्धैः पारंपर्येण भारत ॥ ५ ॥ तन्तेहं संप्रवक्ष्यामि शृणुष्वैकाग्रमानसः ॥ नगरं कुंडिनं नाम भीष्मको परिपाति हि ॥ ६ ॥ हस्त्यश्वरथसंपन्नो धनाढ्योऽति प्रतापवान् ॥ स्त्रीसहस्रस्य मध्यस्थः कुरुते राज्यमुत्तमम् ॥ ७ ॥ तस्य भार्या महादेवी प्राणेभ्योऽपि गरीयसी ॥ तस्यामुत्पादयामास पुत्रमेकं च रुक्मकम् ॥ ८ ॥ द्वितीया तनया जज्ञे रुक्मिणी नाम नामतः ॥ तदाऽशरीरिणी वाचा राजानं तमुवाच ह ॥ ९ ॥ चतुर्भुजाय दातव्या कन्येयं भुवि भीष्मक ॥ एवं तद्वचनं श्रुत्वा जहर्ष प्रियया सह ॥ १० ॥ ब्राह्मणैः सह विद्वद्भिः प्रविष्टः सूतिकागृहम् ॥ स्वस्तिकं वाचयित्वास्याश्चक्रे नामेति रुक्मिणी ॥ ११ ॥ यतः सुवर्णतिलको जन्मना सह भारत ॥ ततः सा रुक्मिणीनाम ब्राह्मणैः कीर्त्तिता तदा ॥ १२ ॥ ततः सा कालपर्यायादष्टवर्षा व्यजायत ॥ पूर्वोक्तं चैव तद्वाक्यमशरीरिण्युदीरितम् ॥ १३ ॥ स्मृत्वा स्मृत्वाऽथ नृपतिश्चिंतयामास भूपतिः ॥ कस्मै देया मया बाला भविता कश्चतुर्भुजः ॥ १४ ॥ एतस्मिन्नंतरे तावद्रैवतात्पर्वतोत्तमात् ॥ मुख्यश्चेदिपतिस्तत्र दमघोषः समागतः ॥ १५ ॥ प्रविष्टो राजसदनं यत्र राजा स

॥१०४॥ भीष्मकः ॥ तं दृष्ट्वा चाऽऽगतं गेहे पूजयामास भूपतिः ॥ १६ ॥ आसनं विपुलं दत्त्वा सभां गत्वा निवेशितः ॥ कुशलं तव राजेंद्र दमघोष श्रियायुत ॥ १७ ॥ पुण्याहमद्य संजातमहं त्वद्दर्शनोत्सुकः ॥ कन्या मदीया राजेंद्र ह्यष्टवर्षा व्यजायत ॥ १८ ॥ चतुर्भुजाय दातव्या वागुवाचाऽशरीरिणी ॥ भीष्मकस्य वचः श्रुत्वा दमघोषोऽब्रवीदिदम् ॥ १९ ॥ चतुर्भुजो मम सुतस्त्रिषु लोकेषु विश्रुतः ॥ तस्येयं दीयतां कन्या शिशुपालस्य ॥२७८॥

भीष्मक ॥ २० ॥ तस्य तद्वचनं श्रुत्वा दमघोषस्य भूमिप ॥ भीष्मकेन ततो दत्ता शिशुपालाय रुक्मिणी ॥ २१ ॥ प्रारब्धं मंगलं तत्र भीष्मकेण
युधिष्ठिर ॥ दिक्षु देशांतरेष्वेव ये वसंति स्वगोत्रजाः ॥ २२ ॥ निमंत्रितास्तु ते सर्वे समाजग्मुर्यथाक्रमम् ॥ ततो यादववंशस्य तिलकौ बलके
शवौ ॥ २३ ॥ निमंत्रितौ समायातौ कुंडिनं भीष्मकस्य तु ॥ भीष्मकेण यथान्यायं पूजितौ तौ यदूत्तमौ ॥ २४ ॥ ततः प्रदोषसमये रुक्मिणी
काममोहिनी ॥ सखीभिः सहिता याता पूर्वहिश्वांबिकार्चने ॥ २५ ॥ साऽपश्यत्तत्र देवेशं गोपवेषधरं हरिम् ॥ तं दृष्ट्वा मोहमापन्ना कामेन कलु
षीकृता ॥ २६ ॥ केशवोऽपि च तां दृष्ट्वा संकर्षणमुवाच ह ॥ स्त्रीरत्नप्रवरं तात हर्तव्यमिति मे मतिः ॥ २७ ॥ केशव
स्य वचः श्रुत्वा संकर्षण उवाच ह ॥ गच्छ कृष्ण महाबाहो स्त्रीरत्नं चाऽऽशु गृह्यताम् ॥ २८ ॥ अहं च तव मार्गेण
ह्यागमिष्यामि पृष्ठतः ॥ दानवानां च सर्वेषां कुर्वंश्च कदनं महत् ॥ २९ ॥ संकर्षणमतं प्राप्य केशवः केशिसूदनः ॥ ययौ
कन्यां गृहीत्वा तु रथमारोप्य सत्वरम् ॥ ३० ॥ निर्गतः सहसा राजन्वेगेनैवाऽनिलो यथा ॥ हाहाकारस्तदा जातो भीष्मक
स्य पुरे महान् ॥ ३१ ॥ निर्गता दानवाः क्रुद्धा वेला इव महोदधेः ॥ गर्जंतः सायुधाः सर्वे धावंतो रथवर्त्मनि ॥ ३२ ॥ बलदेवं ततः प्राप्ता रथ
मार्गाऽनुगामिनम् ॥ तेषां युद्धं बलस्याऽसीत्सर्वलोकक्षयंकरम् ॥ ३३ ॥ यथा तारामये पूर्वं संग्रामे लोकविश्रुते ॥ गदाहस्तो महाबाहुस्त्रैलो
क्येऽप्रतिमो बलः ॥ ३४ ॥ हलेनाऽऽकृष्य सहसा गदापातैरपातयत् ॥ अशक्यो दानवैर्हंतुं बलभद्रो महाबलः ॥ ३५ ॥ बभंज दानवान्सर्वांस्त
स्थौ गिरिरिवाऽचलः ॥ तं दृष्ट्वा च बलं क्रुद्धं दुर्धर्षं त्रिदशैरपि ॥ ३६ ॥ भीष्मपुत्रो महातेजा रुक्मीनाम महायशाः ॥ नराणामतिशूरणामक्षौ
हिण्या समन्वितः ॥ ३७ ॥ बलभद्रमतिक्रम्य ततो युद्धे निराकरोत् ॥ तद्युद्धं वंचयित्वा तु रथमार्गेण सत्वरम् ॥ ३८ ॥ केशवोऽपि तदा देवो
रुक्मिण्या सहितो ययौ ॥ विंध्यं तु लंघयित्वाऽग्रे त्रैलोक्यगुरुरव्ययः ॥ ३९ ॥ नर्मदातटमापेदे यत्र सिद्धः पुरा पुनः ॥ अजेयो येन संजात
स्तीर्थस्यास्य प्रभावतः ॥ ४० ॥ एतस्मात्कारणात्तातयोधनीपुरमुच्यते ॥ रुक्मोऽपि दानवेंद्रोऽसौ प्राप्तः स्थानमनुत्तमम् ॥ ४१ ॥ प्रत्युवाचा
ऽच्युतं क्रुद्धस्तिष्ठतिष्ठेति मा व्रज ॥ अद्य त्वां निशितैर्बाणैर्नेष्यामि यमसादनम् ॥ ४२ ॥ एवं परस्परं वीरौ जगर्जतुरुभावपि ॥ तयोर्युद्धमभू
द्घोरं तारकाग्निजसन्निभम् ॥ ४३ ॥ चिक्षेप शरजालानि केशवं प्रति दानवः ॥ नाऽनुचिंत्य शरांस्तस्य केशवः केशिसूदनः ॥ ४४ ॥ ततो

१ रुक्मशब्दोऽयं द्विधा—अकारान्त इन्नन्तश्च प्रायः सर्वेषु पुस्तकेषु दृश्यते ।

रुक्मोथ संक्रुद्धो गृहीत्वा धनुरुत्तमम् ॥ सायकेन सुतीक्ष्णेन तं बिभेद तदोरसि ॥ ४५ ॥ ततो विष्णुः स्वयं क्रुद्धश्चक्रं गृह्य सुदर्शनम् ॥
संप्रहरत्यमुं यावद्रुक्मिण्याऽत्र निवारितः ॥ ४६ ॥ त्वां न जानाति देवेशं चतुर्बाहुं जनार्दनम् ॥ दर्शयस्व स्वकं रूपं दयां कृत्वा ममोपरि ॥
॥ ४७ ॥ एवमुक्तस्तु रुक्मिण्या दर्शयामास भारत ॥ देवा दृष्ट्वापि तद्रूपं स्तुवंत्याकाशसंस्थिताः ॥ दिव्यं चक्षुस्तदा देवो ददौ रुक्मस्य
भारत ॥ ४८ ॥ ॥ रुक्म उवाच ॥ ॥ यन्मया पापनिष्ठेन मंदभाग्येन केशव ॥ सायकैराहतं वक्षस्तत्सर्वं क्षंतुमर्हसि ॥ ४९ ॥ पूर्वं दत्ता स्वयं
देव जानकी जनकेन वै ॥ मया प्रदत्ता देवेश रुक्मिणी तव केशव ॥ ५० ॥ उद्वाहय यथान्यायं विधिदृष्टेन कर्मणा ॥ रुक्मस्य वचनं श्रुत्वा
ततस्तुष्टो जगद्गुरुः ॥ ५१ ॥ बभाषे देवदेवेशो रुक्मिणं भीष्मकात्मजम् ॥ गच्छ स्वकं पुरं मा भैः कुरु राज्यमकंटकम् ॥ ५२ ॥ केशवस्य
वचः श्रुत्वा रुक्मो दानवपुंगवः ॥ तं प्रणम्य जगन्नाथं जगाम भवनं पितुः ॥ ५३ ॥ गते रुक्मे तदा कृष्णः समामंत्र्य द्विजोत्तमान् ॥
मरीचिमत्र्यगिरसं पुलस्त्यं पुलहं क्रतुम् ॥ ५४ ॥ वसिष्ठं च महाभागमित्येते सप्त मानसाः ॥ इत्येते ब्राह्मणाः सप्त पुराणे निश्चयं गताः ॥
॥ ५५ ॥ क्षमावंतः प्रजावंतो महर्षिभिरलंकृताः ॥ इत्येवं ब्रह्मपुत्राश्च सत्यवंतो महामते ॥ ५६ ॥ नर्मदातटमाश्रित्य निवसंति जितेंद्रियाः ॥
तपःस्वाध्यायनिरता जपहोमपरायणाः ॥ ५७ ॥ निमंत्रितास्तु राजेंद्र केशवेन महात्मना ॥ श्राद्धं कृत्वा यथान्यायं ब्रह्मोक्तविधिना ततः
॥ ५८ ॥ हरिस्तान्पूजयामास सप्त ब्रह्मर्षिपुंगवान् ॥ प्रददौ द्वादश ग्रामांस्तेभ्यस्तत्र जनार्दनः ॥ ५९ ॥ यावच्चंद्रश्च सूर्यश्च यावत्तिष्ठति मेदिनी ॥
तावद्दानं मया दत्तं परिपंथी न कश्चन ॥ ६० ॥ मद्दत्तं पालयिष्यंते ये नृपा गतकल्मषाः ॥ तेभ्यः स्वस्ति करिष्यामि दास्यामि परमां
गतिम् ॥ ६१ ॥ यावद्धियांति लोकेषु महाभूतानि पंच च ॥ तावत्ते दिवि मोदंते मद्दत्तपरिपालकाः ॥ ६२ ॥ यस्तु लोपयते मूढो दत्तं वः पृथि
वीतले ॥ नरके तस्य वासः स्याद्यावदाभूतसंप्लवम् ॥ ६३ ॥ स्वदत्ता परदत्ता वा पालनीया वसुन्धरा ॥ यस्ययस्य यदा भूमिस्तस्यतस्य तदा फल
म् ॥ ६४ ॥ स्वदत्तां परदत्तां वा यो हरेत वसुन्धराम् ॥ स विष्ठायां कृमिर्भूत्वा पितृभिः सह मज्जति ॥ ६५ ॥ अन्यायेन हृता भूमिरन्यायेन च
हारिता ॥ हर्त्ता हारयिता चैव विष्ठायां जायते कृमिः ॥ ६६ ॥ षष्टिवर्षसहस्राणि स्वर्गे तिष्ठति भूमिदः ॥ आच्छेत्ता चानुमंता च तान्येव नरके वसे
त् ॥ ६७ ॥ यानीह दत्तानि पुरा नरेंद्रैर्दानानि धर्मार्थयशस्कराणि ॥ निर्माल्यरूपप्रतिमानि तानि को नाम साधुः पुनराददाति ॥ ६८ ॥ एवं

१ चतुर्भुजं रूपम्—इति शेषः । २ अक्रमंता—इ० पा० ।

तान्पूजयित्वा तु सम्यङ्न्यायेन पांडव ॥ रुक्मिण्या विधिवत्पाणिं जग्राह मधुसूदनः॥६९॥मुशली च ततः सर्वाञ्जित्वा दानवपुंगवान् ॥ स्वस्थान
मगमत्तत्र कृत्वा कार्यं सुशोभनम्॥७०॥अथातौ द्वारवत्यां तौ कृष्णसंकर्षणावुभौ॥गच्छमानं तु तं दृष्ट्वा केशवं क्लेशनाशनम्॥७१॥ ब्राह्मणाःसत्यवंत
श्च निर्गताः शंसितव्रताः॥ आगच्छमानांस्तौ वीक्ष्य रथमार्गेण ब्राह्मणान् ॥७२॥ मुहूर्त्तं तत्र विश्रम्य केशवो वाक्यमब्रवीत्॥किमागमनकार्यं वो ब्रूत
सर्वं द्विजोत्तमाः॥७३॥ कुर्वाणाः स्वीयकर्माणि मम कृत्यं तु तिष्ठते ॥ देवस्य वचनं श्रुत्वा मुनयो वाक्यमब्रुवन् ॥७४॥ कल्पकोटिसहस्रेण सत्यभा
वात्तु वंदितः ॥ दुष्प्राप्योऽसि मनुष्याणां प्राप्तः किं त्यजसे हि नः ॥७५॥ ब्राह्मणानां वचः श्रुत्वा भगवानिदमब्रवीत् ॥ मथुरायां द्वारवत्यां यो धनी
पुर एव च ॥ ७६ ॥ त्रिकालमागमिष्यामि सत्यंसत्यं पुनःपुनः॥ एवं ते ब्राह्मणाः श्रुत्वा योधनीपुरमागताः ॥ ७७ ॥ अवतीर्णस्त्रिभागेन प्रादुर्भावे
तु माथुरे ॥ एतत्ते कथितं सर्वं तीर्थस्योत्पत्तिकारणम् ॥ ७८ ॥ भूतं भव्यं भविष्यच्च वर्त्तमानं तथाऽपरम् ॥ यं श्रुत्वा सर्वपापेभ्यो मुच्यते नाऽत्र
संशयः ॥ ७९ ॥ तत्र तीर्थे तु यः स्नात्वा पूजयेद्बलकेशवौ ॥ तेन देवो जगद्धाता पूजितस्त्रिगुणात्मवान् ॥८०॥ उपवासी नरो भूत्वा यस्तु कुर्यात्प्रद
क्षिणम् ॥ मुच्यते सर्वपापेभ्यो नाऽत्र कार्या विचारणा ॥ ८१ ॥ तत्र तीर्थे तु ये वृक्षास्तान्पश्यंत्यपि ये नराः ॥ तेऽपि पापैः प्रमुच्यंते भ्रूणहत्यासमै
रपि ॥ ८२ ॥ प्रातरुत्थाय ये केचित्पश्यंति बलकेशवौ ॥ तेन ते सदृशाःस्युर्वै देवदेवेन चक्रिणा ॥ ८३॥ ते पूज्यास्ते नमस्कार्यास्तेषां जन्म सुजी
वितम् ॥ ये नमंति जगन्नाथं देवं नारायणं हरिम् ॥ ८४ ॥ तत्र तीर्थे तु यद्दानं स्नानं देवार्चनं नृप ॥ तत्सर्वमक्षय्यं तस्य इत्येवं शंकरोऽब्रवीत् ॥
॥ ८५ ॥ प्रविश्याग्नौ मृतानां च यत्फलं समुदाहृतम् ॥ तच्छृणुष्व नृपश्रेष्ठ प्रोच्यमानमशेषतः॥८६॥ विमानेनाऽर्कवर्णेन किंकिणीजालमालिना॥
आग्नेये भवते तत्र मोदते कालमीप्सितम् ॥८७॥ जले चैवा मृतानां तु योधनीपुरमध्यतः ॥ वसंति वारुणे लोके यावदाभूतसंप्लवम्॥ ८८ ॥ अना
शके मृतानां तु तत्र तीर्थे नराधिप ॥ अनिवर्त्तिका गतिर्नृणां नाऽत्र कार्या विचारणा ॥ ८९ ॥ तत्र तीर्थे तु यो दद्यात्कपिलादानमुत्तमम् ॥ विधा
नेन तु संयुक्तं शृणु तस्याऽपि यत्फलम् ॥ ९० ॥ यावंति तस्या रोमाणि तत्प्रसूतेश्च भारत ॥ तावंति दिवि मोदंते सर्वकामैः सुपूजिताः ॥ ९१ ॥
यावंति रोमाणि भवंति धेन्वास्तावंति वर्षाणि महीयते सः ॥ स्वर्गाच्च्युतश्चाऽपि ततस्त्रिलोक्यां कुले समुत्पत्स्यति गोमतां सः ॥९२॥ तत्र तीर्थे तु
यो दद्याद्रूप्यं कांचनमेव वा॥कांचनेन विमानेन विष्णुलोके महीयते॥९३॥तस्मिंस्तीर्थे तु यो दद्यात्पादुके वस्त्रमेव च॥दानस्याऽस्य प्रभावेन लभते

१ तावंति वर्षाणि–इत्यर्थः । २ गोमताम्–विपुलधेनुमताम्–इत्यर्थः ।

स्वर्गमीप्सितम् ॥ ९४ ॥ ऋग्यजुःसामवेदानां पठनाद्यत्फलं भवेत् ॥ तत्र तीर्थे तु राजेंद्र गायत्र्या तत्फलं लभेत् ॥९५॥ प्रयागे यद्भवेत्पुण्यं गया
यां च त्रिपुष्करे ॥ कुरुक्षेत्रे तु राजेंद्र राहुग्रस्ते दिवाकरे ॥ ९६ ॥ सोमेश्वरे च यत्पुण्यं सोमस्य ग्रहणे तथा ॥ तत्फलं लभते तत्र स्नानमात्रान्न
संशयः ॥ ९७ ॥ द्वादश्यां तु नरः स्नात्वा नमस्कृत्य जनार्दनम् ॥ उद्धृताः पितरस्तेन अवाप्तं जन्मनः फलम् ॥ ९८ ॥ संक्रांतौ च व्यतीपाते
द्वादश्यां च विशेषतः ॥ ब्राह्मणं भोजयेदेकं कोटिर्भवति भोजिता ॥ ९९ ॥ पृथिव्यां यानि तीर्थानि ह्यासमुद्राणि पांडव ॥ तानि सर्वाणि तत्रैव
द्वादश्यां पांडुनंदन ॥ १०० ॥ क्षयं यांति च दानानि यज्ञहोमबलिक्रियाः ॥ न क्षीयते महाराज तत्र तीर्थे तु यत्कृतम् ॥ १ ॥ यद्भूतं यद्भविष्यच्च
तीर्थमाहात्म्यमुत्तमम् ॥ कथितं ते मया सर्वं पृथग्भावेन भारत ॥ १०२ ॥ इति श्रीस्कान्दे महापुराण एकाशीतिसाहस्र्यां संहितायां पञ्चम आव
न्त्यखण्डे रेवाखण्डे रुक्मिणीतीर्थमाहात्म्यवर्णनंनाम द्विचत्वारिंशदधिकशततमोऽध्यायः ॥ १४२ ॥ ॥ छ ॥ ॥ श्रीमार्कंडेय उवाच ॥ ॥
ततो गच्छेन्महाराज योजनेश्वरमुत्तमम् ॥ यत्र सिद्धौ पुरा कल्पे नरनायणावृषी ॥ १ ॥ तत्र तीर्थे तपस्तप्त्वा संग्रामे देवदानवैः ॥ जयं प्राप्तौ
महात्मनौ नरनायणावुभौ ॥ २ ॥ पुनस्त्रेतायुगे प्राप्ते तौ देवौ रामलक्ष्मणौ ॥ तत्र तीर्थे पुनः स्नात्वा रावणो दुर्जयो हतः ॥ ३ ॥ पुनः पार्थ
कलौ प्राप्ते तौ देवौ बलकेशवौ ॥ वसुदेवकुले जातौ दुष्करं कर्म चक्रतुः ॥ ४ ॥ नरकं कालनेमिं च कंसं चाणूरमुष्टिकौ ॥ शिशुपालं जरा
संधं जघ्नतुर्बलकेशवौ ॥ ५ ॥ ततस्तत्र रिपून्संख्ये भीष्मद्रोणपुरः सरान् ॥ कर्णदुर्योधनादींश्च निहनिष्यति स प्रभुः ॥ ६ ॥ धर्म
क्षेत्रे कुरुक्षेत्रे तत्र युध्यंति ते क्षणम् ॥ भीमार्जुननिमित्तेन शिष्यौ कृत्वा परस्परम् ॥ ७ ॥ तत्र तीर्थे पुनर्गत्वा तपः कृत्वा
सुदुष्करम् ॥ पूजयित्वा द्विजान्भक्त्या यास्येते द्वारकां पुनः ॥ ८ ॥ तत्र तीर्थे तु यः स्नात्वा पूजयेद्बलकेशवौ ॥ तेन देवो जगद्धाता
पूजितस्त्रिगुणात्मवान् ॥९॥ उपवासी नरो भूत्वा यस्तु कुर्यात्प्रजागरम् ॥ मुच्यते सर्वपापेभ्यो गायंस्तस्य शुभां कथाम् ॥१०॥ यावतस्तत्र तीर्थे तु
वृक्षान्पश्यंति मानवाः ॥ ब्रह्महत्यादिकं पापं तावदेषां प्रणश्यति ॥ ११ ॥ प्रातरुत्थाय ये केचित्पश्यंति बलकेशवौ ॥ तेनैव सदृशाः सर्वे देवदेवेन
चक्रिणा ॥ १२ ॥ ते पूज्यास्ते नमस्कार्यास्तेषां जन्म सुजीवितम् ॥ ये नमंति जगत्पूज्यं देवं नारायणं हरिम् ॥ १३ ॥ तत्र तीर्थे तु यद्दानं स्नानं
देवार्च्चनं नृप ॥ क्रियते तत्फलं सर्वमक्षयायोपकल्पते ॥१४॥ अग्नेरपत्यं प्रथमं सुवर्णं भूर्वैष्णवी सूर्यसुताश्च गावः॥ लोकास्त्रयस्तेन भवंति दत्ता यः
कांचनं गां च भुवं च दद्यात् ॥ १५ ॥ एतत्ते कथितं सर्वं तीर्थमाहात्म्यमुत्तमम् ॥ अतीतं च भविष्यच्च वर्तमानं महाबलम् ॥ १६ ॥ श्रुत्वा वाऽपि

पठित्वेदं श्रावयित्वाऽथ धार्मिकान् ॥ मुच्यते सर्वपापेभ्यो नाऽत्र कार्या विचारणा ॥ १७ ॥ इति श्रीस्कांदे महापुराण एकाशीतिसाहस्र्यां संहितायां पञ्चम आवन्त्यखण्डे रेवाखण्डे योजनेश्वरतीर्थमाहात्म्यवर्णनंनाम त्रिचत्वारिंशदधिकशततमोऽध्यायः ॥ १४३ ॥ ॥ श्रीमार्कंडेय उवाच ॥ ततो गच्छेन्महाराज द्वादशीतीर्थमुत्तमम् ॥ क्षरंति सर्वदानानि जपहोमबलिक्रियाः ॥१॥ न क्षीयते तु राजेंद्र चक्रतीर्थे तु यत्कृतम् ॥ यद्भूतं यद्भविष्यच्च तीर्थमाहात्म्यमुत्तमम् ॥ २ ॥ कथितं तन्मया सर्व्वं पृथग्भावेन भारत ॥ ३ ॥ इति श्रीस्कांदे महापुराण एकाशीतिसाहस्र्यां संहितायां पञ्चम आवन्त्यखण्डे रेवाखण्डे द्वादशीतीर्थमहात्म्यवर्णनंनाम चतुश्चत्वारिंशदधिकशततमोऽध्यायः ॥ १४४ ॥ ॥ मार्कंडेय उवाच ॥ ततो गच्छेद्धरापाल शिवतीर्थमनुत्तमम् ॥ दर्शनाद्यस्य देवस्य मुच्यते सर्व्वकिल्बिषैः ॥ १ ॥ शिवतीर्थे तु यः स्नात्वा जितक्रोधो जितेंद्रियः ॥ पूजयेत महादेवं सोऽग्निष्टोमफलं लभेत् ॥ २ ॥ तत्र तीर्थे तु यो भक्त्या सोपवासोऽर्च्चयेच्छिवम् ॥ अनिवर्तिका गतिस्तस्य रुद्रलोकादसंशयम् ॥ ३ ॥ इति श्रीस्कांदे महापुराण एकाशीतिसाहस्र्यां संहितायां पञ्चम आवन्त्यखण्डे रेवाखण्डे शिवतीर्थमाहात्म्यवर्णनंनाम पंचचत्वारिंशदधिकशततमोऽध्यायः ॥ १४५ ॥ ॥ मार्कंडेय उवाच ॥ ॥ अस्माहकं ततो गच्छेत्पितृतीर्थमनुत्तमम् ॥ प्रेतत्वाद्यत्र मुच्यंते पिंडेनैकेन पूर्वजाः ॥ १ ॥ युधिष्ठिर उवाच ॥ ॥ अस्माहकस्य माहात्म्यं कथयस्व ममानघ ॥ स्नानदानेन यत्पुण्यं तथा पिंडोदकेन च ॥ २ ॥ श्रीमार्कंडेय उवाच ॥ पुरा कल्पे नृपश्रेष्ठ ऋषिदेवसमागमे ॥ प्रश्नः पृष्टो मया तात यथा त्वमनुपृच्छसि ॥३॥ एकत्र सागराः सप्त सप्रयागाः सपुष्कराः॥ नास्य साम्यं लभंते ते नात्र कार्या विचारणा ॥ ४ ॥ सोमनाथं तु विख्यातं यत्सोमेन प्रतिष्ठितम् ॥ तत्र सोमग्रहे पुण्यं तत्पुण्यं लभते नरः ॥ ५ ॥ मांसांते पितरो नृणां वीक्षंते संततिं स्वकाम् ॥ कश्चिदस्मत्कुलेऽस्माकं पिंडमत्र प्रदास्यति ॥६ ॥ प्रपितामहास्तथादित्याः श्रुतिरेषा सनातनी ॥ एवंब्रुवंति देवाश्च ऋषयः सतपोधनाः ॥ ७ ॥ सकृत्पिडोदकेनैव शृणु पार्थिव यत्फलम् ॥ द्वादशाब्दानि राजेंद्र योगं भुक्त्वा सुशोभनम् ॥ ८ ॥ युगेयुगे महाराज अस्माहके पितामहाः ॥ सर्वदा ह्यवलोकंत आगच्छंतं स्वगोत्रजम् ॥ ९ ॥ भविष्यति किमस्माकममावास्याप्यमाहके ॥ स्नानं दानं च ये कुर्युः पितॄणां तिलतर्पणम् ॥ १० ॥ ते सर्वपापनिर्मुक्ताः सर्वान्कामांल्लभति वै ॥ जलमध्येत्र भूपाल अग्नितीर्थं च तिष्ठति ॥ ११ ॥ दर्शनात्तस्य तीर्थस्य पापराशिर्विलीयते ॥ स्नानमात्रेण राजेंद्र ब्रह्महत्यां व्यपोहति ॥ १२ ॥ शुक्लांबरधरो नित्यं नियतः स जितेंद्रियः ॥ एककालं तु भुंजानो मासं

१ इतः प्राक्—कार्मिथिलपुस्तके—वाराहतीर्थमाहात्म्यरूपोऽध्यायोऽस्ति—परं सोऽत्र पूर्वं यथानुपूर्वीक एवायातोऽस्ति—अतः पुनरुक्तमयात्रात्र निक्षिप्यते । २ मासान्ते—अमावास्यायाम्—इत्यर्थः ।

तीर्थस्य सन्निधौ ॥ १३ ॥ सुवर्णालंकृतानां तु कन्यानां शतदानजम् ॥ फलमाप्नोति संपूर्णं पितृलोके महीयते ॥ १४ ॥ पृथिव्यामासमुद्रायां
महाभोगपतिर्भवेत् ॥ धनधान्यसमायुक्तो दाता भवति धार्मिकः ॥ १५ ॥ उपवासी शुचिर्भूत्वा ब्रह्मलोकमवाप्नुयात् ॥ अस्माहकं समासाद्य
यस्तु प्राणान्परित्यजेत् ॥ १६ ॥ कोटिवर्षसहस्राणि रुद्रलोके महीयते ॥ ततः स्वर्गात्परिभ्रष्टः क्षीणकर्मा दिवश्च्युतः ॥ १७ ॥ सुवर्णमणिमु
क्ताढ्ये कुले जायेत रूपवान् ॥ कृत्वाऽभिषेकविधिना हयमेधफलं लभेत् ॥ १८ ॥ धनाढ्यो रूपवान्दक्षो दाता भवति धार्मिकः ॥ चतुर्वेदेषु
यत्पुण्यं सत्यवादिषु यत्फलम् ॥ १९ ॥ तत्फलं लभते नूनं तत्र तीर्थेऽभिषेचनात् ॥ तीर्थानां परमं तीर्थं निर्मितं शंभुना पुरा ॥ २० ॥ हृदयेशः
स्वयं विष्णुर्जपेदेवं महेश्वरम् ॥ गन्धर्वाप्सरसश्चैव मरुतो मारुतास्तथा ॥ २१ ॥ विश्वेदेवाश्च पितरः सचन्द्राः सदिवाकराः ॥ मरीचिरत्र्यंगि
रसौ पुलस्त्यः पुलहः क्रतुः ॥ २२ ॥ प्रचेताश्च वसिष्ठश्च भृगुर्नारद एव च ॥ च्यवनो गालवश्चैव वामदेवो महामुनिः ॥ २३ ॥ वालखिल्याश्च
गंधारास्तृणबिंदुश्च जाजलिः ॥ उद्दालकश्चर्ष्यशृंगो वसिष्ठश्च सनंदनः ॥ २४ ॥ शुकश्चैव भरद्वाजो वात्स्यो वात्स्यायनस्तथा ॥ अगस्तिर्मित्राव
रुणौ विश्वामित्रो मुनीश्वरः ॥ २५ ॥ गौतमश्च पुलस्त्यश्च पौलस्त्यः पुलहः क्रतुः ॥ सनातनस्तु कपिलो वाह्निः पंचशिखस्तथा ॥ २६ ॥
अन्येऽपि बहवस्तत्र मुनयः शंसितव्रताः ॥ क्रीडन्ति देवताः सर्व्वे ऋषयः सतपोधनाः ॥ २७ ॥ मनुष्याश्चैव योगींद्राः पितरः सपितामहाः ॥
अस्माहकेऽत्र तिष्ठंति सर्वे एव न संशयः ॥ २८ ॥ पितरः पितामहाश्चैव तथैव प्रपितामहाः ॥ येषां दत्तमुपस्थायि सुकृतं वाऽपि दुष्कृतम् ॥ २९ ॥
अक्षयं तत्र तत्सर्वं यत्कृतं योधनीपुरे ॥ मातरं पितरं त्यक्त्वा सर्वबन्धुसुहृज्जनान् ॥ ३० ॥ धनं धान्यं प्रियान्पुत्रांस्तथा देहं नृपोत्तम ॥
गच्छते वायुभूतस्तु शुभाऽशुभसमन्वितः ॥ ३१ ॥ अदृश्यः सर्वभूतानां परमात्मा महत्तरः ॥ शुभाऽशुभगतिं प्राप्तः कर्मणा स्वेन पार्थिव ॥
॥ ३२ ॥ ॥ युधिष्ठिर उवाच ॥ ॥ शुभाऽशुभं न बन्धूनां जायते केन हेतुना ॥ एकः प्रसूयते जंतुरेक एव प्रलीयते ॥ ३३ ॥ एको हि भुंक्ते
सुकृतमेक एव हि दुष्कृतम् ॥ ३४ ॥ ॥ मार्कंडेय उवाच ॥ ॥ एष त्वयोक्तो नृपते महाप्रश्नः स्मृतो मया ॥ ३५ ॥ पितामहमुखोद्गीतं
श्रुतं ते कथयाम्यहम् ॥ यन्मे पितामहात्पूर्वं विज्ञातमृषिसंसदि ॥ ३६ ॥ न माता न पिता बन्धुः कस्यचिन्न सुहृत्कचित् ॥ कस्य न
ज्ञायते रूपं वायुभूतस्य देहिनः ॥ ३७ ॥ यद्येवं न भवेत्तात लोकस्य तु नरेश्वर ॥ अमर्यादं भवेन्नूनं विनश्यति चराचरम् ॥ ३८ ॥ एवं
ज्ञात्वा पुरा राजन्समस्तैर्लोककर्तृभिः ॥ मर्यादा स्थापिता लोके यथा धर्मो न नश्यति ॥ ३९ ॥ धर्मे नष्टे मनुष्याणामधर्मोभिभवेत्पुनः ॥ ततः

स्वधर्मचलनान्नरके गमनं ध्रुवम् ॥ ४० ॥ लोको निरंकुशः सर्वो मर्यादालंघने रतः ॥ मर्यादा स्थापिता तेन शास्त्रं वीक्ष्य महर्षिभिः ॥ ४१ ॥
स्नानं दानं जपो होमः स्वाध्यायो देवतार्चनम् ॥ पिंडोदकप्रदानं च तथैवाऽतिथिपूजनम् ॥ ४२ ॥ पितरः पितामहाश्चैव तथैव प्रपितामहाः ॥
त्रयो देवाः स्मृतास्तात ब्रह्मविष्णुमहेश्वराः ॥ ४३ ॥ पूजितैः पूजिताः सर्वे तथा मातामहास्त्रयः ॥ तस्मात्सर्वप्रयत्नेन श्रुतिस्मृत्यर्थ
नोदितान् ॥ ४४ ॥ धर्मं समाचरन्नित्यं पापांशेन न लिप्यते ॥ श्रुतिस्मृत्युदितं धर्मं मनसाऽपि न लंघयेत् ॥ ४५ ॥ इह लोके परे चैव
यदीच्छेच्छ्रेय आत्मनः ॥ पितापुत्रौ सदाप्येकौ बिंबार्द्धिबमिवोद्धृतौ ॥ ४६ ॥ विभक्तौ वाऽविभक्तौ वा श्रुतिस्मृत्यर्थतस्तथा ॥ उद्धरेदात्मनात्मा
नमात्मानमवसादयेत् ॥ ४७ ॥ पिंडोदकप्रदानाभ्यामृते पार्थ न संशयः ॥ एवं ज्ञात्वा प्रयत्नेन पिंडोदकप्रदो भवेत् ॥ ४८ ॥ आयुर्धर्मो यश
स्तेजः संततिश्चैव वर्द्धते ॥ पृथिव्यां सागरांतायां पितृक्षेत्राणि यानि च ॥ ४९ ॥ तानि ते संप्रवक्ष्यामि येषु दत्तं महाफलम् ॥ गयायां पुष्करे
ज्येष्ठे प्रयागे नैमिषे तथा ॥ ५० ॥ सन्निहत्यां कुरुक्षेत्रे प्रभासे कुरुनन्दन ॥ पिंडोदकप्रदानेन यत्फलं कथितं बुधैः ॥ ५१ ॥ अस्माहके तदाऽऽ
प्नोति नर्मदायां न संशयः ॥ तत्र ब्रह्मा मुरारिश्च रुद्रश्च उमया सह ॥ ५२ ॥ इन्द्राद्या देवताः सर्वे पितरो मुनयस्तथा ॥ सागराः सरितश्चैव पर्व
ताश्च वलाहकाः ॥५३॥ तिष्ठन्ति पितरः सर्वे सर्वतीर्थाधिकं ततः ॥ स्थिता ब्रह्मशिला तत्र गजकुम्भनिभा नृप ॥५४॥ कलौ न दृश्या भवति प्रधा
नं यद्गयाशिरः ॥ वैशाखे मासि संप्राप्तेऽमावास्यां नृपोत्तम ॥ ५५ ॥ व्याप्य सा तिष्ठते तीर्थं गजकुम्भनिभा शिला ॥ तच्च गव्यूतिमात्रं हि तीर्थं त
तः प्रचक्षते ॥ ५६ ॥ तस्मिन्दिने तत्र गत्वा यस्तु श्राद्धप्रदो भवेत् ॥ पितृणामक्षया तृप्तिर्जायते शतवार्षिकी ॥ ५७ ॥ अन्यस्यामप्यमावास्यां
यः स्नात्वा विजितेंद्रियः ॥ करोति मनुजः श्राद्धं विधिवन्मंत्रसंयुतम् ॥ ५८ ॥ तस्य पुण्यफलं यत्स्यात्तच्छृणुष्व नराधिप ॥ अग्निष्टोमाश्व
मेधाभ्यां वाजपेयस्य यत्फलम् ॥ ५९ ॥ तत्फलं समवाप्नोति यथा मे शंकरोऽब्रवीत् ॥ रौरवादिषु सर्वेषु नरकेषु व्यवस्थिताः ॥ ६० ॥ पिता
पितामहाद्याश्च पितृके मातृके तथा ॥ पिंडोदकेन चैकेन तर्प्पणेन विशेषतः ॥ ६१ ॥ क्रीडंति पितृलोकस्था यावदाभूतसंप्लवम् ॥ ये कर्मस्था
विकर्मस्था ये जाताः प्रेतकल्मषाः ॥ ६२ ॥ पिंडेनैकेन शुध्यंते तेऽपि तत्र न संशयः ॥ अस्माहके शिला दिव्या तिष्ठते गजसन्निभा ॥ ६३ ॥
ब्रह्मणा निर्मिता पूर्वं सर्वपापक्षयंकरी ॥ उपर्यस्या यथान्यायं पितॄनुद्दिश्य भारत ॥ ६४ ॥ दक्षिणाग्रेषु दर्भेषु दद्यात्पिंडान्विचक्षणः ॥ भूमौ

धान्नेन सिद्धेन श्राद्धं कृत्वा यथाविधि ॥ ६५ ॥ श्राद्धिभ्यो वस्त्रयुग्मान छत्रोपानत्कमंडलु ॥ दक्षिणा विविधा देया पितॄनुदिश्य भारत ॥
॥ ६६ ॥ यो ददाति द्विजश्रेष्ठ तस्य पुण्यफलं शृणु ॥ तस्य ते द्वादशाब्दानि तृप्तिं यांति न संशयः ॥ ६७ ॥ अस्माद्दके महाराज पितरश्च
पितामहाः ॥ वायुभूता निरीक्षंते आगच्छंतं स्वगोत्रजम् ॥ ६८ ॥ अत्र तीर्थे सुतोभ्येत्य स्नात्वा तोयं प्रदास्यति ॥ श्राद्धं वा पिंडदानं वा तेन
यास्याम सद्गतिम् ॥ ६९ ॥ स्नाने कृते तु ये केचिज्जायंते वस्त्रविप्लुषः ॥ प्रीणयेन्नरकस्थांस्तु तैः पितॄन्नाऽत्र संशयः ॥ ७० ॥ केशोदबिंदव
स्तस्य ये चाऽन्ये लेपभाजिनः ॥ तृप्यंत्यनग्निसंस्कारा ये मृताः स्युः स्वगोत्रजाः ॥ ७१ ॥ तत्र तीर्थे तु ये केचिच्छ्राद्धं कृत्वा विधानतः ॥
नरकादुद्धरंत्याशु जपंतः पितृसंहिताम् ॥ ७२ ॥ वनस्पतिगते सोमे यदा सोमदिनं भवेत् ॥ अक्षयाल्लभते लोकान्पिंडेनैकेन मानवः ॥ ७३ ॥
अक्षयं तत्र वै सर्व जायते नाऽत्र संशयः ॥ नरकादुद्धरंत्याशु जपन्ते पितृसंहिताम् ॥ ७४ ॥ तस्मिंस्तीर्थे त्वमावास्यां पितॄनुदिश्य भारत ॥
नीलं सर्वांगसंपूर्णं योऽभिषिच्य समुत्सृजेत् ॥ ७५ ॥ तस्य पुण्यफलं वक्तुं न तु वाचस्पतिः क्षमः ॥ अस्माद्दके वृषोत्सर्गाद्यत्पुण्यं समवाप्यते
॥ ७६ ॥ तव शुश्रूषणात्सर्वं तत्प्रवक्ष्यामि भारत ॥ रौरवादिषु ये किंचित्पच्यंते तस्य पूर्वजाः ॥ ७७ ॥ वृषोत्सर्गेण तान्सर्वांस्तारयेदेकविं
शतिम् ॥ लोहितो यस्तु वर्णेन मुखे पुच्छे च पांडुरः ॥ ७८ ॥ पिंगः खुरविषाणाभ्यां स नीलो वृष उच्यते ॥ यस्तु सर्वांगपिंगश्च श्वेतः
पुच्छखुरेषु च ॥ ७९ ॥ स पिंगो वृष इत्याहुः पितॄणां प्रीतिवर्धनः ॥ पारावतसवर्णश्च ललाटे तिलको भवेत् ॥ ८० ॥ तं वृषं बभ्रुमित्याहुः
पूर्णं सर्वांगशोभनम् ॥ सर्वांगेष्वेकवर्णो यः पिंगः पुच्छखुरेषु च ॥ ८१ ॥ खुरपिंगं तमित्याहुः पितॄणां सद्गतिप्रदम् ॥ नीलं सर्वशरीरेण स्वा
रक्तनयनं दृढम् ॥ ८२ ॥ तमेव नीलमित्याहुर्नीलः पञ्चविधः स्मृतः ॥ यस्तु वैश्यगृहे जातः स वै नीलो विशिष्यते ॥ ८३ ॥ न वाहयेद्गृहे
जातं वत्सकं तु कदाचन ॥ तेनैव च वृषोत्सर्गे पितॄणामनृणो भवेत् ॥ ८४ ॥ जातं तु स्वगृहे वत्सं द्विजन्मा यस्तु वाहयेत् ॥ पतंति पितर
स्तस्य ब्रह्मलोकगता अपि ॥ ८५ ॥ यथायथा हि पिबति पीत्वा धूनाति मस्तकम् ॥ पिबन्पितॄन्प्रीणयति नरकादुद्धरेद्धुनन् ॥ ८६ ॥ यथा
पुच्छाभिघातेन स्कन्धं गच्छंति बिंदवः ॥ नरकादुद्धरंत्याशु पतितान्गोत्रिणस्तथा ॥ ८७ ॥ गर्जन्प्रावृषि काले तु विषाणाभ्यां भुवं लिखन् ॥
खुरेभ्यो या मृदुद्धूता तया संप्रीणयेदृषीन् ॥ ८८ ॥ पिबन्पितॄन्प्रीणयते खादनोल्लेखने सुरान् ॥ गर्जन्नृषिमनुष्यांश्च धर्मरूपो हि धर्मज ॥ ८९ ॥

१ भूमौ चान्नेन सिद्धेन--एतन्--पाकनिष्पादि शिलोपरि न कुर्यात्--किं तु भूमावेव--पिण्डदानमत्र शिलायां कर्तव्यमिति सूचितम् । २ वनस्पतिगते सोमे--अमायाम्--इत्यर्थः--प्रागुक्तः ।

भूतैर्वापि पिशाचैर्वा चातुर्थिकज्वरेण वा ॥ गृहीतोऽस्माहकं गच्छेत्सर्वेषामाधिनाशनम् ॥ ९० ॥ स्नात्वा तु विमले तोये दर्भग्रंथिं निबन्धयेत् ॥ मस्तके बाहुमूले वा नाभ्यां वा गलकेऽपि वा ॥ ९१ ॥ गत्वा देवसमीपं च प्रादक्षिण्येन केशवम् ॥ ततः समुच्चरन्मंत्रं गायत्र्या वाथ वैष्णवम् ॥ ९२ ॥ नारायणं शरण्येशं सर्वदेवनमस्कृतम् ॥ नमो यज्ञांगसंभूत सर्वव्यापिन्नमोऽस्तु ते ॥ ९३ ॥ नमो नमस्ते देवेश पद्मगर्भ सनातन ॥ दामोदर जयानंत रक्ष मां शरणागतम् ॥ ९४ ॥ त्वं कर्त्ता त्वं च हर्त्ता च जगत्यस्मिंश्चराचरे ॥ त्वं पालयसि भूतानि भुवनं त्वं बिभर्षि च ॥ ९५ ॥ प्रसीद देवदेवेश सुप्तमंगं प्रबोधय ॥ त्वद्ध्याननिरतो नित्यं त्वद्भक्तिपरमो हरे ॥ ९६ ॥ इति स्तुतो मया देव प्रसादं कुरु मेऽच्युत ॥ मां रक्षरक्ष पापेभ्यस्त्रायस्व शरणागतम् ॥ ९७ ॥ एवं स्तुत्वा च देवेशं दानवान्तकरं हरिम् ॥ पुनरुक्तेन वै स्नात्वा ततो विप्रांस्तु भोजयेत् ॥ ९८ ॥ वेदोक्तेन विधानेन स्नानं कृत्वा यथाविधि ॥ पिंडनिर्वपणं कृत्वा वाचयेत्स्वस्तिकं ततः ॥ ९९ ॥ एवं स्तुत्वा च देवेशं दानवांतकरं हरिम् ॥ पुनरुक्तेन[1] वै स्नात्वा ततो विप्रांस्तु भोजयेत्॥१००॥वेदोक्तेन विधानेन स्नानं कृत्वा यथाविधि ॥ एवं तान्वाचयित्वा तु ततो विप्रान्विसर्जयेत ॥ १०१ ॥ यत्तत्रोच्चारितं किंचित्तद्द्विप्रेभ्यो निवेदयेत्॥ तत्र तीर्थे नरः स्नात्वा नारी वा भक्तितत्परा ॥ शक्तितो दक्षिणां दद्यात्कृत्वा श्राद्धं यथाविधि ॥ १०२ ॥ तत्र तीर्थे नरो यावत्स्नापयेद्विधिपूर्वकम् ॥ क्षीरेण मधुना वापि दध्ना वा शीतवारिणा ॥ १०३ ॥ तावत्पुष्करपात्रेषु पिबंति पितरो जलम्॥अयने विषुवे चैव युगादौ सूर्यसंक्रमे ॥१०४॥ पुष्पैः संपूज्य देवेशं नैवेद्यं यः प्रदापयेत ॥ सोश्वमेधस्य यज्ञस्य फलं प्राप्नोति पुष्कलम् ॥ १०५ ॥ तत्र तीर्थे तु यो राजन्सूर्यग्रहणमाचरेत् ॥ सूर्यतेजोनिभैर्यानैर्विष्णुलोके महीयते ॥ १०६ ॥ तत्र तीर्थे तु यः श्राद्धं पितृभ्यः संप्रयच्छति ॥ सत्पुत्रेण च तेनैव संप्राप्तं जन्मनः फलम् ॥१०७॥ इति श्रुत्वा ततो देवाः सर्वे शक्रपुरोगमाः॥ ब्रह्मविष्णुमहेशाश्च स्थापयां चक्रुरीश्वरम् ॥ १०८ ॥ सर्वरोगोपशमनं सर्वपातकनाशनम्॥ यस्तु संवत्सरं पूर्णममावास्यां तु भावितः ॥ १०९ ॥ पितृभ्यः पिंडदानं च कुर्याद स्माहके नृप ॥ त्रिपुष्करे गयायां च प्रभासे नैमिषे तथा ॥११०॥ यत्पुण्यं श्राद्धकर्तृणां तदिहैव भवेद्ध्रुवम् ॥ तिलोदकं कुशैर्मिश्रं यो दद्याद्दक्षिणामुखः ॥ १११ ॥ मन्वादौ च युगादौ च व्यतीपाते दिनक्षये॥ यो दद्यात्पितृमातृभ्यः सोऽश्वमेधफलं लभेत् ॥११२॥ अस्माहके नरो यस्तु स्नात्वा संपूजयेद्धरिम् ॥ ब्रह्माणं शंकरं भक्त्या कुर्य्याज्जागरणक्रियाम ॥ ११३ ॥ सर्वपापविनिर्मुक्तः शक्रातिथ्यमवाप्नुयात् ॥ तत्र तीर्थे नरः स्नात्वा यः

१ पुनरुक्तेन—इत्याद्युक्तम्—एतेन त्रिरावृत्तिः स्तोत्रपाठस्य सूचिता पौनरुक्त्यमिदमिति तु न शंकनीयम् ।

पश्यति जनार्दनम् ॥ ११४ ॥ विशेषविधिनाऽभ्यर्च्य प्रणम्य च पुनःपुनः ॥ सपुत्रेण च तेनैव पितणां विहिता गतिः ॥ ११५ ॥ एकमूर्तित्र
यो देवा ब्रह्मविष्णुमहेश्वराः ॥ सत्कार्यकारणोपेताः सुसूक्ष्माः सुमहाफलाः॥ ११६ ॥ एतत्ते कथितं राजन्महापातकनाशनम् ॥ अस्माहकस्य माहा
त्म्यं किमन्यत्परिपृच्छसि ॥ ११७ ॥ इति श्रीस्कांदे महापुराण एकाशीतिसाहस्र्यां संहितायां पंचम आवन्त्यखण्डे रेवाखण्डे अस्माहकतीर्थ
माहात्म्यवर्णनं नाम षट्चत्वारिंशदधिकशततमोऽध्यायः ॥ १४६ ॥ ॥ मार्कंडेय उवाच ॥ ॥ ततो गच्छेन्महीपाल सिद्धेश्वरमनुत्तमम् ॥
नर्मदादक्षिणे कूले तीर्थं परमशोभनम् ॥ १ ॥ तत्र तीर्थे तु यः स्नात्वा पूजयेद्वृषभध्वजम् ॥ सर्वपापविनिर्मुक्तो गतिं यात्यश्वमेधिनाम् ॥ २ ॥
तत्र तीर्थे तुयः स्नात्वा श्राद्धं कुर्यात्प्रयत्नतः॥ पितृणां प्रीणनार्थाय सर्वं तेन कृतं भवेत् ॥ ३ ॥ तत्र तीर्थे मृतानां तु जंतूनां नृपसत्तम ॥ गर्भवासे
मतिस्तेषां न जायेत कदाचन ॥ ४ ॥ गर्भवासो हि दुःखाय न सुखाय कदाचन ॥ तत्तीर्थवारिणा स्नातुर्न पुनर्भवसंभवः ॥ ५ ॥ इति
श्रीस्कांदे महापुराण एकाशीतिसाहस्र्यां संहितायां पंचम आवन्त्यखण्डे रेवाखण्डे सिद्धेश्वरतीर्थमाहात्म्यवर्णनं नाम सप्तचत्वारिंशदधिकशततमोऽ
ध्यायः ॥ १४७ ॥ ॥ श्रीमार्कंडेय उवाच ॥ ॥ ततो गच्छेन्महीपाल तीर्थमंगारकं शिवम् ॥ उत्तरे नर्मदाकूले सर्वपापक्षयंकरम् ॥ १ ॥
चतुर्थ्यंगारकदिने संकल्प्य कृतनिश्चयः ॥ स्नायादस्तं गते सूर्ये संध्योपासनतत्परः ॥ २ ॥ पूजयेल्लोहितं[1] भक्त्या गंधमाल्यविभूषणैः॥ संस्थाप्य
स्थंडिले देवं रक्तचंदनचर्चितम् ॥ ३ ॥ अंगारकायेति नमः कर्णिकायां प्रपूजयेत् ॥ कुजाय भूमिपुत्राय रक्तांगाय सुवाससे ॥ ४ ॥ हरकोपोद्भवा
येति स्वेदजायाऽतिबाहवे ॥ सर्वकामप्रदायेति पूर्वादिषु दलेषु च ॥ ५ ॥ एवं संपूज्य विधिवद्दद्यादर्घ्यं विधानतः ॥ भूमिपुत्र महावीर्य स्वेदो
द्भव पिनाकिनः ॥ ६ ॥ अंगारक महातेजा लोहितांग नमोऽस्तु ते ॥ करकं वारिसंयुक्तं शालितंदुलपूरितम् ॥ ७ ॥ सहिरण्यं सवस्त्रं च मोदकोपरि
संस्थितम् ॥ ब्राह्मणाय निवेद्यं तत्कुजो मे प्रीयतामिति ॥ ८ ॥ अर्घं दत्त्वा विधानेन रक्तचंदनवारिणा ॥ रक्तपुष्पसमाकीर्णं तिलतंदुलमिश्रितम् ॥
॥ ९ ॥ कृत्वा ताम्रमये पात्रे मंडले वर्तुले शुभे ॥ कृत्वा शिरसि तत्पात्रं जानुभ्यां धरणीं गतः ॥ १० ॥ मंत्रपूतं महाभाग दद्यादर्घ्यं विचक्षणः ॥
॥१०९॥ ततो भुंजीत मौनेन क्षारतिलाम्लवर्जितम् ॥ ११ ॥ स्निग्धं मृदुसमधुरमात्मनः श्रेय इच्छता ॥ एवं चतुर्थ्यां संप्राप्ते चतुर्थ्यंगारके नृप ॥ १२ ॥ ॥२८३॥
सौवर्णं कारयेद्देवं यथाशक्ति सुरूपिणम् ॥ स्थापयेत्ताम्रके पात्रे गुडपीठसमन्विते ॥ १३ ॥ गंधपुष्पादिभिर्देवं पूजयेद्गुडसंस्थितम् ॥ ईशान्यां

१ लोहितम्—अंगारकम्—इत्यर्थः ।

स्थापयेदेवं शुद्धतोयसमन्वितम् ॥१४॥ कासारेण तथाग्नेय्यां स्थापयेत्करकं परम् ॥ रक्ततंदुलसंमिश्रं नैर्ऋत्यां वायुगोचरे ॥१५॥ स्थापयेन्मोदकैः
सार्धं चतुर्थं करकं बुधः ॥ सूत्रेण वेष्टितग्रीवं गंधमाल्यैरलंकृतम् ॥ १६ ॥ शंखतूर्यनिनादेन जयशब्दादिमंगलैः ॥ रक्तांबरधरं विप्रं रक्तमाल्यानु
लेपनम् ॥ १७ ॥ वेदिमध्यगतं वाऽपि महदासनसंस्थितम् ॥ सुरूपं सुभगं शांतं सर्वभूतहिते रतम् ॥१८॥ वेदविद्याव्रतस्नातं सर्वशास्त्रविशारदम् ॥
पूजयित्वा यथान्यायं वाचयेत्पांडुनंदन ॥ १९ ॥ रक्तां गां च ततो दद्याद्रक्तेनानडुहा सह ॥ प्रीयतां भूमिजो देवः सर्वदैवतपूजितः ॥ २० ॥ विप्रं
प्रदक्षिणीकृत्य पत्नीपुत्रसम न्वितः ॥ पितृमातृसुहृत्सार्द्धं क्षमाप्य च विसर्जयेत् ॥ २१ ॥ एवं कृतस्य तस्याऽथ तस्मिंस्तीर्थे विशेषतः ॥ यत्पुण्य
फलमुद्दिष्टं तत्ते सर्वं वदा म्यहम् ॥ २२ ॥ सप्त जन्मानि राजेंद्र सुरूपः सुभगो भवेत् ॥ तीर्थस्याऽस्य प्रभावेन नाऽत्र कार्या विचारणा ॥ २३ ॥
अकामो वा सकामो वा तत्र तीर्थे मृतो नरः ॥ अंगारकपुरं याति देवगंधर्वपूजितः ॥ २४ ॥ उपभुज्य यथान्यायं दिव्यान्भोगाननुत्तमान् ॥ इह
मानुष्य लोके वै राजा भवति धार्मिकः ॥ २५ ॥ सुरूपः सुभगश्चैव सर्वव्याधिविवर्जितः ॥ जीवेद्वर्षशतं साग्रं सर्वलोकनमस्कृतः ॥ २६ ॥ इति
श्रीस्कांदे महापुराण एकाशीतिसाहस्र्यां संहितायां पञ्चम आवन्त्यखण्डे रेवाखंडे मंगलेश्वरतीर्थमाहात्म्यवर्णनंनामाष्टाचत्वारिंशदधिकशततमोऽ
ध्यायः ॥ १४८ ॥ ॥ छ ॥ ॥ श्रीमार्कंडेय उवाच ॥ ॥ तस्यैवाऽनंतरं तीर्थं लिंगेश्वरमिति श्रुतम् ॥ दर्शनाद्देवदेवस्य यत्र पापं प्रणश्यति
॥ १ ॥ कृत्वा तु कदनं घोरं दानवानां युधिष्ठिर ॥ वाराहं रूपमास्थाय नर्मदायां व्यवस्थितः ॥ २ ॥ तत्र तीर्थे तु यः स्नानं कृत्वा देवं नमस्यति ॥
स मुच्यते नृपश्रेष्ठ महापापैः पुराकृतैः ॥ ३ ॥ द्वादश्यां कृष्णपक्षस्य शुक्ले च समुपोषितः ॥ गंधमाल्यैर्जगन्नाथं पूजयेत्पांडुनंदन ॥ ४ ॥ ब्राह्म
णांश्च महाभाग दानसंमानभोजनैः॥ पूजयेत्परया भक्त्या तस्य पुण्यफलं शृणु ॥ ५ ॥ सत्रयाजिफलं जंतुर्लभते द्वादशाब्दकैः ॥ ब्राह्मणान्भोजयं
स्तत्र तदेव लभते फलम् ॥ ६ ॥ तर्प्पयित्वा पितॄन्देवान्स्नात्वा तद्गतमानसः ॥ जपेद्द्वादशनामानि देवस्य पुरतः स्थितः ॥ ७ ॥ मासिमासि निरा
हारो द्वादश्यां कुरुनंदन ॥ केशवं पूजयेन्नित्यं मासि मार्गशिरे बुधः॥८॥ पौषे नारायणं देवं माघमासे तु माधवम् ॥ गोविंदं फाल्गुने मासि विष्णुं
चैत्रे समर्चयेत् ॥ ९ ॥ वैशाखे मधुहंतारं ज्येष्ठे देवं त्रिविक्रमम् ॥ वामनं तु तथाऽऽषाढे श्रावणे श्रीधरं स्मरेत् ॥ १० ॥ हृषीकेशं भाद्रपदे पद्मनाभं
तथाऽश्विने ॥ दामोदरं कार्त्तिके तु कीर्त्तयन्नावऽसीदति ॥ ११ ॥ वाचिकं मानसं पापं कर्मजं यत्पुरा कृतम् ॥ तन्नश्यति न संदेहो मासनामानुकी
र्तनात् ॥ १२ ॥ स्वयं विबुद्धः सततमुन्मिषन्निमिषंस्तथा ॥ शीघ्रं प्रपश्य भुंजानो मंत्रहीनं समुद्गिरेत् ॥ १३ ॥ परमापद्गतस्याऽपि जंतोरेषा प्रति

क्रिया ॥ यन्मासाधिपतेर्विष्णोर्मासनामानुकीर्त्तनम् ॥ १४ ॥ ता निशास्ते च दिवसास्ते मासास्ते च वत्सराः ॥ नराणां सफला येषु चिंतितो
भगवान्हरिः ॥ १५ ॥ परमापद्गतस्याऽपि यस्य देवो जनार्दनः ॥ नाऽवसर्पति हृत्पद्मात्स योगी नाऽत्र संशयः ॥ १६ ॥ ते भाग्यहीना मनुजाः
सुशोच्यास्ते भूमिभाराय कृतावताराः ॥ अचेतनास्ते पशुभिः समाना ये भक्तिहीना भगवत्यनंते ॥ १७ ॥ ते पूर्णकार्या पुरुषाः पृथिव्यां ते स्वां
गपाताद्भुवनं पुनंति ॥ विचक्षणा विश्वविभूषणास्ते ये भक्तियुक्ता भगवत्यनंते ॥१८॥ स एव सुकृती तेन लब्धं जन्मतरोः फलम् ॥ चित्ते वचसि
काये च यस्य देवो जनार्दनः ॥ १९ ॥ एतत्तीर्थवरं पुण्यं लिंगो यत्र जनार्दनः ॥ वंचयित्वा रिपून्संख्ये क्रोडो भूत्वा सनातनः ॥२०॥ उपप्लवे चंद्र
मसो रवेश्च योह्यष्टकानामयनद्वये च ॥ पानीयमप्यत्र तिलैर्विमिश्रं दद्यात्पितृभ्यः प्रयतो मनुष्यः ॥ २१ ॥ घोणोन्मीलितमेरुरंध्रनिवहो दुःखाब्धि
मज्जत्प्लवः प्रादुर्भूतरसातलोदरबृहत्पंकार्द्रमग्नक्षुरः ॥ फूत्कारोत्करनुन्नवातविदलद्दिग्दंतिनादश्रुतिन्यस्तस्तब्धवपुः श्रुतिर्भवतु वः क्रोडो हरिः शांतये
॥ २२ ॥ इति श्रीस्कांदे महापुराण एकाशीतिसाहस्र्यां संहितायां पञ्चम आवंत्यखण्डे रेवाखण्डे लिंगवाराहतीर्थमाहात्म्यवर्णनंनामैकोनपञ्चाशद
धिकशततमोऽध्यायः ॥ १४९ ॥ ॥ छ ॥ ॥ श्रीमार्कंडेय उवाच ॥ ॥ ततो गच्छेन्महाराज कुसुमेश्वरमुत्तमम् ॥ दक्षिणे नर्मदाकूले उप
पातकनाशनम् ॥ १ ॥ कामेन स्थापितो देवः कुसुमेश्वरसंज्ञितः ॥ ख्यातः सर्वेषु लोकेषु देवदेवः सनातनः ॥ २ ॥ कामो मनोभवो विश्वः कुसु
मायुधचापभृत् ॥ स कामान्ददाति सर्वान्पूजितो मीनकेतनः ॥ ३ ॥ तेन निर्दग्धकायेन चाराध्य परमेश्वरम् ॥ अनंगेन तथा प्राप्तमंगित्वं नर्मदा
तटे ॥ ४ ॥ ॥ युधिष्ठिर उवाच ॥ ॥ अंगिभूतस्य नाशत्वमनंगस्य तु मे वद ॥ न श्रुतं न च मे दृष्टं भूतपूर्वं कदाचन ॥ ५ ॥ एतत्सर्वं यथा
वृत्तमाचक्ष्व द्विजसत्तम ॥ श्रोतुमिच्छामि विप्रेंद्र भीमार्जुनयमैः सह ॥६॥ ॥ श्रीमार्कंडेय उवाच ॥ ॥ आदौ कृतयुगे तात देवदेवो महेश्वरः ॥ तप
श्चचार विपुलं गंगासागरसंस्थितः ॥ ७ ॥ तेन संपादिता लोकास्तपसा ससुरासुराः ॥ जग्मुस्ते शरणं सर्वे देवदेवं शचीपतिम् ॥ ८ ॥ व्यापकः सर्व
भूतानां देवदेवो महेश्वरः ॥ संतापयति लोकांस्त्रींस्तन्निवारय गोपते ॥९॥ श्रुत्वा तद्वचनं तेषां देवानां बलवृत्रहा ॥ चिंतयामास मनसा तपोविघ्नाय
॥११०॥ चादिशत् ॥ १० ॥ अप्सरां मेनकां रंभां घृताचीं च तिलोत्तमाम् ॥ वसंतं कोकिलं कामं दक्षिणानिलमुत्तमम् ॥ ११ ॥ गत्वा तत्र महादेवं तप ॥२८४॥
श्चरणतत्परम् ॥ क्षोभयध्वं यथान्यायं गंगासागरवासिनम् ॥ १२ ॥ एवमुक्तास्तु ते सर्वे देवराजेन भारत ॥ देवाप्सरःसमोपेता जग्मुस्ते हर

१ गोपते–स्वर्लोकाधीश्वर–इत्यर्थः ।

सन्निधौ ॥ १३ ॥ वसंतमासे कुसुमाकराकुले मयूरदात्यूहसुकोकिलाकुले ॥ प्रनृत्य देवाप्सरगीतसंकुले प्रवाति वाते यमनैर्ऋताकुले ॥ १४ ॥ तेन संमूर्च्छिताः सर्वे संसर्गाच्च खगोत्तमाः ॥ मधुमाधवगंधेन सकिन्नरमहोरगाः ॥ १५ ॥ यावदालोकते तावत्तद्वनं व्याकुलीकृतम् ॥ वीक्षते मदनाविष्टं दशावस्थागतं जनम् ॥ १६ ॥ देवदेवोऽपि देवानामवस्थात्रितयं गतः ॥ सात्त्विकीं राजसीं राजंस्तामसीं तां शृणुष्व मे ॥ १७ ॥ एकं योगसमाधिना मुकुलितं चक्षुर्द्वितीयं पुनः पार्वत्या जघनस्थलस्तनतटे शृंगारभारालसम् ॥ अन्यद्दूरनिरस्तचापमदनक्रोधानलोद्दीपितं शंभोर्भिन्नरसं समाधिसमये नेत्रत्रयं पातु वः ॥ १८ ॥ एवं दृष्टः स देवेन सशरः सशरासनः ॥ भस्मीभूतो गतः कामो विनाशः सर्वदेहिनाम् ॥ १९ ॥ कामं दृष्ट्वा क्षयं यातं तत्र देवाऽप्सरोगणाः ॥ भीता यथाऽऽमतं सर्वे जग्मुश्चैव दिशो दश ॥ २० ॥ कामेन रहिता लोकाः ससुरासुरमानवाः ॥ ब्रह्माणं शरणं जग्मुर्देवा इन्द्रपुरोगमाः ॥ २१ ॥ सीदमानं जगद्दृष्ट्वा तमूचुः परमेष्ठिनम् ॥ जानासि त्वं जगच्छेषं प्रभो मैथुनसंभवात् ॥ २२ ॥ प्रजाः सर्वा विशुष्यंति कामेन रहिता विभो ॥ २३ ॥ एतच्छ्रुत्वा वचस्तेषां देवानां प्रपितामहः॥ जगाम सहितस्तत्र यत्र देवो महेश्वरः ॥ २४ ॥ अतोषयज्जगन्नाथं सर्वभूतमहेश्वरम् ॥ स्तुतिभिस्तंडकैः[2] स्तोत्रैर्वेदवेदांगसंभवैः ॥ २५ ॥ ततस्तुष्टो महादेवो देवानां परमेश्वरः ॥ उवाच मधुरां वाणीं देवान्ब्रह्मपुरोगमान् ॥ २६ ॥ किं कार्यं कश्च संतापः किं वाऽऽगमनकारणम् ॥ देवतानामृषीणां च कथ्यतां मम मा चिरम् ॥ २७ ॥ ॥ ॥ देवा ऊचुः ॥ ॥ कामनाशाज्जगन्नाशो भविताऽयं चराचरे ॥ त्रैलोक्यं त्वं पुनः शंभो उत्पादयितुमर्हसि ॥ २८ ॥ एतच्छ्रुत्वा वचस्तेषां विमृश्य परमेश्वरः ॥ चिंतयामास कामस्य विग्रहं भुवि दुर्लभम् ॥ २९ ॥ आजगाम ततः शीघ्रमनंगो ह्यंगतां गतः॥ प्राणदः सर्वभूतानां पश्यतां नृपसत्तम ॥ ३० ॥ ततः शंखनिनादेन भेरीणां निःस्वनेन च ॥ अभ्यनन्दंस्ततो देवं सुरासुरमहोरगाः ॥ ३१ ॥ नमस्ते देवदेवेश कृतार्थाः सुरसत्तमाः ॥ विसर्जिताः पुनर्जग्मुर्यथागतमरिंदम ॥ ३२ ॥ गतेषु सर्वदेवेषु कामदेवोऽपि भारत ॥ तपश्चचार विपुलं नर्मदातटमाश्रितः ॥ ३३ ॥ तपोजपकृशीभूतो दिव्यं वर्षशतं किल ॥ महाभूतैर्विघ्नकरैः पीड्यमानः समंततः ॥ ३४ ॥ आत्मविघ्नविनाशार्थं संस्मृतः कुण्डलेश्वरः ॥ चकार रक्षां सर्वत्र शरपाते नृपोत्तम ॥ ३५ ॥ ततस्तुष्टो महादेवो दृढभक्त्या वरप्रदः ॥ वरेण च्छंदयामास कामं कामविनाशनः ॥ ३६ ॥ ज्ञात्वा तुष्टं महादेवमुवाच झषकेतनः ॥ प्रणतः प्रांजलिर्भूत्वा देवदेवं त्रिलोचनम् ॥ ३७ ॥ यदि तुष्टोऽसि देवेश यदि देयो वरो मम ॥ अत्र तीर्थे जगन्नाथ

---

१ स्वेद—कंपादि—कामजदशावस्थासंकुलम्—इत्यर्थः । २ तांड्यैः—इ०पा० ।

सदा सन्निहितो भव ॥ ३८ ॥ तथेति चोक्त्वा वचनं देवदेवो महेश्वरः ॥ जगामाऽऽकाशमाविश्य स्तूयमानोऽप्सरोगणैः ॥ ३९ ॥ गते चाऽदर्शनं
देवे कामदेवो जगद्गुरुम् ॥ स्थापयामास राजेंद्र कुसुमेश्वरसंज्ञितम् ॥ ४० ॥ तत्र तीर्थे तु यः स्नात्वा ह्युपवासपरायणः ॥ चैत्रमासे चतुर्दश्यां
मदनस्य दिनेऽथ वा ॥ ४१ ॥ प्रभाते विमले प्राप्ते स्नात्वा पूज्य दिवाकरम् ॥ तिलमिश्रेण तोयेन तर्पयेत्पितृदेवताः ॥ ४२ ॥ कृत्वा स्नानं
विधानेन पूजयित्वा च तं नृप ॥ पिंडनिर्वपणं कुर्यात्तस्य पुण्यफलं शृणु ॥ ४३ ॥ सत्रयाजिफलं यच्च लभते द्वादशाब्दिकम् ॥ पिंडदानात्फलं
तच्च लभते नाऽत्र संशयः ॥ ४४ ॥ अंकुशमूले यः पिंडं पितॄनुद्दिश्य दापयेत् ॥ तस्य ते द्वादशाब्दानि तृप्तिं यांति पितामहाः ॥ ४५ ॥ कृमिकी
टपतंगा ये तत्र तीर्थे युधिष्ठिर ॥ प्राप्नुवंति मृताः स्वर्गं किं पुनर्ये नरा मृताः ॥ ४६ ॥ संन्यासं कुरुते योऽत्र जितक्रोधो जितेंद्रियः ॥ कुसुमेशे
नरो भक्त्या स गच्छेच्छिवमन्दिरम् ॥ ४७ ॥ तत्र दिव्याप्सरोभिश्च देवगन्धर्वगायनैः ॥ क्रीडते सेव्यमानस्तु कल्पकोटिशतं नृप ॥ ४८ ॥ पूर्णे
चैव ततः काल इह मानुष्यतां गतः ॥ जायते राजराजेंद्रैः पूज्यमानो नृपो महान् ॥ ४९ ॥ सुरूपः सुभगो वाग्मी विक्रांतो मतिमाञ्छुचिः ॥
जीवेद्वर्षशतं साग्रं सर्वव्याधिविवर्जितः ॥ ५० ॥ एतत्पुण्यं पापहरं तीर्थकोटिशताधिकम् ॥ कुसुमेशेति विख्यातं सर्वदेवनमस्कृतम् ॥ ५१ ॥
इति श्रीस्कांदे महापुराण एकाशीतिसाहस्र्यां संहितायां पञ्चम आवन्त्यखण्डे रेवाखण्डे कुसुमेश्वरतीर्थमाहात्म्यवर्णनंनाम पञ्चाशदधिकशततमो
ऽध्यायः ॥ १५० ॥ ॥ छ ॥ ॥ श्रीमार्कंडेय उवाच ॥ ॥ उत्तरे नर्मदाकूले तीर्थं परमशोभनम् ॥ जयवाराहमाहात्म्यं सर्वपापप्रणाश
नम् ॥ १ ॥ उद्धृता जगती येन सर्वदेवनमस्कृता ॥ लोकानुग्रहबुद्ध्या च संस्थितो नर्मदातटे ॥ २ ॥ तत्र तीर्थे तु यः स्नात्वा वीक्षते मधुसूद
नम् ॥ मुच्यते सर्वपापेभ्यो दशजन्माऽनुकीर्तनात् ॥ ३ ॥ मत्स्यः कूर्मो वराहश्च नरसिंहोऽथ वामनः ॥ रामो[1] रामश्च कृष्णश्च बुद्धः कल्किश्च ते
दश ॥ ४ ॥ ॥ युधिष्ठिर उवाच ॥ ॥ मत्स्येन किं कृतं तात कूर्मेण मुनिसत्तम ॥ वराहेण च किं कर्म नरसिंहेन किं कृतम् ॥ ५ ॥ वाम
नेन च रामेण राघवेण च किं कृतम् ॥ बुद्धरूपेण किं वाऽपि कल्किना किं कृतं वद ॥ ६ ॥ एवमुक्तस्तु विप्रेंद्रो धर्मपुत्रेण धीमता ॥ उवाच मधुरां
॥१११॥ वाणीं तदा धर्मसुतं प्रति ॥ ७ ॥ ॥ श्रीमार्कंडेय उवाच ॥ ॥ मीनो भूत्वा पुरा कल्पे प्रीत्यर्थं ब्रह्मणो विभुः ॥ समर्पयत्समुद्धृत्य वेदान्मग्नान्म ॥१८५॥
हार्णवे ॥ ८ ॥ अमृतोत्पादने राजन्कूर्मो भूत्वा जगद्गुरुः ॥ मंदरं धारयामास तथा देवीं वसुन्धराम् ॥ ९ ॥ उज्जहार धरां मग्नां पातालतलवासि

१ रामः—परशुराम इत्यर्थः ।

नीम् ॥ वाराहं रूपमास्थाय देवदेवो जनार्द्दनः ॥ १० ॥ नरस्यार्द्धतनुं कृत्वा सिंहस्यार्द्धतनुं तथा ॥ हिरण्यकशिपोर्वक्षो विददार नखांकुरैः ॥ ॥ ११ ॥ जटी वामनरूपेण स्तूयमानो द्विजोत्तमैः ॥ तद्दिव्यं रूपमास्थाय क्रमित्वा मेदिनीं क्रमैः ॥ १२ ॥ कृतवांश्च बलिं पश्चात्पातालतलवासिनम् ॥ स्थापयित्वा सुरान्सर्वान्गतो विष्णुः स्वकं पुरम् ॥ १३ ॥ जमदग्निसुतो रामो भूत्वा शस्त्रभृतां वरः ॥ क्षत्रियान्पृथिवीपालानवधीद्धैहयादिकान् ॥ १४ ॥ कश्यपाय महीं दत्त्वा सपर्वतवनाकराम् ॥ तपस्तपति देवेशो महेन्द्रेऽद्यापि भारत ॥१५॥ ततो दाशरथी रामो रावणं देवकण्टकम् ॥ सगणं समरे हत्वा राज्यं दत्त्वा विभीषणे ॥ १६ ॥ पालयित्वा नयाद्भूमिं मखैः संतपर्प्य देवताः ॥ स्वर्गं गतो महातेजा रामो राजीवलोचनः ॥ १७ ॥ वसुदेवगृहे भूयः संकर्षणसहायवान् ॥ अवतीर्णो जगन्नाथो वासुदेवो युधिष्ठिर ॥ १८ ॥ सोऽवधीत्तव सामर्थ्याद्धार्थं दुष्टभूभृताम् ॥ चाणूरकंसकेशीनां जरासंधस्य भारत ॥ १९ ॥ तेन त्वं सुसहायेन हत्वा शत्रून्नरेश्वर ॥ भोक्ष्यसे पृथिवीं सर्वां भ्रातृभिः सह संभृताम् ॥ २० ॥ तथा बुद्धत्वमपरं नवमं प्राप्स्यतेऽच्युतः ॥ शांतिमान्देवदेवेशो मधुहंता मधुप्रियः ॥ २१ ॥ तेन बुद्धस्वरूपेण देवेन परमेष्ठिना ॥ भविष्यति जगत्सर्वं मोहितं सचराचरम् ॥ २२ ॥ न श्रोष्यंति पितुः पुत्रास्तदाप्रभृति भारत ॥ न गुरोर्बांधवाः शिष्या भविष्यत्यधरोत्तरम्[2] ॥ ॥ २३ ॥ जितो धर्मो ह्यधर्मेण चासत्येन ऋतं जितम् ॥ जिताश्चौरैश्च राजानः स्त्रीभिश्च पुरुषा जिताः ॥ २४ ॥ सीदंति चाग्निहोत्राणि गुरौ पूजा प्रणश्यति ॥ सीदंति मानवा धर्म्माः कलौ प्राप्ते युधिष्ठिर ॥ २५ ॥ द्वादशे दशमे वर्षे नारी गर्भवती भवेत् ॥ कन्यास्तत्र प्रसूयंते ब्राह्मणो हरिपिंगलः ॥ २६ ॥ भविष्यति ततः कल्किर्दशमे जन्मनि प्रभुः ॥ २७ ॥ एकत्ते कथितं राजन्देवस्य परमेष्ठिनः ॥ कारणं दश जन्मानां सर्वपापक्षयंकरम् ॥ २८ ॥ इति श्रीस्कांदे महापुराण एकाशीतिसाहस्र्यां संहितायां पञ्चम आवंत्यखण्डे रेवाखण्डे श्वेतवाराहतीर्थमाहात्म्यवर्णनंनामैकपञ्चाशदधिकशततमोऽध्यायः ॥ १५१ ॥ ॥ छ ॥ ॥ श्रीमार्कंडेय उवाच ॥ ॥ ततो गच्छेद्धरापाल भार्गलेश्वरमुत्तमम् ॥ शंकरं जगतः प्राणं स्मृतमात्राघनाशनम् ॥ १ ॥ तत्र तीर्थे तु यः स्नात्वा पूजयेत्परमेश्वरम् ॥ अश्वमेधस्य यज्ञस्य फलं प्राप्नोति मानवः ॥ २ ॥ तत्र तीर्थे तु यः कश्चित्प्राणत्यागं करिष्यति ॥ अनिवर्त्तिका गतिस्तस्य रुद्रलोकादसंशयम् ॥ ३ ॥ इति श्रीस्कांदे महापुराण एकाशीतिसाहस्र्यां संहितायां पञ्चम आवंत्यखंडे रेवाखण्डे भार्गलेश्वरतीर्थमाहात्म्यवर्णनंनाम द्विपंचाशदधिकशततमोऽध्यायः ॥ १५२ ॥ ॥ छ ॥ ॥ छ ॥

१ नयात्—नीत्यां—इत्यर्थः । २ अधरोत्तरम्—नीचैस्तारतम्—सृष्टिक्रमव्यत्यासः—इत्यर्थः ।

॥ ॥ मार्कण्डेय उवाच ॥ ॥ तस्यैवानंतरं चान्यद्रवितीर्थमनुत्तमम् ॥ यस्य संदर्शनादेव मुच्यन्ते पातकैर्नराः ॥ १ ॥ रवितीर्थे
तु यः स्नात्वा नरः पश्यति भास्करम् ॥ तस्य यत्फलमुद्दिष्टं स्वयं देवेन तच्छृणु ॥ २ ॥ नांधो न मूको बधिरः कुले भवति
कश्चन ॥ कुरूपः कुनखी वापि तस्य जन्मानि षोडश ॥ ३ ॥ दद्रुचित्रककुष्ठानि मण्डलानि विचर्चिका ॥ नश्यंति देवभक्तस्य षण्मा
सान्नात्र संशयः ॥ ४ ॥ चरितं तस्य देवस्य पुराणे यच्छ्रुतं मया ॥ न तत्कथयितुं शक्यं संक्षेपेण नृपोत्तम ॥ ५ ॥ तत्र तीर्थे तु यद्दानं रविमुद्दिश्य
दीयते ॥ विधिना पात्रविप्राय तस्यांतो नाऽस्ति कर्हिचित् ॥ ६ ॥ अयने विषुवे चैव चंद्रसूर्यग्रहे तथा ॥ रवितीर्थे प्रदत्तानां दानानां फलमुत्तमम्
॥ ७ ॥ संक्रांतौ यानि दानानि हव्यकव्यानि भारत ॥ अपामिव समुद्रस्य तेषामंतो न लभ्यते ॥ ८ ॥ येनयेन यदा दत्तं येनयेन यदा हुतम् ॥
तस्य तस्य तदा काले सविता प्रतिदायकः ॥ ९ ॥ सप्त जन्मानि तान्येव ददात्यर्कः पुनःपुनः ॥ शतमिंदुक्षये दानं सहस्रं तु दिनक्षये ॥ १० ॥
संक्रांतौ शतसाहस्रं व्यतीपाते त्वनंतकम् ॥ ११ ॥ ॥ युधिष्ठिर उवाच ॥ ॥ रवितीर्थं कथं तात पुण्यात्पुण्यतरं स्मृतम्॥विस्तरेण ममाख्याहि
श्रवणौ मम लंपटौ ॥ १२ ॥ ॥ श्रीमार्कंडेय उवाच ॥ ॥ शृणुष्वाऽवहितो भूत्वा ह्यादित्येश्वरमुत्तमम् ॥ उत्तरे नर्मदाकूले सर्वव्याधिविनाश
नम् ॥ १३ ॥ पुरा कृतयुगस्यादौ जाबालिर्ब्राह्मणोऽभवत् ॥ वसिष्ठाऽन्वयसंभूतो वेदशास्त्रार्थपारगः ॥ १४ ॥ पतिव्रता साधुशीला तस्य भार्या
मनस्विनी ॥ ऋतुकाले तु सा गत्वा भर्त्तारमिदमब्रवीत् ॥ १५ ॥ वर्त्तते ऋतुकालो मे भर्त्तारं त्वामुपस्थिता ॥ भज मां प्रीतिसंयुक्तः पुत्रकामां
तु कामिनीम् ॥ १६ ॥ एवमुक्तो द्विजः प्राह प्रियेऽद्याऽहं व्रतान्वितः ॥ गच्छेदानीं वरारोहे दास्य ऋत्वंतरे पुनः ॥ १७ ॥ पुनर्द्वितीये संप्राप्ते
ऋतुकालेऽप्युपस्थिता ॥ पुनः सा च्छंदिता तेन व्रतस्थोऽद्येति भारत ॥ १८ ॥ इत्थं वा बहुशस्तेन च्छंदिता च पुनःपुनः ॥ निराशा चाऽभवत्तत्र
भर्त्तारं प्रति भामिनी ॥ १९ ॥ दुःखेन महताविष्टा विधायानशनं मृता ॥ तेन भ्रूणहतेनैव पापेन सहसा द्विजः ॥ २० ॥ शीर्णघ्राणांघ्रिरभव
त्तपः सर्वं ननाश च ॥ दृष्ट्वात्मानं स कुष्ठेन व्याप्तं ब्राह्मणसत्तमः ॥ २१ ॥ विषादं परमं गत्वा नर्मदातटमाश्रितः ॥ अपृच्छद्भास्करं तीर्थं द्विजेभ्यो
द्विजसत्तमः ॥ २२ ॥ आरोग्यं भास्करादिच्छेदिति संचिंत्य चेतसि ॥ कुतस्तद्भास्करं तीर्थं भो द्विजाः कथ्यतां मम ॥ २३ ॥ तपस्तप्स्याम्यहं
गत्वा तस्मिंस्तीर्थे सुभावितः ॥ २४ ॥ ॥ द्विजा ऊचुः ॥ ॥ रेवाया उत्तरे कूले आदित्येश्वरनामतः ॥ विद्यते भास्करं तीर्थं सर्वव्याधिविना
शनम् ॥ २५ ॥ तत्र याह्यविचारेण गंतुं चेच्छक्यते त्वया ॥ एवमुक्तो द्विजैर्विप्रो गंतुं तत्र प्रचक्रमे ॥ २६ ॥ व्याधिना परिभूतस्तु घोरेण प्राणहा

रिणा ॥ यदा गंतुं न शक्नोति तदा तेन विचिंतितम् ॥ २७ ॥ सामर्थ्यं ब्राह्मणानां हि विद्यते भुवनत्रये ॥ लिंगपातः कृतो विप्रैर्देवदेवस्य शूलिनः ॥ २८ ॥ समुद्रः शोषितो विप्रैर्विन्ध्यश्चापि निवारितः ॥ अहमप्यत्र संस्थस्तु ह्यानयिष्यामि भास्करम् ॥ २९ ॥ तपोबलेन महता ह्यादित्ये श्वरसंज्ञितम् ॥ इति निश्चित्य मनसा ह्युग्रे तपसि संस्थितः ॥ ३० ॥ वायुभक्षो निराहारो ग्रीष्मे पंचाग्निमध्यगः ॥ शिशिरे तोयमध्यस्थो वर्षा स्वभ्रावृताकृतिः ॥ ३१ ॥ साग्रे वर्षशते पूर्णे रविस्तुष्टोऽब्रवीदिदम् ॥ ३२ ॥ ॥ सूर्य उवाच ॥ ॥ वरं वरय भद्रं ते किं ते मनसि वांच्छितम् ॥ अदेयमपि दास्यामि ब्रूहि मां त्वं चिरं कृथाः ॥ ३३ ॥ किमसाध्यं हि ते विप्र इदानीं तपसि स्थितः ॥ ३४ ॥ ॥ जाबालिरुवाच ॥ ॥ यदि तुष्टोऽसि देवेश यदि देयो वरो मम ॥ मम प्रतिज्ञा देवेश ह्यादित्येश्वरदर्शने ॥ ३५ ॥ कृता तां पारितुं देव न शक्तो व्याधिना वृतः ॥ शुक्लतीर्थेऽत्र तिष्ठ त्वमादित्येश्वरमूर्त्तिधृक् ॥ ३६ ॥ एवमुक्ते तु देवेशो बहुरूपो दिवाकरः ॥ उत्तरे नर्मदाकूले क्षणादेव व्यदृश्यत ॥ ३७ ॥ तदाप्रभृति भूपाल तद्धि तीर्थं प्रचक्षते ॥ सर्वपापहरं प्रोक्तं सर्वदुःखविनाशनम् ॥ ३८ ॥ यस्तु संवत्सरं पूर्णं नित्यमादित्यवासरं ॥ स्नात्वा प्रदक्षिणाः सप्त दत्त्वा पश्यति भास्करम् ॥ ३९ ॥ यत्फलं लभते तेन तच्छृणुष्व मयोदितम् ॥ प्रसुप्तं[1] मंडलानीह दद्रुकुष्ठविचर्चिकाः ॥ ४० ॥ नश्यंति सत्वरं राजंस्तूलराशिरिवाऽनले ॥ धनपुत्रकलत्राणां पूरयेद्वत्सरत्रयात् ॥ ४१ ॥ यस्तु श्राद्धप्रदस्तत्र पितॄनुद्दिश्य संक्रमे ॥ तृप्यंति पितरस्तस्य पितृदेवो हि भास्करः ॥ ४२ ॥ इति ते कथितं सर्वमादित्येश्वरमुत्तमम् ॥ सर्वपापहरं दिव्यं सर्वरोगविनाशनम् ॥ ४३ ॥ इति श्रीस्कांदे महापुराण एकाशीतिसाहस्र्यां संहितायां पञ्चम आवंत्यखण्डे रेवाखण्डे आदित्येश्वरतीर्थमाहात्म्यवर्णनंनाम त्रिपंचाशदधिकशततमोऽध्यायः ॥ १५३ ॥ ॥ छ ॥ ॥ श्रीमार्कंडेय उवाच ॥ ॥ नर्मदादक्षिणे कूले तीर्थं कलकलेश्वरम् ॥ विख्यातं सर्वलोकेषु स्वयं देवेन निर्मितम् ॥ १ ॥ अंधकं समरे हत्वा देवदेवो महेश्वरः ॥ सहितो देवगंधर्वैः किन्नरैश्च महोरगैः ॥ २ ॥ शंखतूर्यनिनादैश्च मृदंगपणवादिभिः ॥ वीणावेणुरवैश्चान्यैः स्तुतिभिः पुष्कलादिभिः ॥ ३ ॥ गायंति सामानि यजूंषि चान्ये च्छन्दांसि चान्ये ऋचमुद्गिरंति ॥ स्तोत्रैरनेकैरपरे गृणंति महेश्वरं तत्र महानुभावाः ॥ ४ ॥ प्रमथानां निनादेन कलकलेन च बन्दिनाम् ॥ यस्मात्प्रतिष्ठितं लिंगं तस्माज्जातं तदाख्यया ॥५॥ तत्र तीर्थे तु यः स्नात्वा वीक्षेत्कलकलेश्वरम् ॥ वाजपेयात्परं पुण्यं स लभेन्मानवो भुवि ॥६॥

१ प्रसुप्तम्—कुष्ठरोगभेदः—सुनबहिरी—इति महाराष्ट्रभाषायाम् ।

 तेन पुण्येन पूतात्मा प्राणत्यागाद्दिवं व्रजेत् ॥ आरूढः परमं यानं गीयमानोऽप्सरोगणैः ॥ ७ ॥ उपभुज्य महाभोगान्कालेन महता 
 ततः ॥ मर्त्यलोके महात्माऽसौ जायते विमले कुले ॥ ८ ॥ ब्राह्मणः सुभगो लोके वेदवेदांगपारगः ॥ व्याधिशोकविनिर्मुक्तो जीवेच्च शरदां शतम् ॥ 
॥ ९ ॥ इति श्रीस्कांदे महापुराण एकाशीतिसाहस्र्यां संहितायां पंचम आवन्त्यखण्डे रेवाखण्डे कलकलेश्वरतीर्थफलमाहात्म्यवर्णनंनाम 
चतुःपंचाशदधिकशततमोऽध्यायः ॥ १५४ ॥ ॥ छ ॥ ॥ श्रीमार्कंडेय उवाच ॥ ॥ अतः परं प्रवक्ष्यामि सर्वतीर्थादनुत्तमम् ॥ उत्तरे
नर्मदाकूले शुक्लतीर्थं युधिष्ठिर ॥ १ ॥ तस्य तीर्थस्य चाऽन्यानि पुण्यत्वाच्छुभदर्शनात् ॥ पृथिव्यां सर्वतीर्थानि कलां नार्हंति षोडशीम् ॥ २ ॥
॥ ॥ युधिष्ठिर उवाच ॥ ॥ तस्य तीर्थस्य माहात्म्यं श्रोतुमिच्छामि तत्त्वतः ॥ भ्रातृभिः सहितः सर्व्वैस्तथान्यैर्द्विजसत्तमैः ॥ ३ ॥
॥ ॥ श्रीमार्कंडेय उवाच ॥ ॥ शुक्लतीर्थस्य चोत्पत्तिमाकर्णय नरेश्वर ॥ यस्य संदर्शनादेव ब्रह्महत्या प्रलीयते ॥ ४ ॥ नर्मदा सरितां श्रेष्ठा
सर्वपापप्रणाशिनी ॥ यच्च बाल्ये कृतं पापं दर्शनादेव नश्यति ॥ ५ ॥ मोक्षदानि न सर्वत्र शुक्लतीर्थमृते नृप ॥ शुक्लतीर्थस्य माहात्म्यं पुराणे
यच्छ्रुतं मया ॥६॥ समागमे मुनीनां तु देवानां हि तथैव च ॥ कथितं देवदेवेन शितिकण्ठेन भारत ॥ कैलासे पर्वतश्रेष्ठे तत्ते संकथयाम्यहम् ॥
॥ ७ ॥ पुरा कृतयुगस्याऽऽदौ तोषितुं गिरिजापतिम् ॥ तपश्चचार विपुलं विष्णुर्वर्षसहस्रकम् ॥ वायुभक्षो निराहारः शुक्लतीर्थे व्यवस्थितः ॥ ८ ॥
ततः प्रत्यक्षतामागाद्देवदेवो महेश्वरः ॥ प्रादुर्भूतस्तु सहसा तत्र तीर्थे नराधिप ॥९॥ क्रोशद्वयमिदं चक्रे भुक्तिमुक्तिप्रदायकम् ॥ तस्मिंस्तीर्थे नरः
स्नात्वा मुच्यते सर्वकिल्बिषैः ॥ १० ॥ गंगा कनखले पुण्या कुरुक्षेत्रे सरस्वती ॥ ग्रामे वा यदि वाऽरण्ये पुण्या सर्वत्र नर्मदा ॥ ११ ॥ सर्वौषधी
नामशनं प्रधानं सर्वेषु पेयेषु जलं प्रधानम् ॥ निद्रा सुखानां प्रमदा रतीनां सर्वेषु गात्रेषु शिरः प्रधानम् ॥ १२ ॥ स्नातस्याऽपि यथा पुण्यं
ललाटं नृपसत्तम ॥ शुक्लतीर्थं तथा पुण्यं नर्मदायां युधिष्ठिर ॥ १३ ॥ सरितां च यथा गंगा देवतानां जनार्दनः ॥ शुक्लतीर्थं तथा पुण्यं नर्मदायां
व्यवस्थितम् ॥ १४ ॥ चतुष्पदानां सुरभिर्वर्णानां ब्राह्मणो यथा ॥ प्रधानं सर्वतीर्थानां शुक्लतीर्थं तथा नृप ॥ १५ ॥ ग्रहाणां तु यथाऽऽदित्यो
 नक्षत्राणां यथा शशी ॥ शिरो वा सर्वगात्राणां धर्माणां सत्यमिष्यते ॥ १६ ॥ तथैव पार्थ तीर्थानां शुक्लतीर्थमनुत्तमम् ॥ दुर्विज्ञेयो यथा लोके 
परमात्मा सनातनः ॥ १७ ॥ सुसूक्ष्मत्वादनिर्देश्यः शुक्लतीर्थं तथा नृप ॥ मन्दप्रज्ञत्वमापन्नो महामोहसमन्वितः ॥ १८ ॥ शुक्लतीर्थं ना जानाति
नर्मदातटसंस्थितम् ॥ बहुनाऽत्र किमुक्तेन धर्म्मपुत्र पुनःपुनः ॥ १९ ॥ शुक्लतीर्थे महापुण्यं संप्राप्तं कल्मषक्षयात् ॥ योऽत्र दत्ते शुचिर्भूत्वा

एकं रेवाजलांजलिम् ॥ २० ॥ कल्पकोटिसहस्राणि पितरस्तेन तर्पिताः ॥ २१ ॥ एकः पुत्रो धरापृष्ठे पितृणामार्त्तिनाशनः ॥ चाणक्यो नाम राजाऽभूच्छुक्लतीर्थं च वेद सः ॥ २२ ॥ ॥ युधिष्ठिर उवाच ॥ ॥ कोऽसौ द्विजवरश्रेष्ठ चाणक्योनाम नामतः ॥ शुक्लतीर्थस्य यो वेत्ता नाऽन्यो वेत्ता हि कश्चन ॥ २३ ॥ केनोपायेन तत्तीर्थं तेन ज्ञातं धरातले ॥ तदहं श्रोतुमिच्छामि परं कौतूहलं हि मे ॥२४॥ ॥ श्रीमार्कंडेय उवाच ॥ ॥ इक्ष्वाकुप्रभवो राजा नप्ता शुद्धोदनस्य च ॥ चाणक्यो नाम राजर्षिर्बुभुजे पृथिवीमिमाम् ॥ २५ ॥ विक्रांतो मतिमाञ्च्छूरः सर्वलोकैरवंचितः ॥ वंचितः सहसा धूर्तवायसाभ्यां नृपोत्तमः ॥ २६ ॥ ॥ युधिष्ठिर उवाच ॥ ॥ कथं स वञ्चितो राजा वायसाभ्यां कुतोऽथवा ॥ पुरा येन प्रतिज्ञातं धीगर्भेण महात्मना ॥ २७ ॥ न जीवे वंचितोऽन्येन प्राणांस्त्यक्ष्ये न संशयः ॥ एतन्मे वद विप्रेंद्र परं कौतूहलं मम ॥ ॥ २८ ॥ ॥ श्रीमार्कंडेय उवाच ॥ ॥ आत्मानं वंचितं ज्ञात्वा तदा संगृह्य वायसौ ॥ प्रेषयामास तीव्रेण दण्डेन यमसादनम् ॥ ॥ २९ ॥ ॥ वायसावूचतुः ॥ ॥ सुन्दोपसुन्दयोः पुत्रावावां काकत्वमागतौ ॥ मा वधीस्त्वं महाभाग कस्मिंश्चित्कारणांतरे ॥ ३० ॥ तावावां कृतसंकल्पौ त्वया कोपेन मानद ॥ निरस्तावनिरस्तौ वा यास्यावः परमां गतिम् ॥ ३१ ॥ तदादेशाय राजेंद्र कृत्वा तव महत्प्रियम् ॥ मुक्तशापौ भविष्यावो ब्रह्मणो वचनं तथा ॥ ३२ ॥ तच्छ्रुत्वा काकवचनं चाणक्यो नृपसत्तमः ॥ नाहं जीवे विदित्वैवं वञ्चितः केन कर्हिचित् ॥ ३३ ॥ तस्मात्तीर्थं विजानीतं यमस्य सदने द्विजौ[1] ॥ प्रेषयामि यथान्यायं श्रुत्वा तत्कथयिष्यथः ॥ ३४ ॥ तेनैव मुक्तौ तौ काकौ स्रक्चन्दनविभूषितौ ॥ शीघ्रगौ प्रेषयामास यमस्य सदनं प्रति ॥ ३५ ॥ ॥ राजोवाच ॥ ॥ तत्र धर्मपुरं गत्वा विचरंतावितस्ततः ॥ यदि पृच्छति धर्मात्मा यमः संयमनो महान् ॥ ३६ ॥ कुतो वामागतं[2] भूतं केन वा भूषितावुभौ ॥ मदीया भारती तस्य कथनीया ह्यशंकितम् ॥ ३७ ॥ इक्ष्वाकुसम्भवो राजा चाणक्योनाम धार्मिकः ॥ द्वादशाहे मृतस्याऽस्य तर्प्पितावशनादिना ॥ ३८ ॥ तच्छ्रुत्वा वचनं राज्ञो गतौ तौ यमसादनम् ॥ क्रीडितौ प्रांगणे तस्य स्रक्चंदनविभूषितौ ॥ धर्मराजेन तौ दृष्टौ पृष्टौ धृष्टौ च वायसौ ॥ ३९ ॥ ॥ ॥ यम उवाच ॥ ॥ कुतः स्थानात्समायातौ केन वा भूषितावुभौ ॥ वृत्तं वै कथ्यतामेतद्वायसावविशंकया ॥ ४० ॥ ॥ काकावूचतुः ॥ ॥

---

१ द्विजौ—पक्षिणौ—हे काकौ—इत्यर्थः । २ वाम्—युवयोः—आगतम्—आगमनम्—इत्यर्थः ।

इक्ष्वाकुसम्भवो राजा चाणक्योनाम धार्म्मिकः ॥ द्वादशाहे मृतस्याऽस्य तर्पितावशनादिभिः ॥ ४१ ॥ तयोस्तद्वचनं श्रुत्वा तदा वैवस्वतो
यमः ॥ चित्रगुप्तं कलिं कालं वीक्ष्यतामिदमब्रवीत् ॥ ४२ ॥ अंडजस्वेदजातीनां भूतानां सचराचरे ॥ विहितं लोककर्तॄणां सान्निध्यं ब्रह्मणा
मम ॥ ४३ ॥ गतः कुत्र दुराचारश्चाणक्यो नामतस्त्विह ॥ अन्विष्यतां पुराणेषु त्वितिहासेषु या गतिः ॥ ४४ ॥ ततस्तैर्धर्म्मपालैस्तु धर्मराज
प्रचोदितैः ॥ निरीक्षिता पुराणोक्ता कर्मजा गतिरागतिः ॥ ४५ ॥ ततः प्रोवाच वचनं धर्मो धर्मभृतां वरः ॥ शृण्वतां धर्मपालानां मेघगंभीरया
गिरा ॥ ४६ ॥ शुक्लतीर्थे मृतानां तु नर्मदाविमले जले ॥ अण्डजस्वेदजातीनां न गतिर्मम सन्निधौ ॥ ४७ ॥ तत्तीर्थं धार्मिकं लोके ब्रह्मविष्णुमहे
श्वरैः ॥ निर्मितं परया भक्त्या लोकानां हितकाम्यया ॥ ४८ ॥ पापोपपातकैर्युक्ता ये नरा नर्मदाजले ॥ शुक्लतीर्थे मृताः शुद्धा न ते मद्विषयाः
क्वचित् ॥ ४९ ॥ एतच्छ्रुत्वा तु वचनं तौ काकौ यमभाषितम् ॥ आगतौ शीघ्रगौ पार्थ दृष्ट्वा यमपुरं महत् ॥ ५० ॥ पृष्टौ तौ प्रणतौ राज्ञा यथा
वृत्तं यथाश्रुतम् ॥ कथयामासतुः पार्थ दानवौ काकतां गतौ ॥ ५१ ॥ अस्मात्स्थानाद्गतावावां यमस्य पुरमुत्तमम् ॥ पृथिव्या दक्षिणे भागे
ह्यतीत्य बहुयोजनम् ॥ ५२ ॥ तत्पुरं कामगं दिव्यं स्वर्णप्राकारतोरणम् ॥ अनेकगृहसंबाधं मणिकांचनभूषितम् ॥ ५३ ॥ चतुष्पथैश्चत्वरैश्च घंटा
मार्गोपशोभितम् ॥ उद्यानवनसंच्छन्नं पद्मिनीखंडमंडितम् ॥ ५४ ॥ हंससारससंघुष्टं कोकिलाकुलसंकुलम् ॥ सिंहव्याघ्रगजाकीर्णमृक्षवानरसेवि
तम् ॥ ५५ ॥ नरनारीसमाकीर्णं नित्योत्सवविभूषितम् ॥ शंखदुन्दुभिनिर्घोषैर्वीणावेणुनिनादितम् ॥ ५६ ॥ यममार्गेऽपि विहितं स्वर्गलोकमि
वाऽपरम् ॥ गतौ तत्र पुनश्चान्यैर्यमदूतैर्यमाज्ञया ॥ ५७ ॥ विदितौ प्रेषितौ तत्र यत्र देवो जगत्प्रभुः ॥ प्राणस्य भीत्या दृष्टोऽसौ सिंहासनगतः
प्रभुः ॥ ५८ ॥ महाकायो महाजंघो महास्कन्धो महोदरः ॥ महावक्षा महाबाहुर्महावक्रेक्षणो महान् ॥ ५९ ॥ महामहिषमारूढो महामुकुटभू
षितः ॥ तत्राऽन्यश्च कलिः कालश्चित्रगुप्तो महामतिः ॥ ६० ॥ समागतौ तदा दृष्टौ मध्ये ज्वलितपावकौ ॥ पुण्यपापानि जंतूनां श्रुतिस्मृत्यर्थपा
रगौ ॥ ६१ ॥ विचारयंतौ सततं तिष्ठाते तौ दिवानिशम् ॥ ततो ह्यावां प्रणामांते यमेन यममूर्तिना ॥ ६२ ॥ पृष्टावागमने हेतुं तम
ब्रुव शृणुष्व तत् ॥ उज्जयिन्यां महीपालश्चाणक्योऽभूत्प्रतापवान् ॥ ६३ ॥ द्वादशाहे मृतस्याऽस्य भुक्त्वा प्राप्तौ यमालयम् ॥ ततोऽस्माकं ॥२८८॥
॥११४॥ वचः श्रुत्वा कंपयित्वा शिरो यमः ॥ ६४ ॥ उवाच वचनं सत्यं सभामध्ये हसन्निव ॥ अस्ति तत्कारणं येन चाणक्यः पापपूरुषः ॥ ६५ ॥
नायातो मम लोके तु सर्वपापभयंकरे ॥ शुक्लतीर्थे मृतानां तु नर्मदायां परं पदम् ॥ ६६ ॥ जायते सर्वजंतूनां नाऽत्र काचिद्विचारणा ॥

अवशः स्ववशोवाऽपि जंतुस्तत्क्षेत्रमंडले ॥ ६७ ॥ मृतः स वै न सन्देहो रुद्रस्यानुचरो भवेत ॥ तद्धर्मवचनं श्रुत्वा निर्गत्य नगराद्बहिः ॥ ६८ ॥
पश्यन्तौ विविधां घोरां नरके लोकयातनाम् ॥ त्रिंशत्कोटयो हि घोराणां नरकाणां नृपोत्तम ॥६९॥ दृष्ट्वा भीतौ परामार्त्ति गतौ तत्र महापथि ॥
नरको रौरवस्तत्र महारौरव एव च ॥ ७० ॥ पेषणः शोषणश्चैव कालसूत्रोऽस्थिभंजनः ॥ तामिस्रश्चांधतामिस्रः कृमिपूतिवहस्तथा ॥ ७१ ॥ दृष्ट
श्चान्यो महाज्वालस्तत्रैव विषभोजनः ॥ नरकौ दंशमशकौ तथा यमलपर्वतौ ॥ ७२ ॥ नदी वैतरणी दृष्टा सर्वपापप्रणाशिनी ॥ शीतलं
सलिलं यत्र पिबन्ति ह्यमृतोपमम् ॥ ७३ ॥ तदेव नीरं पापानां शोणितं परिवर्तते ॥ असिपत्रवनं चाऽन्यद्दृष्टाऽन्या महती शिला ॥ ७४ ॥ अग्निपुं
जनिभाकारा विशाला शाल्मली परा ॥ इत्यादयस्तथैवान्ये शतसाहस्रसंज्ञिताः ॥ ७५ ॥ घोरघोरतरा दृष्टाः क्लिश्यंते यत्र मानवाः ॥ वाचिकै
र्मानसैः पापैः कर्मजैश्च पृथग्विधैः ॥ ७६ ॥ अहंकारकृतैर्द्रोषैर्मायावचनपूर्वकैः ॥ पिता माता गुरुर्भ्राता अनाथा विकलेंद्रियाः ॥ ७७ ॥ भ्रमन्ति
नोद्धृता येषां गतिस्तेषां हि रौरवे ॥ तत्र ते द्वादशाब्दानि क्षपित्वा रौरवेऽधमाः ॥७८॥ इह मानुष्यके लोके दीनांधाश्च भवंति ते ॥ देवब्रह्मस्व
हर्तॄणां नराणां पापकर्मणाम् ॥ ७९ ॥ महारौरवमाश्रित्य ध्रुवं वासो यमालये ॥ ततः कालेन महता पापाः पापेन वेष्टिताः ॥ ८० ॥ जायन्ते
कण्टकैर्भिन्नाः कोशे वा कोशकारकाः ॥ मृगपक्षिविहंगानां घातका मांसभक्षकाः ॥ ८१ ॥ पेषणं नरकं यांति शोषणं जीवबन्धनात् ॥ तत्रत्यां
यातनां घोरां सहित्वा शास्त्रचोदिताम् ॥ ८२ ॥ इह मानुष्यतां प्राप्य पंग्वंधबधिरा नराः ॥ गवार्थे[2] ब्राह्मणार्थे च ह्यनृतं वदतामिह ॥ ८३ ॥
पतनं जायते पुंसां नरके कालसूत्रके ॥ तत्रत्या यातना घोरा विहिता शास्त्रकर्तृभिः ॥ ८४ ॥ भुक्त्वा समागता ह्यत्र ते यास्यंत्यंत्यजां गतिम् ॥
बंधयंति च ये जीवांस्त्यक्त्वात्मकुलसंततिम् ॥ ८५ ॥ पतन्ति नात्र सन्देहो नरके तेऽस्थिभंजने ॥ तत्र वर्षशतस्यांऽत इह मानुष्यतां गताः ॥
॥ ८६ ॥ कुब्जा वामनकाः पापा जायन्ते दुःखभागिनः ॥ ये त्यजंति स्वकां भार्यां मूढाः पंडितमानिनः ॥ ८७ ॥ ते यांति नरकं घोरं तामिस्रं
नाऽत्र संशयः॥ तत्र वर्षशतस्यांते इह मानुष्यतां गताः ॥८८॥ दुश्चर्माणो दुर्भगाश्च जायन्ते मानवा हि ते ॥ मानकूटं तुलाकूटं कूटकं तु वदंति ये ॥
॥ ८९ ॥ नरके तेंऽधतामिस्रे प्रपच्यंते नराधमाः ॥ शतसाहस्रिकं कालमुषित्वा तत्र ते नराः ॥ ९० ॥ इह शत्रुगृहे त्वंधा भ्रमन्ते दीनमूर्त्तयः ॥

१ दृमाश्च—यमलपर्वतावग्रे—युग्मपर्वतौ—इत्युक्तौ । २ येन—अनृतभाषणेन—गवां ब्राह्मणानां वा विपत्तिः संकटं वाऽऽपतेत्—तादृशमनृतं—कूटसाक्ष्यं वा वदतां महत्पातकं जायते—तेन पापेन पुंसां कालसूत्रनरक प्राप्तिर्भवति ।

पितृदेवद्विजेभ्योऽन्नमदत्त्वा येऽत्र भुंजते ॥ ९१ ॥ नरके कृमिमध्ये ते पतंति स्वात्मपोषकाः ॥ ततः प्रसूतिकाले हि कृमिभुक्तश्च सव्रणः ॥९२॥ जायतेऽशुचिगन्धोऽत्र परभाग्योपजीवकः ॥ स्वकर्मविच्युताः पापा वर्णाश्रमविवर्जिताः ॥ ९३ ॥ नरके पूयसंपूर्णे क्लिश्यन्ते ह्ययुतं समाः ॥ पूर्णे तत्र ततः काले प्राप्य मानुष्यकं भवम् ॥ ९४ ॥ उद्वेजनीया भूतानां जायन्ते व्याधिभिर्वृताः ॥ अग्निदो गरदश्चैव लोभमोहान्वितो नरः ॥ ९५ ॥ नरके विषसंपूर्णे निमज्जति दुरात्मवान् ॥ तत्र वर्षशतात्कालादुन्मज्जनमवस्थितः ॥ ९६ ॥ भुवि मानुषतां प्राप्य कृपणो जायते पुनः ॥ पादुकोपानहौ छत्रं शय्यां प्रावरणानि च ॥ ९७ ॥ अदत्त्वा दंशमशकैर्भक्ष्यंते जन्यसप्ततिम् ॥ पितुर्द्रव्यापहर्त्तारस्ताडनक्रोशने रताः ॥९८॥ पीडनं क्रियते तेषां यत्र तौ युग्मपर्वतौ ॥ या सा वैतरणी घोरा नदी रक्तप्रवाहिनी ॥ ९९ ॥ पिबन्ति रुधिरं तत्र येऽभियांति रजस्वलाम् ॥ असिपत्रवने घोरे पीड्यंते पापकारिणः ॥ १०० ॥ परपीडाकरा नित्यं ये नरोन्त्यजगामिनः ॥ गुरुदाररतानां तु महापातकिनामपि ॥ १०१ ॥ शिलावगूहनं तेषां जायते जन्मसप्ततिम् ॥ ज्वलन्तीमायसीं घोरां बहुकण्टकसंवृताम् ॥ २ ॥ शाल्मलीं तेऽवगूहंति परदाररता हि ये ॥ परस्य योषितं हत्वा ब्रह्मस्वमपहृत्य च ॥ ३ ॥ अरण्ये निर्जले देशे स भवेत्क्रूरराक्षसः ॥ देवस्वं ब्राह्मणस्वं च लोभेनैवाऽऽहरेच्च यः ॥ ४ ॥ स पापात्मा परे लोके गृध्रोच्छिष्टेन जीवति ॥ एवमादीनि पापानि भुञ्जंते यमशासनात् ॥ ५ ॥ येषां तु दर्शनादेव श्रवणाज्जायते भयम् ॥ तथा दानफलं चाऽन्ये भुंजाना यममंदिरे ॥ ६ ॥ दृष्टाः श्रुतं कथयतां दूतानां च यमाऽऽज्ञया ॥ रथैरन्ये गजैरन्ये केचिद्वाजिभिरावृताः॥ ७ ॥ दृष्टास्तत्र महाभाग तपःसंचयसंस्थिताः ॥ गोदाता स्वर्णदाता च भूमिरत्नप्रदा नराः ॥ ८ ॥ शय्याशनगृहादीनां स लोकः कामदो नृणाम् ॥ अन्नं पानीयसहितं ददते येऽत्र मानवाः ॥९॥ तत्र तृप्ताः सुसंतुष्टाः क्रीडन्ते यमसादने ॥ अत्र यद्दीयते दानमपि वालाग्रमात्रकम् ॥ ११० ॥ तदक्षयफलं सर्वं शुक्लतीर्थे नृपोत्तम॥ एतत्ते कथितं सर्वं यद्दृष्टं यच्च वै श्रुतम् ॥११॥ कुरुष्व यदभिप्रेतं यदि शक्नोषि मुच्यताम् ॥ तयोस्तद्वचनं श्रुत्वा चाणक्यो हृष्टमानसः ॥ १२ ॥ विसर्जयामास खगावभिनंद्य पुनःपुनः ॥ ताभ्यां गताभ्यां सर्वस्वं दत्त्वा विप्रेषु भारत ॥ १३ ॥ कामक्रोधौ परित्यज्य जगामाऽमरपर्वतम् ॥ तत्र बध्वोडुपं गाढं कृष्णरज्वावलंबितम्॥१४॥प्लवमानो जगामाऽशु ध्यायन्देवं जनार्दनम् ॥ आरोग्यं भास्करादिच्छेद्धनं वै जातवेदसः॥१५॥प्राप्नोति

१ नरः--'नृ' शब्दस्य बहुवचनम् । २ अन्त्यजगामिनः--ह्रस्वत्वमार्षम् । यद्वा—स्त्रियोऽन्त्यजपुंगामिन्यः—पुरुषा--अन्त्यजस्त्रीगामिनः—इत्यभिप्रायेण--'पुमान्स्त्रिया' इति पुंल्लिंगैकशेषो बोद्धव्यः तथा चेत्—'नरः' इत्यत्रापि तथैव—'यत्' शब्दयोः 'नृ–नारी' शब्दयोश्चैकशेष इति न कश्चिच्छंकावकाशः ।

ज्ञानमीशानान्मोक्षं प्राप्नोति केशवात् ॥ नीलं रक्तं तदभवन्मेचकं यद्धि सूत्रकम् ॥ १६ ॥ शुद्धस्फटिकसंकाशं दृष्ट्वा रज्जुं महामतिः ॥ आप्लुत्य विमले तोये गतोऽसौ वैष्णवं पदम् ॥ १७ ॥ गायंति यद्वेदविदः पुराणं नारायणं शाश्वतमच्युताह्वयम् ॥ प्रातः स तं राजसुतो महात्मा निक्षिप्य देहं शुभशुक्लतीर्थे ॥ १८ ॥ एषा ते कथिता राजन्सिद्धिश्चाणक्यभूभृतः ॥ तथाऽन्यत्तव वक्ष्यामि शृणुष्वैकाग्रमानसः ॥ ११९ ॥ इति श्रीस्कांदे महापुराण एकाशीतिसाहस्र्यां संहितायां पंचम आवन्त्यखण्डे रेवाखण्डे चाणक्यसिद्धिप्राप्तिवर्णनं नाम पंचपंचाशदधिकशततमोऽध्यायः ॥ १५५ ॥ ॥ छ ॥ ॥ श्रीमार्कंडेय उवाच ॥ ॥ नास्ति लोकेषु तत्तीर्थं पृथिव्यां यन्नरेश्वर ॥ शुक्लतीर्थेन सदृशमुपमानेन गीयते ॥ ॥ १ ॥ शुक्लतीर्थं महातीर्थं नर्मदायां व्यवस्थितम् ॥ प्रागुदक्प्रवणे देशे मुनिसंघनिषेवितम् ॥ २ ॥ वैशाखे च तथा मासि कृष्णपक्षे चतुर्दशी ॥ कैलासादुमया सार्द्धं स्वयमायाति शंकरः ॥ ३ ॥ मध्याह्नसमये स्नात्वा पश्यत्यात्मानमात्मना ॥ ब्रह्मविष्ण्विन्द्रसहितः शुक्लतीर्थे समाहितः ॥ ४ ॥ कार्त्तिक्यां तु विशेषेण वैशाख्यां च नरोत्तम ॥ ब्रह्मविष्णुमहादेवान् स्नात्वा पश्यति तद्दिने ॥ ५ ॥ देवराजः सुरैः सार्द्धं वायुमार्गव्यवस्थितः[1] ॥ कृष्णपक्षे चतुर्दश्यां स्नात्वा पश्यति शंकरम् ॥ ६ ॥ गंधर्वाप्सरसो यक्षाः सिद्धविद्याधरोरगाः ॥ तद्दिने तेऽपि देवेशं दृष्ट्वा मुंचंति किल्बिषम् ॥ ॥ ७ ॥ अर्द्धयोजनविस्तारं तदर्द्धेनैव चायतम् ॥ शुक्लतीर्थं महापुण्यं महापातकनाशनम् ॥ ८ ॥ यत्र स्थितैः प्रदृश्यंते वृक्षाग्राणि नरोत्तमैः ॥ तत्र स्थिता महापापैर्मुच्यंते पूर्वसंचितैः ॥ ९ ॥ पापोपपातकैर्युक्तो नरः स्नात्वा प्रमुच्यते ॥ उपार्जिता विनश्येत भ्रूणहत्यापि दुस्त्यजा ॥ १० ॥ यस्मात्तत्रैव देवेश उमया सह तिष्ठति ॥ वैशाख्यां च विशेषेण कैलासादेति शंकरः ॥ ११ ॥ तेन तीर्थं महापुण्यं सर्वपातकनाशनम् ॥ कथितं ब्रह्मणा पूर्वं मया तव तथा नृप ॥ १२ ॥ रजकेन यथा धौतं वस्त्रं भवति निर्मलम् ॥ तथा तत्र वपुःस्नानं पुरुषस्य भवेच्छुचि ॥ १३ ॥ पूर्वे वयसि पापानि कृत्वा पुष्टानि मानवः ॥ अहोरात्रोषितो भूत्वा शुक्लतीर्थे व्यपोहति ॥ १४ ॥ शुक्लतीर्थे महाराज राकां रेवाजलांजलिम् ॥ कल्पकोटिसहस्राणि दत्त्वा स्युः पितरः शिवाः ॥ १५ ॥ न माता न पिता बंधुः पतनं नरकार्णवे ॥ उद्धरंति यथा पुण्यं शुक्लतीर्थे नरेश्वर ॥ १६ ॥ तपसा ब्रह्मचर्य्येण न तां गच्छंति सद्गतिम् ॥ शुक्लतीर्थे मृतो जंतुर्देहत्यागेन यां लभेत् ॥ १७ ॥ कार्त्तिकस्य तु मासस्य कृष्णपक्षे चतुर्दशीम् ॥ घृतेन स्नापयेद्देवमुपोष्य प्रयतो नरः ॥ १८ ॥ स्नात्वा प्रभाते रेवायां दद्यात्सघृतकंबलम् ॥ सहिरण्यं यथाशक्ति देवमुद्दिश्य शंकरम् ॥ १९ ॥ देवस्य

१ वायुमार्गव्यवस्थितः—आकाशस्थितः—इत्यर्थः ।

पूरणां कुर्याद्घृतेन घृतकंबलम् ॥ स गच्छति महातेजाः शिवलोकं मृतो नरः ॥ २० ॥ एकविंशकुलोपेतो यावदाभूतसंप्लवम् ॥ शुक्लतीर्थे नरः
स्नात्वा ह्युमां रुद्रं च योऽर्चयेत् ॥ २१ ॥ गंधपुष्पादिधूपैश्च सोऽश्वमेधफलं लभेत् ॥ मासोपवासं यः कुर्यात्तत्र तीर्थे नरेश्वर ॥ २२ ॥ मुच्यते स
महत्पापैः सप्तजन्मसुसंचितैः ॥ उष्ट्रीक्षीरमविक्षीरं नवश्राद्धे च भोजनम् ॥ २३ ॥ वृषलीगमनं चैव तथाऽभक्ष्यस्य भक्षणम् ॥ अविक्रयेऽनृते
पापं माहिषेऽयाज्ययाजके ॥ २४ ॥ वार्धुष्ये पंक्तिगरदे देवब्राह्मणदूषके ॥ एवमादीनि पापानि तथाऽन्यान्यपि भारत ॥ २५ ॥ चांद्रायणेन
नश्यंति शुक्लतीर्थे न संशयः ॥ शुक्लतीर्थे तु यः स्नात्वा तर्पयेत्पितृदेवताः ॥ २६ ॥ तस्य ते द्वादशाब्दानि तृप्तिं यांति सुतर्पिताः ॥ पादुकोपानहौ
छत्रं शय्यामासनमेव च ॥२७ ॥ सुवर्णं धनधान्यं च श्राद्धं युक्तहलं तथा ॥ अन्नं पानीयसंहितं तस्मिंस्तीर्थे ददंति ये ॥ २८ ॥ हृष्टाः पुष्टा मृता
यांति शिवलोकं न संशयः ॥ तत्र तीर्थे तु यो भक्त्या शिवमुद्दिश्य भारत ॥ २९ ॥ भिक्षामात्रं तथाऽन्नं ये तेऽपि स्वर्यांति वै नराः ॥ यज्विनां
व्रतिनां चैव तत्र तीर्थनिवासिनाम् ॥ ३० ॥ अपि वालाग्रमात्रं हि दत्तं भवति चाऽक्षयम् ॥ अग्निप्रवेशं यः कुर्याच्छुक्लतीर्थे समाहितः ॥ ३१ ॥
रागद्वेषविनिर्मुक्तो हृदि ध्यात्वा जनार्दनम् ॥ सर्वकामसुसंपूर्णः स गच्छेद्वारुणं पुरम् ॥ ३२ ॥ न रोगो न जरा तत्र यत्र देवोंऽभसां पतिः ॥ अना
शकं तु यः कुर्यात्तस्मिंस्तीर्थे युधिष्ठिर ॥ ३३ ॥ अनिवर्तिका गतिस्तस्य रुद्रलोकादसंशयम् ॥ अवशः स्ववशो वाऽपि जंतुस्तत्क्षेत्रमंडले ॥
॥ ३४ ॥ मृतः स तु न संदेहो रुद्रस्यानुचरो भवेत् ॥ शुक्लतीर्थे तु यः कन्यां शक्त्या दद्यादलंकृताम् ॥ ३५ ॥ विधिना यो
नृपश्रेष्ठ कुरुते वृषमोक्षणम् ॥ तस्य यत्फलमुद्दिष्टं पुराणे रुद्रभाषितम् ॥ ३६ ॥ तदहं संप्रवक्ष्यामि शृणुष्वैकमना नृप ॥
यावंतो रोमकूपाः स्युः सर्वांगेषु पृथक्पृथक् ॥ ३७ ॥ तावद्वर्षसहस्राणि रुद्रलोके महीयते ॥ शुक्लतीर्थे तु यद्दत्तं ग्रहणे
चंद्रसूर्ययोः ॥ ३८ ॥ वर्धते तद्गुणं तावद्दिनानि दश पंच च ॥ शुक्लतीर्थे शुचिर्भूत्वा यः करोति प्रदक्षिणम् ॥ ३९ ॥ पृथ्वीप्रद
क्षिणा तेन कृता यत्तस्य तत्फलम् ॥ शोभनं मिथुनं यस्तु रुद्रमुद्दिश्य पूजयेत् ॥ ४० ॥ सप्त जन्मानि तस्यैव वियोगो न च वै क्वचित् ॥
एतत्ते कथितं राजन्संक्षेपेण फलं महत् ॥ ४१ ॥ शुक्लतीर्थस्य यत्पुण्यं यथा देवाच्छ्रुतं मया ॥ य इदं शृणुयाद्भक्त्या पुराणे विहितं फलम् ॥ ४२ ॥

१ घृतेन–पूरणम्–घृतकंबलम्–घृतकंबलाभिधं–तत्–घृतेन पूरणम्–इत्यर्थः । २ युक्तहलम्–वृषभाष्टकसंयुक्तं लांगलमित्यर्थः । ३ मिथुनं–ब्राह्मणदाम्पत्यम्–इत्यर्थः ।

स लभेन्नात्र सन्देहः सत्यं सत्यं पुनःपुनः॥ पुत्रार्थी लभते पुत्रं धनार्थी लभते धनम् ॥ ४३ ॥ मोक्षार्थी लभते मोक्षं स्नानदानफलं महत् ॥४४॥ इति श्रीस्कांदे महापुराण एकाशीतिसाहस्र्यां संहितायां पञ्चम आवंत्यखण्डे रेवाखण्डे शुक्लतीर्थमाहात्म्यवर्णनंनाम षट्पंचाशदधिकशततमोऽध्यायः ॥ १५६ ॥ ॥ छ ॥ ॥ श्रीमार्कंडेय उवाच ॥ ॥ तस्यैवानंतरं राजञ्छुक्लतीर्थसमीपतः ॥ वासुदेवस्य तीर्थं तु सर्वलोकेषु पूजितम् ॥ १ ॥ तद्धि पुण्यं सुविख्यातं नर्मदायां पुरातनम् ॥ यत्र हुंकारमात्रेण रेवा क्रोशं जगाम सा ॥ २ ॥ यदा प्रभृति राजेंद्र हुंकारेण गता सरित् ॥ तदाप्रभृति स स्वामी हुंकारः शब्दितो बुधैः ॥ ३ ॥ हुंकारतीर्थे यः स्नात्वा पश्यत्यव्ययमच्युतम् ॥ स मुच्यते नरः पापैः सप्तजन्मकृतैरपि ॥ ४ ॥ संसारार्णवमग्नानां नराणां पापकर्मिणाम् ॥ नैवोद्धर्त्ता जगन्नाथं विना नारायणं परः ॥ ५ ॥ सा जिह्वा या हरिं स्तौति तच्चित्तं यत्तदर्पितम् ॥ तावेव केवलौ श्लाघ्यौ यौ तत्पूजाकरौ करौ ॥ ६ ॥ सर्वदा सर्वकार्येषु नास्ति तेषाममंगलम् ॥ येषां हृदिस्थो भगवान्मंगलायतनो हरिः ॥ ७ ॥ यद्न्यद्देवतार्चायाः फलं प्राप्नोति मानवः ॥ साष्टांगप्रणिपातेन तत्फलं लभते हरेः ॥ ८ ॥ रेणुगुंठितगात्रस्य यावन्तोऽस्य रजःकणाः ॥ तावद्वर्षसहस्राणि विष्णुलोके महीयते ॥ ९ ॥ सम्मार्जनाभ्युक्षणलेपनेन तदालये नश्यति सर्वपापम् ॥ नारी नराणां परया तु भक्त्या दृष्ट्वा तु रेवां नरसत्तमस्य ॥ १० ॥ येनाऽर्चितो भगवान्वासुदेवो जन्मार्जितं नश्यति तस्य पापम् ॥ स याति लोकं गरुडध्वजस्य विधूतपापः सुरसंघपूज्यताम् ॥ ११ ॥ शाठ्येनाऽपि नमस्कारं प्रयुंजंश्चक्रपाणिनः ॥ सप्तजन्मार्जितं पापं गच्छत्याऽऽशु न संशयः ॥ १२ ॥ पूजायां प्रीयते रुद्रो जपहोमैर्दिवाकरः ॥ शंखचक्रगदापाणिः प्रणिपातेन तुष्यति ॥ १३ ॥ भवजलधिगतानां द्वंद्ववाताहतानां सुतदुहितृकलत्रत्राणभारार्दितानाम् ॥ विषमविषयतोये मज्जतामप्लवानां भवति शरणमेको विष्णुपोतो नराणाम् ॥ १४ ॥ हुंकारतीर्थे राजेंद्र शुभं वा यदि वाऽशुभम् ॥ यत्कृतं पुरुषव्याघ्र तन्नश्यति न कर्हिचित् ॥ १५ ॥ इति श्रीस्कांदे महापुराण एकाशीतिसाहस्र्यां संहितायां पञ्चम आवन्त्यखण्डे रेवाखण्डे हुंकारस्वामितीर्थमाहात्म्यवर्णनंनाम सप्तपंचाशदधिकशततमोऽध्यायः ॥ १५७ ॥ ॥ छ ॥ ॥ श्रीमार्कंडेय उवाच ॥ ॥ ततो गच्छेत्परं तीर्थं संगमेश्वरमुत्तमम् ॥ नर्मदादक्षिणे कूले सर्वपापभयापहम् ॥ १ ॥ धनदस्तत्र विश्रांतो मुहूर्तं नृपसत्तम ॥ पितृलोकात्समायातः कैलासं धरणीधरम् ॥ २ ॥ प्रत्ययार्थं नृपश्रेष्ठ ह्यद्यापि धरणीतले ॥ कृष्णवर्णा हि पाषाणा दृश्यंते स्फटिकोज्ज्वलाः ॥ ३ ॥ विंध्यनिर्झरनिष्क्रांता पुण्यतोया सरिद्वरा ॥ प्रविष्टा नर्मदातोये सर्वपापप्रणाशने ॥४॥ संगमे तत्र यः स्नात्वा पूजयेत्संगमेश्वरम् ॥ अश्वमेधस्य यज्ञस्य फलं प्राप्नोत्यसंशयम्॥५॥

घंटापताकावितेनं यो ददेत्संगमेश्वरे ॥ हंसयुक्तविमानस्थो दिव्यस्त्रीशतसंवृतः ॥ ६ ॥ स रुद्रपदमाप्नोति रुद्रस्यानुचरो भवेत् ॥ दधि भक्ते
न देवस्य यः कुर्य्याल्लिंगपूरणम् ॥ ७ ॥ सिक्थसंख्यं शिवे लोके स वसेत्कालमीप्सितम् ॥ श्रीफलैः पूरयेल्लिंगं निःस्वो भूत्वा भवस्य तु ॥ ८ ॥
सोऽपि तत्फलमाप्नोति गतः स्वर्गे नरेश्वर ॥ अक्षया संततिस्तस्य जायते सप्तजन्मसु ॥ ९ ॥ स्नपनं देवदेवस्य दध्ना मधुघृतेन वा ॥ यः करोति
विधानेन तस्य पुण्यफलं शृणु ॥ १० ॥ घृतक्षीरवहा नद्यो यत्र वृक्षा मधुस्रवाः ॥ तत्र ते मानवा यांति सुप्रसन्ने महेश्वरे ॥ ११ ॥ पत्रं पुष्पं फलं
तोयं यस्तु दद्यान्महेश्वरे ॥ तत्सर्वं सप्तजन्मानि ह्यक्षयं फलमश्नुते ॥ १२ ॥ सर्वेषामेव पात्राणां महापात्रं महेश्वरः ॥ तस्मात्सर्वप्रयत्नेन
पूजनीयो महेश्वरः ॥ १३ ॥ ब्रह्मचर्यस्थितो नित्यं यस्तु पूजयते शिवम् ॥ इह जीवन्स देवेशो मृतो गच्छेदनामयम् ॥ १४ ॥ शिवे तु
पूजिते पार्थ यत्फलं प्राप्यते बुधैः ॥ योगींद्रे चैव तत्पार्थ पूजिते लभते फलम् ॥ १५ ॥ ते धन्यास्ते महात्मानस्तेषां जन्म सुजीवि
तम् ॥ येषां गृहेषु भुञ्जंति शिवभक्तिरता नराः ॥ १६ ॥ सन्निरुध्येंद्रियग्रामं यत्रयत्र वसेन्मुनिः ॥ तत्रतत्र कुरुक्षेत्रं नैमिषं पुष्कराणि
च ॥ १७ ॥ यत्फलं वेदविदुषि भोजिते शतसंख्यया ॥ तत्फलं जायते पार्थ ह्येकेन शिवयोगिना ॥ १८ ॥ यत्र भुञ्जति भस्मांगी मूर्खो
वा यदि पंडितः ॥ तत्र भुञ्जति देवेशः सपत्नीको वृषध्वजः ॥ १९ ॥ विप्राणां वेदविदुषां कोटिं संभोज्य यत्फलम् ॥ भिक्षामात्रप्रदानेन
तत्फलं शिवयोगिनाम् ॥ २० ॥ संगमेश्वरमासाद्य प्राणत्यागं करोति यः ॥ न तस्य पुनरावृत्तिः शिवलोकात्कदाचन ॥ २१ ॥
इति श्रीस्कांदे महापुराण एकाशीतिसाहस्र्यां संहितायां पञ्चम आवन्त्यखंडे रेवाखण्डे संगमेश्वरतीर्थमाहात्म्यवर्णनंनामाष्टपञ्चाशदधिक
शततमोऽध्यायः ॥ १५८ ॥ ॥ छ ॥ ॥ श्रीमार्कंडेय उवाच ॥ ॥ ततो गच्छेन्महाराज तीर्थं परमपावनम् ॥ नर्मदायां सुदुष्प्रापं सिद्धं
ह्यनरकेश्वरम् ॥ १ ॥ तस्मिंस्तीर्थे नरः स्नात्वा पापकर्माऽपि भारत ॥ न पश्यति महाघोरं नरकद्वारसंज्ञिकम् ॥ २ ॥ ॥ युधिष्ठिर उवाच ॥ ॥
शुभाशुभफलैस्तात भुक्तभोगा नरास्त्विह ॥ जायंते लक्षणैर्यैस्तु तानि मे वद सत्तम ॥ ३ ॥ यथा निर्गच्छते जीवस्त्यक्त्वा देहं न पश्यति ॥
तथा गच्छन्पुनर्देहं पंचभूतसमन्वितः ॥ ४ ॥ त्वगस्थिमांसमेदोऽसृक्केशस्नायुशतैः सह ॥ विण्मूत्ररेतःसंघाते का संज्ञा जायते नृणाम् ॥ ५ ॥
एवमुक्तः स मार्कंडः कथयामास योगवित् ॥ ध्यात्वा सनातनं सर्वं देवदेवं महेश्वरम् ॥ ६ ॥ ॥ मार्कंडेय उवाच ॥ ॥ शृणु पार्थ महाप्रश्नं

१ घण्टापताका बितनम्—इत्वत्क्रमार्षम् । वितानम्—इत्यपेक्षितम् ।

कथयामि यथाश्रुतम् ॥ सकाशाद्ब्रह्मणः पूर्वमृषिदेवसमागमे ॥ ७ ॥ कुलात्मकर्ता शास्ता राजा शास्ता दुरात्मनाम् ॥ इह प्रच्छन्नपापानां शास्ता वैवस्वतो यमः ॥ ८ ॥ अचीर्णप्रायश्चित्तानां यमलोके ह्यनेकधा ॥ यातनाभिर्वियुक्तानामनेकां जीवसंततिम् ॥ ९ ॥ गत्वा मनुष्यभावे तु पाप चिह्ना भवंति ते ॥ तत्तेऽहं संप्रवक्ष्यामि शृणुष्वैकमना नृप ॥ १० ॥ सहित्वा यातनां सर्वां गत्वा वैवस्वतक्षयम्[1] ॥ विस्तीर्णयातना ये तु लोकमा यांति चिह्निताः ॥ ११ ॥ गद्गदोऽनृतवादी स्यान्मूकश्चैव गवानृते ॥ ब्रह्महा जायते कुष्ठी श्यावदंतस्तु मद्यपः ॥ १२ ॥ कुनखी स्वर्णहरणाद्दुःश्चर्मा गुरुतल्पगः ॥ संयोगी हीनयोनिः स्याद्दरिद्रोऽदत्तदानतः ॥ १३ ॥ ग्रामशूकरतां याति ह्ययाज्ययाजको नृप ॥ खरो वै बहुयाजी स्याच्छ्वा ऽनिमंत्रितभोजनात् ॥ १४ ॥ अपरीक्षितभोजी स्याद्वानरो विजने वने ॥ वितर्जकोऽथ मार्जारः खद्योतः कक्षदाहतः ॥ १५ ॥ अविद्यां यः प्रयच्छेत बलीवर्दो भवेद्धि सः ॥ अन्नं पर्युषितं विप्रे ददानः क्लीबतां व्रजेत् ॥ १६ ॥ मात्सर्यादथ जात्यंधो जन्मांधः पुस्तकं हरन् ॥ फलान्या हरतोऽपत्यं म्रियते नाऽत्र संशयः ॥ १७ ॥ मृतो वानरतां यांति तन्मुक्तोऽथ गलाडवान्[2] ॥ अदत्त्वा भक्षयंस्तानि ह्यनपत्यो भवेन्नरः ॥ १८ ॥ हरन्वस्त्रं भवेद्गोधा गरदः पवनाशनः[3] ॥ प्रव्राजीगमनाद्राजन्भवेन्मरुपिशाचकः ॥ १९ ॥ वातको जलहर्त्ता च धान्यहर्त्ता च मूषकः ॥ अप्राप्त यौवनां गच्छन्भवेत्सर्प इति श्रुतिः ॥ २० ॥ गुरुदाराभिलाषी च कृकलासो भवेच्चिरम् ॥ जलप्रस्रवणं यस्तु भिंद्यान्मत्स्यो भवेन्नरः ॥ २१ ॥ अविक्रेयान्विक्रयन्वै विकटाक्षो भवेन्नरः ॥ अयोनिगो वृको हि स्यादुलूकः क्रयवंचनात् ॥ २२ ॥ मृतस्यैकादशाहे तु भुंजानः श्वोपजायते ॥ प्रतिश्रुत्य द्विजायार्थमददन्मधुको भवेत् ॥ २३ ॥ राज्ञीगमाद्भवेदुष्टतस्करो विड्वराहकः ॥ परिवादी द्विजातीनां लभते काच्छपीं तनुम् ॥ २४ ॥ व्रजेद्वल्वलको राजन्योनिं चांडालसंज्ञिताम् ॥ दुर्भगः फलविक्रेता वृश्चिको वृषलीपतिः ॥ २५ ॥ मार्जारोऽग्निं पदा स्पृष्ट्वा रोगवान्परमांसभुक् ॥ सोदर्यागमनात्षंढो दुर्गंधश्च सुगंधहृत् ॥ २६ ॥ ग्रामभट्टो दिवाकीर्तिर्दैवज्ञो गर्दभो भवेत् ॥ कुपंडितः स्यान्मार्जारो भषणो व्यास एव च ॥ २७ ॥ स एव दृश्यते राजन्प्रकाशात्परमर्मणाम् ॥ यद्वा तद्वापि पारक्यं स्वल्पं वा यदि वा बहु ॥ २८ ॥ कृत्वा वै योनिमाप्नोति तैरश्चीं नात्र संशयः ॥ एवमादीनि चान्यानि चिह्नानि नृपसत्तम ॥ २९ ॥ स्वकर्मविहितान्येव दृश्यंते यैस्तु मानवाः ॥ ततो जन्म ततो मृत्युः सर्व जंतुषु भारत ॥ ३० ॥ जायते नाऽत्र संदेहः समीभूते शुभाऽशुभे[4] ॥ स्त्रीपुंसोः संप्रयोगेण विशुद्धे शुक्रशोणिते ॥ ३१ ॥ पंचभूतसमोपेतः स

१ वैवस्वतक्षयम्—यमनिवासम्—यमलोकम्—इत्यर्थः । २ फलचौर्यकर्ता—इत्येवात्र कर्ता बोध्यः । ३ पवनाशनः सर्पः—इत्यर्थः । ४ समीभूते शुभाशुभे—पापपुण्ययोः साम्ये जाते सति—इत्यर्थः ।

षष्ठः परमेश्वरः ॥ इंद्रियाणि मनः प्राणा ज्ञानमायुः सुखं धृतिः ॥ ३२ ॥ धारणं प्रेरणं दुःखमिच्छाहंकार एव च ॥ प्रयत्न आकृतिर्वर्णः स्वरद्वेषौ भवाभवौ ॥ ३३ ॥ तस्येदमात्मनः सर्वमनादेरादिमिच्छतः ॥ प्रथमे मासि स क्लेदभूतो धातुविमूर्च्छितः ॥ ३४ ॥ मास्यर्बुदं द्वितीये तु तृतीये चेंद्रियैर्युतः ॥ आकाशाल्लाघवं सौक्ष्म्यं शब्दं श्रोत्रबलादिकम् ॥ वायोस्तु स्पर्शनं चेष्टां दहनं रौक्ष्यमेव च ॥ ३५ ॥ पित्तात्तु दर्शनं पक्तिमौष्ण्यं रूपं प्रकाशनम् ॥ सलिलाद्रसनां शैत्यं स्नेहं क्लेदं समार्दवम् ॥ ३६ ॥ भूमेर्गंधं तथा घ्राणं गौरवं मूर्तिमेव च ॥ आत्मा गृह्णात्यजः पूर्वं तृतीये स्पंदते च सः ॥ ३७ ॥ दौर्हृदस्याप्रदानेन गर्भो दोषमवाप्नुयात् ॥ वैरूप्यं मरणं वापि तस्मात्कार्यं प्रियं स्त्रियाः ॥ ३८ ॥ स्थैर्यं चतुर्थे त्वंगानां पंचमे शोणितोद्भवः ॥ षष्ठे बलं च वर्णश्च नखरोम्णां च संभवः ॥ ३९ ॥ मनसा चेतनायुक्तो नखरोमशतावृतः ॥ सप्तमे चाऽष्टमे चैव त्वचावान्स्मृतिवानपि ॥ ४० ॥ पुनर्गर्भं पुनर्द्धात्रीमेनस्तस्य प्रधावति ॥ अष्टमे मास्यतो गर्भो जातः प्राणैर्वियुज्यते ॥ ४१ ॥ नवमे दशमे वाऽपि प्रबलैः सूतिमारुतैः ॥ निर्गच्छते बाण इव यंत्रच्छिद्रेण सज्वरः ॥ ४२ ॥ शरीरावयवैर्युक्तो ह्यंगप्रत्यंगसंयुतः ॥ अष्टोत्तरं मर्मशतं तत्रास्था तु शतत्रयम् ॥ ४३॥ सप्त शिरःकपालानि विहितानि स्वयंभुवा ॥ तिस्रः कोट्यो र्द्धकोटी च रोम्णामंगेषु भारत ॥ ४४ ॥ द्वासप्ततिसहस्राणि हृदयादभिनिसृताः ॥ हितानाम हि ता नाड्यस्तासां मध्ये शशिप्रभा ॥ ४५ ॥ एवं प्रवर्त्तते चक्रं भूतग्रामे चतुर्विधे ॥ उत्पत्तिश्च विनाशश्च भवतः सर्वदेहिनाम् ॥ ४६ ॥ गतिरूर्ध्वा च धर्मेण ह्यधर्म्मेण त्वधोगतिः ॥ जायते सर्ववर्णानां स्वधर्म्मचलनान्नृप ॥ ४७ ॥ देवत्वे मानवत्वे च दानभोगादिकाः क्रियाः ॥ दृश्यंते या महाराज तत्सर्वं कर्मजं फलम् ॥ ४८ ॥ स्वकर्मविहिते घोरे कामक्रोधार्जिते शुभे ॥ निमज्जेन्नरके घोरे यस्योत्तारो न विद्यते ॥ ४९ ॥ उत्तारणाय जंतूनां नर्मदातटसंस्थितम् ॥ एवमेतन्महातीर्थं नरकेश्वरमुत्तमम् ॥ ५० ॥ नरकापहं महापुण्यं महापातकनाशनम् ॥ तत्तीर्थं सर्वतीर्थानामुत्तमं भुवि दुर्लभम् ॥ ५१ ॥ तत्र तीर्थे तु यः स्नात्वा पूजयेत महेश्वरम् ॥ महापातकयुक्तोऽपि नरकं नैव पश्यति ॥ ५२ ॥ तत्र तीर्थे तु यो दद्याद्धेनुं वैतरणीं शुभाम् ॥ स मुच्यते सुखेनैव वैतरण्यां न संशयः ॥ ५३ ॥ ॥ युधिष्ठिर उवाच ॥ ॥ यमद्वारे महाघोरे या सा वैतरणी नदी ॥ किंरूपा किंप्रमाणा सा कथं सा वहति द्विज ॥ ५४ ॥ कथं तस्याः प्रमुच्यंते केषां वासस्तु संततम् ॥ केषां तु साऽनुकूला सा ह्येतद्विस्तरतो वद ॥ ५५ ॥ ॥ श्रीमार्कंडेय उवाच ॥

१ पित्तात्—अग्नेः—इत्यर्थः । २ शाखिप्रिया—इ० पा० ।

धर्मपुत्र महाबाहो शृणु सर्वं मयोदितम् ॥ या सा वैतरणी नाम यमद्वारे महासरित् ॥ ५६ ॥ अगाधा पाररहिता दृष्टमात्रा भयावहा ॥ पूयशोणि
ततोया सा मांसकर्दमनिर्मिता ॥ ५७ ॥ तत्तोयं भ्रमते तूर्णं तापीमध्ये घृतं यथा ॥ कृमिभिः संकुलं पूयं वज्रतुंडैरयोमुखैः ॥ ५८ ॥ शिशुमारैश्च
मकरैर्वज्रकर्त्तरिसंयुतैः ॥ अन्यैश्च जलजीवैः सा सुहिंस्रैर्मर्मभेदिभिः ॥ ५९ ॥ तपंति द्वादशादित्याः प्रलयांत इवोल्बणाः ॥ पतंति तत्र वै मर्त्याः
क्रंदंतो भृशदारुणम् ॥ ६० ॥ हा भ्रातः पुत्र हा मातः प्रलपंति मुहुर्मुहुः ॥ असिपत्रवने घोरे पततं योऽभिरक्षति ॥ ६१ ॥ प्रतरंति निमज्जंति
ग्लानिं गच्छंति जंतवः ॥ चतुर्विधैः प्राणिगणैर्द्रष्टव्या सा महानदी ॥ ६२ ॥ तरंति तस्यां सद्दानैरन्यथा तु पतंति ते ॥ मातरं ये न मन्यंते ह्याचार्यं
गुरुमेव च ॥ ६३ ॥ अवजानंति मूढा ये तेषां वासस्तु संततम् ॥ पतिव्रतां साधुशीलामूढां धर्म्मेषु निश्चलाम्॥६४॥परित्यजंति ये पापाः संततं तु
वसंति ते ॥ विश्वासप्रतिपन्नानां स्वामिमित्रतपस्विनाम् ॥ ६५ ॥ स्त्रीबालवृद्धदीनानां च्छिद्रमन्वेषयंति ये ॥ पच्यंते तत्र मध्ये वै क्रंदमानाः
सुपापिनः ॥ ६६ ॥ श्रांतं बुभुक्षितं विप्रं यो विघ्नयति दुर्मतिः ॥ कृमिभिर्भक्ष्यते तत्र यावत्कल्पशतत्रयम् ॥ ६७ ॥ ब्राह्मणाय प्रतिश्रुत्य यो
दानं न प्रयच्छति ॥ आहूय नास्ति यो ब्रूते तस्य वासस्तु संततम् ॥ ६८ ॥ अग्निदो गरदश्चैव राजगामी च पैशुनी ॥ कथाभंगकरश्चैव कूटसा
क्षी च मद्यपः ॥ ६९ ॥ वज्रविध्वंसकश्चैव स्वयंदत्तापहारकः ॥ सुक्षेत्रसेतुभेदी च परदारप्रधर्षकः ॥ ७० ॥ ब्राह्मणो रसविक्रेता वृषलीपतिरेव च ॥
गोकुलस्य तृषार्त्तस्य पालीभेदं करोति यः ॥ ७१ ॥ कन्याभिदूषकश्चैव दानं दत्त्वा तु तापकः ॥ शूद्रस्तु कपिलापानी ब्राह्मणो मांसभोजनी ॥
॥ ७२ ॥ एते वसंति सततं मा विचारं कृथा नृप ॥ सानुकूला भवेद्येन तच्छृणुष्व नराधिप ॥ ७३ ॥ अयने विषुवे चैव व्यतीपाते दिनक्षये ॥
अन्येषु पुण्यकालेषु दीयते दानमुत्तमम् ॥ ७४ ॥ कृष्णां वा पाटलां वापि कुर्याद्वैतरणीं शुभाम् ॥ स्वर्णशृंगीं रूप्यखुरां कांस्यपात्रस्य दोहिनीम् ॥
॥ ७५ ॥ कृष्णवस्त्रयुगाच्छन्नां सप्तधान्यसमन्विताम् ॥ कुर्यात्सद्रोणशिखर आसीनां ताम्रभाजने ॥ ७६ ॥ यमं हैमं प्रकुर्वीत लोहदंडसमन्वितम् ॥
इक्षुदंडमयं बद्ध्वा ह्युडुपं पट्टबंधनैः ॥७७॥ उडुपोपरि तां धेनुं सूर्यदेहसमुद्भवाम् ॥ कृत्वा प्रकल्पयेद्विद्वांश्छत्रोपानद्युगान्विताम् ॥७८॥ अंगुलीय
कवासांसि ब्राह्मणाय निवेदयेत् ॥ इममुच्चारयेन्मंत्रं संगृह्यास्याश्च पुच्छकम् ॥ ७९ ॥ ॐयमद्वारे महाघोरे या सा वैतरणी नदी ॥ तर्त्तुकामो
ददाम्येनां तुभ्यं वैतरणि नमः ॥ ८० ॥ ॥ इत्यधिवासनमंत्रः ॥ ॥ गावो मे चाग्रतः संतु गावो मे संतु पृष्ठतः ॥ गावो मे

हृदये संतु गवां मध्ये वसाम्यहम् ॥ ८१ ॥ ॐ विष्णुरूप द्विजश्रेष्ठ भूदेव पंक्तिपावन ॥ सदक्षिणा मया दत्ता तुभ्यं वैतरणि
नमः ॥ ८२ ॥ इति दानमंत्रः ॥ ॥ ब्राह्मणं धर्मराजं च धेनुं वैतरणीं शिवाम् ॥ सर्वं प्रदक्षिणीकृत्य ब्राह्मणाय निवेदयेत् ॥ ८३ ॥
पुच्छं संगृह्य सुरभेरग्रे कृत्वा द्विजं ततः ॥ ८४ ॥ धेनुके त्वं प्रतीक्षस्व यमद्वारे महाभये ॥ उत्तितीर्षुरहं धेनो वैतरण्यै नमोऽस्तु ते ॥ ८५ ॥
॥ ॥ इत्यनुव्रजमन्त्रः ॥ ॥ अनुव्रजेत गच्छंतं सर्वं तस्य गृहं नयेत् ॥ एवं कृते महीपाल सरित्स्यात्सुखवाहिनी ॥ ८६ ॥ तारयते तया
धेन्वा सा सरिज्जलवाहिनी ॥ सर्वान्कामानवाप्नोति ये दिव्या ये च मानुषाः ॥८७॥ रोगी रोगाद्विमुक्तः स्याच्छाम्यंति परमापदः ॥ स्वस्थे सहस्र
गुणितमातुरे शतसम्मितम् ॥ ८८ ॥ मृतस्यैव तु यद्दानं परोक्षे तत्समं स्मृतम् ॥ स्वहस्तेन ततो देयं मृते कः कस्य दास्यति ॥ इति मत्वा
महाराज स्वदत्तं स्यान्महाफलम् ॥ ८९ ॥ इत्येवमुक्तं तव धर्मसूनो दानं मया वैतरणीसमुत्थम् ॥ शृणोति भक्त्या पठतीह सम्यक्स याति
विष्णोः पदमप्रमेयम् ॥ ९० ॥ ॥ श्रीमार्कंडेय उवाच ॥ ॥ प्राप्ते चाश्वयुजे मासि तस्मिन्कृष्णा चतुर्दशी ॥ स्नात्वा कृत्वा ततः श्राद्धं
संपूज्य च महेश्वरम् ॥ ९१ ॥ पितृभ्यो दीयते दानं भक्तिश्रद्धासमन्वितैः ॥ पश्चाज्जागरणं कुर्यात्सत्कथाश्रवणादिभिः ॥ ९२ ॥ ततः प्रभातस
मये स्नात्वा वै नर्मदाजले ॥ तर्प्पणं विधिवत्कृत्वा पितॄणां देवपूर्वकम् ॥ ९३ ॥ सौवर्णे[1] घृतसंयुक्तं दीपं दद्याद्विजातये ॥ पश्चात्संभोजयेद्विप्रा
न्स्वयं चैव विमत्सरः ॥ ९४ ॥ एवं कृते नरश्रेष्ठ न जन्तुर्नरकं व्रजेत् ॥ अवश्यमेव मनुजैर्द्रष्टव्या नारकी स्थितिः ॥ ९५ ॥ अनेन विधिना
कृत्वा न पश्येन्नरकान्नरः ॥ तत्र तीर्थे मृतानां तु नराणां विधिना नृप ॥ ९६ ॥ मन्वंतरं शिवे लोके वासो भवति दुर्लभे ॥ विमानेनार्कवर्णेन
किंकिणीशतशोभिना ॥ ९७ ॥ स गच्छति महाभाग सेव्यमानोऽप्सरोगणैः ॥ भुनक्ति विविधान्भोगान्युक्तकालं न संशयः ॥ ९८ ॥ पूर्णे चैव
ततः काल इह मानुष्यतां गतः ॥ सर्वव्याधिविनिर्मुक्तो जीवेच्च शरदां शतम् ॥ ९९ ॥ प्राप्य चाश्वयुजे मासि कृष्णपक्षे चतुर्दशीम् ॥ अहोरात्रो
षितो भूत्वा पूजयित्वा महेश्वरम् ॥ महापातकयुक्तोऽपि मुच्यते नात्र संशयः ॥ १०० ॥ अष्टाविंशति कोट्यो वै नरकाणां युधिष्ठिर ॥ विमुक्ता
॥११९॥ नरकैर्दुःखैः शिवलोकं व्रजंति ते ॥ १ ॥ तत्र भुक्त्वा महाभोगान्दिव्यैश्वर्यसमन्वितान् ॥ लभन्ते मानुषं जन्म दुर्लभं भुवि मानवाः ॥ १०२ ॥ ॥२९३॥
इति श्रीस्कांदे महापुराण एकाशीतिसाहस्र्यां संहितायां पञ्चम आवन्त्यखण्डे रेवाखण्डेऽनरकेश्वरतीर्थमाहात्म्यवर्णनं नामैकोनषष्ट्युत्तरशततमो

१ सौवर्णे सुवर्णनिर्मितदीपपात्रे--इत्यर्थः ।

ऽध्यायः ॥ १५९ ॥ ॥ छ ॥ ॥ श्रीमार्कंडेय उवाच ॥ ॥ ततो गच्छेत्पांडुपुत्र मोक्षतीर्थमनुत्तमम् ॥ सेवितं देवगन्धर्वैर्मुनिभिश्च तपोधनैः ॥
॥ १ ॥ बहवस्तन्न जानंति विष्णुमायाविमोहिताः ॥ यत्र सिद्धा महाभागा ऋषयः सतपोधनाः ॥ २ ॥ पुलस्त्यः पुलहो विद्वान्क्रतुश्चैव महा
मतिः ॥ प्राचेतसो वसिष्ठश्च दक्षो नारद एव च ॥ ३ ॥ एते चाऽन्ये महाभागाः सप्तसाहस्रसंज्ञिताः ॥ मोक्षं गताः सह सुतैस्तत्तीर्थं तेन मोक्ष
दम् ॥ ४ ॥ तत्र प्रवाहमध्ये तु पतितो तमहा नदी ॥ तत्र तत्संगमं तीर्थं सर्वपापक्षयंकरम् ॥ ५ ॥ ऋग्यजुःसामसंज्ञानामभ्यस्तानां तु यत्फलम् ॥
सम्यग्जप्त्वा तु विधिना गायत्रीं तत्र तल्लभेत् ॥ ६ ॥ तत्र दत्तं हुतं जप्तं तीर्थसेवार्जितं फलम् ॥ सर्वमक्षयतां याति मोक्षसाधनमुत्तमम् ॥ ७ ॥
तत्र तीर्थे मृतानां तु संन्यासेन द्विजन्मनाम् ॥ अनिवर्त्तिका गतिस्तेषां मोक्षतीर्थप्रभावतः ॥ ८ ॥ एष ते विधिरुद्दिष्टः संक्षेपेण मयाऽनघ ॥
व्युष्टिस्तीर्थस्य महती पुराणे याऽभिधीयते ॥ ९ ॥ इति श्रीस्कान्दे महापुराण एकाशीतिसाहस्र्यां संहितायां पञ्चम आवन्त्यखण्डे रेवाखण्डे
मोक्षतीर्थमाहात्म्यवर्णनं नाम षष्ट्युत्तरशततमोऽध्यायः ॥ १६० ॥ ॥ छ ॥ ॥ श्रीमार्कंडेय उवाच ॥ ॥ ततो गच्छेन्महाराज सर्पतीर्थमनु
त्तमम् ॥ यत्र सिद्धा महासर्पास्तपस्तप्त्वा युधिष्ठिर ॥१॥ वासुकिस्तक्षको घोरः सर्प्प ऐरावतस्तथा ॥ कालियश्च महाभागः कर्कोटकधनंजयौ ॥२॥
शंखचूडो महातेजा धृतराष्ट्रो वृकोदरः ॥ कुलिको वामनश्चैव तेषां ये पुत्रपौत्रिणः ॥३॥ तत्र तीर्थे महापुण्ये तपस्तप्त्वा सुदुष्करम् ॥ भुंजंति विवि
धान्भोगान्क्रीडन्ति च यथासुखम् ॥४॥ तत्र तीर्थे तु यः स्नात्वा तर्पयेत्पितृदेवताः ॥ वाजपेयफलं तस्य पुरा प्रोवाच शंकरः ॥ ५ ॥ स्नातानां सर्प
तीर्थे तु नराणां भुवि भारत ॥ सर्पवृश्चिकजातिभ्यो न भयं विद्यते क्वचित् ॥६ ॥ मृतो भोगवतीं गत्वा पूज्यमानो महोरगैः ॥ नागकन्यापरिवृतो
महाभोगपतिर्भवेत् ॥ ७ ॥ मार्गशीर्षस्य मासस्य कृष्णपक्षे च याऽष्टमी ॥ सोपवासः शुचिर्भूत्वा लिंगं संपूरयेत्तिलैः ॥ यथाविभवसारेण गंधपुष्पैः
समर्चयेत् ॥ ८ ॥ एवं विधाय विधिवत्प्रणिपत्य क्षमापयेत् ॥ तस्य यत्फलमुद्दिष्टं तच्छृणुष्व नरेश्वर ॥९॥ तिलास्तत्र च यत्संख्याः पत्रपुष्पफलानि
च ॥ तावत्स्वर्गपुरे राजन्मोदते कालमीप्सितम् ॥१०॥ ततः स्वर्गात्परिभ्रष्टो जायते विमले कुले ॥ सुरूपः सुभगश्चैव धनकोटिपतिर्भवेत् ॥११॥
इति श्रीस्कांदे महापुराण एकाशीतिसाहस्र्यां संहितायां पञ्चम आवन्त्यखंडे रेवाखंडे सर्पतीर्थमाहात्म्यवर्णनंनामैकषष्ट्युत्तरशततमोऽध्यायः ॥
॥ १६१ ॥ ॥ छ ॥ ॥ श्रीमार्कंडेय उवाच ॥ ॥ गोपेश्वरं ततो गच्छेत्सर्प्पक्षेत्रादनंतरम् ॥ यत्र स्नानेन चैकेन मुच्यंते पातकैर्नराः ॥ १ ॥

१ पतितास्तमहानदी–इ०पा० । २ व्युष्टिः–फलम्-इत्यर्थः । ३ अप्सरोगणैः–इ०पा० । ४ नृप–इ०पा० ।

तत्र तीर्थे तु यः स्नात्वा कुरुते प्राणसंक्षयम् ॥ स गच्छेद्यदि युक्तोपि पापेन शिवमंदिरम् ॥ २ ॥ तत्र तीर्थे तु यः स्नात्वा पूजयेद्देवमीश्वरम् ॥
मुच्यते सर्वपापेभ्य रुद्रलोकं स गच्छति ॥ ३ ॥ क्रीडित्वा च यथाकामं रुद्रलोके महातपाः ॥ इह मानुष्यतां प्राप्य राजा भवति धार्मिकः ॥
॥ ४ ॥ हस्त्यश्वरथसंपन्नो दासीदाससमन्वितः ॥ पूज्यमानो नरेन्द्रैश्च जीवेद्वर्षशतं सुखी ॥ ५ ॥ इति श्रीस्कांदे महापुराण एकाशीतिसाहस्र्यां
संहितायां पंचम आवन्त्यखंडे रेवाखण्डे गोपेश्वरतीर्थमाहात्म्यवर्णनंनाम द्विषष्ट्युत्तरशततमोऽध्यायः ॥ १६२ ॥ ॥ छ ॥ ॥ श्रीमार्कंडेय
उवाच ॥ ॥ ततो गच्छेन्महाराज नागतीर्थमनुत्तमम् ॥ आश्विनस्य सिते पक्षे पंचम्यां नियतः शुचिः ॥ १ ॥ रात्रौ जागरणं कृत्वा गन्ध
धूपनिवेदनैः ॥ प्रभाते विमले स्नात्वा श्राद्धं कृत्वा यथाविधि ॥ २ ॥ मुच्यते सर्वपापेभ्यो नात्र कार्या विचारणा ॥ तत्र तीर्थे तु यो राजन्प्राण
त्यागं करिष्यति ॥ ३ ॥ अनिवर्त्तिका गतिस्तस्य प्रोवाचेति शिवः स्वयम् ॥ ४ ॥ इति श्रीस्कांदे महापुराण एकाशीतिसाहस्र्यां संहितायां पंचम
आवन्त्यखंडे रेवाखंडे नागतीर्थमाहात्म्यवर्णनंनाम त्रिषष्ट्युत्तरशततमोऽध्यायः ॥ १६३ ॥ ॥ छ ॥ ॥ श्रीमार्कंडेय उवाच ॥ ॥ ततो
गच्छेन्महाराज सांवौरं तीर्थमुत्तमम् ॥ यत्र सन्निहितो भानुः पूज्यमानः सुरासुरैः ॥ १ ॥ तत्र ये पंगुतां प्राप्ताः शीर्णघ्राणनखा नराः ॥ दद्रुमण्डल
भिन्नांगा मक्षिकाकृमिसंकुलाः ॥ २ ॥ मातापितृभ्यां रहिता भ्रातृभार्याविवर्जिताः ॥ अनाथा विकला व्यंगा मग्ना ये दुःखसागरे ॥ ३ ॥ तेषां
नाथो जगद्योनिर्नर्मदातटमाश्रितः ॥ सांवौरनाथो लोकानामार्त्तिहा दुःखनाशनः ॥ ४ ॥ तत्र तीर्थे तु यः स्नात्वा मासमेकं निरंतरम् ॥ पूजये
द्भास्करं देवं तस्य पुण्यफलं शृणु ॥ ५ ॥ यत्फलं चोत्तरे पार्थ तथा वै पूर्वसागरे ॥ दक्षिणे पश्चिमे स्नात्वा तत्र तीर्थे तु तत्फलम् ॥ ६ ॥ कौमारे
यौवने पापं वार्द्धके यच्च संचितम् ॥ तत्प्रणश्यति सांवौरे स्नानमात्रान्न संशयः ॥ ७ ॥ न व्याधिर्नैव दारिद्र्यं न चैवेष्टवियोजनम् ॥ सप्तजन्मानि
राजेंद्र सांवौरपरिसेवनात् ॥ ८ ॥ सप्तम्यामुपवासेन तद्दिने चाप्युपोषिते ॥ स तत्फलमवाप्नोति तत्र स्नात्वा न संशयः ॥ ९ ॥ रक्तचंदनमिश्रेण
यदर्घ्येण फलं स्मृतम् ॥ तत्र तीर्थे नृपश्रेष्ठ स्नात्वा तत्फलमाप्नुयात् ॥ १० ॥ नर्मदासलिलं रम्यं सर्वपातकनाशनम् ॥ निरीक्षितं विशेषेण
॥१२०॥ सांवौरेण महात्मना ॥ ११ ॥ ते धन्यास्ते महात्मानस्तेषां जन्म सुजीवितम् ॥ स्नात्वा पश्यंति देवेशं सांवौरेश्वरमुत्तमम् ॥ १२ ॥ सूर्यलोके ॥ २९४॥
वसेत्तावद्यावदाभूतसंप्लवम् ॥ १३ ॥ इति श्रीस्कांदे महापुराण एकाशीतिसाहस्र्यां संहितायां पञ्चम आवन्त्यखण्डे रेवाखण्डे सांवौरेश्वरतीर्थ
माहात्म्यवर्णनंनाम चतुःषष्ट्युत्तरशततमोऽध्यायः ॥ १६४ ॥ ॥ छ ॥ ॥ ॥ श्रीमार्कंडेय उवाच ॥ ॥ नर्मदादक्षिणे कूले सिद्धेश्वरमिति

श्रुतम् ॥ तीर्थं परं महाराज सिद्धैः कृतमिति प्रभो ॥ १ ॥ तत्र तीर्थं महापुण्यं सर्वतीर्थेषु पावनम् ॥ नर्मदाया महाराज दक्षिणं कूलमाश्रितम् ॥
॥ २ ॥ तत्र तीर्थे नरः स्नात्वा तर्प्पयेत्पितृदेवताः ॥ श्राद्धं तत्रैव यो दद्यात्पितृनुद्दिश्य भारत ॥ ३ ॥ तृप्यंति पितरस्तस्य द्वादशाब्दान्न संशयः ॥
तत्र तीर्थे तु यो भक्त्या स्नात्वा पूजयते शिवम् ॥ ४ ॥ रात्रौ जागरणं कृत्वा पठेत्पौराणिकीं कथाम् ॥ ततः प्रभाते विमले स्नानं कुर्याद्यथा
विधि ॥ ५ ॥ वीक्षते गिरिजाकांतं स गच्छेत्परमां गतिम् ॥ पुरा सिद्धा महाभागाः कपिलाद्या महर्षयः ॥ ६ ॥ जपंतश्च परं ब्रह्म योगसिद्धा
महाव्रताः ॥ सिद्धिं ते परमां प्राप्ता नर्मदायाः प्रभावतः ॥ ७ ॥ इति श्रीस्कांदे महापुराण एकाशीतिसाहस्र्यां संहितायां पञ्चम आवंत्यखण्डे
रेवाखण्डे सिद्धेश्वरतीर्थमाहात्म्यवर्णनंनाम पंचषष्ट्युत्तरशततमोऽध्यायः ॥ १६५ ॥ ॥ छ ॥ ॥ मार्कंडेय उवाच ॥ ॥ ततः सिद्धे
श्वरी देवी वैष्णवी पापनाशिनी ॥ आनंदं परमं प्राप्ता दृष्ट्वा स्थानं सुशोभनम् ॥ १ ॥ तत्र तीर्थे नरः स्नात्वा पूजयेत्पितृदेवताः ॥ देवीं पश्यति
यो भक्त्या मुच्यते सर्वपातकैः ॥ २ ॥ मृतवत्सा तु या नारी वन्ध्या स्त्रीजननी तथा ॥ पुत्रं सा लभते नारी शीलवन्तं गुणान्वितम् ॥ ३ ॥
तत्र तीर्थे तु यः स्नात्वा पश्येद्देवीं सुभक्तितः ॥ अष्टम्यां वा चतुर्दश्यां सर्वकालेऽथवा नृप ॥ ४ ॥ संगमे तु ततः स्नाता नारी वा
पुरुषोऽपि वा ॥ पुत्रं धनं तथा देवी ददाति परितोषिता ॥ ५ ॥ गोत्ररक्षां प्रकुरुते दृष्टा देवी सुपूजिता ॥ प्रजां च पाति सततं
पूज्यमाना न संशयः ॥ ६ ॥ नवम्यां च महाराज स्नात्वा देवीमुपोषितः ॥ पूजयेत्परया भक्त्या श्रद्धापूतेन चेतसा ॥ ७ ॥ स
गच्छेत्परमं लोकं यः सुरैरपि दुर्लभः ॥ ८ ॥ इति श्रीस्कांदे महापुराण एकाशीतिसाहस्र्यां संहितायां पञ्चम आवन्त्यखंडे रेवाखंडे
सिद्धेश्वरतीर्थमाहात्म्यवर्णनं नाम षट्षष्ट्युत्तरशततमोऽध्यायः ॥ १६६ ॥ ॥ छ ॥ ॥ युधिष्ठिर उवाच ॥ ॥ नर्मदादक्षिणे
कूले त्वचिह्नेनोपलक्षितम् ॥ तीर्थमेतन्ममाऽऽख्याहि संभवं च महामुने ॥ १ ॥ ॥ माकंडेय उवाच ॥ ॥ पुरा कृतयुगस्यादौ दक्षिणे
गिरिमुत्तमम् ॥ विंध्यं सर्वगुणोपेतं नियतो नियताशनः ॥ २ ॥ ऋषिसंघैः कृतातिथ्यो दंडके न्यवसं चिरम् ॥ उषित्वा सुचिरं
कालं वर्षाणामयुतं सुखी ॥ ३ ॥ तानृषीन्समनुज्ञाप्य शिष्यैरनुगतस्ततः ॥ निवृत्तः सुमहाभाग नर्मदाकूलमागतः ॥ ४ ॥ पुण्यं च रमणीयं च
सर्वपापविनाशनम् ॥ कृत्वाऽहमास्पदं तत्र द्विजसंघसमायुतः ॥ ५ ॥ ब्रह्मचारिभिराकीर्णं गार्हस्थ्ये दृढव्रतिष्ठितैः ॥ वानप्रस्थैश्च यतिभिर्यताहारैर्य

१ नृप–इ० पा० । २ कोपरे–इ० पा० ।

तात्मभिः ॥ ६ ॥ तपस्विभिर्महाभागैः कामक्रोधविवर्जितैः ॥ तत्राऽहं वर्षमयुतं तपः कृत्वा सुदारुणम् ॥ ७ ॥ आराधयं वासुदेवं प्रभुं कर्त्ता
रमीश्वरम् ॥ जपंस्तपोभिर्नियमैर्नर्मदाकूलमाश्रितः ॥ ८ ॥ ततस्तौ वरदौ देवौ समायातौ युधिष्ठिर ॥ प्रत्यक्षौ भास्करौ राजन्नुमाश्रीभ्यां
विभूषितौ ॥ ९ ॥ प्रणम्याऽहं ततो देवौ भक्तियुक्तो वचोऽब्रुवम् ॥ भवंतौ प्रार्थयामि स्म वरार्हौ वरदौ शिवौ ॥ १० ॥ धर्मस्थितिं महाभागौ भक्ति
वाऽनुत्तमां युवाम् ॥ अजरो व्याधिरहितः पंचविंशतिवर्षवत् ॥ अस्मिन्स्थाने सदा स्थेयं सह देवैरसंशयम् ॥ ११ ॥ एवमुक्तौ मया पार्थ तौ
देवौ कृष्णशंकरौ ॥ मामूचतुः प्रहृष्टौ तौ निवासार्थं युधिष्ठिर ॥ १२ ॥ ॥ देवावूचतुः ॥ ॥ अस्मिन्स्थाने स्थितौ विद्धि सह
देवैः सवासवैः ॥ एवमुक्त्वा ततो देवौ तत्रैवांतरधीयताम् ॥ १३ ॥ अहं च स्थापयित्वा तौ शंकरं कृष्णमव्ययम् ॥ कृतकृत्यस्ततो जातः
संपूज्य सुसमाहितः ॥ १४ ॥ तस्मिंस्तीर्थे नरः स्नात्वा पूजयेत्परमेश्वरम् ॥ मार्कंडेश्वरनाम्ना वै विष्णुं त्रिभुवनेश्वरम् ॥ १५ ॥ स गच्छेत्परमं
स्थानं वैष्णवं शैवमेव च ॥ घृतेन पयसा वाऽथ दध्ना च मधुना तथा ॥ १६ ॥ नार्मदेनोदकेनाऽथ गंधधूपैः सुशोभनैः ॥ पुष्पोपहारैश्च तथा
नैवेद्यैर्नियतात्मवान् ॥ १७ ॥ एवं विष्णोः प्रकुर्वीत जागरं भक्तितत्परः ॥ स्नानादीनि तथा राजन्प्रयतः शुचिमानसः ॥ १८ ॥ ज्येष्ठे मासि
सिते पक्षे चतुर्दश्यामुपोषितः ॥ द्वादश्यां कारयेद्देवपूजनं वैष्णवो नरः ॥ १९ ॥ एवं कृत्वा चतुर्दश्यामेकादश्यां नरोत्तम ॥ वैष्णवं लोक
माप्नोति विष्णुतुल्यो भवेन्नरः ॥ २० ॥ माहेश्वरे च राजेंद्र गणवन्मोदते पुरे ॥ श्राद्धं च कुरुते तत्र पितॄनुदिश्य सुस्थिरः ॥ २१ ॥ तस्य ते
ह्यक्षयां तृप्तिं प्राप्नुवंति न संशयः ॥ नर्मदायां द्विजः स्नात्वा मौनी नियतमानसः ॥ २२ ॥ उपास्य संध्यां तत्रस्थो जपं कृत्वा सुशोभनम् ॥
तर्पयित्वा पितन्देव..न्मनुष्यांश्च यथाविधि ॥ २३ ॥ कृष्णस्य पुरतः स्थित्वा मार्कंडेशस्य वा पुनः ॥ ऋग्यजुःसाममंत्रांश्च जपेदत्र प्रयत्नतः
॥ २४ ॥ ऋचमेकां जपेद्यस्तु ऋग्वेदस्य फलं लभेत् ॥ यजुर्वेदस्य यजुषा साम्ना सामफलं लभेत् ॥ २५ ॥ एकस्मिन्भोजिते विप्रे कोटिर्भवति
भोजिता ॥ मृतप्रजा तु या नारी वंध्या स्त्रीजननी तथा ॥ २६ ॥ रुद्रांस्तु विधिवज्जप्त्वा ब्राह्मणो वेदतत्त्ववित् ॥ लिंगस्य दक्षिणे पार्श्वे स्थाप
येत्कलशं शिवम् ॥ २७ ॥ रुद्रैकादशभिर्मंत्रैः स्नापयेत्कलशांभसा ॥ पुत्रमाप्नोति राजेंद्र दीर्घायुषमकल्मषम् ॥ २८ ॥ मार्कंडेश्वरवृक्षान्यो
दूरस्थानपि पश्यति ॥ ब्रह्महत्यादिपापेभ्यो मुच्यते शंकरोऽब्रवीत् ॥ २९ ॥ य इदं शृणुयाद्भक्त्या पठेद्वा नृपसत्तम ॥ सर्वपापविशुद्धात्मा

१ अर्थाच्छिवविष्णू । १ मार्कण्डेश्वरवृक्षान्—मार्कण्डेश्वरतीर्थतीरस्थान्—वृक्षान्—इत्यर्थः ।

जायते नाऽत्र संशयः ॥ ३० ॥ इदं यशस्यमायुष्यं धन्यं दुःस्वप्ननाशनम् ॥ पठतां शृण्वतां वाऽपि सर्वपापप्रमोचनम् ॥ ३१ ॥
इति श्रीस्कांदे महापुराण एकाशीतिसाहस्र्यां संहितायां पंचम आवन्त्यखण्डे रेवाखण्डे मार्कंडेश्वरतीर्थमाहात्म्यवर्णनंनाम सप्तषष्ट्युत्तरशत
तमोऽध्यायः ॥१६७॥ ॥ छ ॥ ॥ श्रीमार्कंडेय उवाच ॥ ॥ नर्मदादक्षिणे रोधस्यंकूरेश्वरमुत्तमम् ॥ तीर्थं सर्वगुणोपेतं त्रिषु लोकेषु विश्रुतम्
॥ १ ॥ यत्र सिद्धं महारक्ष आराध्य तु महेश्वरम् ॥ शंकरं जगतः प्राणं स्मृतिमात्रावहारिणम् ॥ २ ॥ ॥ युधिष्ठिर उवाच ॥ ॥ किं तद्रक्षो
द्विजश्रेष्ठ किंनाम कस्य वाऽन्वये ॥ एतद्विस्तरतः सर्वं कथयस्व ममाऽनघ ॥ ३ ॥ अज्ञानतिमिरांधा ये पुमांसः पापकारिणः ॥
युष्मद्विधैर्दीपभूतैः पश्यंति सचराचरम् ॥ ४ ॥ धर्मपुत्रवचः श्रुत्वा मार्कंडेयो मुनीश्वरः ॥ स्मितं कृत्वा बभाषे तां कथां पापप्रणा
शनीम् ॥५ ॥ ॥ मार्कंडेय उवाच ॥ ॥ मानसो ब्रह्मणः पुत्रः पुलस्त्योनाम पार्थिव ॥ वेदशास्त्रप्रवक्ता च साक्षाद्वेधा इवाऽपरः ॥ ६ ॥ तृणबिंदुसुता
तस्य भार्याऽऽसीत्परमेष्ठिनः ॥ तस्य धर्मप्रसंगेन पुत्रो जातो महामनाः ॥ ७ ॥ यस्माद्वेदेतिहासैश्च सषडंगपदक्रमाः ॥ विश्रांता ब्रह्मणा दत्ता
नामविश्रवसेति च ॥ ८ ॥ कस्मिंश्चिदथ काले च भरद्वाजो महामुनिः ॥ स्वसुतां प्रददौ राजन्मुदा विश्रवसे नृप ॥ ९ ॥ स तया रमते
सार्धं पौलोम्या मघवा इव ॥ मुदा परमया राजन्ब्राह्मणो वेदवित्तमः ॥ १० ॥ केनचित्त्वथ कालेन पुत्रः पुत्रगुणैर्युतः ॥ जज्ञे विश्रवसो राजन्नाम्ना
वैश्रवणः श्रुतः ॥ ११ ॥ सोऽपि मौनव्रतं कृत्वा बालभावाद्युधिष्ठिर ॥ सर्वभूताभयं दत्त्वा चचार परमं व्रतम् ॥ १२ ॥ तस्य तुष्टो महादेवो ब्रह्मा
ब्रह्मर्षिभिः सह ॥ सखित्वं चेश्वरो दत्त्वा धनदत्वं जगाम ह ॥ १३ ॥ यमेंद्रवरुणानां च चतुर्थस्त्वं भविष्यसि ॥ ब्रह्माऽप्युक्त्वा जगामाशु लोकपाल
त्वमीप्सितम् ॥ १४ ॥ ततस्त्वनंतरे काले कैकसी नाम राक्षसी ॥ पातालं भूतलं त्यक्त्वा विश्रवं चकमे पतिम् ॥ १५ ॥ पुत्रोऽथ रावणो जातस्त
स्या भरतसत्तम ॥ कुंभकर्णो महारक्षो धर्मात्मा च विभीषणः ॥ १६ ॥ कुंभश्चैव विकुंभश्च कुंभकर्णसुतावुभौ ॥ महाबलौ महावीर्यौ महांतौ पुरुषो
त्तम ॥ १७ ॥ अंकूरो राक्षसश्रेष्ठः कुंभस्य तनयो महान् ॥ विभीषणं च गुणवद्दृष्ट्वैवं राक्षसोत्तमः ॥ १८ ॥ ततः स यौवनं प्राप्य ज्ञात्वा रक्षः पिताम
हम् ॥ परं निर्वेदमापन्नश्चचार सुमहत्तपः ॥ १९ ॥ दक्षिणं पश्चिमं गत्वा सागरं पूर्वमुत्तरम् ॥ नर्मदायां प्रसंगेन ह्यंकूरो राक्षसेश्वरः ॥ २० ॥ तपश्च
चार सुमहद्दिव्यं वर्षशतं किल ॥ ततस्तुष्टो महादेवः साक्षात्परपुरंजयः ॥ २१ ॥ वरेण च्छंदयामास राक्षसं वृषकेतनः॥ वरं वृणीष्व भद्रं ते तव दा
स्यामि सुव्रत ॥ २२ ॥ प्रोवाच राक्षसो वाक्यं देवदेवं महेश्वरम् ॥ वरदं सोऽग्रतो दृष्ट्वा प्रणम्य च पुनःपुनः ॥२३॥ यदि तुष्टो महादेव वरदोऽसि सुरे

श्वर ॥ दुर्लभं सर्वभूतानाममरत्वं प्रयच्छ मे ॥ २४ ॥ मम नाम्ना स्थितोऽनेन वरेण त्रिपुरांतक ॥ सदा संनिहितोऽप्यत्र तीर्थे भवितुमर्हसि ॥ २५ ॥
॥ ॥ ईश्वर उवाच ॥ ॥ यावद्विभीषणमतं यावद्धर्मनिषेवणम् ॥ करिष्यसि दृढात्मा त्वं तावदेतद्भविष्यति ॥ २६ ॥ एवमुक्त्वा ययौ देवः सर्व
देवतपूजितः ॥ विमानेनाऽर्कवर्णेन कैलासं धरणीधरम् ॥ २७ ॥ गते चाऽदर्शनं देवे स्नात्वाऽऽचम्य विधानतः ॥ स्थापयामास राजेंद्र ह्यंकूरेश्वरमु
त्तमम् ॥ २८ ॥ गंधपुष्पैस्तथा धूपैर्वस्त्रालंकारभूषणैः ॥ पताकैश्चामरैश्छत्रैर्जयशब्दादिमंगलैः ॥ २९ ॥ पूजयित्वा सुरेशानं स्तोत्रैर्हृद्यैः सुपु
ष्कलैः ॥ जगाम भवनं रक्षो यत्र राजा विभीषणः ॥ ३० ॥ पूजितः स यथान्यायं दानसन्मानगौरवैः ॥ सौदर्ये स्थापितो भावे सोऽवात्सीत्परया
मुदा ॥ ३१ ॥ तत्र तीर्थे तु यः स्नात्वा पूजयेत्परमेश्वरम् ॥ अंकूरेश्वरनामानं सोऽश्वमेधफलं लभेत् ॥ ३२ ॥ मांडव्यखातमारभ्य संगमं वाऽपि
यच्छुभम् ॥ रेवाया आमलक्याश्च देवक्षेत्रं महेश्वरम् ॥ ३३ ॥ मांडव्यखातात्पश्चिमतस्तीर्थं तदंकूरेश्वरम् ॥ तत्र तीर्थे नरः स्नात्वा शुचिः प्रयतमा
नसः ॥ ३४ ॥ संध्यामाचम्य यत्नेन जपं कृत्वाऽथ भारत ॥ तर्पयित्वा पितॄन्देवान्मनुष्यान्भरतर्षभ ॥ ३५ ॥ सचैलः क्लिन्नवसनो मौनमास्थाय
संयतः ॥ अष्टम्यां वा चतुर्दश्यामुपोष्य विधिवन्नरः ॥ ३६ ॥ पूजां यः कुरुते राजंस्तस्य पुण्यफलं शृणु ॥ साग्रं तु योजनशतं तीर्थान्यायतनानि
च ॥ ३७ ॥ भवंति तानि दृष्टानि ततः पापैः प्रमुच्यते ॥ तत्र तीर्थे तु यद्दानं देवमुद्दिश्य दीयते ॥ ३८॥ स्नात्वा तु विधिवत्पात्रे तदक्षयमुदाहृतम् ॥
होमाद्दशगुणं प्रोक्तं फलं जाप्ये ततोऽधिकम् ॥ ३९ ॥ त्रिगुणं चोपवासेन स्नानेन च चतुर्गुणम् ॥ संन्यासं कुरुते यस्तु प्राणत्यागं करोति वा ॥
॥४०॥ अनिवर्तिका गतिस्तस्य रुद्रलोकादसंशयम् ॥ कृमिकीटपतंगानां तत्र तीर्थे युधिष्ठिर ॥ अंकूरेश्वरनामाख्ये मृतानां सुगतिर्भवेत् ॥४१॥
एतत्ते कथितं राजन्नंकूरेश्वरसंभवम् ॥ तीर्थं सर्वगुणोपेतं परमं पापनाशनम् ॥ ४२ ॥ येऽपि शृण्वंति भक्त्येदं कीर्त्यमानं महाफलम् ॥ लभंते नात्र
संदेहः शिवस्य भुवनं हि ते ॥ ४३ ॥ इति श्रीस्कांदे महापुराण एकाशीतिसाहस्र्यां संहितायां पञ्चम आवन्त्यखंडे रेवाखंडे अंकूरेश्वरतीर्थमाहा
॥१२२॥ त्म्यवर्णननामाष्टषष्ट्युत्तरशततमोऽध्यायः ॥ १६८ ॥ ॥ छ ॥ ॥ श्रीमार्कंडेय उवाच ॥ ॥ ततो गच्छेत्परं तीर्थं पुण्यं पापप्रणाशनम् ॥ ॥२९६॥
मांडव्यो यत्र संसिद्ध ऋषिर्नारायणस्तथा ॥ १ ॥ नारायणेन शुश्रूषा शूलस्थेन कृता पुरा ॥ तत्र स्नात्वा महाराज मुच्यते पापकंचुकात् ॥
॥ २ ॥ ॥ युधिष्ठिर उवाच ॥ ॥ आश्चर्यमेतल्लोकेषु यत्त्वया कथितं मुने ॥ न दृष्टं न श्रुतं तात शूलस्थेन तपः कृतम् ॥ ३ ॥ एतत्सर्वं

कथय मे ऋषिभिः सहितस्य वै ॥ अस्य तीर्थस्य माहात्म्यं मांडव्यस्य कुतूहलात् ॥ ४ ॥ ॥ श्रीमार्कंडेय उवाच ॥ ॥ शृणु राजन्यथा वृत्तं पुरा त्रेतायुगे क्षितौ ॥ लोकपालोपमो राजा देवपन्नो महामतिः ॥ ५ ॥ धर्मज्ञश्च कृतज्ञश्च यज्वा दानरतः सदा ॥ प्रजा ररक्ष यत्नेन पिता पुत्रानिवौरसान् ॥ ६ ॥ दात्यायनी प्रिया भार्या तस्य राज्ञो वशानुगा ॥ हारनूपुरघोषेण झंकाररवनादिता ॥ ७ ॥ परस्परं तयोः प्रीतिर्वर्द्धतेनुदिनं नृप ॥ वंशस्तंबे स्थितो राजा संशास्ति पृथिवीमिमाम् ॥ ८ ॥ हस्त्यश्वरथसंपूर्णां धनवाहनसंयुताम् ॥ अलंकृतो गुणैः सर्वैरनपत्यो महीपतिः ॥ ॥९॥ दुःखेन महताऽऽविष्टः संतप्तः संततिं विना ॥ स्नानहोमरतो नित्यं द्वादशाब्दानि भारत ॥१०॥ व्रतोपवासनियमैः पत्नीभिः सह तस्थिवान् ॥ आराधयद्भगवतीं चामुण्डां मुण्डमर्दिनीम् ॥ ११ ॥ स्तोत्रैरनेकैर्भक्त्या च पूजाविधिसमाधिना ॥ जय वाराहि चामुण्डे जय देवि त्रिलोचने॥१२॥ ब्राह्मि रौद्रि च कौमारि कात्यायनि नमोऽस्तु ते ॥ प्रचंडे भैरवे रौद्रि योगिन्याकाशगामिनि ॥ १३ ॥ नास्ति किंचित्त्वया हीनं त्रैलोक्ये सचराचरे ॥ राज्ञा स्तुता च संतुष्टा देवी वचनमब्रवीत् ॥ १४ ॥ वरयस्व यथाकामं यस्ते मनसि वर्त्तते ॥ आराधिता त्वया भक्त्या तुष्टा दास्यामि ते वरम् ॥ १५ ॥ ॥ देवपन्न उवाच ॥ ॥ यदि तुष्टासि देवेशि वरार्हो यदि वाऽप्यहम् ॥ पुत्रसंतानरहितं संतप्तं मां समुद्धर ॥ १६ ॥ संतानं नय मे वृद्धिं गोत्ररक्षां कुरुष्व मे ॥ अपुत्रिणां गृहाणीह श्मशानसदृशानि हि ॥ १७ ॥ पितरस्तस्य नाश्नन्ति देवता ऋषिभिः सह ॥ क्रियमाणेऽप्यहरहः श्राद्धे मत्पितरः सदा ॥ १८ ॥ दर्शयंति सदाऽऽत्मानं स्वप्ने क्षुत्पीडितं मम ॥ इति राज्ञो वचः श्रुत्वा देवी ध्यानमुपागता ॥ १९ ॥ दिव्येन चक्षुषा दृष्टं त्रैलोक्यं सचराचरम् ॥ प्रसन्नवदना देवी राजानमिदमब्रवीत् ॥ २० ॥ संतानं नाऽस्ति ते राजंस्त्रैलोक्ये सचराचरे ॥ यजस्व यज्ञपुरुषमपत्यं नास्ति तेऽन्यथा ॥ २१ ॥ मया दृष्टं महीपाल त्रैलोक्यं दिव्यचक्षुषा ॥ एवमुक्त्वा गता देवी राजा स्वगृहमागमत् ॥ २२ ॥ इयाज यज्ञपुरुषं संजाता कन्यका ततः ॥ तेजस्विनी रूपवती सर्वलोकमनोहरा ॥ २३ ॥ देवगन्धर्वलोकेऽपि तादृशी नास्ति कामिनी ॥ तस्या नाम कृतं पित्रा हर्षात्कामप्रमोदिनी ॥ २४ ॥ ततः कालेन ववृधे रूपेणास्तंभयज्जगत् ॥ हंसलीलागतिः सुभ्रूः स्तनभारावनामिता ॥ २५ ॥ रक्तमाल्यांबरधरा कुण्डलाभरणोज्ज्वला ॥ दिव्यानुलेपनवती सखीभिः सा सुरक्षिता ॥ २६ ॥ कुचमध्यगतो हारो विद्युन्मालेव राजते ॥ भ्रमरांचितकेशी सा बिंबोष्ठी चारुहासिनी ॥ २७ ॥ कर्णांतप्राप्तनेत्राभ्यां पिबन्तीवाथ कामिनः ॥ चंद्रतांबूलसौरभ्यैराकर्षतीव[1] मन्मथम् ॥ २८ ॥

१ चन्द्रतांबूलसौरभ्यैः—कर्पूरमिश्रतांबूलसौगन्ध्यैः—इत्यर्थः ।

कुम्बुग्रीवः चारुमध्या ताम्रपादांगुलीनखा ॥ निम्ननाभिः सुजघना रंभोरू सुदती शुभा ॥ २९ ॥ मातापितृसुहृद्वर्गे क्रीडानन्दविवर्द्धिनी ॥ एक
स्मिन्दिवसे बाला सखीवृन्दसमन्विता ॥ ३० ॥ चंदनागरुतांबूलधूपसौमनसांचिता ॥ गृहीत्वा पुष्पधूपादि गता देवीप्रपूजने ॥ ३१ ॥ तडागतट
उत्सृज्य भूषणान्यंगवेष्टकान् ॥ चक्रुः सरसि ताः क्रीडां जलमध्यगतास्तदा ॥ ३२ ॥ क्रीडन्तीं तामवेक्ष्याथ ससखीं विमले जले ॥ राक्षसः शंबरो
नाम श्येनरूपेण चाऽगमत् ॥ ३३ ॥ गृहीता जलमध्यस्था तेन सा काममोदिनी ॥ समुत्पपात दुष्टात्मा गृहीत्वाऽऽभरणान्यपि ॥ ३४ ॥
वायुमार्गं गतः सोऽथ कामिन्या सह भारत ॥ अपतन्कुण्डलादीनि यत्र तोये महामुनिः ॥ ३५ ॥ मांडव्यो नर्मदातीरे काष्ठवत्संजितेंद्रियः ॥
लीनो माहेश्वरे स्थाने नारायणपदे परे ॥ ३६ ॥ तस्य चानुचरो भ्राता भ्रातुः शुश्रूषणे रतः ॥ तपोजपकृशीभूतो दध्यौ देवं जनार्दनम् ॥ ३७ ॥
इति श्रीस्कांदे महापुराण एकाशीतिसाहस्र्यां संहितायां पञ्चम आवन्त्यखण्डे रेवाखंडे काममोदिनीहरणवर्णनंनामैकोनसप्तत्यधिशततमो
ऽध्यायः ॥ १६९ ॥ ॥ छ ॥ ॥ श्रीमार्कंडेय उवाच ॥ ॥ कामप्रमोदिनीसख्यो नीयमानां च तेन तु ॥ दृष्ट्वा ताश्चक्रुशुः सर्वा निःसृत्य
जलमध्यतः ॥ १ ॥ गता राजगृहे सर्वाः कथयंति सुदुःखिताः ॥ कामप्रमोदिनी राजन्हृता श्येनेन पक्षिणा ॥ २ ॥ क्रीडंती च जलस्थाने
तडागे देवसन्निधौ ॥ अन्वेष्या च त्वयाराजंस्तस्य मार्गं विजानता ॥ ३ ॥ तासां तद्वचनं श्रुत्वा देवपन्नः सुदुःखितः ॥ हाहेत्युक्त्वा समुत्थाय
रुदमानो वरासनात् ॥ ४ ॥ मंत्रिभिः सहितस्तस्मिंस्तडागे जलसन्निधौ ॥ न चिह्नं न च पन्थानं दृष्ट्वा दुःखान्मुमोह च ॥ ५ ॥ तस्य
राज्ञस्तु दुःखेन दुःखितो नागरो जनः ॥ क्षणेनाऽऽश्वासितो राजा मंत्रिभिः सपुरोहितैः ॥ ६ ॥ किं कुर्मे इत्युवाचेदमस्मिन्काले विधीय
ताम् ॥ सर्वैस्तत्संविदं कृत्वा वाहिनीं चतुरंगिणीम् ॥ ७ ॥ प्रेषयामि दिशः सर्वा हस्त्यश्वरथसंकुला ॥ वादित्राणि च वाद्यंते व्याकुली
भूतसंकुले ॥ ८ ॥ नाराचैस्तोमरैर्भल्लैः खड्गैः परश्वधादिभिः ॥ राजा संनाहबद्धोऽभूद्गगनं ग्रसते किल ॥ ९ ॥ न देवो न च गन्धर्वो न दैत्यो
न च राक्षसः ॥ किं करिष्यति राजाऽद्य न जाने रोषनिष्कृतिम्॥१०॥ नागरोऽपि जनस्तत्र दृष्ट्वा चकितमानसः ॥ चतुर्दशसहस्राणि दंतिनां सृणि
धारिणाम् ॥ ११ ॥ अश्वारोहसहस्राणि ह्यशीतिः शस्त्रपाणिनाम् ॥ रथानां त्रिसहस्राणि विंशतिर्भरतर्षभ ॥ १२ ॥ संग्रामभेरीनिनदैः खुररेणु

२ सह—इति शेषः ।

र्नभोगता ॥ एतस्मिन्नंतरे तात रक्षको नगरस्य हि ॥ १३ ॥ गृहीत्वाऽऽभरणं तस्यास्त्वंगप्रत्यंगिकं तथा ॥ कुण्डलांगदकेयूरहारनूपरझल्लरीः ॥
॥ १४ ॥ निवेद्याकथयद्राज्ञे मया दृष्टं त्ववेक्षणात् ॥ तापसानामाश्रमे तु मांडव्यो यत्र तिष्ठति ॥ १५ ॥ तापसैर्वेष्टितो यत्र ददृशे तत्र सन्निधौ ॥
दण्डवासिवचः श्रुत्वा प्रत्यक्षांगविभूषणम् ॥ १६ ॥ स क्रोधरक्तनयनो मंत्रिणो वीक्ष्य नैगमान् ॥ ईदृग्भूतस्समाचारो ब्राह्मणो नगरे मम ॥ १७ ॥
चौरचर्या व्रतच्छन्नः परद्रव्यापहरकः ॥ तेन कन्या हृता मेऽद्य तपस्विपापकर्मिणा[1] ॥ १८ ॥ शाकुन्तं रूपमास्थाय जलस्थो गगनं ययौ ॥
पाखंडिनो विकर्मस्थान्बिडालव्रतिकाञ्च्छठान् ॥ १९ ॥ चाटुतस्करदुर्वृत्तान्हंन्यान्नम्त्यस्य पातकम् ॥ न द्रष्टव्यो मया पापः स्तेयी कन्या
पहारकः ॥ २० ॥ शूलमारोप्यतां क्षिप्रं न विचारस्तु तस्य वै ॥ स च वध्यो मया दुष्टो रक्षोरूपी तपोधनः ॥ २१ ॥ एवं ब्रुवंश्चलन्क्रोधादा
दिश्य दण्डवासिनम् ॥ कार्याकार्यं न विज्ञाय शूलमारोपयद्द्विजम् ॥ २२ ॥ पौरा जानपदाः सर्वे अश्रुपूर्णमुखास्तदा ॥ हाहेत्युक्त्वा रुदंत्यन्ये
वदंति च पृथक्पृथक् ॥ २३ ॥ कुत्सितं च कृतं कर्म्म राज्ञा चंडालचारिणा ॥ ब्राह्मणो नैव वध्यो हि विशेषेण तपोवृतः ॥ २४ ॥ यदि रोषस
माचारो निर्वास्यो नगराद्बहिः ॥ न जातु ब्राह्मणं हन्यात्सर्वपापेप्यवस्थितम् ॥ २५ ॥ राष्ट्रादेनं बहिःकुर्यात्समग्रधनमक्षतम् ॥ नाश्नाति च गृहे
राजन्नाग्निर्नगरवासिनाम् ॥ सर्वेऽप्युद्विग्नमनसो गृहव्याप्तिविवर्जिताः ॥ २६ ॥ इति श्रीस्कान्दे महापुराण एकाशीतिसाहस्र्यां संहितायां पञ्चम
आवन्त्यखण्डे रेवाखण्डे मांडव्यशूलारोपणवर्णनंनाम सप्तत्यधिकशततमोऽध्यायः ॥ १७० ॥ ॥ छ ॥ ॥ श्रीमार्कंडेय उवाच ॥ ॥
कथितं ब्राह्मणं द्रष्टुं शूले क्षिप्तं तपोधनैः ॥ नारायणसमीपे तु गताः सर्वे महर्षयः ॥ १ ॥ नारदो देवलो रैभ्यो यमः शातातपोंऽगिराः ॥ वसिष्ठो
जमदग्निश्च याज्ञवल्क्यो बृहस्पतिः ॥ २ ॥ कश्यपोऽत्रिर्भरद्वाजो विश्वामित्रोऽरुणिर्मुनिः ॥ वालखिल्यादयोऽन्ये च सर्वेप्यृषिगणाऽन्वयाः ॥ ३ ॥
ददृशुः शूलमारूढं मांडव्यमृषिपुंगवाः ॥ प्रोचुर्नारायणं विप्रं किं कुर्मस्तव चेप्सितम् ॥ ४ ॥ सर्वे ते तत्र सान्निध्यान्मांडव्यस्य महात्मनः ॥
संभ्रांता आगता ऊचुः किं मृतः किं नु जीवति ॥ ५ ॥ अवस्थां तस्य ते दृष्ट्वा विषादमगमन्परम् ॥ असहित्वा तु तद्दुःखं सर्वे ते मनसा
द्विजाः ॥ ६ ॥ पृच्छयतां यदि मन्येत राजानं भस्मसात्कुरु ॥ तेषां तद्वचनं श्रुत्वा वाक्यं नारायणोऽब्रवीत् ॥ ७ ॥ मयि जीवति मद्भ्राता ह्यव
स्थानीदृशीं गतः ॥ धिग्जीवितं च मे किंतु तपसो विद्यते फलम् ॥ ८ ॥ दृष्ट्वा शूलस्थितं ज्येष्ठं मन्मनोऽनुविदीर्यते ॥ परं किं तु करिष्यामि

१ तपस्विपापकर्मिणा--तपस्विरूपेण पापिना--इत्यर्थः ।

येन राष्ट्रं सराजकम् ॥ ९ ॥ भस्मसाच्च करोम्यद्य भवद्भिः क्षम्यतामिह ॥ एवमुक्त्वा गृहीत्वाऽसौ करस्थमभिमन्त्रयेत् ॥ १० ॥ क्रोधेन पश्यते
यावत्तावद्धुंकारकोऽभवत् ॥ तेन हुंकारशब्देन ऋषयो विस्मितास्तदा ॥ ११ ॥ मांडव्यस्य समीपे तु ह्यपृच्छंस्ते द्विजोत्तमाः ॥ निवारयसि किं
विप्र शापं नृपजिघांसनम् ॥ १२ ॥ अपापस्य तु येनेह कृतमस्य जिघांसनम् ॥ ऋषीणां वचनं श्रुत्वा कृच्छ्रान्मांडव्यकोऽब्रवीत् ॥ १३ ॥ अभि
वन्दामि वो मूर्ध्ना स्वागतं षयः सदा ॥ अर्घ्यसन्मानपूजार्हाः सर्वेऽत्रोपविशंतु ते ॥ १४ ॥ निविष्टैकाग्रमनसा सर्वान्मांडव्यकोऽब्रवीत् ॥ १५ ॥
प्राप्तं दुःखं मया घोरं पूर्वजन्मार्जितं फलम् ॥ मा विषादं कुरुध्वं भोः कृतं पापं तु भुज्यते ॥ १६ ॥ ॥ ऋषय ऊचुः ॥ ॥ केन कर्मविपा
केन इह जात्यंतरं व्रजेत् ॥ दानधर्मफलेनैव केन स्वर्गं च गच्छति ॥ १७॥ ॥ मांडव्य उवाच ॥ ॥ अदत्तदाना जायंते परभाग्योप
जीविनः ॥ न स्नानं न जपो होमो नातिथ्यं न सुरार्चनम् ॥१८॥ न पर्वणि पितृश्राद्धं न दानं द्विजसत्तमाः ॥ व्रजंति नरके घोरे यांति ते त्वंत्यजां
गतिम् ॥१९॥ पुनर्दरिद्राः पुनरेव पापाः पापप्रभावान्नरके वसंति ॥ तेनैव संसारिणि मर्त्यलोके जीवादिभूते कृमयः पतंगाः ॥२०॥ ये स्नानशीला
द्विजदेवभक्ता जितेंद्रिया जीवदयानुशीलाः ॥ ते देवलोकेषु वसंति हृष्टा ये धर्मशीला जितमानरोषाः ॥ २१ ॥ विद्याविनीता न परोपतापिनः
स्वदारतुष्टाः परदारवर्जिताः ॥ तेषां न लोके भयमस्ति किंचित्स्वभावशुद्धा गतकल्मषा हि ते ॥ २२ ॥ ॥ ऋषय ऊचुः ॥ ॥ पूर्वजन्मनि विप्रेंद्र किं
त्वया दुष्कृतं कृतम ॥ येन कष्टमिदं प्राप्तं संधानं शूलगर्हितम् ॥२३॥ शूलस्थं त्वां समालक्ष्य ह्यागताः सर्व एव हि ॥ जीवंतं त्वां प्रपश्याम त्वंतर
न्नवतारयन् ॥ रुजा संतापजं दुःखं सोढ्वापि त्वमवेदनः ॥ २४ ॥ ॥ मांडव्य उवाच ॥ ॥ स्वयमेव कृतं कर्म स्वयमेवोपभुज्यते ॥ सुकृतं दुष्कृतं पूर्वे
नान्ये भुंजंति कर्हिचित् ॥ २५ ॥ यथा धेनुसहस्रेषु वत्सो विंदति मातरम् ॥ तथा पूर्वकृतं कर्म्म कर्त्तारमुपगच्छति ॥ २६ ॥ न माता न पिता
भ्राता न भार्या न सुताः सुहृत् ॥ न कस्य कर्मणा लेपः स्वयमेवोपभुज्यते ॥ २७ ॥ श्रूयतां मम वाक्यं च भवद्भिः पृच्छितो ह्यहम् ॥ पूर्वे वयसि
भो विप्रा मलस्नानकृतक्षणः ॥ २८ ॥ अज्ञानाद्बालभावेन यूका कंटेधिरोपिता ॥ तैलाभ्यक्तशिरोगात्रे मया यूका धृता न हि ॥२९॥ कंकतीं गोप्य
॥१२४॥ केशेषु सासा कंटेऽधिरोपिता ॥ तेषु पापं कृतं सद्यः फलमेतन्ममाभवत् ॥ ३० ॥ किंचित्कालं क्षपित्वाहं प्राप्स्ये मोक्षं निरामयम् ॥ भवंतस्त्विह
संतापं मा कुरुध्वं महर्षयः ॥ ३१ ॥ इमामवस्थां भुक्त्वाऽहं कंचिच्छपे न चोत्तरे ॥ अहानि कतिचिच्छूले क्षपयिष्यामि किल्बिषम् ॥ ३२ ॥ प्राक्तनं ॥२९८॥

१ कंटेःधिरोपिता—कंकतीकंटकेन—शिरोपरि धृता—इत्यर्थः । २ कंकती—फणी इति महाराष्ट्रभाषायाम्—कंघी इति हिन्दीभाषायाम् ।

कर्म भुंजामि यन्मया संचितं द्विजाः ॥ क्षंतव्यमस्य राज्ञोऽथ कोपश्चैव विसर्ज्यताम् ॥ ३३ ॥ श्रुत्वा तु तस्य तद्वाक्यं मांडव्यस्य महर्षयः ॥ प्रहर्ष
मतुलं लब्ध्वा साधुसाध्वित्यपूजयन् ॥ ३४ ॥ ॥ नारायण उवाच ॥ ॥ इदं जलं मंत्रपूतं कस्मिन्स्थाने क्षिपाम्यहम् ॥ येन राजा भवेद्भस्म स
राष्ट्रः सपुरोहितः ॥ ३५ ॥ ॥ मांडव्य उवाच ॥ ॥ इदं जलं च रक्षस्व कालकूटविषोपमम् ॥ समुद्रे क्षिपयिष्यामि देवकार्यं समुत्थितम् ॥
॥ ३६ ॥ अथ ते मुनयः सर्वे मांडव्यं प्रणिपत्य च ॥ आमंत्रयित्वा हर्षाच्च कश्यपाद्या गृहान्ययुः ॥ ३७ ॥ गच्छमानास्तु ते चोक्ताः पंचमेऽहनि ता
पसाः ॥ आगंतव्यं भवद्भिश्च मत्सकाशं प्रतिज्ञया ॥ ३८ ॥ तथेति ते प्रतिज्ञाय नारदाद्या अदर्शनम् ॥ गतेषु विप्रमुख्येषु शांडिली च तपोधना ॥
॥ ३९ ॥ द्वितीयेऽह्नि समायाता न तु बुध्वाऽथ तं ऋषिम् ॥ भर्त्तारं शिरसा धार्य रात्रौ पर्यटते स्म सा ॥ ४० ॥ न दृष्टः शूलके विप्रो भराक्रांत्या
युधिष्ठिर ॥ स्खलिता तस्य जानुभ्यां शूलस्थस्य पतिव्रता ॥ ४१ ॥ सर्वांगेषु व्यथा जाता तस्याः प्रस्खलनान्मुनेः ॥ ईदृशीं वर्त्तमानां च ह्यवस्थां
पूर्वदैविकीम् ॥ ४२ ॥ पुनः पापफलं किंचिद्धा कष्टं मम वर्त्तते ॥ व्यथितोऽहं त्वया पापे किमर्थं सूनकर्मणि ॥ ४३ ॥ स्वैरिणीं त्वां प्रपश्यामि राक्ष
सी तस्करी नु किम् ॥ एवमुक्त्वा क्षणं मोहात्कंदमानो मुहुर्मुहुः ॥ ४४ ॥ तपस्विनोऽथ ऋषयः सर्वे संत्रस्तमानसाः ॥ पश्यमाना मुनेः कष्टं पृच्छंते
ते युधिष्ठिर ॥ ४५ ॥ पर्यटसे किमर्थं त्वं निशीथे वहनं नु किम् ॥ क्षिप्तं तु झोलिकाभारं किंवाऽऽगमनकारणम् ॥ व्यथामुत्पाद्य ऋषये दुःखाद्दुःख
विलासिनि ॥ ४६ ॥ ॥ शांडिल्युवाच ॥ ॥ नाऽसुरीं न च गंधर्वीं न पिशाचीं न राक्षसीम् ॥ पतिव्रतां तु मां सर्वे जानंतु तपसि स्थिताम् ॥
॥ ४७ ॥ न मे कामो न मे क्रोधो न वैरं न च मत्सरः ॥ अज्ञानाद्दृष्टिमांद्याच्च स्खलनं क्षंतुमर्हथ ॥ ४८ ॥ वहनं भर्तृसौख्याय दिवा संपीड्य
ते रुजा ॥ अयं भर्त्ता विजानीथ झोलिकासंस्थितः सदा ॥ ४९ ॥ भरणं पानंवस्त्रं च ददाम्येतस्य रोगिणः ॥ ऋषिः शौनकमुख्योऽसौ शांडिलीं
मां विजानत ॥ ५० ॥ स्वभर्तृधर्मिणीं कोपं मा कुरुष्वातिथिं कुरु ॥ सतां समीपं संप्राप्तां सर्वे मे क्षंतुमर्हथ ॥ ५१ ॥ ॥ ऋषय ऊचुः ॥ ॥ पर
व्यथां न जानीषे व्यचरंती यदृच्छया ॥ प्रभातेऽभ्युदिते सूर्ये तव भर्त्ता मरिष्यति ॥ ५२ ॥ आत्मदुःखात्परं दुःखं न जानासि कुलाधमे ॥ तेन
वाक्येन घोरेण शांडिली विमनाऽभवत् ॥ ५३ ॥ परं विषादमापन्ना क्षणं ध्यात्वाऽब्रवीद्वचः ॥ कोपात्संरक्तनयना निरीक्षंती मुनींस्तदा ॥ ५४ ॥
सतां गेहे किल प्राप्ता भवतां चापकारिणी ॥ सामेनातिथिपूजायां शिष्टे च गृहमागते ॥५५॥ भवद्भिरीदृगातिथ्यं कृतं चैव ममेव तु ॥ स्वर्गापवर्ग

१ सामेन–शांततया–इत्यर्थः । अदन्तत्वमार्षम् ।

धर्मश्च भवद्भिर्न्न निरीक्षितम् ॥ ५६ ॥ प्राजापत्यामिमां दृष्ट्वा मां यथा प्राकृताः स्त्रियः ॥ भवंतः स्त्रीबलं मेऽद्य पश्यंतु दिवि देवताः ॥ ५७ ॥
मरिष्यति न मे भर्त्ता ह्यादित्यो नोदयिष्यति ॥ अन्धकारं जगत्सर्वं क्षीयते नाऽद्य शर्वरी ॥ ५८ ॥ एवमुक्ते तया वाक्ये स्तंभितेऽर्के तमोमयम्॥
न च प्रजायते सर्वं निर्वषट्कारसत्क्रियम् ॥ ५९ ॥ स्वाहाकारः स्वधाकारः पंचयज्ञविधिर्नहि ॥ स्नानं दानं जपो नास्ति संध्यालोपव्यतिक्रमः ॥
षण्मासं च तदा पार्थ लुप्तपिंडोदकक्रियम् ॥ ६० ॥ इति श्रीस्कांदे महापुराण एकाशीतिसाहस्र्यां संहितायां पञ्चम आवन्त्यखण्डे रेवाखण्डे
शांडिलीऋषिसंवादवर्णनंनामैकसप्तत्युत्तरशततमोऽध्यायः ॥ १७१ ॥ ॥ छ ॥ ॥ श्रीमार्कंडेय उवाच ॥ ॥ अथ ते ऋषयः सर्वे
देवाश्चेंद्रपुरोगमाः ॥ मांडव्यस्याऽश्रमे पुण्ये समीयुर्नर्मदातटे ॥ १ ॥ शंखदुंदुभिनादेन दीपिकाज्वलनेन च ॥ अप्सरोगीतनादेन
नृत्यंत्यो वारयोषितः ॥ २ ॥ कथानकैः स्तुवत्यन्ये तस्य शूलाग्रधारिणः ॥ अष्टाशीतिसहस्राणि स्नातकानां तपस्विनाम् ॥
॥ ३ ॥ समाजे त्रिदशैः सार्द्धं तत्र ते च दिदृक्षया ॥ ब्रह्मविष्णुमहेशानास्तत्र हर्षात्समागताः ॥ ४ ॥ मातरो मह्लिकाद्याश्च क्षेत्रपाला
विनायकाः ॥ दिक्पाला लोकपालाश्च गंगाद्याश्च सरिद्वराः ॥ ५ ॥ ऋषिदेवसमाजे तु नित्यं हर्षप्रमोदने ॥ तत्र राजा समायातः पौरजानपदैः
सह ॥ ६ ॥ दृष्ट्वा कौतूहलं तत्र व्याकुलीकृतमानसम् ॥ वित्रस्तमनसो भूत्वा भयात्सर्वे समास्थिताः ॥ ७ ॥ तस्मिन्समागमे दिव्ये ब्रह्मविष्ण्वीश
मब्रुवन् ॥ भो मांडव्य महासत्त्व वरदास्तेऽमरैः सह ॥ ८ ॥ अनेककष्टतपसा तव सिद्धिर्भविष्यति ॥ प्रार्थयस्व यथाकामं यस्ते मनसि रोचते ॥
॥ ९ ॥ अनादित्यमयं लोकं निर्वषट्कारमाकुलम् ॥ नष्टधर्मं विजानीहि प्रकृतिस्थं कुरुष्व च ॥ अनुग्रहं तु शांडिल्याः प्रार्थयाम द्विजो
त्तम ॥ १० ॥ एष ते कष्टदो राजा समायातस्तवाऽग्रतः ॥ संभूषयस्व विप्रर्षे जनं देवासुरं गणम् ॥ ११ ॥ ॥ मांडव्य उवाच ॥ ॥ यदि
प्रसन्ना मे देवाः समायाताः सुरैः सह ॥ त्रिकालमत्र तीर्थे च स्थातव्यमृषिभिः सह ॥ १२ ॥ भवतां तु प्रसादेन रुजा मे शाम्यतां सदा ॥ एव
मस्त्विति देवेशा यावज्जल्पंति पांडव ॥१३॥ तावद्रक्षो गृहीत्वाऽग्रे कन्यां कामप्रमोदिनीम् ॥ उवाच भगवञ्च्छापं पुरा दत्त्वोर्वशी मम ॥ १४ ॥
यदा कन्यां हरे रक्षः शापांतस्ते भविष्यति ॥ तेन मे गर्हितं कर्म्म शापेनाऽकृतबुद्धिना ॥ १५ ॥ क्षंतव्यमिति चोक्त्वा च गतश्चाऽदर्शनं पुनः ॥
गते चैव तु सा कन्या दृष्ट्वा पद्मदलेक्षणा ॥ १६ ॥ मंत्रयित्वा सुरैः सर्वैर्दत्ता मांडव्यधीमते ॥ तां वज्रशूलिकां प्राव्य पवित्रैर्न्नर्मदोदकैः ॥ १७ ॥

१ मन्यध्वे किम्—इति शेषः । २ ब्रह्मविष्ण्वीशम्—ब्रह्मविष्ण्वीशाः—अब्रुवन् । ३ हरेः—हरिष्यसि—इत्यर्थः ।

मांडव्यमृषिमुत्तार्य जयशब्दादिमंगलैः ॥ विवाहयित्वा तां कन्यां मांडव्य ऋषिपुंगवः ॥ १८ ॥ अभिवाद्य च तान्सर्वान्दानसन्मानगौरवैः ॥
अथ राजा समीपस्थो रत्नैश्च विविधैरपि ॥ १९ ॥ धिम्वादै र्निदितः सर्वैस्तैर्जनैर्भूषितः पुनः ॥ राज्ञा च ब्राह्मणाः सर्वे भूषणाच्छादनाशनैः ॥
॥ २० ॥ सुवर्णकोटिदानेन तुष्टान्कृत्वा क्षमापिताः ॥ वृत्ते विवाह आहूय शांडिलीं तामथाब्रवीत् ॥ २१ ॥ मानयस्व इमान्विप्रान्मोचयस्व दिवा
करम् ॥ अपहृत्य तमो येन कृपा सद्यः प्रवर्त्तते ॥ २२ ॥ ऋषीणां वचनं श्रुत्वा शांडिली दुःखिताऽब्रवीत् ॥ उदितेऽर्के तु मे भर्त्ता मृत्युं यास्यति
भो द्विजाः ॥ २३ ॥ तं कथं मोचयामीह ह्यात्मनोऽनिष्टसिद्धये ॥ क्रियाप्रवर्त्तनाद्वाद्य किं कार्यं मे महर्षयः ॥ २४ ॥ निःपुंसी स्त्री ह्यनाथाऽहं
भवामि भवतो मैतम् ॥ तिष्ठ त्वमंधकारे तु नेच्छामि रविणोदयम् ॥ २५ ॥ तेन वाक्येन ते सर्वे देवासुरमहर्षयः ॥ शिरःसंचालनाः सर्व्वे साधु
साध्विति चाऽब्रुवन् ॥ २६ ॥ पतिव्रते महाभागे शृणु वाक्यं तपोधने ॥ मन्यसे यदि नः सर्वान्कुरुष्व वचनं च यत् ॥ २७ ॥ ॥ शांडिल्यु
वाच ॥ ॥ येन मे न मरेद्भर्त्ता येन सत्यं मुनेर्वचः ॥ तत्कुरुध्वं विचार्याशु येन संवर्धते सुखम् ॥ २८ ॥ तस्यास्तद्वचनं श्रुत्वा स्वप्रावस्था
कृतो ऋषिः ॥ अंतर्हितो मुहूर्त्तं च शांडिल्याश्च प्रपश्य ताम् ॥ २९ ॥ पुनरादाय ते सर्वे कृत्वा निर्व्रणसत्तनुम् ॥ ३१ ॥ स्नापितो नर्मदातोये
शांडिल्यायै समर्पितः ॥ ३० ॥ ततः सा हृष्टमनसा पतिं दृष्ट्वा तु तैजसम् ॥ प्रणम्य तानृषीन्देवान्विमलार्कं जगत्कृतम् ॥ ३१ ॥ क्रियाप्रवर्त्तिताः
सर्वे देवगंधर्वमानुषाः ॥ हृष्टतुष्टा गताः सर्वे स्वमाश्रमपदं महत् ॥ ३२ ॥ पतिव्रता स्वभर्त्रा सा मासमेवाऽऽश्रमे स्थिता ॥ मांडव्येनाऽप्यनुज्ञाता
ययौ नत्वा स्वमाश्रमम् ॥ ३३ ॥ गतेषु तेषु सर्वेषु स्थापयामास चाच्युतम् ॥ मांडव्येश्वरनामानं नारायण इति स्मृतम् ॥ ३४ ॥ दिव्यं वर्ष
सहस्रं तु पूजयामास भारत ॥ गतोऽसावृषिसंघैश्च सहितोऽमरपर्वतम् ॥ ३५ ॥ तपस्तपन्तौ तौ तत्र ह्यद्यापि किल भारत ॥ भ्रातरौ संयता
त्मानौ ध्यायतः परमं पदम् ॥ ३६ ॥ तत्र तीर्थे तु यः स्नात्वा तर्पयेत्पितृदेवताः ॥ पितरस्तस्य तृप्यंति पिंडदानाद्दशाब्दिकम् ॥ ३७ ॥ देवगृहे
तु पक्षादौ यः करोति विलेपनम् ॥ गोदानशतसाहस्रे दत्ते भवति यत्फलम् ॥ ३८ ॥ उपलेपनेन द्विगुणमर्चने तु चतुर्गुणम् ॥ दीपप्रज्वलने
पुण्यमष्टधा परिकीर्त्तितम् ॥ ३९ ॥ दिव्यनेत्रधरो भूत्वा त्रैलोक्ये सचराचरे ॥ दध्ना मधुघृतैर्देवं पयसा नर्मदोदकैः ॥ ४० ॥ स्नपनं ये प्रकुर्वंति
पुष्पमालाविलेपनैः ॥ येऽर्चयंति विरूपाक्षं देवं नारायणं हरिम् ॥ ४१ ॥ तेऽपि दिव्यविमानेन क्रीडंते कल्पसंख्यया॥दीपाष्टकं तु यः कुर्यादष्टमीं

१ माण्डव्यः—इति शेषः । २ निःपुंसी—पतिरहिता—इत्यर्थः । ३ इति भवतो मतम्—अभीष्टं किम्—नैतद्योचितम्—मम चैतन्नाभीष्टम् । ४ जगाम–इति शेषः ।

 च चतुर्दशीम् ॥ ४२ ॥ एकादश्यां तु कृष्णस्य न पश्यंति यमं तु ते ॥ फलैर्नानाविधैः शुभैर्यः कुर्याल्लिंगपूरणम् ॥ ४३ ॥ तेऽपि 
यांति विमानेन सिद्धचारणसेविताः ॥ घण्टा चैव पताका च विमाने पुष्पमालिका ॥४४ ॥ वादित्राणि यथार्हाणि प्रांते च गच्छते शिवम् ॥ देवा 
॥१००॥ लयं तु यः कुर्याद्वैष्णवं मांडवेश्वरम् ॥ ४५ ॥ स्वर्गे वसति धर्मात्मा यावदाभूतसंप्लवम् ॥ मांडव्यनारायणाख्ये विप्रान्भोजयतेऽग्रतः ॥ ४६ ॥ 
एकस्मिन्भोजिते विप्रे कोटिर्भवति भोजिता ॥ आश्विने मासि संप्राप्ते शुक्लपक्षे चतुर्दशीम् ॥ ४७ ॥ कृतोपवासनियमो रात्रौ जागरणेन च ॥
दीपमालां चतुर्दिक्षु पूजां कृत्वा तु शक्तितः ॥ ४८ ॥ नारी वा पुरुषो वाऽपि नृत्यगीतप्रवादनैः ॥ प्रभाते विमले सूर्ये स्नानादिकविधिं नृप ॥४९॥
अभिनिर्वर्त्य मौनेन पश्यते देवमीदृशम् ॥ सर्वपापविनिर्मुक्तो रुद्रलोके महीयते ॥ ५० ॥ अथवा मार्गशीर्षे च चैत्रवैशाखयोरपि ॥ श्रावणे वा
महाराज सर्वकालेऽथ वापि च ॥ ५१ ॥ शिवरात्रिसमं पुण्यमित्येवं शिवभाषितम् ॥ वाजपेयाऽश्वमेधाभ्यां फलं भवति नाऽन्यथा ॥ ५२ ॥ दुर्भगा
दुःखिता वंध्या दरिद्रा च मृतप्रजा ॥ स्नाति रुद्रघटैर्या स्त्री सर्वान्कामानवाप्नुयात् ॥५३॥ कृमिकीटपतंगाश्च तस्मिंस्तीर्थे तु ये मृताः ॥ स्वर्गं प्रयां
ति ते सर्वे दिव्यरूपधरा नृप ॥ ५४ ॥ अनाशके जलेऽग्नौ तु ये मृता व्याधिपीडिताः ॥ अनिवर्त्तिका गतिस्तेषां रुद्रलोके ह्यसंशयम् ॥ ५५ ॥
नित्यं नमति यो राजञ्छिवनारायणावुभौ ॥ गोदानफलमाप्नोति तस्य तीर्थप्रभावतः ॥ ५६ ॥ देवालये तु राजेंद्र यस्श्च कुर्यात्प्रदक्षिणाम् ॥
प्रदक्षिणीकृता तेन ससागरधरा धरा ॥ ५७ ॥ सार्द्धं शतं च तीर्थानि मल्लिकाभवनाद्बहिः ॥ तस्य तीर्थप्रमाणं तु विस्तरं राजसत्तम ॥ ५८ ॥
सूत्रेण वेष्टयेत्क्षेत्रमथवा शिवमन्दिरम् ॥ अथवा शिवलिंगं च तस्य पुण्यफलं शृणु ॥ ५९ ॥ जंबूद्वीपश्च कृत्स्नश्च शाल्मली कुशक्रौंचकौ ॥ शाकपु
ष्करगोमेदैः सप्तद्वीपा वसुन्धरा ॥ ६० ॥ भूषिता तेन राजेंद्र सशैलवनकानना ॥ रेवायां दक्षिणे भागे शिवक्षेत्रात्समीपतः ॥ ६१ ॥ देवखातं
महापुण्यं निर्मितं त्रिदशैरपि ॥ तस्मिन्यः कुरुते स्नानं मुच्यते सर्वपातकैः ॥ ६२ ॥ पूर्णिमायाममावस्यां व्यतीपातेऽर्कसंक्रमे ॥ श्राद्धं च संग्रहे
कुर्यात्स गच्छेत्परमां गतिम् ॥ ६३ ॥ देवखाते त्रयो देवा ब्रह्मविष्णुमहेश्वराः ॥ तिष्ठंति ऋषिभिः सार्द्धं पितृदेवगणैः सह ॥ ६४ ॥ तत्र तीर्थेऽश्विने
मासि चतुर्दश्यां विशेषतः ॥ वायुमार्गे स्थितः शक्रस्तिष्ठते दैवतैः सह ॥ ६५ ॥ पृथिव्यां यानि तीर्थानि सारितः सागरास्तथा ॥ विशंति तानि ॥३००॥
॥१२६॥ सर्वाणि देवखाते दिनद्वयम् ॥ ६६ ॥ गयाशिरे च यत्पुण्यं प्रयागेमकरकण्टके ॥ प्रयागे सोमतीर्थे च तत्पुण्यं मांडवेश्वरे ॥ ६७ ॥ पट्टबन्धेन

१ कृष्णस्य—कृष्णपक्षस्य इत्यर्थः । २ क्रीडंते कल्पसंख्यया—इ० पा० । ३ संग्रहे—ग्रहणमोक्षोत्तराव्यवहितकाले—इत्यर्थः—इति प्रतिभाति । ४ अश्विने—ह्रस्वमार्षम् ।

यत्पुण्यं मात्रायां लकुलेश्वरे ॥ आश्विन्यामश्विनीयोगे तत्पुण्यं मांडवेश्वरे ॥ ६८ ॥ उज्जयिन्यां महाकाले वाराणस्यां त्रिपुष्करे ॥ सन्निहत्यां रवि ग्रस्ते मांडव्याख्ये सनातनम् ॥ ६९ ॥ इति ज्ञात्वा महाराज सर्वतीर्थेषु चोत्तमम् ॥ पितृन्देवान्समभ्यर्च्य स्नानदानादिपूजनैः ॥ ७० ॥ चतुर्दश्यां निराहारः स्थितो भूत्वा शुचिव्रतः ॥ पूजयेत्परया भक्त्या रात्रौ जागरणे शिवम् ॥ ७१ ॥ स्नानैश्च विविधैर्देवं पुष्पागरुविलेपनैः ॥ प्रभाते पौर्ण मास्यां तु स्नानादिविधितर्पणैः ॥ ७२ ॥ श्राद्धेन हव्यकव्येन शिवपूजार्चनेन च ॥ अग्निष्टोमादियज्ञैश्च विधिवद्याप्तदक्षिणैः ॥ ७३ ॥ धौतपापो विशुद्धात्मा फलते फलमुत्तमम् ॥ गोसहस्रप्रदानेन दत्तं भवति भारत ॥ ७४ ॥ स्नानाद्यैर्विधिवत्तत्र तद्दिने शिवसन्निधौ ॥ हिरण्यं वृषभं धेनुं भूमिं गोमिथुनं द्वयम् ॥ ७५ ॥ शिवमुद्दिश्य वै वस्त्रयुग्मे दद्यात्सुरूपिणे ॥ पादुकोपानहौ छत्रं भाजनं रक्तवाससी ॥ ७६ ॥ होमं जाप्यं तथा दान मक्षयं सर्वमेव तत् ॥ ऋचमेकां तु ऋग्वेदे यजुर्वेदे यजुस्तथा ॥ ७७ ॥ सामैकं सामवेदे तु जपेद्देवाग्रसंस्थितः ॥ सम्यग्वेदफलं तस्य भवेद्वै नाऽत्र संशयः ॥ ७८ ॥ गायत्रीजाप्यमात्रस्तु वेदत्रयफलं लभेत् ॥ कुलकोटिशतं साग्रं लभते तु शिवार्चनात् ॥ ७९ ॥ स्नाने दाने तथा श्राद्धे जागरे गीतवादिते ॥ अनिवर्त्तिका गतिस्तस्य शिवलोकात्कदाचन ॥ ८० ॥ कालेन महताऽऽविष्टो मर्त्यलोके समाविशेत् ॥ राजा भवति मेधावी सर्वं व्याधिविवर्जितः ॥ ८१ ॥ जीवेद्वर्षशतं साग्रं पुत्रपौत्रधनान्वितः ॥ तच्च तीर्थं पुनः स्मृत्वा लीयमानो महेश्वरे ॥ ८२ ॥ उपास्ते यस्तु वै सन्ध्यां तस्मिंस्तीर्थे च पर्वणि ॥ सांगोपांगैश्चतुर्वेदैर्लभते फलमुत्तमम् ॥ ८३ ॥ तत्र सर्वं शिवक्षेत्राच्छरपातं समंततः ॥ न संचरेद्भयोद्विग्ना ब्रह्महत्या नरा धिप ॥ ८४ ॥ यत्र तत्र स्थितो वृक्षान्पश्यते तीर्थतत्परः ॥ विविधैः पातकैर्मुक्तो मुच्यते नाऽत्र संशयः ॥ ८५ ॥ श्वभ्री तत्र महाराज जलमध्ये प्रदृश्यते ॥ कथानिका पुराणोक्ता वानरी तीर्थसेवनात् ॥ ८६ ॥ तत्र कूपो महाराज तिष्ठते देवनिर्मितः ॥ शिवस्य पश्चिमे भागे शिवक्षेत्रमनुत्त मम् ॥ ८७ ॥ वृषोत्सर्गं तु यः कुर्यात्तस्मिंस्तीर्थे नराधिप ॥ क्रीडंति पितरस्तस्य स्वर्गलोके यदृच्छया ॥ ८८ ॥ अगम्याऽऽगमने पापमया ज्ययाजने कृते ॥ स्तेयाच्च ब्रह्मगोहत्यागुरुघाताच्च पातकम् ॥ तत्सर्वं नश्यते पापं वृषोत्सर्गे कृते तु वै ॥ ८९ ॥ मांडव्यतीर्थमाहात्म्यं यः शृणोति समाधिना ॥ मुच्यते सर्वपापेभ्यो नाऽत्र कार्या विचारणा ॥ ९० ॥ इति श्रीस्कांदे महापुराण एकाशीतिसाहस्र्यां संहितायां पञ्चम आवन्त्यखण्डे रेवाखण्डे नर्मदामाहात्म्ये माण्डव्यतीर्थमाहात्म्यवर्णनंनाम द्विसप्तत्यधिकशततमोऽध्यायः ॥१७२॥छ॥ ॥ श्रीमार्कंडेय उवाच ॥ ॥ ततो गच्छेत्तु राजेंद्र तीर्थं परमशोभनम् ॥ नर्मदादक्षिणे कूले सर्वपापप्रणाशनम् ॥१॥ सिद्धेश्वरमिति ख्यातं महापातकनाशनम् ॥ यत्र शुद्धिं परां

प्राप्तो देवदेवो महेश्वरः ॥ पुरा हत्यायुतः प.र्थ देवदेवस्त्रिशूलधृक् ॥ २ ॥ पुरा पंचशिरा आसीद्ब्रह्मा लोकपितामहः ॥ तेनाऽनृतं वचश्चोक्तं कस्मिंश्चित्कारणांतरे ॥ ३ ॥ तच्छ्रुत्वा सहसा तस्मै चुकोप परमेश्वरः ॥ छेदयामास भगवान्मूर्द्धानं करजैस्तदा ॥ ४ ॥ तस्य तत्करसंलग्नं च्यवते न कदाचन ॥ ततो हि देवदेवेशः पर्यटन्पृथिवीमिमाम् ॥ ५ ॥ ततो वाराणसीं प्राप्तस्तस्यां तदपतच्छिरः ॥ पतिते तु कपाले च ब्रह्महत्या न मुंचति ॥ ६ ॥ ततस्तु सागरे गत्वा पूर्वे च दक्षिणे तथा ॥ पश्चिमे चोत्तरे पार्थ देवदेवो महेश्वरः ॥ ७ ॥ पर्यटन्सर्वतीर्थेषु ब्रह्महत्या न मुंचति ॥ नर्मदादक्षिणे कूले सुतीर्थं प्राप्तवान्प्रभुः ॥ ८ ॥ कुलकोटिं समासाद्य प्रार्थयामास चात्मवान्[1] ॥ प्रायश्चित्तं ततः कृत्वा बभूव गतकल्मषः ॥ ९ ॥ ततो निष्कल्मषो जातो देवदेवो महेश्वरः ॥ दत्त्वा सुरेभ्यस्तत्स्थानं ततश्चांतर्दधे प्रभुः ॥ १० ॥ तदाप्रभृति तत्तीर्थं शुद्धरुद्रेति कीर्त्तितम ॥ विख्यातं त्रिषु लोके ब्रह्महत्याहरं परम् ॥ ११ ॥ मासे मासे सिते पक्षेऽमावास्यायां युधिष्ठिर ॥ स्नात्वा तत्र विधानेन तर्पयेत्पितृदेवताः ॥ १२ ॥ दद्यात्पिंडं पितॄणां तु भावितेनांतरात्मना ॥ तस्य ते द्वादशाब्दानि सुतृप्ताः पितरो नृप ॥ १३ ॥ गंधधूपप्रदीपाद्यैरभ्यर्च्य परमेश्वरम् ॥ शुद्धेश्वराभिधानं तु शिवलोके महीयते ॥ १४ ॥ एतत्ते कथितं राजञ्छुद्धरुद्रमनुत्तमम् ॥ मया श्रुतं यथा देव सकाशाच्छूलपाणिनः ॥ मुच्यते सर्वपापेभ्यो रुद्रलोकं स गच्छति ॥ १५ ॥ इति श्रीस्कांदे महापुराण एकाशीतिसाहस्र्यां संहितायां पञ्चम आवन्त्यखण्डे रेवाखण्डे शुद्धेश्वरतीर्थमाहात्म्यवर्णनंनाम त्रिसप्तत्युत्तरशततमोऽध्यायः ॥ १७३ ॥ ॥ छ ॥ ॥ श्रीमार्कंडेय उवाच ॥ ॥ गोपेश्वरं ततो गच्छेदुत्तरे नर्मदातटे ॥ यत्र स्नानेन चैकेन मुच्यंते पातकैर्नराः ॥ १ ॥ तत्र तीर्थे तु यः स्नात्वा कुरुते प्राणसंक्षयम् ॥ बर्हियुक्तेन यानेन स गच्छेच्छिवमंदिरे ॥ २ ॥ क्रीडित्वा सुचिरं कालं शिवलोके नराधिप ॥ इह मानुष्यतां प्राप्य राजा भवति वीर्यवान् ॥ ३ ॥ हस्त्यश्वरथसंपन्नो दासीदाससमन्वितः ॥ पूज्यमानो नरेंद्रैश्च जीवेद्वर्षशतं नरः ॥ ४ ॥ संप्राप्ते कार्त्तिके मासि नवम्यां शुक्लपक्षतः ॥ सोपवासः शुचिर्भूत्वा दीपकांस्तत्र दापयेत् ॥ ५ ॥ गंधपुष्पैः समभ्यर्च्य रात्रौ कुर्वीत जागरम् ॥ तस्य यत्फलमुद्दिष्टं तच्छृणुष्व नराधिप ॥ ६ ॥ यावत्पुण्यं फलं संख्या दीपकानां तथैव च ॥ तावद्युगसहस्राणि शिवलोके महीयते ॥ ७ ॥ तस्मिंस्तीर्थे तु राजेंद्र लिंगपूरणकं विधिम् ॥ तथैव पद्मकैश्चैव दधिभक्तैस्तथैव च ॥ ८ ॥ यस्तु कुर्यान्नरश्रेष्ठ तस्य पुण्यफलं शृणु ॥ यावंति तिलसंख्यानि दधिभक्तं तथैव च ॥ ९ ॥ पद्मसंख्या शिवे लोके मोदते कालमीप्सितम् ॥ तस्मिंस्तीर्थे तु

१ आत्मवान्–प्रार्थयामास–आत्मानमेव शंकरं प्रार्थयामास–इत्यर्थः ।

राजेंद्र यत्किंचिद्दीयते नृप ॥ १० ॥ सर्वं कोटिगुणं तस्य संख्यातुं वा न शक्यते ॥ एवं ते कथितं सर्वं सर्वतीर्थमनुत्तमम् ॥ ११ ॥ इति श्रीस्कान्दे
महापुराण एकाशीतिसाहस्र्यां संहितायां पञ्चम आवन्त्यखण्डे रेवाखण्डे गोपेश्वरतीर्थमाहात्म्यवर्णनंनामचतुःसप्तत्युत्तरशततमोऽध्यायः ॥
॥ १७४ ॥ ॥ छ ॥ ॥ श्रीमार्कंडेय उवाच ॥ ॥ उत्तरे नर्मदाकूले भृगुक्षेत्रस्य मध्यतः ॥ कपिलेश्वरं तु विख्यातं विशेषात्पापनाशनम् ॥
॥ १ ॥ योऽसौ सनातनो देवः पुराणे परिपठ्यते ॥ वासुदेवो जगन्नाथः कपिलत्वमुपागतः ॥ २ ॥ पातालं सुतलं नाम तस्यैव नितलं ह्यधः ॥
गभस्तिगं च तस्याऽधो ह्यंधतामिस्रमेव च ॥ ३ ॥ पातालं सप्तमं यत्र ह्यधस्तात्संस्थितं महत् ॥ वसते तत्र वै देवः पुराणः परमेश्वरः ॥ ४ ॥ स
ब्रह्मा स महादेवः स देवो गरुडध्वजः ॥ पूज्यमानः सुरैः सिद्धैस्तिष्ठते ब्रह्मवादिभिः ॥ ५ ॥ वसतस्तस्य राजेंद्र कपिलस्य जगद्गुरोः ॥
विनाशं चाग्रतः प्राप्ताः क्षणेन सगरात्मजाः ॥ ६ ॥ भस्मीभूतांस्तु तान्दृष्ट्वा कपिलो मुनिसत्तमः ॥ जगाम परमं शोकं चिंत्यमानोऽथ
किल्बिषम् ॥ ७ ॥ सर्वसंगपरित्यागे चित्ते निर्विषयीकृते ॥ अयुक्तं षष्टिसहस्राणां कर्तुं मम विनाशनम् ॥ ८ ॥ कृतस्य करणं नास्ति तस्मा
त्पापविनाशनम् ॥ गत्वा तु कापिलं तीर्थं मोचयाम्यघमात्मनः ॥ ९ ॥ पातालं तु ततो मुक्त्वा कपिलो मुनिसत्तमः ॥ तपश्च
चार सुमहन्नर्मदातटमास्थितः ॥ १० ॥ व्रतोपवासैर्विविधैः स्नानदानजपादिकैः ॥ परं निर्वाणमापन्नः पूजयन्रुद्रमव्ययम् ॥ ११ ॥ तत्र
तीर्थे तु यः स्नात्वा पूजयेत्परमेश्वरम् ॥ गोसहस्रफलं तस्य लभते नाऽत्र संशयः ॥ १२ ॥ ज्येष्ठमासे तु संप्राप्ते शुक्लपक्षे चतुर्दशी ॥ तत्र स्नात्वा
विधानेन भक्त्या दानं प्रयच्छति॥१३॥पात्रभूताय विप्राय स्वल्पं वा यदि वा बहु ॥ अक्षयं तत्फलं प्रोक्तं शिवेन परमेष्ठिना ॥१४॥ अंगारकदिने
प्राप्ते चतुर्थ्यां नवमीषु च ॥ स्नानं करोति पुरुषो भक्त्योपोष्य वरांगना ॥ १५ ॥ रूपमैश्वर्यमतुलं सौभाग्यं संततिं पराम् ॥ लभते सप्तजन्मानि
नित्यं नित्यं पुनःपुनः ॥ १६ ॥ पौर्णमास्याममावास्यां स्नात्वा पिंडं प्रयच्छति ॥ तस्य ते द्वादशाब्दानि तृप्ता यांति सुरालयम् ॥ १७ ॥ तत्र
तीर्थे तु यो भक्त्या दद्याद्दीपं सुशोभनम् ॥ जायते तस्य राजेंद्र महादीप्तिः शरीरजा ॥ १८ ॥ तत्र तीर्थे मृतानां तु जंतूनां सर्वदा किल ॥ अनि
वर्तिका भवेत्तेषां गतिस्तु शिवमंदिरात् ॥ १९ ॥ इति श्रीस्कांदे महापुराण एकाशीतिसाहस्र्यां संहितायां पंचम आवन्त्यखण्डे रेवाखण्डे
कपिलेश्वरतीर्थमाहात्म्यवर्णनंनाम पंचसप्ताधिकशततमोऽध्यायः ॥ १७५ ॥ ॥ छ ॥ ॥ श्रीमार्कंडेय उवाच ॥ ॥ ततो गच्छेन्महीपाल
पिंगलावर्त्तमुत्तमम् ॥ तीर्थं सर्वगुणोपेतं कामिकं भुवि दुर्लभम् ॥ १ ॥ वाचिकं मानसं पापं कर्मजं यत्पुरा कृतम् ॥ पिंगलेश्वरमासाद्य तत्सर्वं

विलयं व्रजेत् ॥ २ ॥ तत्र स्नानं च दानं च देवखाते कृतं नृप ॥ अक्षयं तद्भवेत्सर्वमित्येवं शंकरोऽब्रवीत् ॥ ३ ॥ पृथिव्यां सर्वतीर्थेषु समुद्धृत्य
शुभोदकम् ॥ मुक्तं तत्र सुरैः खात्वा देवखातं ततोऽभवत् ॥ ४ ॥ ॥ युधिष्ठिर उवाच ॥ ॥ कथं तु देवखातं तत्संजातं द्विजसत्तम ॥ सुराः सर्वे
कथं तत्र मुमुचुर्वारि तीर्थजम् ॥ सर्वं कथय मे विप्र श्रवणे लंपटं मनः ॥ ५ ॥ ॥ श्रीमार्कंडेय उवाच ॥ ॥ यदा तुशूलशुद्ध्यर्थं रुद्रो देवगणैः
सह ॥ बभ्राम पृथिवीं सर्वां कमंडलुधरः शुभाम् ॥ ६ ॥ प्रभासाद्येषु तीर्थेषु स्नानं चक्रुः सुरास्तदा ॥ सर्वतीर्थोत्थितं तोयं पात्रे वै निहितं तु
तैः ॥ ७ ॥ शूलभेदमनुप्राप्य शूलं शुद्धं तु शूलिनः ॥ तत्रोत्थमुदकं गृह्य आगता भृगुकच्छके ॥ ८ ॥ तत्राऽपश्यंस्ततो ह्यग्निं ःपिंगलाक्षं च रोगि
णम् ॥ तपस्युग्रे व्यवसितं ध्यायमानं महेश्वरम् ॥ ९ ॥ हविर्भागैस्तु विप्राणां राज्ञां चैवामयाविनाम् ॥ दृष्ट्वा तु बहुरोगार्त्तमग्निं देवमुखं सुराः ॥
प्राहुस्ते सहिता देवं शंकरं लोकशंकरम् ॥ १० ॥ ॥ देवा ऊचुः ॥ ॥ प्रसादः क्रियतां शंभो पिंगलस्यामयाविनः ॥ यथा हि नीरुजः कायो
हविषां ग्रहणक्षमः ॥ पुनर्भवति पिंगस्तु तथा कुरु महेश्वर ॥ ११ ॥ ॥ ईश्वर उवाच ॥ ॥ भोभोः सुरा हि तपसा तुष्टोऽहं वो विशेषतः ॥
वचनाच्च विशेषेण ददाम्यभिमतं वरम् ॥ १२ ॥ ॥ पिंगल उवाच ॥ ॥ यदि तुष्टोऽसि देवेश दीयते देव चेप्सितम् ॥ चंद्रादित्यौ च नयने
कृत्वात्र कलया स्थितः ॥ १३ ॥ तथा पुनर्नवः कायो भवेद्वै मम शंकर ॥ तथा कुरु विरूपाक्ष नमस्तुभ्यं पुनःपुनः ॥ १४ ॥ ॥ मार्कंडेय
उवाच ॥ ॥ ततः स भगवाञ्छंभुर्मूर्त्तिमादित्यरूपिणीम् ॥ कृत्वा तु तस्य तद्रोगमपानुदत शंकरः ॥ १५ ॥ ततः पुनर्नवीभूतः पुनः प्रोवाच
शंकरम् ॥ अत्रैव स्थीयतां शंभो तथैव भास्करः स्वयम् ॥ १६ ॥ प्राणिनामुपकाराय रोगाणामुपशांतये ॥ पापानां ध्वंसनार्थाय श्रेयसां चैव
वृद्धये ॥ १७ ॥ एवमुक्तस्तु भगवान्पिंगलेन महात्मना ॥ अवतारं च कृतवान्गीर्वाणानिदमब्रवीत् ॥ १८ ॥ ॥ ईश्वर उवाच ॥ ॥ मुंचध्व
मुदकं देवास्तीर्थेभ्यो यत्समाहृतम् ॥ मम चोत्तरतः कृत्वा खातं देवमयं शुभम् ॥ १९ ॥ तत्र निक्षिप्यतां वारि सर्वरोगविनाशनम् ॥ सर्वपाप
हरं दिव्यं सर्वैरपि सुरादिभिः ॥ २० ॥ एवमुक्ताः सुराः सर्वे खातं कृत्वा तथोत्तरे ॥ त्रयस्त्रिंशत्कोटिगणैर्मुक्तं तत्तीर्थजं जलम् ॥ २१ ॥ प्रोचुस्ते
सहिताः सर्वे विरूपाक्षपुरोगमाः ॥ यः कश्चिद्देवखातेऽस्मिन्मृदालंभनपूर्वकम् ॥ २२ ॥ स्नानं कृत्वा रविदिने संस्नाय नर्मदाजले ॥ श्राद्धं कृत्वा
पितृभ्यो वै दानं दत्त्वा स्वशक्तितः ॥ २३ ॥ पूजयिष्यति पिंगेशं तस्य वासस्त्रिविष्टपे ॥ भविष्यति सुरैरुक्तं शृणोति सकलं जगत् ॥ २४ ॥
आमया भुवि मर्त्यानां क्षयरोगविचर्चिकाः ॥ व्याधयो विकृताकाराः कासश्वासज्वरोद्भवाः ॥ २५ ॥ एकद्वित्रिचतुर्थाद्या ये ज्वरा भूतसंभवाः ॥

ये चाऽन्ये विकृता दोषा दद्रुश्च कामलं तथा ॥२६॥ दिनैस्ते सप्तभिर्यांति नाशं स्नाने रवेर्दिने ॥ शतभेदप्रभिन्ना ये कुष्ठा बहुविधास्तथा ॥२७॥ शतमादित्यवाराणां स्नायादष्टोत्तरं तु यः ॥ संपूज्य शंकरं दद्यात्तिलपात्रं द्विजातये ॥ २८ ॥ नश्यंति तस्य कुष्ठानि गरुडेनेव पन्नगाः ॥ एव मुक्त्वा गताः सर्वे त्रिदशास्त्रिदशालयम् ॥ २९ ॥ ॥ मार्कंडेय उवाच ॥ ॥ नदीषु देवखातेषु तडागेषु सरित्सु च ॥ स्नानं समाचरेन्नित्यं नरः पापैः प्रमुच्यते ॥ ३० ॥ षष्टितीर्थसहस्रेषु षष्टितीर्थशतेषु च ॥ यत्फलं स्नानदानेषु देवखाते ततोऽधिकम् ॥ ३१ ॥ देवखातेषु यः स्नात्वा तर्पयित्वा पितॄन्नृप ॥ पूजयेद्देवदेवेशं पिंगलेश्वरमुत्तमम् ॥ ३२ ॥ सोऽश्वमेधस्य यज्ञस्य वाजपेयस्य भारत ॥ द्वयोः पुण्यमवाप्नोति नाऽत्र कार्या विचारणा ॥ ३३ ॥ इति श्रीस्कांदे महापुराण एकाशीतिसाहस्र्यां संहितायां पञ्चम आवन्त्यखण्डे रेवाखंडे पिंगलेश्वरतीर्थमाहात्म्यवर्णनंनाम षट्सप्तत्युत्तरशततमोऽध्यायः ॥ १७६ ॥ ॥ छ ॥ ॥ श्रीमार्कंडेय उवाच ॥ ॥ भूतीश्वरं ततो गच्छेत्सर्वतीर्थेष्वनुत्तमम् ॥ दर्शनादेव राजेंद्र यस्य पापं प्रणश्यति ॥ १ ॥ तत्र स्थाने पुरा पार्थ देवदेवेन शूलिना ॥ उद्धूलनं कृतं गात्रे तेन भूतीश्वरं तु तत् ॥ २ ॥ पुष्ये वा जन्मनक्षत्र अमावास्यां विशेषतः ॥ भूतीश्वरे नरः स्नात्वा कुलकोटिं समुद्धरेत् ॥ ३ ॥ तत्र स्थाने तु यो भक्त्या कुरुते ह्यंगगुंठनम् ॥ तस्य यत्फलमुद्दिष्टं तच्छृणुष्व नराधिप ॥ ४ ॥ यावन्तो भूतिकणिका गात्रे लग्नाः शिवालये ॥ तावद्वर्षसहस्राणि शिवलोके महीयते॥५॥सर्वेषामेव स्नानानां भस्मस्नानं परं स्मृतम् ॥पुराणैर्ऋषिभिः प्रोक्तं सर्वशास्त्रेष्वनुत्तमम्॥६॥एककालं द्विकालं वा त्रिकालं चाऽपि यः सदा ॥ स्नानं करोति चाऽऽग्नेयं पापं तस्य प्रणश्यति ॥७॥ दिव्यस्नानाद्वरं स्नानं वायव्यं भरतर्षभ ॥वायव्यादुत्तमं ब्राह्म्यं वरं ब्राह्म्यात्तु वारुणम् ॥ ८ ॥ आग्नेयं वारुणाच्छ्रेष्ठं यस्मादुक्तं स्वयंभुवा ॥ तस्मात्सर्वप्रयत्नेन ह्याग्नेयं स्नानमाचरेत् ॥९ ॥ युधिष्ठिर उवाच ॥ ॥ आग्नेयं वारुणं ब्राह्म्यं वायव्यं दिव्यमेव च ॥ किमुक्तं श्रोतुमिच्छामि परं कौतूहलं हि मे ॥ १० ॥ ॥ मार्कंडेय उवाच ॥ ॥ आग्नेयं भस्मना स्नानमवगाह्य च वारुणम् ॥ आपोहिष्ठेति च ब्राह्म्यं वायव्यं गोरजः स्मृतम् ॥ ११ ॥ सूर्ये दृष्टे तु यत्स्नानं गंगातोयेन तत्समम् ॥ तत्स्नानं पंचमं प्रोक्तं दिव्यं पांडवसत्तम ॥ १२ ॥ तस्मात्सर्वप्रयत्नेन स्नात्वा भूतेश्वरे तु यः ॥ पूजयेद्देवमीशानं स बाह्याभ्यंतरः शुचिः ॥ १३ ॥ तत्र स्थाने तु ये नित्यं ध्यायंति परमं पदम् ॥ सूक्ष्मं चातींद्रियं नित्यं ते धन्या नाऽत्र संशयः ॥ १४ ॥ मुक्तितीर्थं तु तत्तीर्थं सर्वतीर्थेष्वनुत्तमम् ॥ दर्शनादेव यस्यैव पापं याति महत्क्षयम् ॥ १५ ॥ जायते पूजया राज्यं तत्र स्तुत्वा महेश्वरम् ॥ जपेन पापसंशुद्धि

ध्यानेनानन्त्यमश्नुते ॥ १६ ॥ ॐ ज्योतिःस्वरूपमनादिमध्यमनुत्पाद्यमानमनुच्चार्यमाणाक्षरम् ॥ सर्वभूतस्थितं शिवं सर्वयोगेश्वरं सर्व
लोकेश्वरं मोहशोकहीनं महाज्ञानगम्यम् ॥ १७ ॥ तत्र तीर्थे तु यो गत्वा स्नानं कुर्यान्नरेश्वर ॥ अश्वमेधस्य यज्ञस्य फलं प्राप्नोति
मानवः ॥ एवंभूतं न जानंति मोक्षापेक्षणिका नराः ॥ १८ ॥ इति श्रीस्कान्दे महापुराण एकाशीतिसाहस्र्यां संहितायां पञ्चम आवन्त्य
खण्डे रेवाखण्डे भूतीश्वरतीर्थमाहात्म्यवर्णनं नाम सप्तसप्तत्यधिकशततमोऽध्यायः ॥ १७७ ॥ ॥ छ ॥ ॥ श्रीमार्कंडेय उवाच ॥ ॥
ततो गच्छेत्तु राजेंद्र गंगावाहकमुत्तमम् ॥ नर्मदायां महापुण्यं भृगुतीर्थसमीपतः ॥ १ ॥ तत्र गंगा महापुण्या चचार विपुलं तपः ॥ पुरा वर्षशतं
साग्रं परमं व्रतमास्थिता ॥ २ ॥ ध्यात्वा देवं जगद्योनिं नारायणमकल्मषम् ॥ आत्मानं परमं धाम सरित्सा जगतीपते ॥ ३ ॥ ततो जनार्दनो
देव आगत्येदमुवाच ह ॥ ४ ॥ ॥ विष्णुरुवाच ॥ ॥ तपसा तव तुष्टोऽहं मत्पादांबुजसंभवे ॥ मत्तः किमिच्छसे देवि ब्रूहि किं करवाणि
ते ॥ ५ ॥ ॥ गंगोवाच ॥ ॥ त्वत्पादकमलाद्भ्रष्टा गंगा सहचरा विभो ॥ यदृच्छया त्रिलोकेश वन्द्यमाना दिवौकसैः ॥ ६ ॥ नृपो भगीरथ
स्तस्मात्तपः कृत्वा सुदुष्करम् ॥ समाराध्य जगन्नाथं शंकरं लोकशंकरम् ॥ ७ ॥ अवतारयामास हि मां पृथिव्यां धरणीधर ॥ मया वै युवयो
र्वाक्यादवतारः कृतो भुवि ॥ ८ ॥ वैष्णवीमिति मां मत्वा जनः सर्वाप्लुतो मयि ॥ ये वै ब्रह्महणो लोके ये च वै गुरुतल्पगाः ॥ ९ ॥ त्यागिनः
पितृमातृभ्यां ये च स्वर्णहरा नराः॥ गोघ्ना ये मनुजा लोके तथा ये प्राणिहिंसकाः ॥१०॥अगम्यागामिनो ये च ह्यभक्ष्यस्य च भक्षकाः ॥ ये चा
ऽनृत प्रवक्तारो ये च विश्वासघातकाः ॥ ११ ॥ देवब्राह्मणवित्तानां हर्तारो ये नराधमाः ॥ देवब्रह्मगुरुस्त्रीणां ये च निंदाकरा नराः ॥१२॥ ब्रह्मशाप
प्रदग्धा ये ये चैवात्महनो द्विजाः ॥ भ्रष्टानशनसंन्यासनियतव्रतचारिणः ॥ १३ ॥ तथैवापेयपेयाश्च ये च स्वगुरुनिंदकाः ॥ निषेधका ये
दानानां पात्रदानपराङ्मुखाः ॥ १४ ॥ ऋतुघ्ना ये स्वपत्नीनां पित्रोः स्नेहपरा न हि ॥ बांधवेषु च दीनेषु करुणा यस्य नास्ति वै ॥
॥ १५ ॥ क्षेत्रसेतुविभेदी च पूर्वमार्गप्रलोपकः ॥ नास्तिकः शास्त्रहीनस्तु विप्रः संध्याविवर्जितः ॥ १६ ॥ अहुताशी ह्यसंतुष्टः सर्वाशी
सर्वविक्रयी ॥ कदर्या नास्तिकाः क्रूराः कृतघ्ना ये द्विजायः ॥ १७ ॥ पैशुन्या रसविक्रेयाः सर्वकालविनाकृताः ॥ स्वगोत्रां परगोत्रां वा
ये भुंजंति द्विजाधमाः ॥ १८ ॥ ते मां प्राप्य विमुच्यंते पापसंघैः सुसंचितैः ॥ तत्पापक्षारतप्ताया न शर्म मम विद्यते ॥ १९ ॥ तथा कुरु

१ सर्वः आप्लुतः—इति पदच्छेदः । सन्धिरत्रार्षः । २ यत्पापक्षारतप्तायाः—इ० पा० ।

जगन्नाथ यथाऽहं शर्म चाप्नुयाम् ॥ एवमुक्तस्तु देवेशस्तुष्टः प्रोवाच जाह्नवीम् ॥ २० ॥ ॥ विष्णुरुवाच ॥ ॥ अहमत्र वसिष्यामि गंगाधरसहायवान् ॥ प्रविशस्व सदा रेवां त्वमत्रैव च मूर्त्तिना[1] ॥ २१ ॥ मम पादतलं प्राप्य वह त्रिपथगामिनि ॥ यदा बहूदक काले नर्मदाजल संभृता ॥ २२ ॥ प्रावृट्कालं समासाद्य भविष्यति जलाकुला ॥ प्लाव्योभयतटं देवी प्राप्य मामुत्तरस्थितम् ॥ २३ ॥ प्लावयिष्यति तोयेन यदा शंखं करे स्थितम् ॥ तदा पर्वशतोद्युक्तं वैष्णवं पर्वसंज्ञितम् ॥ २४ ॥ न तेन सदृशं किंचिद्व्यतीपातादिसंक्रमम् ॥ अयने द्वे च न तथा पुण्यात्पुण्य तरं यथा ॥ २५ ॥ तस्मिन्पर्वणि देवेशि शंखं संस्पृश्य मानवः ॥ स्नानमाचरते तोये मिश्रे गांगेयनार्मदे ॥ २६ ॥ पुण्यं त्वशेषपुण्यानां मंगलानां च मंगलम् ॥ विष्णुना विधृतो येन तस्माच्छांतिः प्रचक्रमे ॥ २७ ॥ तत्रांतं पापसंघस्य ध्रुवमाप्नोति मानवः ॥ शंखोद्धारे नरः स्नात्वा तर्पयेत्पि तृदेवताः ॥ २८ ॥ तृप्तास्ते द्वादशाब्दानि सिद्धिं च सार्वकामिकीम् ॥ गंगावहे तु यः श्राद्धं शंखोद्धारे प्रदास्यति ॥ २९ ॥ तेन पिंडप्रदानेन तृप्यंति पितरस्तथा ॥ शंखोद्धारे नरः स्नात्वा पूजयेद्धलकेशवौ ॥ ३० ॥ रात्रौ जागरणं कृत्वा शुद्धो भवति जाह्नवि ॥ यत्त्वं लोककृतं कर्म मन्यसे भुवि दुःसहम् ॥ ३१ ॥ तस्मिन्पर्वणि तत्सर्वं तत्र स्नात्वा व्यपोहय ॥ एवमुक्त्वा नरश्रेष्ठ विष्णुश्चांतरधीयत ॥ ३२ ॥ तदाप्रभृति तत्तीर्थं गंगावाहकमुत्तमम् ॥ ब्रह्माद्यैर्ऋषिभिस्तात पारंपर्यक्रमागतैः ॥ ३३ ॥ तत्र तीर्थे तु यः स्नात्वा भक्तिभावेन भारत ॥ गंगातीर्थे तु स स्नातः समस्तेषु न संशयः ॥ ३४ ॥ तत्र तीर्थे मृतानां तु नराणां भावितात्मनाम् ॥ अनिवर्त्तिका गतिस्तेषां विष्णुलोकात्कदाचन ॥ ३५ ॥ इति श्रीस्कांदे महापुराण एकाशीतिसाहस्र्यां संहितायां पंचम आवन्त्यखण्डे रेवाखण्डे गंगावहकतीर्थमाहात्म्यवर्णनंनामाष्टसप्तत्युत्तरशततमोऽध्यायः ॥ १७८ ॥ छ ॥

॥ ॥ मार्कंडेय उवाच ॥ ॥ ततो गच्छेत्तु राजेंद्र गौतमेश्वरमुत्तमम् ॥ सर्वपापहरं तीर्थं त्रिषु लोकेषु विश्रुतम् ॥ १ ॥ गौतमेन तपस्तप्तं तत्र तीर्थे युधिष्ठिर ॥ दिव्यं वर्षसहस्रं तु ततस्तुष्टो महेश्वरः ॥ २ ॥ प्रणम्य शिरसा तत्र स्थापितः परमेश्वरः ॥ स्थापितो गौतमेनेशो गौतमेश्वर उच्यते ॥ ३ ॥ तत्र देवैश्च गंधर्वैर्ऋषिभिः पितृदैवतैः ॥ संप्राप्ता ह्युत्तमा सिद्धिराराध्य परमेश्वरम् ॥४॥ तत्र तीर्थे तु यः स्नात्वा पूजयेत्पितृदेवताः ॥ पूजयेत्परमीशानं सर्वपापैः प्रमुच्यते ॥५॥ बहवस्तन्न जानंति विष्णुमायाविमोहिताः ॥ तत्र सन्निहितं देवं शूलपाणिं महेश्वरम् ॥ ६ ॥ ब्रह्मचारी तु यो भूत्वा तत्र तीर्थे नरेश्वर ॥ स्नात्वाऽर्चयेन्महादेवं सोऽश्वमेधफलं लभेत् ॥ ७ ॥ ब्रह्मचारी तु यो भूत्वा तर्पयेत्पितृदेवताः ॥ पूजयेत्परमीशानं सर्वपापैः प्रमुच्यते ॥८॥

१ मूर्तिना—स्वरूपेण—इत्यर्थः । मूर्तिशब्दोऽत्र पुंल्लिंगो दृश्यते लिंगमशिष्यं लिङ्गस्य लोकाश्रयत्वात् इत्युक्तेन पुंल्लिंगतापि । २ गंगावाहकतीर्थमाहात्म्यवर्णनंनाम—इ० पा० ।

तत्र तीर्थे तु यो दानं भक्त्या दद्याद्विजायते ॥ तदक्षयफलं सर्वं नाऽत्र कार्या विचारणा ॥ ९ ॥ मासे चाऽश्वयुजे राजन्कृष्णपक्षे चतुर्दशीम् ॥ स्ना
त्वा तत्र विधानेन दीपकानां शतं ददेत् ॥ १० ॥ पूजयित्वा महादेवं गंधपुष्पादिभिर्नरः ॥ मुच्यते सर्वपापेभ्यो मृतः शिवपुरं व्रजेत् ॥ ११ ॥
अष्टम्यां च चतुर्दश्यां कार्त्तिक्यां तु विशेषतः ॥ उपोष्य प्रयतो भूत्वा घृतेन स्नापयेच्छिवम् ॥ १२ ॥ पंचगव्येन मधुना दध्ना वा शीतवारिणा ॥
स च सर्वस्य यज्ञस्य फलं प्राप्नोति मानवः ॥ १३ ॥ भक्त्या तु पूजयेत्पश्चात्स लभेत्फलमुत्तमम् ॥ बिल्वपत्रैरखंडैश्च पुष्पैरुन्मत्तकोद्भवैः ॥
॥ १४ ॥ कुशापामार्गसहितैः कदंबद्रोणजैरपि ॥ मल्लिकाकरवीरैश्च रक्तपीतैः सितासितैः ॥ १५ ॥ पुष्पैरन्यैर्यथालाभं यो नरः पूजयेच्छिवम् ॥
नैरंतर्येण षण्मासं योऽर्चयेद्गौतमेश्वरम् ॥ सर्वान्कामानवाप्नोति मृतः शिवपुरं व्रजेत् ॥ १६ ॥ इति श्रीस्कान्दे महापुराण एकाशीतिसाहस्र्यां
संहितायां पंचम आवन्त्यखण्डे रेवाखण्डे गौतमेश्वरतीर्थमाहात्म्यवर्णनंनामैकोनाशीत्यधिकशततमोऽध्यायः ॥ १७९ ॥ ॥ छ ॥
॥ ॥ श्रीमार्कंडेय उवाच ॥ ॥ ततो गच्छेन्महीपाल दशाश्वमेधिकं परम् ॥ तीर्थं सर्वगुणोपेतं महापातकनाशनम् ॥ १ ॥ यत्र गत्वा महा
राज स्नात्वा संपूज्य चेश्वरम् ॥ दशानामश्वमेधानां फलं प्राप्नोति मानवः ॥ २ ॥ ॥ युधिष्ठिर उवाच ॥ ॥ अश्वमेधो महायज्ञो बहुसंभारद
क्षिणः ॥ अशक्यः प्राकृतैः कर्त्तुं कथं तेषां फलं लभेत् ॥ ३ ॥ अत्याश्चर्यमिदं तत्त्वं त्वयोक्तं वदता सता ॥ यथा मे जायते श्रद्धा दीर्घायुस्त्वं तथा
वद ॥ ४ ॥ ॥ मार्कंडेय उवाच ॥ ॥ इदमाश्चर्यभूतं हि गौर्या पृष्टस्त्रियंबकः ॥ तत्तेऽहं संप्रवक्ष्यामि पृच्छते निपुणाय वै ॥
॥ ५ ॥ पुरा वृषस्थो देवेश ह्युमया सह शंकरः ॥ कदाचित्पर्यटन्पृथ्वीं नर्मदातटमाश्रितः ॥ ६ ॥ दशाश्वमेधिकं तीर्थं दृष्ट्वा
देवो महेश्वरः ॥ तीर्थं प्रत्यंजलिं बद्ध्वा नमश्चक्रे त्रिलोचनः ॥ ७ ॥ कृतांजलिपुटं देवं दृष्ट्वा देवीदमब्रवीत् ॥ ८ ॥
॥ ॥ देव्युवाच ॥ ॥ किमेतद्देवदेवेश चराचरनमस्कृत ॥ प्रह्वनम्रांजलिं बद्ध्वा भक्त्या परमया युतः ॥ ९ ॥ एतदाश्चर्य
मतुलं सर्वं कथय मे प्रभो ॥ १० ॥ ॥ ईश्वर उवाच ॥ ॥ प्रत्यक्षं पश्य तीर्थस्य फलं मा विस्मिता भव ॥ वियत्स्था मे भुविस्थस्य क्षणं
॥१३०॥ देवि स्थिरा भव ॥ ११ ॥ एवमुक्त्वा तु देवेशो गौरवर्णो द्विजोऽभवत् ॥ क्षुत्क्षामकण्ठो जटिलः शुष्को धमनिसंततः ॥ १२ ॥ उपविश्य भुवः ॥३०४॥
पृष्ठे सुस्वरं मंत्रमुच्चरन् ॥ क्रमप्रियो महादेवो माधुर्येण प्रमोदयन् ॥ १३ ॥ श्रुत्वा तां मधुरां वाणीं स्वयं देवेन निर्मिताम् ॥ संभ्रांता ब्राह्मणाः सर्वे
स्नातुं ये तत्र चाऽऽगताः ॥ १४ ॥ नित्यक्रिया च सर्वेषां विस्मृता श्रुतिविभ्रमात् ॥ तं दृष्ट्वा पठमानं तु क्षुत्पिपासाऽभिपीडितम् ॥ १५ ॥

द्विजोऽन्यमंत्रयत्कश्चिद्भक्त्या तं भोजनाय वै ॥ प्रसादः क्रियतां ब्रह्मन्भोजनाय गृहे मम ॥ १६ ॥ अद्य मे सफलं जन्म ह्यद्य मे सफलाः क्रियाः ॥ सर्वान्कामान्प्रदास्यंति प्रीता मेऽद्य पितामहाः ॥ १७ ॥ त्वयि भुक्ते द्विजश्रेष्ठ प्रसीद त्वं ध्रुवं मम ॥ एवमुक्तो महादेवो द्विजरूपधर स्तदा ॥ १८ ॥ प्रहस्य प्रत्युवाचेदं ब्राह्मणं श्लक्ष्णया गिरा ॥ मया वर्षसहस्रं तु निराहारं तपः कृतम् ॥ १९ ॥ इदानीं तु गृहे तस्य करिष्ये द्विज सत्तम ॥ दशभिर्वाजिमेधैश्च येनेष्टं पारणं तथा ॥ २० ॥ इत्युक्तो देवदेवेन ब्राह्मणो विस्मयान्वितः ॥ उत्तमांगं विधुन्वन्वै जगाम स्वगृहं प्रति ॥ ॥ २१ ॥ एवं ते बहवो विप्राः प्रत्याख्याते निमंत्रणे ॥ पुराणार्थमजानंतो नास्तिका बहवो गताः ॥ २२ ॥ अथ कश्चिद्द्विजो विद्वान्पुराणार्थस्य तत्त्ववित् ॥ देवं निमंत्रयामास द्विजरूपधरं शिवम् ॥ २३ ॥ तथैव सोऽपि देवेन प्रोक्तः स प्राह तं पुनः ॥ मनसा चिंतयित्वा तु पुराणोक्तं द्विजो त्तमः ॥ २४ ॥ स्मृतिवेदपुराणेषु यदुक्तं तत्तथा भवेत् ॥ इति निश्चित्य तं विप्रमुवाच प्रहसन्निव ॥ २५ ॥ भोभो विप्र प्रतीक्षस्व यावदागमनं पुनः ॥ इत्युक्त्वा तु द्विजो गत्वा दशाश्वमेधिकं परम् ॥ २६ ॥ स्नानं महालंभनादि कृतं तेन द्विजन्मना ॥ जपं श्राद्धं तथादानं कृत्वाधर्मानुसा रतः ॥ २७ ॥ संकल्प्य कपिलां तत्र पुराणोक्तविधानतः ॥ समायात्त्वरितं तत्र यत्राऽसौ तिष्ठते द्विजः ॥ २८ ॥ अथाऽऽगत्य द्विजं प्राह वाजि मेधः कृतो मया ॥ उत्तिष्ठ मे गृहं रम्यं भोजनार्थं हि गम्यताम् ॥ २९ ॥ इत्युक्तः शंकरस्तेन ब्राह्मणेनाऽतिविस्मितः ॥ उवाच ब्राह्मणं देव इदानीं त्वमितो गतः ॥ ३० ॥ द्विजवर्य कथं चेष्टा दश यज्ञा महाधनाः ॥ ३१ ॥ ॥ द्विज उवाच ॥ ॥ न विचारस्त्वया कार्यः कृता यज्ञा न संशयः ॥ यदि वेदाः प्रमाणं ते भुवि देवा द्विजास्तथा ॥ ३२ ॥ दशाश्वमेधिकं तीर्थं तथा सत्यं द्विजोत्तम ॥ यदि वेदपुराणोक्तं वाक्यं निःसंशयं भवेत् ॥ ३३ ॥ तदा प्राप्तं मया सर्वं नाऽत्र कार्या विचारणा ॥ एवमुक्तस्तु देवेश आस्तिक्यं तस्य चेतसः ॥ ३४ ॥ विमृश्य बहुभिः किंचिदुत्तरं न प्रपद्यत ॥ जगाम तद्गृहं रम्यं पठन्ब्रह्म सनातनम् ॥ ३५ ॥ संप्राप्तं तं द्विजं भक्त्या पाद्यार्घ्येण तमर्चयत् ॥ षड्रसं भोजनं तेन दत्तं पश्चाद्यथा विधि ॥ ३६ ॥ ततो भुक्ते महादेवे सर्वदेवमये शिवे ॥ पुष्पवृष्टिः पपाताऽऽशु गगनात्तस्य मूर्द्धनि ॥ तस्यास्तिक्यं तु संलक्ष्य तुष्टः प्रोवाच शंकरः ॥ ३७ ॥ ॥ ईश्वर उवाच ॥ ॥ किं तेऽद्य क्रियतां ब्रूहि वरदोऽहं द्विजोत्तम ॥ अदेयमपि दास्यामि एकचित्तस्य ते ध्रुवम् ॥ ३८ ॥ ॥ ॥ ब्राह्मण उवाच ॥ ॥ यदि प्रीतोऽसि मे देव यदि देयो वरो मम ॥ अस्मिंस्तीर्थे महादेव स्थातव्यं सर्वदैव हि ॥ ३९ ॥ उपकाराय देवेश

१ प्रपद्यत—अडभाव आर्षः । उत्तरं न प्रापद्यत—उत्तरं वक्तुं न शशाक—इत्यर्थः ।

एष मे वर उत्तमः ॥ एवमुक्तस्तु देवेन आरुरोह द्विजोत्तमः ॥ ४० ॥ गंधर्वाप्सरःसंबाधं विमानं सार्वकामिकम् ॥ पूज्यमानो गतस्तत्र यत्र लोका निरामयाः ॥ ४१ ॥ ॥ मार्कंडेय उवाच ॥ ॥ एतदाश्चर्यमतुलं दृष्ट्वा देवी सुविस्मिता ॥ विस्मयोत्फुल्लनयना पुनः पप्रच्छ शंकरम् ॥ ४२ ॥ ॥ ॥ पार्वत्युवाच ॥ ॥ कथमेतद्भवेत्सत्यं यत्रेदमसमंजसम् ॥ स्नानं कुर्वंति बहवो लोका ह्यत्र महेश्वर ॥ ४३ ॥ तेषां तु स्वर्गगमनं यथैष स्वर्गतिं गतः ॥ कथमेतत्समाचक्ष्व विस्मयः परमो मम ॥ ४४ ॥ एतच्छ्रुत्वा तु देवेशः प्रहसन्प्रत्युवाच ताम् ॥ वेदवाक्ये पुराणार्थे स्मृत्यर्थे द्विजभाषिते ॥ ४५ ॥ विस्मयो हि न कर्त्तव्यो ह्यनुमानं हि तत्तथा ॥ असंभाव्यं हि लोकानां पुराणे यत्प्रगीयते ॥ ४६ ॥ यदि पक्षं पुरस्कृत्य लोकाः कुर्वंति पार्वति ॥ तस्मान्न सिद्धिरेतेषां भवत्येको न विस्मयः ॥ ४७ ॥ नास्तिका भिन्नमर्यादा ये निश्चयबहिष्कृताः ॥ तेषां सिद्धिर्न विद्येत आस्तिक्याद्भवते ध्रुवम् ॥ ४८ ॥ श्रुत्वाख्यानमिदं देवी ववंदे तीर्थमुत्तमम् ॥ सर्वपापहरं पुण्यं नर्मदायां व्यवस्थितम् ॥ ४९ ॥ ॥ मार्कंडेय उवाच ॥ ॥ दशाश्वमेधं राजेंद्र सर्वतीर्थोत्तमोत्तमम् ॥ तीर्थं सर्वगुणोपेतं महापातकनाशनम् ॥ ५० ॥ तत्रागता महाभागा स्नातुकामा सरस्वती ॥ पुण्यानां परमा पुण्या नदीनामुत्तमा नदी ॥ ५१ ॥ नाममात्रेण यस्यास्तु सर्वपापैः प्रमुच्यते ॥ स्नातास्तत्र दिवं यांति ये मृतास्तेऽपुनर्भवाः ॥ ५२ ॥ दशाश्वमेधे सा राजन्नियता ब्रह्मचारिणी ॥ आराधयित्वा देवेशं परं निर्वाणमागतीः ॥ ५३ ॥ कालुष्यं ब्रह्मसंभूता संवत्सरसमुद्भवम् ॥ प्रक्षालयितुमायाति दशम्यामाश्विनस्य च ॥ ५४ ॥ उपोष्य रजनीं तां तु संपूज्य त्रिपुरांतकम् ॥ राजन्निष्कल्मषा यांति श्वोभूते शाश्वतं पदम् ॥ ५५ ॥ ॥ युधिष्ठिर उवाच ॥ ॥ सरस्वती महापुण्या नदीनामुत्तमा नदी ॥ दशाश्वमेधमायाति स्नातुं संवत्सरे सदा ॥ किमधिक्यं भवेत्तीर्थं दशम्यां तत्र शंस मे ॥ ५६ ॥ ॥ श्रीमार्कंडेय उवाच ॥ ॥ राजन्नाश्वयुजे मासि दशम्यां तद्विशिष्यते ॥ पार्थिवेषु च तीर्थे तु सर्वेष्वेव न संशयः ॥ ५७ ॥ दशाश्वमेधिके राजन्नित्यं हि दशमी शुभा ॥ विशेषादाश्विने शुक्ला महापातकनाशिनी ॥ ५८ ॥ तस्यां स्नात्वाऽर्चयेद्देवानुपवासपरायणः ॥ श्राद्धं कृत्वा विधानेन पश्चात्संपूजयेच्छिवम् ॥ ५९ ॥ तत्रस्थां पूजयेद्देवीं स्नातुकामां सरस्वतीम् ॥ नमो नमस्ते देवेशि ब्रह्मदेहसमुद्भवे ॥ ६० ॥ कुरु पापक्षयं देवि संसारान्मां समुद्धर ॥ गन्धधूपैश्च संपूज्य ह्यर्चयित्वा पुनःपुनः ॥ ६१ ॥ दश प्रदक्षिणा दत्त्वा सूत्रेण परिवेष्टयेत् ॥ कपिलां तु ततो विप्रे दद्याद्विगतमत्सरः ॥ ६२ ॥ सर्वलक्षणसंपन्नां सर्वोपस्करसंयुताम् ॥ दत्त्वा विप्राय कपिलां न शोचति कृता

१ पक्षम्—विकल्पम्—इत्यर्थः । कृत्यम्—इ०पा० ।

कृते ॥ ६३ ॥पश्चाज्जागरणं कुर्याद्घृत नाज्वाल्य दीपकम् ॥ पुराणपठनेनैव नृत्यगीतविवादनैः ॥६४॥ वेदोक्तैश्चैव जाप्यैश्च पूजयेच्छशिशेखरम् ॥
प्रभाते विमले पश्चात्स्नात्वा वै नर्मदाजले ॥६५॥ ब्राह्मणान्भोजयेद्भक्त्या शिवभक्तांश्च योगिनः ॥ एवं कृते ततो राजन्सम्यक्तीर्थफलं लभेत् ॥
॥ ६६ ॥ तत्र तीर्थे तु यः स्नात्वा पूजयेच्छंकरं नरः ॥ दशाश्वमेधावभृथं लभते पुण्यमुत्तमम् ॥६७॥ पूतात्मा तेन पुण्येन रुद्रलोकं स गच्छति ॥
आरूढः परमं यानं कामगं च सुशोभनम् ॥ ६८ ॥ तत्र दिव्याऽप्सरोभिस्तु वीज्यमानोऽथ चामरैः ॥ क्रीडते सुचिरं कालं जयशब्दादिमंगलैः ॥
॥ ६९ ॥ ततोऽवतीर्णः कालेन इह राजा भवेद्ध्रुवम् ॥ हस्त्यश्वरथसंपन्नो महाभोगी परंतपः ॥ ७० ॥ दशाश्वमेधे यद्दानं दीयते शिवयोगिनाम् ॥
दशाश्वमेधसदृशं भवेत्तन्नाऽत्र संशयः ॥ ७१ ॥ सर्वेषामेव यज्ञानामश्वमेधो विशिष्यते ॥ दुर्लभः स्वल्पवित्तानां भूरिशः पापकर्मणाम् ॥ ७२ ॥
तत्र तीर्थे तु राजेंद्र दुर्लभोऽपि सुरासुरैः ॥ प्राप्यते स्नानदानेन इत्येवं शंकरोऽब्रवीत् ॥ ७३ ॥ अकामो वा सकामो वा मृतस्तत्र नरेश्वर ॥ देवत्वं
प्राप्नुयात्सोऽपि नाऽत्र कार्या विचारणा ॥ ७४ ॥ अग्निप्रवेशं यः कुर्यात्तत्र तीर्थे नरोत्तम ॥ अग्निलोके वसेत्तावद्यावदाभूतसंप्लवम् ॥ ७५ ॥ जल
प्रवेशं यः कुर्यात्तत्र तीर्थे नराधिप ॥ ध्यायमानो महादेवं वारुणं लोकमाप्नुयात् ॥ ७६ ॥ दशाश्वमेधे यः कश्चिच्छूरवृत्त्या तनुं त्यजेत् ॥ अक्षया
तु गतिस्तस्य इत्येवं श्रुतिनोदना ॥ ७७ ॥ न तां गतिं यांति भृगुप्रपातिनो न दंडिनो नैव च सांख्ययोगिनः ॥ ध्वजाकुले दुंदुभिशंखनादिते
क्षणेन यां यांति महाहवे मृताः ॥ ७८ ॥ यत्र तत्र हतः शूरः शत्रुभिः परिवेष्टितः ॥ अक्षयाल्लँभते लोकान्यदि क्लीबं न भाषते ॥ ७९ ॥ दशाश्व
मेधे संन्यासं यः करोति विधानतः ॥ अनिवर्तिका गतिस्तस्य रुद्रलोकात्कदाचन ॥ ८० ॥ दशाश्वमेधे यत्पुण्यं संक्षेपेण युधिष्ठिर ॥ कथितं
परया भक्त्या सर्वपापप्रणाशनम् ॥ ८१ ॥ इति श्रीस्कांदे महापुराण एकाशीतिसाहस्र्यां संहितायां पञ्चम आवंत्यखण्डे रेवाखण्डे दशाश्वमेध
तीर्थमाहात्म्यवर्णनंनामाशीत्युत्तरशततमोऽध्यायः ॥ १८० ॥ ॥ छ ॥ ॥ श्रीमार्कंडेय उवाच ॥ ॥ अतः परं प्रवक्ष्यामि भृगु
तीर्थस्य विस्तरम् ॥ यं श्रुत्वा ब्रह्महा गोघ्नो मुच्यते सर्वपातकैः ॥ १ ॥ तत्र तीर्थे तु विख्यातं वृषखातमिति श्रुतम् ॥ भृगुणा तत्र राजेंद्र तपस्तप्तं
पुरा किल ॥ २ ॥ ॥ युधिष्ठिर उवाच ॥ ॥ भृगुकच्छे स विप्रेंद्रो निवसन्केन हेतुना ॥ तपस्तप्त्वा सुविपुलं परां सिद्धिमुपागतः ॥ ३ ॥ को
वा वृष इति प्रोक्तस्तत्खातं येन खानितम् ॥ एतत्सर्वं यथान्यायं कथयस्व ममाऽनघ ॥ ४ ॥ ॥ श्रीमार्कंडेय उवाच ॥ ॥ एष प्रश्नो
महाराज यस्त्वया परिपृच्छितः ॥ तत्सर्वं कथयिष्यामि शृणुष्वैकमना नृप ॥ ५ ॥ षष्ठस्तु ब्रह्मणः पुत्रो मानसो भृगुसत्तमः ॥ तपश्च

चार विपुलं श्रीवृते क्षेत्र उत्तमे ॥ ६ ॥ दिव्यं वर्षसहस्रं तु संशुष्को मुनिसत्तमः ॥ निराहारो निरानन्दः काष्ठपाषाणवत्स्थितः ॥ ७ ॥
ततः कदाचिद्देवेशो विमानवरमास्थितः ॥ उमया सहितः श्रीमांस्तेन मार्गेण चागतः ॥ ८ ॥ दृष्ट्वा तत्र महाभागं भृगुं वल्मीकवत्स्थि
तम् ॥ उवाच देवी देवेशं किमिदं दृश्यते प्रभो ॥ ९ ॥ ॥ ईश्वर उवाच ॥ ॥ भृगुर्नाम महादेवि तपस्तप्त्वा सुदारुणम् ॥
दिव्यं वर्षसहस्रं तु मम ध्यानपरायणः ॥ १० ॥ जलबिंदु कुशाग्रेण मासेमासे पिबेच्च सः ॥ संवत्सरशतं साग्रं तिष्ठते च वरानने
॥ ११ ॥ तच्छ्रुत्वा वचनं गौरी क्रोधसंवर्त्तितेक्षणा ॥ उवाच देवी देवेशं शूलपाणिं महेश्वरम् ॥ १२ ॥ सत्यमुग्रोऽसि लोके त्वं ख्यापितो
वृषभध्वज ॥ निष्कारुण्यो दुराराध्यः सर्वभूतभयंकरः ॥ १३ ॥ दिव्यं वर्षसहस्रं तु ध्यायमानस्य शंकरम् ॥ ब्राह्मणस्य वरं कस्मान्न
प्रयच्छसि शंस मे ॥ १४ ॥ एवमुक्तोऽथ देवेशः प्रहस्य गिरिनंदिनीम् ॥ उवाच नरशार्दूल मेघगम्भीरया गिरा ॥ १५ ॥ स्त्री
विनश्यति गर्वेण तपः क्रोधेन नश्यति ॥ गावो दूरप्रचारेण शूद्रान्नेन द्विजोत्तमाः ॥ १६ ॥ क्रोधान्वितो द्विजो गौरि तेन सिद्धिर्न विद्यते ॥
वर्षायुतैस्तथा लक्षैर्न किंचित्कारणं प्रिये ॥ १७ ॥ एवंभूतस्य तस्याऽपि क्रोधस्य चरितं महत् ॥ एवमुक्त्वा ततः शम्भुर्वृषं दध्यौ च तत्क्षण ॥
॥ १८ ॥ वृषो हि भगवन्ब्राह्मा वृषरूपी महेश्वरः ॥ ध्यानप्राप्तः क्षणादेव गर्जयन्वै मुहुर्मुहुः ॥ १९ ॥ किं करोमि सुरश्रेष्ठ ध्यातः केनैव हेतुना ॥
करोमि कस्य निधनमकाले परमेश्वर ॥ २० ॥ ॥ ईश्वर उवाच ॥ ॥ कोपयस्व द्विजश्रेष्ठं गत्वा त्वं भृगुसत्तमम् ॥ येन मे श्रद्दधत्येषा गौरी
लोकैकसुन्दरी ॥ २१ ॥ एतच्छ्रुत्वा वृषो गत्वा धर्षणार्थं द्विजोत्तमम् ॥ नर्मदायास्तटे रम्ये समीपे चाऽऽश्रमे भृगुः ॥ २२ ॥ ततः शृंगैर्गृहीत्वा
तु प्रक्षिप्तो नर्मदाजले ॥ ततः क्रुद्धो भृगुस्तत्र दण्डहस्तो महामुनिः ॥ २३ ॥ पशुवत्ते वधिष्यामि दण्डघातेन मस्तके ॥ शिखायज्ञोपवीते च परि
धानं वरासने ॥ २४ ॥ सुसंवृतं कृतं तेन धावन्वै पृष्टतो ब्रवीत् ॥ २५ ॥ ॥ भृगुरुवाच ॥ ॥ पापकर्मन्दुराचार कथं यास्यसि मे वृष ॥ अव
मानं समुत्पाद्य कृत्वा गर्त्तं खुरैस्तथा ॥ २६ ॥ गर्जयित्वा महानादं ततो विप्रमपातयत् ॥ आत्मानं पातितं ज्ञात्वा वृषेण परमेष्ठिना ॥ २७ ॥
भृगुः क्रोधेन जज्वाल हुताहुतिरिवानलः ॥ करे गृह्य महादण्डं ब्रह्मदण्डमिवाऽपरम् ॥ २८ ॥ हन्तुकामो वृषं विप्रोभ्यधावत युधिष्ठिर ॥ धावमानं
ततो दृष्ट्वा स वृषः पूर्वसागरे ॥२९॥ जम्बुद्वीपं कुशं क्रौंचं शाल्मलिं शाकमेव च ॥ गोमेदं पुष्करं प्राप्तः पूर्वतो दक्षिणापथम् ॥ ३० ॥ उत्तरं पश्चिमं
चैव द्वीपाद्वीपं नरेश्वर ॥ पातालं सुतलं पश्चाद्वितलं च तलातलम् ॥३१॥ तामिस्रमंधतामिस्रं पातालं सप्तमं ययौ ॥ ततो जगाम भूर्लोकं प्राणार्थी

स वृषोत्तमः ॥ ३२ ॥ भुवः स्वश्चैव च महस्तपः सत्यं जनस्तथा ॥ अनुगम्यमानो विप्रेण न शर्म लभते क्वचित् ॥ ३३ ॥ पापं कृत्वैव पुरुषः
कामक्रोधबलार्दितः ॥ ततो जगाम शरणं ब्रह्माणं विष्णुमेव च ॥ ३४ ॥ इन्द्रं चन्द्रं तथाऽऽदित्यैर्याम्यवारुणमारुतैः ॥ यदा सर्वैः परित्यक्तो
लोकालोकैः सुरेश्वरैः ॥ ३५ ॥ तदा देवं नमस्कृत्वा रक्ष रक्षस्व चाऽब्रवीत् ॥ वध्यमानं महादेवो भृगुणा परमेष्ठिना ॥ ३६ ॥ सर्वलोकैः
परित्यक्तमनाथमिव तं प्रभो ॥ दृष्ट्वा श्रांतं वृषं देवः पतितं चरणाऽग्रतः ॥ ३७ ॥ ततः प्रोवाच भगवान्स्मितपूर्वमिदं वचः ॥ ३८ ॥ ॥ ईश्वर
उवाच ॥ ॥ पश्य देवि महाभागे शमं विप्रस्य सुन्दरि ॥ ३९ ॥ ॥ पार्वत्युवाच ॥ ॥ यावद्विप्रो न चास्माकं कुप्यते परमेश्वर ॥ ताव
द्वरं प्रयच्छाऽऽशु यदि चेच्छसि मत्प्रियम् ॥ ४० ॥ ततो भस्मी जटी शूली चंद्रार्धकृतशेखरः ॥ उमार्द्धदेहो भगवान्भूत्वा विप्रमुवाच ह ॥ ४१ ॥
भोभो द्विजवरश्रेष्ठ क्रोधस्ते न शमं गतः ॥ यस्मात्तस्मादिदं तात क्रोधस्थानं भविष्यति ॥ ४२ ॥ ततो दृष्ट्वा च तं शंभुं भृगुः श्रेष्ठं त्रिलोच
नम् ॥ जानुभ्यामवनिं गत्वा इदं स्तोत्रमुदैरयत् ॥ ४३ ॥ ॥ भृगुरुवाच ॥ ॥ प्रणिपत्य भूतनाथं भवोद्भवं भूतिदं भयातीतम् ॥ भवभीतो भुव
नपते विज्ञप्तुं किंचिदिच्छामि ॥ ४४ ॥ त्वद्गुणनिकरान्वक्तुं का शक्तिर्मानुषस्यास्य ॥ वासुकिरपि न तावद्वक्तुं वदनसहस्रं भवेद्यस्य ॥ ४५ ॥
भक्त्या तथाऽपि शंकर शशिधर करजालधवलिताशेष ॥ स्तुतिमुखरस्य महेश्वर प्रसीद तव चरणनिरतस्य ॥ ४६ ॥ सत्त्वं रजस्तमस्त्वं स्थित्यु
त्पत्तिविनाशनं देव ॥ भवभीतो भुवनपते भुवनेश शरणनिरतस्य ॥४७॥ यमनियमयज्ञदानं वेदाभ्यासश्च धारणायोगः ॥ त्वद्भक्तेः सर्वमिदं नार्हति
वै कलासहस्रांशम् ॥ ४८ ॥ उत्कृष्टरससरसायनखड्गांजनविवरपादुकासिद्धिः ॥ चिह्नं हि तव नतानां दृश्यत इह जन्मनि प्रकटम् ॥ ४९ ॥ शाठ्ये
न यदि प्रणमति वितरसि तस्याऽपि भूतिमिच्छया देव ॥ भवति भवच्छेदकरी भक्तिर्मोक्षाय निर्मिता नाथ ॥ ५० ॥ परदारपरस्वरतं परपरिभ
वदुःखशोकसंतप्तम् ॥ परवदनवीक्षणपरं परमेश्वर मां परित्राहि ॥ ५१ ॥ अधिकाभिमानमुदितं क्षणभंगुरविभवविलसंतम् ॥ क्रूरं
कुपथाभिमुखं शंकर शरणागतं परित्राहि ॥ ५२ ॥ दीनं द्विजं वरार्थे बंधुजने नैव पूरिता ह्याशा ॥ छिंधि महेश्वर तृष्णां किं मूढं मां विडंबयसि ॥
॥ ५३ ॥ तृष्णां हरस्व शीघ्रं लक्ष्मीं दद हृदयवासिनीं नित्यम् ॥ छिंधि मदमोहपाशं मामुत्तारय भवाब्धे देवेश ॥ ५४ ॥ करुणाभ्युदयंनाम स्तोत्र
मिदं सर्वसिद्धिदं दिव्यम् ॥ यः पठति भृगुं स्मरति च शिवलोकमसौ प्रयाति देहांते ॥ ५५ ॥ एतच्छ्रुत्वा महादेवः स्तोत्रं च भृगुभाषितम् ॥ उवाच
वरदोऽस्मीति देव्या सह वरोत्तमम ॥ ५६ ॥ ॥ भृगुरुवाच ॥ ॥ प्रसन्नो देवदेवेश यदि देयो वरो मम ॥ सिद्धिक्षेत्रमिदं सर्वं भविता मम नामतः

॥ ५७ ॥ भवद्भिः सन्निधानेन स्थातव्यं हि सहोमया ॥ देवक्षेत्रमिदं पुण्यं येन सर्वं भविष्यति ॥५८॥ अत्र स्थाने महास्थानं करोमि जगदीश्वर ॥
तव प्रसादादेदेश पूर्यंतां मे मनोरथाः ॥ ५९ ॥ ॥ ईश्वर उवाच ॥ ॥ श्रिया कृतमिदं पूर्वं किं न ज्ञातं त्वया द्विज ॥ अनुमान्य श्रियं देवीं
यदीयं मन्यते भवान् ॥ ६० ॥ कुरुष्व यदभिप्रेतं त्वत्कृतं न:तदन्यथा ॥ एवमुक्त्वा गते देवे स्नात्वा गत्वा भृगुः श्रियम् ॥ ६१ ॥ कृत्वा च पारणं
तत्र वसन्विप्रस्तया सह ॥ श्रिया च सहितः काल इदं वचनमब्रवीत् ॥ ६२ ॥ ॥ भृगुरुवाच ॥ ॥ यदि ते रोचते भद्रे दुःखासीनं च ते
यदि ॥ त्वया वृते महाक्षेत्रे स्वीयं स्थानं करोम्यहम् ॥ ६३ ॥ ॥ श्रीरुवाच ॥ ॥ मम नाम्ना तु विप्रर्षे तव नाम्ना तु शोभनम् ॥ स्थानं कुरुष्वा
भिप्रेतमविरोधेन मे मतिः ॥ ६४ ॥ ॥ भृगुरुवाच ॥ ॥ कच्छपाधिष्ठितं ह्येतत्तस्य पृष्ठिगतं रमे ॥ संमंत्र्य सहितं तेन शोभनं भवती कुरु
॥ ६५ ॥ इति श्रीस्कांदे महापुराण एकाशीतिसाहस्र्यां संहितायां पञ्चम आवंत्यखंडे रेवाखण्डे भृगुकच्छोत्पत्तिवर्णनंनामैकाशीत्युत्तरशततमो
ऽध्यायः ॥ १८१ ॥ ॥ छ ॥ ॥ श्रीमार्कंडेय उवाच ॥ ॥ ततो भृगुः श्रिया चैव समेतः कच्छपं गतः ॥ अभिनंद्य यथान्यायमुवाच
वचनं शुभम् ॥ १ ॥ त्वया धृता धरा सर्वा तथा लोकाश्चराऽचराः ॥ तथैव पुण्यभावत्वात्स्थितस्तत्र महामते ॥ २ ॥ चातुर्विद्यस्य संस्थानं करोमि
रमया सह ॥ यदि त्वं मन्यसे देव तदादेशय मां विभो ॥ ३ ॥ ॥ कूर्म उवाच ॥ ॥ एवमेव द्विजश्रेष्ठ मम नामांकितं पुरम् ॥ भविष्यति
महत्कालं ममोपारि सुसंस्थितम् ॥ ४ ॥ अचलं सुस्थिरं तात न भीः कार्या सुलोचने ॥ एतच्छ्रुत्वा शुभं वाक्यं कच्छपस्य मुखाच्युतम् ॥ ५ ॥
हृष्टस्तुष्टः श्रिया सार्द्धं पद्मयोनिसुतो भृगुः ॥ अभीचि उदये प्राप्ते कृतकौतुकमंगलः ॥ ६ ॥ नंदने वत्सरे माघे पंचम्यां भरतर्षभ ॥ शस्ते तु ह्युत्त
रायोगे कुंभस्थे शशिमंडले ॥ ७ ॥ रेवाया उत्तरे तीरे गभीरे चाभिवारुणि ॥ प्रागुदक्प्रवणे देशे कोटितीर्थसमन्वितम् ॥ ८ ॥ क्रोशप्रमाणं तत्क्षेत्रं
प्रासादशतसंकुलम् ॥ अचिरेणैव कालेन तपोबलसमन्वितः ॥ विचिंत्य विश्वकर्माणं चकार भृगुसत्तमः ॥ ९ ॥ ब्राह्मणा वेदविद्वांसः क्षत्रिया राज्य
पालकाः ॥ वैश्या वृत्तिरतास्तत्र शूद्राः शुश्रूषकास्त्रिषु ॥ १० ॥ एवं श्रिया वृतं क्षेत्रं परमानंदनंदितम् ॥ निर्म्मितं भृगुणा तात सर्वपातकनाशनम् ॥
॥ ११ ॥ इति भृगुकच्छोत्पत्तिः ॥ ॥ मार्कंडेय उवाच ॥ ॥ ततःकालेन महता कस्मिंश्चित्कारणांतरे ॥ देवलोकं जगामाशु लक्ष्मीर्ऋषिसमा
गमे ॥ १२ ॥ समर्प्य कुंचिकाट्टालं भृगवे ब्रह्मवादिने ॥ पालयस्व यथार्थं वै स्थानकं मम सुव्रत ॥१३॥ देवकार्याण्यशेषाणि कृत्वा श्रीः पुनरा

१ सर्वपुस्तकेष्वयमेव पाठः । एतस्यार्थो नावगम्यते । २ शुक्लपक्षतः—इ० पा० । ३ त्रिषु—ब्राह्मणक्षत्रियवैश्येषु । अत्रसन्—इत्यध्याहारे वाक्यपरिसमाप्तिः ।

गता ॥ आजगाम रमा देवी भृगुकच्छं त्वरान्विता ॥ १४ ॥ प्रार्थितं कुंचिकाट्टालं स्वगृहं सपरिग्रहम् ॥ भृगुर्यदा तदा पार्थ मिथ्या नास्ति तदा वदत् ॥ १५ ॥ एवं विवादः सुमहान्संजातश्च नरेश्वर ॥ ममेति मम चैवेति परस्परसमागमे ॥ १६ ॥ ततः कालेन महता भृगुणा परमर्षिणा ॥ चातुर्विद्यप्रमाणार्थं चकार महतीं स्थितिम्॥ १७ ॥ अस्मदीयं यथा सर्वं नगरं मृगलोचने ॥ चातुर्विद्या द्विजाः सर्वे तथा जानंति सुन्दरि ॥१८॥ ॥ ॥ श्रीरुवाच ॥ ॥ प्रमाणं मम विप्रेंद्र चातुर्वण्या न संशयः ॥ मदीयं वा त्वदीयं वा कथयंतु द्विजोत्तमाः ॥ १९ ॥ ततः समस्तैर्विबुधैः संप्रधार्य परस्परम् ॥ द्विधा तैर्वाक्स्थलं दृष्ट्वा ब्राह्मणा नृपसंहितम् ॥ २० ॥ अष्टादशसहस्राणि नोचुर्वै किंचिदुत्तरम ॥ अष्टादशसहस्रेषु भृगुकोपभयान्नृप ॥ उक्तं च तालकं हस्ते यस्य तस्येदमुत्तरम् ॥ २१ ॥ एतच्छ्रुत्वा तु सा देवी निगमं नैगमैः कृतम् ॥ क्रोधेन महताविष्टा शशाप द्विजपुंगवान् ॥ २२ ॥ ॥ श्रीदेव्युवाच ॥ ॥ यस्मात्सत्यं समुत्सृज्य लोभोपहतमानसैः ॥ मदीयं लोपितं स्थानं तस्माच्छ्रृण्वंतु मे गिरम् ॥ ॥ २३ ॥ त्रिपौरुषा भवेद्विद्या त्रिपुरुषं न भवेद्धनम् ॥ न द्वितीयस्तु वो वेदः पठितो भवति द्विजाः ॥ २४ ॥ गृहाणि न द्विभौमानि[1] न च भूतिः स्थिरा द्विजाः ॥ पक्षपातेन वो धर्मो न च निःश्रेयभावतः॥२५॥ इष्टो गोत्रजनः कश्चिल्लोभेनावृतमानसः ॥ न च द्वैधं परित्यज्य ह्येकं सत्यं भविष्यति ॥ २६ ॥ अद्यप्रभृति सर्वेषामहंकारो द्विजन्मनाम् ॥ न पिता पुत्रवाक्येन न पुत्रः पितृकर्मणि ॥ २७ ॥ अहंकारकृताः सर्वे भविष्यंति न संशयः ॥ इति शस्वा रमादेवी तदैव च दिवं ययौ ॥ २८ ॥ ततो गतायां वै लक्ष्म्यां देवा ब्रह्मर्षयोऽमलाः ॥ क्रोधलोभमिदं स्थानं तेऽपि चोक्त्वा दिवं ययुः ॥ २९ ॥ गतां दृष्ट्वा ततो देवीमृषींश्चैव तपोधनान् ॥ भृगुश्च परमेष्ठी स विषादमगमत्परम् ॥ प्रसादयामास पुनः शंकरं त्रिपुरांतकम् ॥ ३० ॥ तपसा महता पार्थ ततस्तुष्टो महेश्वरः ॥ उवाच वचनं काले हर्षयन्भृगुसत्तमम् ॥ ३१ ॥ किं विषण्णोऽसि विप्रेंद्र किं वा संतापकारणम् ॥ मयि प्रसन्नेऽपि तव ह्येतत्कथय मेऽनघ ॥ ३२ ॥ ॥ भृगुरुवाच ॥ ॥ शापयित्वा द्विजान्सर्वान्पुरा लक्ष्मीर्विनिर्गता ॥ अपवित्रमिदं चोक्त्वा ततो देवा विनिर्गताः॥ ३३ ॥ ॥ ईश्वर उवाच ॥ ॥ पुरा मया यथा प्रोक्तं तत्तथा न तदन्यथा ॥ क्रोधस्थानमसंदेहं तथाऽन्यदपि तच्छ्रृणु ॥ ३४ ॥ तत्र स्थानसमुद्भूता महद्भयविवर्जिताः ॥ ब्राह्मणा मत्प्रसादेन भविष्यंति न संशयः ॥ ३५ ॥ वेदविद्याव्रतस्नाताः सर्वशास्त्रविशारदाः ॥ येपि ते शतसाहस्रास्त्वरिता ह्यागतास्त्विह ॥ ३६ ॥ अपठस्यापि मूर्खस्य सर्वावस्थांगतस्य च ॥ उत्तरादुत्तरं शक्तो दातुं

१ द्विभौमानि उपरितनाट्टालक (माडी) सहितानि इत्यर्थः ।

नं तु भृगूत्तम ॥ ३७ ॥ कोटितीर्थमिदं स्थानं सर्वपापप्रणाशनम् ॥ अद्यप्रभृति विप्रेंद्र भविष्यति न संशयः ॥ ३८ ॥ मत्प्रसादाद्देवगणैः सेवित
च भविष्यति ॥ भृगुक्षेत्रे मृता ये तु कृमिकीटपतंगकाः ॥ ३९ ॥ वासस्तेषां शिवे लोके मत्प्रसादाद्भविष्यति ॥ वृषखाते नरः स्नात्वा पूजयित्वा
महेश्वरम् ॥ ४० ॥ सर्वमेधस्य यज्ञस्य फलं प्राप्नोत्यसंशयम् ॥ भृगुतीर्थे नरः स्नात्वा तर्पयेत्पितृदेवताः ॥ ४१ ॥ तस्य ते द्वादशाब्दानि शांतिं
गच्छन्ति तर्पिताः ॥ दधिक्षीरेण तोयेन घृतेन मधुना सह ॥ ४२ ॥ ये स्नपंति विरूपाक्षं तेषां वासस्त्रिविष्टपे ॥ मत्प्रसादाद्द्विजश्रेष्ठ सर्वदेवानुसेवि
तम् ॥ ४३ ॥ भविष्यति भृगुक्षेत्रं कुरुक्षेत्रादिभिः समम् ॥ मार्त्तंडग्रहणे प्राप्ते यवं कृत्वा हिरण्मयम् ॥ ४४ ॥ दत्त्वा शिरसि यः स्नाति भृगुक्षेत्रे द्विजो
त्तम ॥ अविचारेण तं विद्धि संस्नातं कुरुजांगले ॥४५॥ अहं चैव वसिष्यामि अंबिका च मम प्रिया ॥ सर्वदुःखापहा देवी नाम्ना सौभाग्यसुन्दरी ॥
॥ ४६ ॥ वसिष्यामि तया देव्या सहितो भृगुकच्छके ॥ एवमुक्त्वा स्थितो देवो भृगुकच्छेंबिका तथा ॥ ४७ ॥ भृगुस्तु स्वपुरं प्रायाद्ब्रह्मघोषनिना
दितम् ॥ ऋग्यजुःसामघोषेण ह्यथर्वणनिनादितम् ॥ ४८ ॥ तत्र तीर्थे तु यः स्नात्वा वृषमुत्सृजते नरः ॥ स याति शिवसायुज्यमित्येवं
शंकरोऽब्रवीत् ॥ ४९ ॥ तत्र तीर्थे तु यः स्नात्वा चैत्रे मासि समाचरेत् ॥ दद्याच्च लवणं विप्रे पूज्य सौभाग्यसुन्दरीम् ॥५०॥ गोभूहिरण्यं विप्रेभ्यः
प्रीयेतां ललिताशिवौ ॥ न दुःखं दुर्भगत्वं च वियोगं पतिना सह ॥ ५१ ॥ प्राप्नोति नारी राजेंद्र भृगुतीर्थाप्लवेन च ॥ यस्तु नित्यं भृगुं देवं
पश्येद्वै पांडुनंदन ॥ ५२ ॥ आब्रह्मसदनं यावत्तत्रस्थैर्दैवतैः सह ॥ यत्फलं समवाप्नोति तच्छृणुष्व नृपोत्तम ॥ ५३ ॥ सुवर्णशृंगीं कपिलां पय
स्विनीं साध्वीं सुशीलां तरुणीं सवत्साम् ॥ दत्त्वा द्विजे सर्वव्रतोपपन्ने फलं च यत्स्यात्तदिहैव नूनम् ॥ ५४ ॥ समाः सहस्राणि तु सप्त वै जले
म्रियेल्लभेद्द्वादशवह्निमध्ये ॥ त्यजंस्तनुं शूरवृत्त्या नरेंद्र शक्रातिथ्यं याति वै मर्त्यधर्मा ॥ ५५ ॥ आख्यानमेतच्च सदा यशस्यं स्वर्ग्यं धन्यं
पुत्र्यमायुष्यकारि ॥ शृण्वल्लँभेत्सर्वमेतद्धि भक्त्या पर्वणिपर्वण्याजमीढस्सदैव ॥ ५६ ॥ संन्यासं कुरुते यस्तु भृगुतीर्थे विधानतः ॥ स मृतः परमं
स्थानं गच्छेद्वै यच्च दुर्लभम् ॥ ५७ ॥ एतच्छ्रुत्वा भृगुश्रेष्ठो देवदेवेन भाषितम् ॥ प्रहृष्टवदनो भूत्वा तत्रैव संस्थितो द्विजः ॥ ५८ ॥ तिरोभावं
गते देवे भगुःश्रेष्ठो द्विजोत्तमः ॥ स्वमूर्तिं तत्र मुक्त्वा तु ब्रह्मलोकं जगाम ह ॥ ५९ ॥ भृगुकच्छस्य चोत्पत्तिः कथिता तव पांडव ॥ संक्षेपेण
महाराज सर्वपापप्रणाशनी ॥ ६० ॥ एतत्पुण्यं पापहरं क्षेत्रं देवेन कीर्तितम् ॥ चतुर्युगसहस्रेण पितामहदिनं स्मृतम् ॥ ६१ ॥ प्राप्ते ब्रह्मदिने

१ शक्नुयात्—इति शेषः । २ इति संकल्प्य—इति शेषः ।

विप्रा जायते युगसंभवः ॥ न पश्यामि त्विदं क्षेत्रमिति रुद्रः स्वयं जगौ ॥ ६२ ॥ यः शृणोति त्विदं भक्त्या नारी वा पुरुषोऽपि वा ॥ स याति परमं लोकमिति रुद्रः स्वयं जगौ ॥ ६३ ॥ देवखाते नरः स्नात्वा पिंडदानादिसत्क्रियाम् ॥ यां करोति नृपश्रेष्ठ तामक्षयफलां विदुः ॥ ६४ ॥ य इमं शृणुयाद्भक्त्या भृगुकच्छस्य विस्तरम् ॥ कोटितीर्थफलं तस्य भवेद्वै नाऽत्र संशयः ॥ ६५ ॥ इति श्रीस्कांदे महापुराण एकाशीतिसाहस्र्यां संहितायां पञ्चम आवंत्यखण्डे रेवाखण्डे भृगुकच्छतीर्थमाहात्म्यवर्णनंनाम द्व्यशीत्युत्तरशततमोऽध्यायः ॥ ॥ १८२ ॥ ॥ छ ॥ ॥ श्रीमार्कंडेय उवाच ॥ ॥ अतः परं महाराज गच्छेत्केदारसंज्ञकम् ॥ यत्र गत्वा महाराज श्राद्धं कृत्वा पिबेज्जलम् ॥ संपूज्य देवदेवेशं केदारोत्थं फलं लभेत् ॥ १ ॥ ॥ युधिष्ठिर उवाच ॥ ॥ यथमत्र सुरश्रेष्ठ केदाराख्यः स्थितः स्वयम् ॥ उत्तरे नर्मदाकूले एतद्विस्तरतो वद ॥ २ ॥ ॥ श्रीमार्कंडेय उवाच ॥ ॥ पुरा कृतयुगस्याऽऽदौ शंकरस्तु महेश्वरः ॥ भृगुणाराधितः शप्तः श्रिया च भृगुकच्छके ॥३॥ अपवित्रमिदं क्षेत्रं सर्ववेदविवार्जितम् ॥ भविष्यति नृपश्रेष्ठ गतेत्युक्त्वा हरिप्रिया ॥ ४ ॥ तपश्चचार विपुलं भृगुर्वर्षसहस्रकम् ॥ वायुभक्षो निराहारश्चिरं धमनिसंततः ॥ ५ ॥ ततः प्रत्यक्षतामागाल्लिंगीभूतो महेश्वरः ॥ प्रादुर्भूतस्तु सहसा भित्त्वा पातालसप्तकम् ॥ ६ ॥ ददर्शाऽथ भृगुर्देवमौत्पलीं केलिकामिव ॥ स्तुतिं चक्रे स देवाय स्थाणवे त्र्यंबकेति च ॥७॥ एवं स्तुतः स भगवान्प्रोवाच प्रहसन्निव ॥ पुनःपुनर्भृगुं मत्तः किन्तु प्रार्थयसे मुने ॥ ८ ॥ ॥ भृगुरुवाच ॥ ॥ पंचक्रोशमिदं क्षेत्रं पद्मया शापितं विभो ॥ अपवित्रमिदं क्षेत्रं सर्ववेदविवर्जितम् ॥ भविष्यतीति च प्रोच्य गता देवी दिवं प्रति ॥ ९ ॥ पुनः पवित्रतां याति यथेदं क्षेत्रमुत्तमम् ॥तथा कुरु महेशान प्रसन्नो यदि शंकर ॥ १० ॥ ॥ ईश्वर उवाच ॥ ॥ केदाराख्यमिदं ब्रह्मँल्लिंगमाद्यं भविष्यति ॥ कृत्वेदमादिलिंगानि भविष्यंति दशैव हि ॥ ११ ॥ एकादशमदृश्यं हि क्षेत्रमध्ये भविष्यति ॥ पावयिष्यति तत्क्षेत्रमेकादशः स्वयं विभुः ॥ १२ ॥ तथा वै द्वादशादित्या मत्प्रसादात्तु मूर्तितः ॥ वसिष्यंति भृगुक्षेत्रे रोगदुःखनिबर्हणाः ॥ १३ ॥ दुर्गा ह्यष्टादश तथा क्षेत्रपालास्तु षोडश ॥ भृगुक्षेत्रे भविष्यंति वीरभद्राश्च मातरः ॥ १४ ॥ पवित्रीकृतमेतद्धि नित्यं क्षेत्रं भविष्यति ॥ माघमासे ह्युषःकाले स्नात्वा मासं जितेंद्रियः ॥ १५ ॥ यः पूजयति केदारं स गच्छेच्छिवमंदिरम् ॥ तस्मिंस्तीर्थे नरः स्नात्वा पितृनुद्दिश्य भारत ॥ श्राद्धं ददाति विधिवत्तस्य प्रीताः पितामहाः ॥ १६ ॥ इति ते कथितं सम्यक्केदाराख्यं सविस्तरम् ॥ सर्वपापहरं पुण्यं सर्वदुःखप्रणाशनम् ॥ १७ ॥ इति श्रीस्कांदे महापुराण एकाशीतिसाहस्र्यां संहितायां पञ्चम आवन्त्यखंडे रेवाखण्डे केदारेश्वरतीर्थमाहात्म्यवर्णनंनाम त्र्यशीत्युत्तरशततमोऽध्यायः ॥ १८३ ॥ ॥ छ ॥ ॥ श्रीमार्कंडेय उवाच ॥ ॥ धौतपापं ततो गच्छेद्भृगुतीर्थ

 समीपतः ॥ वृषेण तु भृगुस्तत्र भूयोभूयो धुतस्ततः ॥ १ ॥ धौतपापं तु तत्तेन नाम्ना लोकेषु विश्रुतम् ॥ तत्र स्थितो महादेवस्तुष्ट्यर्थं भृगुसत्तमे ॥ 
॥ २ ॥ तत्र तीर्थे तु यः स्नात्वा शाठ्येनाऽपि नरेश्वर ॥ मुच्यते सर्वपापेभ्यो नाऽत्र कार्या विचारणा ॥ ३ ॥ यस्तु सम्यग्विधानेन तत्र स्नात्वाऽर्च 
येच्छिवम् ॥ देवान्पितॄन्समभ्यर्च्य मुच्यते सर्वपातकैः ॥ ४ ॥ ब्रह्महत्या गवां वध्या तत्र तीर्थे युधिष्ठिर ॥ प्रविशेन्न सदा भीता प्रविष्टापि क्षयं 
व्रजेत् ॥ ५ ॥ ॥ युधिष्ठिर उवाच ॥ ॥ आश्चर्यभूतं लोकेऽस्मिन्कथयस्व द्विजोत्तम ॥ प्रविशेन्न ब्रह्महत्या यथा वै धौतपाप्मनि ॥ ६ ॥
ब्रह्महत्यासमं पापं भविता नेह किंचन ॥ कथं वा धौतपापे तु प्रविष्टं नश्यते द्विज ॥ एतद्विस्तरतः सर्वं पृच्छामि वद कौतुकात् ॥ ७ ॥
॥ ॥ मार्कंडेय उवाच ॥ ॥ आदिसर्गे पुरा शंभुर्ब्रह्मणः परमेष्ठिनः ॥ विकारं पंचमं दृष्ट्वा शिरोऽश्वमुखसन्निभम् ॥ ८ ॥ अंगुष्ठांगुलियोगेन
तच्छिरस्तेन कृंतितम् ॥ कृत्तमात्रे तु शिरसि ब्रह्महत्याऽभवत्तदा ॥ ९ ॥ ब्रह्महत्यायुतश्चासीदुत्तरे नर्मदातटे ॥ धुनितं तु यतो राजन्वृषेण
धर्म्ममूर्त्तिना ॥ १० ॥ तत्र धौतेश्वरीं देवीं स्थापितां वृषभेण तु ॥ ददर्श भगवाञ्छंभुः सर्वदैवतपूजिताम् ॥ ११ ॥ दृष्ट्वा धौतेश्वरीं दुर्गां ब्रह्मह
त्याविनाशिनीम् ॥ तत्र विश्रममाणश्च शंकरस्त्रिपुरांतकः ॥ १२ ॥ स शंकरो ब्रह्महत्या विहीनं मेने त्मानं तस्य तीर्थस्य भावात् ॥ सुविस्मितो देव
देवो वरेण्यो दृष्ट्वा दूरे ब्रह्महत्यां च तीर्थात् ॥ १३ ॥ विधौतपापं महितं धर्मशक्त्या विशेन्न हत्या देवीभयात्प्रभीता ॥ रक्तांबरा रक्तमाल्योपयुक्ता
कृष्णा नारी रक्तदामप्रसक्ता ॥ १४ ॥ मां वांच्छंती स्कंधदेशं रहस्ये दूरे स्थिता तीर्थवर्यप्रभावात् ॥ संचिंत्य देवो मनसा स्मरारिर्वासाय बुद्धिं तत्र
तीर्थे चकार ॥ १५ ॥ विमृश्य देवो बहुशः स्थितः स्वयं विधौतपापः प्रथितः पृथिव्याम् ॥ बभूव तत्रैव निवासकारी विधूतपापनिकटप्रदेशे ॥
॥ १६ ॥ तदाप्रभृति राजेंद्र ब्रह्महत्याविनाशनम् ॥ विधौतपापं तत्तीर्थं नर्मदायां व्यवस्थितम् ॥ १७ ॥ अश्वयुक्छुक्लनवमी तत्र तीर्थे विशि
ष्यते ॥ दिनत्रयं तु राजेंद्र सप्तम्यादिविशेषतः ॥ १८ ॥ समुपोष्याष्टमीं भक्त्या सांगं वेदं पठेत्तु यः ॥ अहोरात्रेण चैकेन ऋग्यजुःसामसं
ज्ञकम् ॥ १९ ॥ अभ्यसन्ब्रह्महत्याया मुच्यते नाऽत्र संशयः ॥ वृषलीगमनं चैव यश्च गुर्वंगनागमः ॥ २० ॥ स्नात्वा ब्रह्मरसोत्कृ
 ष्टे कुंभेनैव प्रमुच्यते ॥ वंध्या स्त्रीजननी या तु काकवंध्या मृतप्रजा ॥ २१ ॥ सापि कुंभोदकैः स्नाता जीवत्पुत्रा प्रजावती ॥ 
अपठस्तु नरोपोष्य ऋग्यजुःसामसंभवाम् ॥ २२ ॥ ऋचमेकां जपन्विप्रस्तथा पर्वणि यो नृप ॥ अनृचोपोष्य गायत्रीं जपेद्वै वेदमातरम् ॥ २३ ॥

१ त्मानम्—आत्मानम्—आकारलोप आर्षः । २ नरः—उपोष्य—इति पदच्छेदः संधिरार्षः ।

जपन्नवम्यां विप्रेंद्रो मुच्यते पापसंचयात् ॥ एवं तु कथितं तात पुराणोक्तं महर्षिभिः ॥ २४ ॥ धौतपापं महापुण्यं शिवेन कथितं मम ॥ प्राणत्यागं तु यः कुर्याज्जले वाऽग्नौ स्थलेऽपि वा ॥ २५ ॥ स गच्छति विमानेन ज्वलनार्कसमप्रभः ॥ हंसबर्हिप्रयुक्तेन सेव्यमानोऽप्सरोगणैः ॥ २६ ॥ शिवस्य परमं स्थानं यत्सुरैरपि दुर्लभम् ॥ क्रीडते स्वेच्छया तत्र यावच्चन्द्रार्कतारकम् ॥ २७ ॥ धौतपापे तु या नारी कुरुते प्राणसंक्षयम् ॥ तत्क्षणादेव सा पार्थ पुरुषत्वमवाप्नुयात् ॥ २८ ॥ अथ किं बहुनोक्तेन शुभं वा यदि वाऽशुभम् ॥ तदक्षयफलं सर्वं धौतपापे कृतं नृप ॥ २९ ॥ संन्यसेन्नियमेनान्नं संन्यसेद्विषयादिकम् ॥ फलमूलादिकं चैव जलमेकं न संत्यजेत् ॥ ३० ॥ एवं यः कुरुते पार्थ रुद्रलोकं स गच्छति ॥ तत्र भुक्त्वाखिलान्भोगाञ्जायते भुवि भूपतिः ॥ ३१ ॥ इति श्रीस्कांदे महापुराण एकाशीतिसाहस्र्यां संहितायां पंचम आवन्त्यखंडे रेवाखण्डे धौतपापतीर्थमाहात्म्यवर्णनंनाम चतुरशीत्युत्तरशततमोऽध्यायः ॥ १८४ ॥ ॥ छ ॥ ॥ श्रीमार्कंडेय उवाच ॥ ॥ ततो गच्छेन्महीपाल एरंडीतीर्थमुत्तमम् ॥ स्नानमात्रेण तत्रैव ब्रह्महत्या प्रणश्यति ॥ १ ॥ मासि चाश्वयुजे तत्र शुक्लपक्षे चतुर्दशीम् ॥ उपोष्य प्रयतः स्नातस्तर्प्पयेत्पितृदेवताः ॥ २ ॥ पुत्रर्द्धिरूपसंपन्नो जीवेच्च शरदां शतम् ॥ शिवलोकं मृतो याति नाऽत्र कार्या विचारणा ॥ ३ ॥ इति श्रीस्कांदे महापुराण एकाशीतिसाहस्र्यां संहितायां पंचम आवन्त्यखंडे रेवाखंडे एरण्डीतीर्थमाहात्म्यवर्णनंनाम पंचाशीत्युत्तरशततमोऽध्यायः ॥ १८५ ॥ ॥ छ ॥ ॥ ॥ ॥ श्रीमार्कंडेय उवाच ॥ ॥ ततो गच्छेन्महीपाल तीर्थं कनखलोत्तमम् ॥ गरुडेन तपस्तप्तं पूजयित्वा महेश्वरम् ॥ १ ॥ दिव्यं वर्षशतं यावज्जातमात्रेण भारत ॥ तपोजपैः कृशीभूतो दृष्टो देवेन शंभुना ॥ २ ॥ ततस्तुष्टो महादेवो वैनतेयं मनोजवम् ॥ उवाच परमं वाक्यं विनतानंदवर्धनम् ॥ ३ ॥ प्रसन्नस्ते महाभाग वरं वरय सुव्रत ॥ दुर्लभं त्रिषु लोकेषु ददामि तव खेचर ॥ ४ ॥ ॥ गरुड उवाच ॥ ॥ इच्छामि वाहनं विष्णोर्द्विजेंद्रत्वं सुरेश्वर ॥ प्रसन्ने त्वयि मे सर्वं भवत्विति मतिर्मम ॥ ५ ॥ ॥ श्रीमहेश उवाच ॥ ॥ दुर्लभः प्राणिनां तात यो वरः प्रार्थितोऽनघ ॥ देवदेवस्य वहनं द्विजेंद्रत्वं सुदुर्लभम् ॥ ६ ॥ नारायणोदरे सर्वं त्रैलोक्यं सचराचरम् ॥ त्वया स कथमूह्येत देवदेवो जगद्गुरुः ॥ ७ ॥ तेनैव स्थापितश्चेंद्रस्त्रैलोक्ये सचराचरे ॥ कथमन्यस्य चेंद्रत्वं भवतीति सुदुर्लभम् ॥ ८ ॥ तथाऽपि मम वाक्येन वाहनं त्वं भविष्यसि ॥ शंखचक्रगदापाणेर्वहतोऽपि जगत्रयम् ॥ ९ ॥ इन्द्रस्त्वं पक्षिणां मध्ये भविष्यसि न संशयः[1] ॥ इति दत्त्वा वरं तस्मा अंतर्धानं गतो हरः ॥ १० ॥ ततो

१ आत्मानम्–इति शेषः ।

गते महादेवे ह्युरुणस्याऽनुजो नृप ॥ आराधयामास तदा चामुण्डां मुण्डमण्डिताम् ॥ ११ ॥ श्मशानवासिनीं देवीं बहुभूतसमन्विताम् ॥
योगिनीं योगसंसिद्धां वसामांसासवप्रियाम् ॥ १२ ॥ ध्यातमात्रा तु तेनैव प्रत्यक्षा ह्यभवत्तदा ॥ जालंधरे च या सिद्धिः कौलीने उड्डिशे परे ॥
॥ १३ ॥ समग्रा सा भृगुक्षेत्रे सिद्धक्षेत्रे तु संस्थिता ॥ चामुण्डा तत्र सा देवी सिद्धक्षेत्रे व्यवस्थिता ॥ १४ ॥ संस्तुता ऋषिभिर्देवैर्योगक्षेमार्थसि
द्धये ॥ विनताऽऽनंदजननस्तत्र तां योगिनीं नृप ॥ भक्त्या प्रसादयामास स्तोत्रैर्वैदिकलौकिकैः ॥ १५ ॥ ॥ गरुड उवाच ॥ ॥ ॐया सा
क्षुत्क्षामकण्ठा नवरुधिरमुखा प्रेतपद्मासनस्था भूतानां वृन्दवृन्दैः पितृवननिलया क्रीडते शूलहस्ता ॥ शस्त्रध्वस्तप्रवीरव्रजरुधिरगलन्मुण्डमालोत्त
रीया देवी श्रीवीरमाता विमलशशिनिभा पातु वश्चर्ममुण्डा ॥ १६ ॥ या सा क्षुत्क्षामकण्ठा विकृतभयकरी त्रासिनी दुष्कृतानां मुञ्चज्ज्वालाकला
पैर्दशनकसमसैः खादति प्रेतमांसम् ॥ पिंगोर्द्ध्वोद्बद्धजूटारविसदृशतनुर्व्याघ्रचर्मोत्तरीया दैत्येंद्रैर्यक्षरक्षोऽप्सरसुरनमिता पातु वश्चर्ममुण्डा ॥ १७ ॥
या सा दोर्दंडचंडैर्डमरुरणरणाटोपटंकारघंटैः कल्पांतोत्पातवाताहतपटुपटहैर्वल्गते भूतमाता ॥ क्षुत्क्षामा शुष्ककुक्षिः खरतरनखरैः क्षोदति प्रेत
मांसं मुंचंती चाट्टहासं घुरघुरितरवा पातु वश्चर्ममुण्डा ॥ १८ ॥ या सा निम्नोदराभा विकृतभवभयत्रासिनी शूलहस्ता चामुंडा मुण्डघाता रणरणि
तरणज्झल्लरीनादरम्या ॥ त्रैलोक्यं त्रासयन्ती ककहकहकहैर्घोररावैरनेकैर्नृत्यंती मातृमध्ये पितृवननिलया पातु वश्चर्ममुंडा ॥ १९ ॥ यां धत्ते
विश्वमखिलं निजांशेन महोज्वला ॥ कनकप्रसवे लीना पातु मां कनकेश्वरी ॥ २० ॥ हिमाद्रिसंभवा देवी दयादर्शितविग्रहा ॥ शिवप्रिया शिवे
सक्ता पातु मां कनकेश्वरी ॥ २१ ॥ अनादिजगदादिर्या रत्नगर्भा वसुप्रिया ॥ रथांगपाणिना पद्मा पातु मां कनकेश्वरी ॥ २२ ॥ सावित्री या च
गायत्री मृडानी वागर्थेंदिरा ॥ स्मर्तॄणां या सुखं दत्ते पातु मां कनकेश्वरी ॥ २३ ॥ सौम्यासौम्यैः सदा रूपैः सृजत्यवति या जगत ॥ परा शक्तिः
परा बुद्धिः पातु मां कनकेश्वरी ॥ २४ ॥ ब्रह्मणः सर्गसमये सृज्यशक्तिः परा तु या ॥ जगन्माया जगद्धात्री पातु मां कनकेश्वरी ॥ २५ ॥ विश्वस्य
पालने विष्णोर्या शक्तिः परिपालिका ॥ मदनोन्मादिनी मुख्या पातुमां कनकेश्वरी ॥ २६ ॥ विश्वसंलयने मुख्या या रुद्रेण समाश्रिता ॥ रौद्री
शक्तिः शिवानंता पातु मां कनकेश्वरी ॥ २७ ॥ कैलाससानुसंरूढकनकप्रसवेशया ॥ भस्मकाभिहता पूर्वं पातु मां कनकेश्वरी ॥ २८ ॥ पतिप्र

१ भक्तानां पूरयन्ती विविधमनसिजान्पूजिता सेविता वै साद्या शक्तिर्महेशप्रमुखसुरनता पातु वश्चर्ममुण्डा॥–इ०पा० । २ शिवगिरिनिलया–इ० पा० । ३ अत्र 'या धत्ते' इत्यारभ्य प्रापिताः प्रथमा शक्तिः पातु मां कनकेश्वरी–इत्यन्तः पाठः केषुचित्पुस्तकेषु नास्ति ।

भावमिच्छंती त्रस्यन्ती या विना पतिम् ॥ अबला त्वंकभावा च पातु मां कनकेश्वरी ॥ २९ ॥ विश्वसंरक्षणे सक्ता रक्षिता कनकेन या ॥ आब्रह्म स्तम्बजननी पातु मां कनकेश्वरी ॥ ३० ॥ ब्रह्मविष्णवीश्वराः शक्त्या शरीरग्रहणं यया ॥ प्रापिताः प्रथमा शक्तिः पातु मां कनकेश्वरी ॥ ३१ ॥ श्रुत्वा तु गरुडेनोक्तं देवीवृत्तचतुष्टयम् ॥ प्रसन्ना सम्मुखी भूत्वा वाक्यमेतदुवाच ह ॥ ३२ ॥ ॥ श्रीचामुण्डोवाच ॥ ॥ प्रसन्ना ते महासत्त्व वरं वरय वाञ्छितम् ॥ ददामि ते द्विजश्रेष्ठ यत्ते मनसि रोचते ॥ ३३ ॥ ॥ गरुड उवाच ॥ ॥ अजरश्चामरश्चैव अधृष्यश्च सुरासुरैः ॥ तव प्रसादाच्चैवान्यैरजेयश्च भवाम्यहम् ॥ ३४ ॥ त्वया चाऽत्र सदा देवि स्थातव्यं तीर्थसन्निधौ ॥ ॥ मार्कंडेय उवाच ॥ ॥ एवं भविष्यतीत्युक्त्वा देवी देवैरभिष्टुता ॥ ३५ ॥ जगामाकाशमाविश्य भूतसंघसमन्विता ॥ यदा लक्ष्म्या नृप श्रेष्ठ स्थापितं पुरमुत्तमम् ॥ ३६ ॥ अनुमान्य तदा देवीं कृतं तस्यां समर्पितम् ॥ ॥ लक्ष्मीरुवाच ॥ ॥ रक्षणाय मया देवि योगक्षेमार्थ सिद्धये ॥ ३७ ॥ मातृवत्प्रतिपाल्यं ते सदा देवि पुरं मम ॥ गरुडोऽपि ततः स्नात्वा संपूज्य कनकेश्वरीम् ॥ ३८ ॥ तीर्थं तत्रैव संस्थाप्य जगामाऽऽकाशमुत्तमम् ॥ तत्र तीर्थे तु यः स्नात्वा पूजयेत्पितृदेवताः ॥ ३९ ॥ सर्वकामसमृद्धस्य यज्ञस्य फलमश्नुते ॥ गन्धपुष्पादिभिर्यस्तु पूजयेत्कनकेश्वरम् ॥ ४० ॥ तस्य योगैश्वर्यसिद्धिर्योगपीठेषु जायते ॥ मृतो योगेश्वरं लोकं जयशब्दादिमंगलैः ॥ स गच्छेन्नाऽत्र संदेहो योगिनीगण संयुतः ॥ ४१ ॥ इति श्रीस्कांदे महापुराण एकाशीतिसाहस्र्यां संहितायां पञ्चम आवंत्यखण्डे रेवाखण्डे कनखलेश्वरतीर्थमाहात्म्यवर्णनंनाम षडशीत्युत्तरशततमोऽध्यायः ॥ १८६ ॥ ॥ छ ॥ ॥ श्रीमार्कंडेय उवाच ॥ ॥ जालेश्वरं ततो गच्छेल्लिंगमाद्यं स्वयंभुवः ॥ कालाग्निरुद्रं विख्यातं भृगुकच्छे व्यवस्थितम् ॥ १ ॥ सर्वपापप्रशमनं सर्वोपद्रवनाशनम् ॥ क्षेत्रपापविनाशाय कृपया च समुत्थितम् ॥ २ ॥ पुरा कल्पेऽसुर गणैराक्रान्ते भुवनत्रये ॥ वेदोक्तकर्मनाशे च धर्मे च विलयं गते ॥ ३ ॥ देवर्षिमुनिसिद्धेषु विश्वासपरमेषु च ॥ कालाग्निरुद्रादुत्पन्नो धूमः कालोद्भवोद्भवः ॥ ४ ॥ धूमात्समुत्थितं लिंगं भित्त्वा पातालसप्तकम् ॥ अवटं दक्षिणे कृत्वा लिंगं तत्रैव तिष्ठति ॥ ५ ॥ तत्र तीर्थे नृपश्रेष्ठ कुण्डं ज्वाला समुद्भवम् ॥ यत्र सा पतिता ज्वाला शिवस्य दहतः पुरम् ॥ ६ ॥ तत्रावाटं समुद्भूतं धूमावर्त्तस्ततोऽभवत् ॥ तस्मिन्कुंडे तु यः स्नानं कृत्वा वै नर्मदाजले ॥ ७ ॥ कुर्याच्छ्राद्धं पितृभ्यो वै पूजयेच्च त्रिलोचनम् ॥ कालाग्निरुद्रनामानि स गच्छेत्परमां गतिम् ॥ ८ ॥ यत्किंचित्कामिकं

१ योगिगम्य–इ०पा० ।

कर्म ह्याभिचारिकमेव वा ॥ रिपुसंक्षयकृद्वापि सांतानिकमथापि वा ॥ अत्र तीर्थे कृतं सर्वमचिरात्सिद्ध्यते नृप ॥ ९ ॥ इति श्रीस्कांदे महा
पुराण एकाशीतिसाहस्र्यां संहितायां पञ्चम आवंत्यखंडे रेवाखण्डे कालाग्निरुद्रतीर्थमाहात्म्यवर्णनंनाम सप्ताशीत्युत्तरशततमोऽध्यायः ॥
॥ १८७ ॥ ॥ छ ॥ ॥ श्रीमार्कंडेय उवाच ॥ ॥ ततः परं महाराज चत्वारिंशत्क्रमांतरे ॥ शालग्रामं ततो गच्छेत्सर्वदैवतपूजितम् ॥ १ ॥
यत्रादिदेवो भगवान्वासुदेवस्त्रिविक्रमः॥ स्वयं तिष्ठति लोकात्मा सर्वेषां हितकाम्यया ॥ २ ॥ नारदेन तपस्तप्त्वा कृता शाला द्विजन्मनाम् ॥ सिद्धि
क्षेत्रं भृगुक्षेत्रं ज्ञात्वा रेवातटे स्वयम् ॥ ३ ॥ शालग्रामाभिधो देवो विप्राणां त्वधिवासितः ॥ साधूनां चोपकाराय वासुदेवः प्रतिष्ठितः ॥ ४ ॥ योगि
नामुपकाराय योगिध्येयो जनार्दनः ॥ शालग्रामेति तेनैव नर्मदातटमाश्रितः ॥ ५ ॥ मासि मार्गशिरे शुक्ला भवत्येकादशी यदा ॥ स्नात्वा
रेवाजले पुण्ये तद्दिनं समुपोषयेत् ॥ ६ ॥ रात्रौ जागरणं कुर्यात्संपूज्य च जनार्दनम् ॥ पुनः प्रभातसमये द्वादश्यां नर्मदाजले ॥ ७ ॥ स्नात्वा
संतर्प्य देवांश्च पितॄन्मातॄंस्तथैव च ॥ श्राद्धं कृत्वा ततः पश्चात्पितृभ्यो विधिपूर्वकम् ॥ ८ ॥ शक्तितो ब्राह्मणान्पूज्य स्वर्णवस्त्रान्नदानतः ॥ क्षमा
पयित्वा तान्विप्रांस्तथा देवं खगध्वजम् ॥ ९ ॥ एवं कृते महाराज यत्पुण्यं च भवेन्नृणाम् ॥ शृणुष्वावहितो भूत्वा तत्पुण्यं नृपसत्तम ॥ १० ॥ न
शोकदुःखे प्रतिपत्स्यतीह जीवन्मृतो याति मुरारिसाम्यम् ॥ महांति पापानि विसृज्य दुग्धं पुनर्न मातुः पिबते स्तनोद्यत् ॥ ११ ॥ शाल
ग्रामं पश्यते यो हि नित्यं स्नात्वा जले नार्मदेऽघौघहारे ॥ स मुच्यते ब्रह्महत्यादिपापैर्नारायणानुस्मरणेन तेन॥१२॥वसंति ये संन्यसित्वा च तत्र
निगृह्य दुःखानि विमुक्तसंघाः ॥ ध्यायंतो वै सांख्यवृत्त्या तुरीयं पदं मुरारेस्तेपि तत्रैव यांति ॥१३॥ इति श्रीस्कांदे महापुराण एकाशीतिसाहस्र्यां
संहितायां पञ्चम आवन्त्यखण्डे रेवाखण्डे शालग्रामतीर्थमाहात्म्यवर्णनं नामाष्टाशीत्युत्तरशततमोऽध्यायः ॥ १८८ ॥ ॥ छ ॥ ॥
॥ ॥ श्रीमार्कंडेय उवाच ॥ ॥ ततो गच्छेत्तु राजेंद्र तीर्थं परमशोभनम् ॥ उदीर्णो यत्र वाराहो ह्यभवद्धरणीधरः ॥ १ ॥ धुन्वन्दंष्ट्रां करालाग्रां
बिभ्रच्च पृथिवीमिमाम् ॥ स एव पंचमः प्रोक्तो वाराहो मुक्तिदायकः ॥ २ ॥ ॥ युधिष्ठिर उवाच ॥ ॥ कथमुदीर्णरूपोऽभूद्वाराहो धरणीधरः ॥
वाराहत्वं गतः केन पंचमः केन संज्ञितः ॥ ३ ॥ ॥ मार्कंडेय उवाच ॥ ॥ आदिकल्पे पुरा राजन्क्षीरोदे भगवान्हरिः ॥ शेते स भोगिशयने
योगनिद्राविमोहितः ॥ ४ ॥ लक्ष्मीकरांबुजयुगमृज्यमानपदद्वयः ॥ तस्मिन्स्वपति देवेशे भाराक्रांता वसुन्धरा ॥ ५ ॥ बभूव नृपतिश्रेष्ठ गत्वा
वै देवसंनिधौ ॥ अवोचद्भारखिन्नाहं गमिष्यामि रसातलम् ॥ ६ ॥ दृष्ट्वा देवाः समुद्विग्ना गता यत्र जनार्दनः ॥ तुष्टुवुर्वाग्भिरिष्टाभिः केशवं

जगत पतिम् ॥ ७ ॥ ॥ देवा ऊचुः ॥ ॥ नमो नमस्ते देवेश सुरार्तिहर सर्वग ॥ विश्वमूर्ते नमस्तुभ्यं त्राहि सर्वान्महद्भयात् ॥ ८ ॥ इत्युक्तो देवतैर्देवो ह्युवाच किमुपस्थितम् ॥ कार्यं वदध्वं मे देवा यत्कृत्यं मा चिरं कृथाः ॥ ९ ॥ ॥ देवा ऊचुः ॥ ॥ धरा धरित्री भूतानां भारो द्विम्ना निमज्जति ॥ तामुद्धर हृषीकेश लोकान्संस्थापय स्थितौ ॥ १० ॥ एवमुक्तः सुरैः सर्वैः केशवः परमेश्वरः ॥ वाराहं रूपमास्थाय सर्वयज्ञमयं विभुः ॥ ११ ॥ दंष्ट्राकरालं पिंगाक्षं समाकुंचितमूर्द्धजम् ॥ कृत्वाऽनंतं पादपीठं दंष्ट्राग्रेणोद्धरन्भुवम् ॥ १२ ॥ सपर्वतवनामुर्वीं समुद्रपरिमेखलाम् ॥ उद्धृत्य भगवान्विष्णुरुद्दीर्णः समजायत ॥ १३ ॥ दर्शयन्पंचधात्मानमुत्तरे नर्मदातटे ॥ तथाऽऽद्यं कोरलायां तु द्वितीयं योधनीपुरे ॥ १४ ॥ जयक्षेत्राभिधाने तु जयेति परिकीर्त्तितम् ॥ असुरान्मोहयल्लिंगस्तृतीयः परिकीर्त्तितः ॥ १५ ॥ पावनाय जगद्धेतोः स्थितो यस्माच्छशिप्रभः ॥ अतस्तु नृपशार्दूल श्वेत इत्यभिधीयते ॥ १६ ॥ उद्धृत्य जगतां देवीमुदीर्णो भृगुकच्छके ॥ ततः पंचम उदीर्णो वराह इति संज्ञितः ॥ १७ ॥ इति पंचवराहास्ते कथितः पांडुनंदन ॥ युगपद्दर्शनं चैषां ब्रह्महत्यां व्यपोहति ॥ १८ ॥ ज्येष्ठ मासि सिते पक्ष एकादश्यां विशेषतः ॥ गत्वा ह्यादिवराहं तु संप्राप्ते दशमीदिने ॥ १९ ॥ हविष्यमन्नं भुंजीयाल्लघु सायं गते रवौ ॥ रात्रौ जागरणं कुर्याद्वाराहे ह्यादिसंज्ञके ॥ २० ॥ ततः प्रभाते ह्युषसि संस्नात्वा नर्मदाजले ॥ संतर्प्य पितृदेवांश्च तिलैर्यवविमिश्रितैः ॥ ॥ २१ ॥ धेनुं दद्याद्द्विजे योग्ये सर्वाभरणभूषिताम् ॥ निर्ममो निरहंकारो दानं दद्याद्द्विजातये ॥ २२ ॥ गत्वा संपूजयेद्देवं वाराहं ह्यादिसंज्ञितम् ॥ अनेन विधिना पूज्य पश्चाद्गच्छेज्जयं त्वरन् ॥२३॥ त्वरितं तु जयं गत्वा पूर्वकं विधिमाचरेत् ॥ अश्वं दद्याद्द्विजाग्र्याय जयपूर्वाभिनिर्गतम्॥ २४ ॥ लिंगे चैव तिला देयाः श्वेते हिरण्यमेव च ॥ उदीर्णे च भुवं दद्यात्पूर्वकं विधिमाचरेत् ॥ २५ ॥ अनस्तमित आदित्ये वराहान्पंच पश्यतः ॥ यत्फलं लभते पार्थ तदिहैकमनाः शृणु ॥ २६ ॥ ब्रह्महत्या सुरापानं स्तेयं गुर्वंगनागमः ॥ एभिस्तु सह संयोगो विश्वस्तानां च वंचनम् ॥ २७ ॥ स्वसृदुहितृभगिनीकुलदारोपबृंहणम् ॥ आजन्ममरणाद्यावत्पापं भरतसत्तम ॥ २८ ॥ तीर्थपंचकपूतस्य वैष्णवस्य विशेषतः ॥ युगपच्च विनश्येत तूलराशिरिवानलात् ॥ २९ ॥ नारायणानुस्मरणाज्जपध्यानाद्विशेषतः ॥ विप्रणश्यंति पापानि गिरिकूटसमान्यपि ॥ ३० ॥ दृष्ट्वा पंच वराहान्वै पौरुषे महति स्थितः ॥ आप्लवन्नर्मदातोये श्राद्धं कृत्वा यथाविधि ॥ ३१ ॥ उदयास्तमनादर्वाग्यः पश्येल्लोटणेश्वरम् ॥ कलेवरविमुक्तः स इत्येवं शंकरोऽब्रवीत् ॥ ३२ ॥ मुक्तिं प्रयाति सहसा दुष्प्रापां परमेश्वरीम् ॥ पौरुषे क्रियमाणेऽपि न सिद्धिर्जायते यदि ॥ ३३ ॥ ह्यवंति स्वर्गगमनमपि

पापान्वितस्य च ॥ यत्र तत्र गतस्यैव भवेत्पंचवराहकी ॥ ३४ ॥ ज्येष्ठस्यैकादशीतिथौ ध्रुवं तत्र वसेन्नरः ॥ आर्दि जयं तथा श्वेतं लिंगमुदीर्णमेव
च ॥ ३५ ॥ आश्रित्य तस्या द्रंष्ट्रया वराहास्तु यतस्ततः ॥ ज्येष्ठस्यैकादशीतिथौ विष्णुना प्रभुविष्णुना ॥ ३६ ॥ वाराहं रूपमास्थाय उद्धृता
धरणी विभो ॥ पुण्यात्पुण्यतमा तेन ह्यशेषाघौघनाशिनी ॥ ३७ ॥ दृष्ट्वा पंचवराहान्वै क्रोडमुदीर्णरूपिणम् ॥ पूजयित्वा विधानेन पश्चाज्जागरणं
चरेत् ॥ ३८ ॥ सपंचवर्त्तिकान्दीपान्घृतेनोज्वाल्य भक्तितः ॥ पुराणश्रवणैर्नृत्यैर्गीतवाद्यैः सुमंगलैः ॥ ३९ ॥ वेदजाप्यैः पवित्रैश्च क्षपयि
त्वा च शर्वरीम् ॥ यत्पुण्यं लभते मर्त्त्यो ह्याजमीढ शृणुष्व तत् ॥ ४० ॥ रेवाजलं पुण्यतमं पृथिव्यां तथा च देवो जगतां पतिर्हरिः ॥ एकादशी
पापहरा नरेन्द्र बह्वायासैर्लभ्यते मानवानाम् ॥ ४१ ॥ एकैकशो ब्रह्महत्यादिकानि शक्तानि हंतुं पापसंघानि राजन् ॥ नैते सर्वे युगपद्वै समेता हंतुं
शक्ताः किन्न तद्ब्रूहि राजन् ॥ ४२ ॥ यथेदमुक्तं तव धर्मसूनो श्रुतं च यच्छंकराच्चंद्रमौलेः ॥ श्रुत्वेदमिच्छन्मुच्यते सर्वपापैः पठन्पदं याति हि वृत्र
शत्रोः ॥ ४३ ॥ इति श्रीस्कांदे महापुराण एकाशीतिसाहस्र्यां संहितायां पञ्चम आवन्त्यखण्डे रेवाखंडे नर्मदामाहात्म्ये उदीर्णवराहतीर्थमाहा
त्म्यवर्णनंनामैकोननवत्युत्तरशततमोऽध्यायः ॥ १८९ ॥ ॥ छ ॥ ॥ श्रीमार्कंडेय उवाच ॥ ॥ ततो गच्छेन्महीपाल सोमतीर्थमनुत्त
मम् ॥ चंद्रहासेति विख्यातं सर्वदैवतपूजितम् ॥ १ ॥ यत्र सिद्धिं परां प्राप्तः सोमो राजा सुरोत्तमः ॥ २ ॥ ॥ युधिष्ठिर उवाच ॥ ॥ कथं
सिद्धिमनुप्राप्तः सोमो राजा जगत्पतिः ॥ तत्सर्वं श्रोतुमिच्छामि कथयस्व ममाऽनघ ॥ ३ ॥ ॥ मार्कंडेय उवाच ॥ ॥ पुरा शप्तो मुनींद्रेण
दक्षेण किल भारत ॥ असेवनाद्धि दाराणां क्षयरोगी भविष्यसि ॥ ४ ॥ उद्वाहितानां पत्नीनां ये न कुर्वंति सेवनम् ॥ या निष्ठा जायते तेषां तां शृणु
ष्व नरोत्तम ॥ ५ ॥ ऋतुकाले तु नारीणां सेवनाज्जायते सुतः ॥ सुतात्स्वर्गश्च मोक्षश्च हीत्येवं श्रुतिनोदना ॥ ६ ॥ तत्कालोचितधर्मेण ये न सेवंति
तां नराः ॥ तेषां ब्रह्मघ्नजं पापं जायते नाऽत्र संशयः ॥ ७ ॥ तेन पापेन घोरेण वेष्टतो रौरवे पतेत् ॥ तस्य तद्रुधिरं पापाः पिबंते कालमीप्सि
तम् ॥ ८ ॥ ततोऽवतीर्णकालेन यांयां योनिं प्रयास्यति ॥ तस्यांतस्यां स दुष्टात्मा दुर्भगो जायते सदा ॥ ९ ॥ नारीणां तु सदा कामो
ह्यधिकः परिवर्त्तते ॥ विशेषेण ऋतोः काले भिद्यते कामसायकैः ॥ १० ॥ परिभूता हि सा भर्त्रा ध्यायतेऽन्यं पतिं ततः ॥

 

तस्याः पुत्रः समुत्पन्नो घातते कुलमुत्तमम् ॥ ११ ॥ स्वर्गस्थास्तेन पितरः पूर्वं जाता महीपते ॥ पतंति जातमात्रेण कुलटस्तेन चोच्यते ॥ १२ ॥

१ कर्त्तव्यम्–इ० वक्तव्यम्–इ० च पा० ।

तेन कर्मविपाकेन क्षयरोगी शशी ह्यभूत् ॥ त्यक्त्वा लोकं सुरेन्द्राणां मर्त्यलोकमुपागतः ॥ १३ ॥ तत्र तीर्थान्यनेकानि पुण्यान्यायतनानि च ॥
भ्रमित्वा नर्मदां प्राप्तः सर्वपापप्रणाशिनीम् ॥ १४ ॥ उपवासस्तु दानानि व्रतानि नियमाश्च ये ॥ चचार द्वादशाब्दानि ततो मुक्तः स किल्बिषैः ॥
॥ १५ ॥ स्थापयित्वा महादेवं सर्वपातकनाशनम् ॥ जगाम प्रभया पूर्णः सोमलोकमनुत्तमम् ॥ १६ ॥ येनैव स्थापितो देवः पूज्यते वर्षसं
ख्यया ॥ तावद्युगसहस्राणि तस्य लोकं समश्नुते ॥ १७ ॥ तेन देवान्विधानोक्तान्स्थापयंति नरा भुवि ॥ अक्षयं चाव्ययं यस्मात्फलं भवति
नाऽन्यथा ॥ १८ ॥ सोमतीर्थे तु यः स्नात्वा पूजयेद्देवमीश्वरम् ॥ जायते स नरो भूत्वा सोमवत्प्रियदर्शनः ॥ १९ ॥ चन्द्रप्रभासे यो गत्वा
स्नानं विधिवदाचरेत् ॥ व्याधिना नाभिभूतः स्यात्क्षयरोगेण वा युतः ॥ २० ॥ चंद्रहास्ये नरः स्नात्वा द्वादश्यां तु नरेश्वर ॥ चतुर्दश्यामुपोष्यैव
क्षीरस्य जुहुयाच्चरुम् ॥ २१ ॥ मन्त्रैः पंचभिरीशानं पुरुषत्र्यंबकं यजेत् ॥ हविःशेषं स्वयं प्राश्य चंद्रहास्येशमीक्षयेत् ॥ २२ ॥ अनेन विधिना
राजंस्तुष्टो देवो महेश्वरः ॥ विधिना तीर्थयोगेन क्षयरोगाद्विमुच्यते ॥ २३ ॥ सप्तभिः सोमवारैर्यः स्नानं तत्र समाचरेत् ॥ स वै कर्णकृताद्रोगा
न्मुच्यते पूजयञ्छिवम् ॥ २४ ॥ अक्षिरोगस्तथा राजंश्चन्द्रहास्ये विनश्यति ॥ चंद्रहास्ये तु यो गत्वा ग्रहणे चन्द्रसूर्ययोः ॥ स्नानं समाचरेद्भक्त्या
मुच्यते सर्वपातकैः ॥ २५ ॥ तत्र स्नानं च दानं च चंद्रहास्ये शुभाशुभम् ॥ कृतं नृपवरश्रेष्ठ सर्वं भवति चाक्षयम् ॥ २६ ॥ ते धन्यास्ते महात्मा
नस्तेषां जन्म सुजीवितम् ॥ चंद्रहास्ये तु ये स्नात्वा पश्यंति ग्रहणं नराः ॥ २७ ॥ वाचिकं मानसं पापं कर्मजं यत्पुरा कृतम् ॥ स्नानमात्रात्तु
राजेंद्र तत्र तीर्थे प्रणश्यति ॥ २८ ॥ बहवस्तन्न जानंति महामोहसमन्विताः ॥ देहस्थ इव सर्वेषां परमात्मेव संस्थितम् ॥ २९ ॥ पश्चिमे
सागरे गत्वा सोमतीर्थे तु यत्फलम् ॥ तत्समग्रमवाप्नोति चन्द्रहास्ये न संशयः ॥ ३० ॥ संक्रांतौ च व्यतीपाते विषुवे चायने तथा ॥ चंद्रहास्ये
नरः स्नात्वा सर्वपापैः प्रमुच्यते ॥ ३१ ॥ ते मूढास्ते दुराचारास्तेषां जन्म निरर्थकम् ॥ चंद्रहास्यं न जानंति नर्मदायां व्यवस्थितम् ॥ ३२ ॥ चंद्र
हास्ये तु यः कश्चित्संन्यासं कुरुते नृप ॥ अनिवर्तिका गतिस्तस्य सोमलोकात्कदाचन ॥३३॥ इति श्रीस्कांदे महापुराण एकाशीतिसाहस्र्यां संहि
तायां पञ्चम आवन्त्यखंडे रेवाखंडे चंद्रहास्यतीर्थमाहात्म्यवर्णनंनाम नवत्युत्तरशततमोऽध्यायः ॥ १९० ॥ ॥ छ ॥ ॥ श्रीमार्कंडेय उवाच ॥
सिद्धेश्वरं ततो गच्छेत्तस्यैव तु समीपतः ॥ अमृतस्रावि तल्लिंगमाद्यं स्वायंभुवं तथा ॥ १ ॥ दृष्टमात्रेण येनेह ह्यनृणो जायते नरः ॥ पुरा वर्षशतं

१ उपाविशत्—इ० पा० । २ तान्सर्वान्—इति शेषः । ३ चन्द्रप्रभासतीर्थमाहात्म्यवर्णनंनाम—इ० पा० ।

साम्प्रमाराध्य परमेश्वरम् ॥ २ ॥ प्राप्तुयुः परमां सिद्धिमादित्या द्वादशैव तु ॥ अतः सिद्धेश्वरः प्रोक्तः सिद्धिदः सिद्धिकांक्षिणाम् ॥ ३ ॥ ॥ युधि
ष्ठिर उवाच ॥ ॥ कथं सिद्धेश्वरे प्राप्ताः सिद्धिं देवा द्विजोत्तम ॥ आदित्या इति यच्चोक्तं तन्मे विस्मापनं कृतम् ॥ ४ ॥ तपस्युग्रे व्यवसिता
आदित्याः केन हेतुना ॥ संप्राप्तास्तु द्विजश्रेष्ठ सिद्धिं चैवाभिलाषिकीम् ॥ ५ ॥ संक्षिप्य तु मया पृष्टं विस्तराद्द्विज शंस मे ॥ ६ ॥ ॥ मार्कंडेय
उवाच ॥ ॥ अदितेर्द्वादशादित्या जाताः शक्रपुरोगमाः ॥ इन्द्रो धाता भगस्त्वष्टा मित्रोथ वरुणोर्यमा ॥ ७ ॥ विवस्वान्सविता पूषा ह्यंशु
मान्विष्णुरेव च ॥ त इमे द्वादशादित्या इच्छंतो भास्करं पदम् ॥ ८ ॥ नर्मदातटमाश्रित्य तपस्युग्रे व्यवस्थिताः ॥ सिद्धेश्वरे महाराज काश्यपेयै
र्महात्मभिः ॥ ९ ॥ परा सिद्धिरनुप्राप्ता द्वादशादित्यसंज्ञितैः ॥ स्थापितश्च जगद्धाता तस्मिंस्तीर्थे दिवाकरः ॥ १० ॥ स्वकीयांशविभागेन
द्वादशादित्यसंज्ञितैः ॥ तदाप्रभृति तत्तीर्थं राजन्ख्यातिं गतं भुवि ॥ ११ ॥ प्रलये समनुप्राप्ते ह्यादित्या द्वादशैव ते ॥ द्वादशादित्यतो राजन्संभवंति
युगक्षये ॥ १२ ॥ इंद्रस्तपति पूर्वेण धाता चैवाग्निगोचरे ॥ गभस्तिपतिर्वैयाम्ये त्वष्टा नैर्ऋतदिङ्मुखः ॥ १३ ॥ वरुणः पश्चिमे भागे मित्रस्तु वायवे
तथा ॥ विष्णुश्च सौम्यदिग्भागे विवस्वानीशगोचरे ॥१४॥ ऊर्ध्वतश्चैव सविता ह्यधः पूषा विशोषयन् ॥ अंशुमांस्तु तथा विष्णुर्मुखतो निर्गतं जग
त् ॥१५॥ प्रदहन्वै नरश्रेष्ठ बभ्रमुश्च इतस्ततः ॥ यथैव ते महाराज दहंति सकलं जगत् ॥१६॥ तथैव द्वादशादित्या भक्तानां भावसाधनाः ॥ प्रात
रुत्थाय यः स्नात्वा द्वादशादित्यसंज्ञितम् ॥ १७ ॥ पश्यते देवदेवेशं शृणु तस्यैव यत्फलम् ॥ वाचिकं मानसं पापं कर्मजं यत्पुराकृतम् ॥ १८ ॥
नश्यते तत्क्षणादेव द्वादशादित्यदर्शनात् ॥ प्रदक्षिणं तु यः कुर्यात्तस्य देवस्य भारत ॥ १९ ॥ प्रदक्षिणीकृता तेन पृथिवी नाऽत्र संशयः ॥ तत्र तीर्थे
तु सप्तम्यामुपवासेन यत्फलम्॥२०॥ अन्यत्र सप्तसप्तम्यां लभंति न लभंति च ॥ षष्ठ्यां वारे दैनकरे द्वादशादित्यदर्शनात् ॥२१॥ प्रदक्षिणं तु यः
कुर्यात्तस्य पापं तु नश्यति ॥ अरोगी सप्तजन्मानि भवेद्वै नाऽत्र संशयः ॥ २२ ॥ यस्तु प्रदक्षिणशतं दद्याद्भक्त्या दिनेदिने ॥ दद्रूपिटककुष्ठानि
मण्डलानि विचर्चिकाः ॥ २३ ॥ नश्यंति व्याधयः सर्वे गरुडेनेव पन्नगाः ॥ पुत्रप्राप्तिर्भवेत्तस्य षष्ठ्या वासरसेवनात् ॥ २४ ॥ इति श्रीस्कांदे
महापुराण एकाशीतिसाहस्र्यां संहितायां पञ्चम आवंत्यखण्डे रेवाखण्डे द्वादशादित्यतीर्थमाहात्म्यवर्णनंनामैकनवत्युत्तरशततमोऽध्यायः ॥
॥ १९१ ॥ ॥ छ ॥ ॥ मार्कंडेय उवाच ॥ ॥ तस्यैवानंतरं तात देवतीर्थमनुत्तमम् ॥ दृष्ट्वा तु श्रीपतिं पापैर्मुच्यते मानवो भुवि ॥ १ ॥
महर्षेस्तस्य जामाता भृगोर्देवो जनार्दनः ॥ २ ॥ ॥ युधिष्ठिर उवाच ॥ ॥ कोऽयं श्रियः पतिर्देवो देवानामधिपो विभुः ॥ कथं जन्माऽभव

तस्य देवेषु त्रिषु[1] वा मुने ॥ ३ ॥ सम्बन्धी च कथं जातो भृगुणा सह केशवः ॥ एतद्विस्तरतो ब्रह्मन्वक्तुमर्हसि भार्गव ॥ ४ ॥ ॥ मार्कंडेय'
उवाच ॥ ॥ संक्षेपात्कथयिष्यामि साध्यस्य चरितं महत् ॥ न हि विस्तरतो वक्तुं शक्ताः सर्वे महर्षयः ॥ ५ ॥ नारायणस्य नाभ्यब्जाज्जातो
देवश्चतुर्मुखः ॥ तस्य दक्षोंगजो राजन्दक्षिणांगुष्ठसंभवः ॥ ६ ॥ धर्मः स्तनांतात्संजातस्तस्य पुत्रोऽभवत्किल ॥ नारायणसहायोसावजोपि
भरतर्षभ ॥ ७ ॥ मरुत्वती वसुर्ज्ञाना लंबा भानुमती सती ॥ संकल्पा च मुहूर्त्ता च साध्या विश्वावर्ती ककुप् ॥ ८ ॥ धर्मपत्न्यो दशैवैता दाक्षा
यण्यो महाप्रभाः ॥ तासां साध्या महाभागा पुत्रानजनयन्नृप ॥ ९ ॥ नरो नारायणश्चैव हरिः कृष्णस्तथैव च ॥ विष्णोरंशांशका ह्येते चत्वारो
धर्मसूनवः ॥ १० ॥ तथा नारायणनरौ गंधमादनपर्वते ॥ आत्मन्यात्मानमाधाय तेपतुः परमं तपः ॥ ११ ॥ ध्यायमानावनौपम्यं स्वं कार
णमकारणम् ॥ वासुदेवमनिर्देश्यमप्रतर्क्यमनंतरम् ॥ १२ ॥ योगयुक्तौ महात्मानावास्थितावुरुतापसौ ॥ तयोस्तपःप्रभावेण न तताप दिवाकरः॥
॥ १३ ॥ ववाह शंकितो वायुः सुखस्पर्शो ह्यशंकितः ॥ शिशिरोऽभवदत्यर्थं ज्वलन्नपि विभावसुः ॥ १४ ॥ सिंहव्याघ्रादयः सौम्याश्चेरुः सह
मृगैर्गिरौ ॥ तयोर्गौरिव भारार्त्ता पृथिवी पृथिवीपते ॥ १५ ॥ चेरुश्च भूधराश्चैव चुक्षुभे च महोदधिः ॥ देवाश्च स्वेषु धिष्ण्येषु निष्प्रभेषु हतप्रभाः ॥
बभूवुरवनीपाल परमं क्षोभमागताः ॥ १६ ॥ देवराजस्तथा शक्रः संतप्तस्तपसा तयोः ॥ युयोजाप्सरसस्तत्र तयोर्विघ्नचिकीर्षया ॥ १७ ॥
॥ ॥ इन्द्र उवाच ॥ ॥ रम्भे तिलोत्तमे कुब्जे घृताचि ललिते शुभे ॥ प्रम्लोचे सुभ्रु सुम्लोचे सौरभेयि महोद्धते ॥ १८ ॥ अलंबुषे
मिश्रकेशि पुण्डरीके वरूथिनि ॥ विलोकनीयं बिभ्राणा वपुर्मन्मथबोधनम् ॥ १९ ॥ गन्धमादनमासाद्य कुरुध्वं वचनं मम ॥ नरनारायणौ
तत्र तपोदीक्षान्वितौ द्विजौ ॥ २० ॥ तेपाते धर्मतनयौ तपः परमदुश्चरम् ॥ तावस्माकं वरारोहाः कुर्वाणौ परमं तपः ॥ २१ ॥ कर्म्मातिशय
दुःखार्त्तिप्रदावायतिनाशनौ[2] ॥ तद्गच्छत न भीः कार्या भवतीभिरिदं वचः ॥ २२ ॥ स्मरः सहायो भविता वसंतश्च वरांगनाः ॥ रूपं वयः समा
लोक्य मदनोद्दीपनं परम् ॥ कन्दर्प्पवशमभ्येति विवशः को न मानवः ॥ २३ ॥ ॥ मार्कंडेय उवाच ॥ ॥ इत्युक्त्वा देवराजेन मदनेन समं
तदा ॥ जग्मुरप्सरसः सर्वा वसंतश्च महीपते ॥ २४ ॥ गन्धमादनमासाद्य पुंस्कोकिलकुलाकुलम् ॥ चचार माधवो रम्यं प्रोत्फुल्लवनपादपम् ॥
॥ २५ ॥ प्रववौ दक्षिणाशायां मलयानुगतोऽनिलः ॥ भृंगमालारुतरवे रमणीयमभूद्वनम् ॥ २६ ॥ गंधश्च सुरभिः सद्यो वनराजिसमुद्भवः ॥

---

१ त्रिषु—ब्रह्मविष्णुमहेश्वरेषु—इत्यर्थः । २ आयतिनाशनौ—उत्तरकालिकसुखनाशकौ—इत्यर्थः । 'आयतिः काल उत्तरः' इत्यमरः ।

किन्नरोरगयक्षाणां बभूव घ्राणतर्पणः ॥ २७ ॥ वरांगनाश्च ताः सर्वा नरनारायणावृषी ॥ विलोभयितुमारब्धा वागंगललितस्मितैः ॥ २८ ॥ जगौ
मनोहरं काचिन्ननर्त तत्र चाऽप्सराः ॥ अवादयत्तथैवान्या मनोहरतरं नृप ॥ २९ ॥ हावैर्भावैः स्मृतैर्हास्यैस्तथाऽन्या वल्गुभाषितैः ॥ तयोः क्षोभाय
तन्वंग्यश्चक्रुरुद्यममंगनाः ॥ ३० ॥ तथापि न तयोः कश्चिन्मनसः पृथिवीपते ॥ विकारोऽभवदध्यात्मपारसंप्राप्तचेतसोः ॥ ३१ ॥
निवातस्थौ यथा दीपावकंपौ नृप तिष्ठतः ॥ वासुदेवार्प्पणस्वस्थे तथैव मनसी तयोः ॥ ३२ ॥ पूर्यमाणोऽपि चांभोभिर्भुवमन्यां
महोदधिः ॥ यथा न याति संक्षोभं तथा तन्मानसं क्वचित् ॥ ३३ ॥ सर्वभूतहितं ब्रह्म वासुदेवमयं परम् ॥ मन्यमानौ न रागस्य द्वेषस्य
च वशंगतौ ॥ ३४ ॥ स्मरोऽपि न शशाकाथ प्रवेष्टुं हृदयं तयोः ॥ विद्यामयं दीपयुतमंधकार इवालयम् ॥ ३५ ॥ पुष्पोज्ज्वलांस्तरुवरान्व
संतं दक्षिणानिलम् ॥ ताश्चैवाप्सरसः सर्वाः कन्दर्प्पं च महामुनी ॥ ३६ ॥ यच्चारब्धं तपस्ताभ्यामात्मानं गन्धमादनम् ॥ ददर्शातेऽखिलं रूपं
ब्रह्मणः पुरुषर्षभ ॥ ३७ ॥ दाहाय नामलो वह्नेर्नापः क्लेदाय चांभसः ॥ तद्द्रव्यमेव तद्द्रव्यविकाराय न वै यतः ॥ ३८ ॥ ततो विज्ञाय विज्ञाय
परं ब्रह्म स्वरूपतः ॥ मधुकंदर्पयोषित्सु विकारो नाऽभवत्तयोः ॥ ३९ ॥ ततो गुरुतरं यत्नं वसंतमदनौ नृप ॥ चक्राते ताश्च तन्वंग्यस्तत्क्षोभाय
पुनःपुनः ॥ ४० ॥ अथ नारायणो धैर्यं संधार्योदीर्णमानसः ॥ ऊरोरुत्पादयामास वरांगीमबलां तदा ॥ ४१ ॥ त्रैलोक्यसुन्दरीरत्नमशेषमवनी
पते ॥ गुणैर्लाघवमभ्येति यस्याः संदर्शनादनु ॥ ४२ ॥ तां विलोक्य महीपाल चकंपे मनसाऽनिलः ॥ वसंतो विस्मयं यातः स्मरः सस्मार
किंचन ॥ ४३ ॥ रंभातिलोत्तमाद्याश्च वैलक्ष्यं देवयोषितः ॥ न रेजुरवनीपाल तल्लक्ष्यहृदयेक्षणाः ॥ ४४ ॥ ततः कामो वसंतश्च पार्थिवाप्सरसश्च
ताः ॥ प्रणम्य भगवंतौ तौ तुष्टुवुर्मुनिसत्तमौ ॥ ४५ ॥ ॥ वसंतकामाप्सरस ऊचुः ॥ ॥ प्रसीदतु जगद्धाता यस्य देवस्य मायया ॥ मोहिताः
स्म विजानीमो नांतरं विद्यते द्वयोः ॥ ४६ ॥ प्रसीदतु स वां देवो यस्य रूपमिदं द्विधा ॥ धामभूतस्य लोकानामनादेरप्रतिष्ठतः ॥ ४७ ॥ नर
नारायणौ देवौ शंखचक्रायुधावुभौ ॥ आस्तां प्रसादसुमुखावस्माकमपराधिनाम् ॥ ४८ ॥ निधानं सर्वविद्यानां सर्वपापवनानलः ॥ नारायणो
ऽतो भगवान्सर्वपापं व्यपोहतु ॥ ४९ ॥ शार्ङ्गचिह्नायुधः श्रीमानात्मज्ञानमयोऽनघः ॥ नरः समस्तपापानि हतात्मा सर्वदेहिनाम् ॥ ५० ॥

१ तल्लक्ष्यहृदयेक्षणाः—तस्याः लक्ष्याणि—वेध्यानि—हृदयानि ईक्षणानि च येषां ते—तल्लक्ष्यहृदयेक्षणाः। लक्षं लक्ष्यं शरव्यं च इत्यमरः। तद्दृष्टिपातविद्धहृदयेक्षणाः—इत्यर्थः। २ अप्रतिष्ठतः—प्रस्थानरहितस्य अंतरहितस्य—इत्यर्थः अनन्तस्य—इति यावत्। ३ आस्ताम्—भवतम्—इत्यर्थः आर्षं रूपम्।

जटाकलापबद्धोऽयमनयोर्नः क्षमावतोः ॥ सौम्यास्यदृष्टिः पापानि हंतुं जन्मार्जितानि वै ॥ ५१ ॥ तथात्मविद्यादोषेण योऽपराधः कृतो महान् ॥
त्रैलोक्यवंद्यौ यौ नाथौ विलोभयितुमागताः ॥५२॥ प्रसीद देव विज्ञानघन मूढदशामिव ॥ भवंति संतः सततं स्वधर्मपरिपालकाः ॥५३॥ दृष्टेतन्नः
समुत्पन्नं यथा स्त्रीरत्नमुत्तमम् ॥ त्वयि नारायणोत्पन्ना श्रेष्ठा पारवती मतिः ॥ ५४ ॥ तेन सत्येन सत्यात्मन्परमात्मन्सनातन ॥ नारायण प्रसीदेश
सर्वलोकपरायण ॥ ५५ ॥ प्रसन्नबुद्धे शांतात्मन्प्रसन्नवदनेक्षण ॥ प्रसीद योगिनामीश नर सर्वगताऽच्युत ॥ ५६ ॥ नमस्यामो नरं देवं तथा नारा
यणं हरिम् ॥ नमो नराय नम्याय नमो नारायणाय च ॥ ५७ ॥ प्रसन्नानामनाथानां तथा नाथवतां प्रभो ॥ शं करोतु नरोऽस्माकं शं नारायण
देहि नः ॥ ५८ ॥ ॥ मार्कंडेय उवाच ॥ ॥ एवमभ्यर्चितः स्तुत्या रागद्वेषादिवर्जितः ॥ प्राहेशः सर्वभूतानां मध्ये नारायणो नृप ॥ ५९ ॥
॥ ॥ नारायण उवाच ॥ ॥ स्वागतं माधवे कामे भवत्वप्सरसामपि ॥ यत्कार्यमागतानां च इहास्माभिस्तदुच्यताम् ॥ ६० ॥ यूयं संसिद्धये
नूनमस्माकं बलशत्रुणा ॥ संप्रेषितास्ततोऽस्माकं नृत्ययोगादिदर्शनम् ॥ ६१ ॥ न वयं गीतनृत्येन नांगचेष्टादिभाषितैः ॥ लुब्धा वै विषयैर्मन्ये
विषया दारुणात्मकाः ॥ ६२ ॥ शब्दादिसंगदुष्टानि यदा नाक्षाणि[1] नः शुभाः ॥ तदा नृत्यादयो भावाः कथं लोभप्रदायिनः ॥ ६३ ॥ ते सिद्धाः
स्म न वै साध्या भवतीनां स्मरस्य च ॥ माधवस्य च शक्रोऽपि स्वास्थ्यं यात्वविशंकिताः ॥ ६४ ॥ योऽसौ परश्च परमः पुरुषः परमेश्वरः ॥
परमात्मा समस्तस्य स्थावरस्य चरस्य च ॥ ६५ ॥ उत्पत्तिहेतुरेते च यस्मिन्सर्वं प्रलीयते ॥ सर्वावासीति देवत्वाद्वासुदेवेत्युदाहृतः ॥ ६६ ॥ वय
मंशांशकास्तस्य चतुर्व्यूहस्य मानिनः ॥ तदादेशितवार्त्मानौ जगद्बोधाय देहिनाम् ॥६७॥ तत्सर्वभूतं सर्वेशं सर्वत्र समदर्शिनम् ॥ कुतः पश्यंतौ
रागादीन्करिष्यामो विभेदिनः ॥ ६८ ॥ वसंते मयि चेंद्रे च भवतीषु तथा स्मरे ॥ यदा स एव भूतात्मा तदा द्वेषादयः कथम् ॥ ६९ ॥ तन्मया
ऽन्य विभक्तानि यदा सर्वेषु जंतुषु ॥ सर्वेश्वरेश्वरो विष्णुः कुतो रागादयस्ततः ॥ ७० ॥ ब्रह्माणमिंद्रमीशानमादित्यमरुतोखिलान् ॥ विश्वेदेवानृषी
न्साध्यान्वसून्पितृगणांस्तथा ॥ ७१ ॥ यक्षराक्षसभूतादीन्नागान्सर्पान्सरीसृपान् ॥ मनुष्यपक्षिगोरूपगजसिंहजलेचरान् ॥ ७२ ॥ मक्षिकामश
कान्दंशाञ्छलभाञ्जलजान्कृमीन् ॥ गुल्मवृक्षलतावल्लीत्वक्सारतृणजातिषु ॥ ७३ ॥ यच्च किंचिददृश्यं वा दृश्यं वा त्रिदशांगनाः ॥ मन्यध्वं
जातमेकस्य तत्सर्वं परमात्मनः ॥ ७४ ॥ जायमानः कथं विष्णुमात्मानं परमं च यत् ॥ रागद्वेषौ तथा लोभं कः कुर्यादमरांग

१ अक्षाणि—इन्द्रियाणि—इत्यर्थः ।

नाः ॥ ७५ ॥ सर्वभूतमये विष्णौ सर्वगे सर्वधातरि ॥ निपात्य तं पृथग्भूते कुतो रागादिको गुणः ॥ ७६ ॥ एवमस्मासु युष्मासु सर्वभूते
षु चाबलाः ॥ तन्मयैकत्वभूतेषु रागाद्यवसरः कुतः ॥ ७७ ॥ सम्यग्दृष्टिरियं प्रोक्ता समस्तैक्यावलोकिनी ॥ पृथग्विज्ञानमात्रेव
लोकसंव्यवहारवत् ॥ ७८ ॥ भूतेंद्रियांतःकरणप्रधानपुरुषात्मकम् ॥ जगद्वै ह्येतदखिलं तदा भेदः किमात्मकः ॥ ७९ ॥
भवंति लयमायांति समुद्रसलिलोर्मयः ॥ न वारिभेदतो भिन्नास्तथैवैक्यादिदं जगत् ॥ ८० ॥ यथाग्नेरर्चिषः पीताः पिंगलारुणधू
सराः ॥ तथाऽपि नाऽग्नितो भिन्नास्तथैतद्ब्रह्मणो जगत् ॥ ८१ ॥ भवतीभिश्च यत्क्षोभमस्माकं स पुरंदरः ॥ कारयत्यसदेतच्च विवेकाचारचेतसाम् ॥
॥ ८२ ॥ भवंत्यः स च देवेंद्रो लोकाश्च ससुरासुराः ॥ समुद्राद्रिवनोपेता मद्देहांतरगोचराः ॥ ८३ ॥ यथेयं चारुसर्वांगी भवतीनां मयाऽग्रतः ॥
दर्शिता दर्शयिष्यामि तथा चैवाऽखिलं जगत् ॥ ८४ ॥ प्रयातु शक्रो मा गर्वमिंद्रत्वं कस्य सुस्थिरम् ॥ यूयं च मा स्मयं यात संति रूपान्विताः
स्त्रियः ॥ ८५ ॥ किं सुरूपं कुरूपं वा यदा भेदो न दृश्यते ॥ तारतम्यं सुरूपत्वे सततं भिन्नदर्शनात् ॥ ८६ ॥ भवतीनां स्मयं मत्वा रूपौदार्य
गुणोद्भवम् ॥ मयेयं दर्शिता तन्वी ततस्तु शममेष्यथ ॥ ८७ ॥ यस्मान्मदूरोर्निष्पन्ना त्वियमिंदीवरेक्षणा ॥ उर्वशीनाम कल्याणी भविष्यति वरा
प्सराः ॥ ८८ ॥ तदियं देवराजस्य नीयतां वरवर्णिनी ॥ भवत्यस्तेन चाऽऽस्माकं प्रेषिताः प्रीतिमिच्छता ॥ ८९ ॥ वक्तव्यश्च सहस्राक्षो नाऽ
स्माकं भोगकारणात् ॥ तपश्चर्या न वाप्राप्यफलं प्राप्तुमभीप्सता ॥ ९० ॥ सन्मार्गमस्य जगतो दर्शयिष्ये करोम्यहम् ॥ तथा नरेण सहितो
जगतः पालनोद्यतः ॥ ९१ ॥ यदि कश्चित्तवाबाधां करोति त्रिदशेश्वर ॥ तमहं वारयिष्यामि निवृत्तो भव वासव ॥ ९२ ॥ कर्त्ताऽसि चेत्त्वमा
बाधां न दुष्टस्येह कस्यचित् ॥ तं चाऽपि शास्ता तदहं प्रवर्त्तिष्याम्यसंशयम् ॥ ९३ ॥ एतज्ज्ञात्वा न संतापस्त्वया कार्यो हि मां प्रति ॥
उपकाराय जगतामवतीर्णोऽस्मि वासव ॥ ९४ ॥ या चेयमुर्वशी मत्तः समुद्भूता पुरंदर ॥ त्रेताग्निहेतुभूतेयं एवं प्राप्य भविष्यति ॥ ९५ ॥ इति
श्रीस्कान्दे महापुराण एकाशीतिसाहस्र्यां संहितायां पञ्चम आवन्त्यखण्डे रेवाखण्डे नर्मदामाहात्म्ये श्रीपत्युत्पत्तिवर्णनं नाम द्विनवत्युत्तरशत
तमोऽध्यायः ॥ १९२ ॥ ॥ छ ॥ ॥ श्रीमार्कंडेय उवाच ॥ ॥ इत्युक्तेऽप्सरसः सर्वाः प्रणिपत्य पुनःपुनः ॥ ऊचुर्नारायणं देवं तद्दर्शन
॥१४१॥ समीहया ॥ १ ॥ ॥ वसंतकामाप्सरस ऊचुः ॥ ॥ भगवन्भवता योऽयमुपदेशो हितार्थिना ॥ प्रोक्तः स सर्वो विज्ञातो माहात्म्यं विदितं च ॥३१५॥
ते ॥ २ ॥ यत्त्वेतद्भवता प्रोक्तं प्रसन्नेनांतरात्मना ॥ दर्शितेयं विशालाक्षी दर्शयिष्यामि वो जगत् ॥ ३ ॥ तत्रार्थे सर्वभावेन प्रपन्नानां जगत्पते ॥

दर्शयात्मानमखिलं दर्शितेयं यथोर्व्वशी ॥ ४ ॥ यदि देवाऽपराधेपि नाऽस्मासु कुपितं तव ॥ नमस्ते जगतामीश दर्शयात्मानमात्मना ॥ ५ ॥
॥ ॥ नारायण उवाच ॥ ॥ पश्यतेहाऽखिलाँल्लोकान्मम देहे सुरांगनाः ॥ मधुं मदनमात्मानं यच्चान्यद्द्रष्टुमिच्छथ ॥ ६ ॥ ॥ श्रीमार्कंडेय
उवाच ॥ ॥ इत्युक्ता भगवान्देवस्तदा नारायणो नृप ॥ उच्चैर्जहास स्वनवत्तत्राऽभूदखिलं जगत् ॥ ७ ॥ ब्रह्मा प्रजापतिः शक्रः सह रुद्रैः पिनाक
धृक् ॥ आदित्या वसवः साध्या विश्वेदेवा महर्षयः ॥ ८ ॥ नासत्यदस्रावनिलः सर्वशश्च तथाग्नयः ॥ यक्षगन्धर्व्वसिद्धाश्च पिशाचोरगकिन्नराः ॥
॥ ९ ॥ समस्ताप्सरसो विद्याः सांगा वेदास्तदुक्तयः ॥ मनुष्याः पशवः कीटाः पक्षिणः पादपास्तथा ॥ १० ॥ सरीसृपाश्चाथ सूक्ष्मा यच्चान्य
ज्जीवसंज्ञितम् ॥ समुद्राः सकलाः शैलाः सरितः काननानि च ॥ ११ ॥ द्वीपान्यशेषाणि तथा तथा सर्वसरांसि च ॥ नगरग्रामपूर्णा च मेदिनी
मेदिनीपते ॥ देवांगनाभिर्देवस्य देहे दृष्टं महात्मनः ॥ १२ ॥ नक्षत्रग्रहताराभिः सुसंपूर्णं नभस्तलम् ॥ ददृशुस्ताः सुचार्वंग्यस्तस्यांतर्विश्व
रूपिणः ॥ १३ ॥ ऊर्ध्वं न तिर्यगधस्ताद्यदंतस्तस्य दृश्यते ॥ तमनंतमनादिं च ततस्तास्तुष्टुवुः प्रभुम् ॥ १४ ॥ मदनेन समं सर्वा मधुना च
वरांगनाः ॥ ससाध्वसा भक्तिपराः परं विस्मयमागताः ॥ १५ ॥ ॥ वसंतकामाप्सरस ऊचुः ॥ ॥ पश्याम नादिं तव देव नांतं न
मध्यमव्याकृतरूपपारम् ॥ परायणं त्वां जगतामनंतं नताः स्म नारायणमात्मभूतम् ॥ १६ ॥ महीनभोवायुजलाग्नयस्त्वं शब्दादिरू
पस्तु परापरात्मन् ॥ त्वत्तो भवत्यच्युत सर्वमेतद्भेदादिरूपोऽसि विभो त्वमात्मन् ॥ १७ ॥ द्रष्टासि रूपस्य परस्य वेत्ता श्रोता च
शब्दस्य हरे त्वमेकः ॥ स्प्रष्टा भवान्सर्वगतोऽखिलस्य घ्राता च गन्धस्य पृथक्छरीरी ॥ १८ ॥ सुरेषु सर्वेषु न सोऽस्ति कश्चिन्मनुष्य
लोकेषु न सोऽस्ति कश्चित् ॥ पश्वादिवर्गेषु न सोऽस्ति कश्चिद्यो नांऽशभूतस्तव देवदेव ॥ १९ ॥ ब्रह्मांबुधींदुप्रमुखानि सौम्य शक्रादि
रूपाणि तवोत्तमानि ॥ समुद्ररूपं तव धैर्यवत्सु तेजःस्वरूपेषु रविस्तथाग्निः ॥ २० ॥ क्षमाधनेषु क्षितिरूपमग्र्यं शीघ्रेषु शीघ्रो बलवत्सु
वायुः ॥ मनुष्यरूपं तव राजवेषो मूढेषु सर्वेश्वर पादपोऽसि ॥ २१ ॥ सर्वानयेष्वच्युत दानवस्त्वं सनत्सुजातश्च विवेकवत्सु ॥ रसस्वरूपेण
जलस्थितोऽसि गन्धस्वरूपं भवतो धरित्र्याम् ॥ २२ ॥ दृश्यस्वरूपश्च हुताशनस्त्वं स्पर्शस्वरूपं भवतः समीरे ॥ शब्दादिकं ते न
भसि स्वरूपं मंतव्यरूपो मनसि प्रभो त्वम् ॥ २३ ॥ बोधस्वरूपश्च मतौ त्वमेकः सर्वत्र सर्वेश्वर सर्वभूत ॥ पश्यामि ते नाभिसरोजमध्ये ब्रह्माण
मीशं च हरं भृकुट्याम् ॥ २४ ॥ तवाऽश्विनौ कर्णगतौ समस्तास्तवाऽऽस्थिता बाहुषु लोकपालाः ॥ घ्राणोऽनिलो नेत्रगतौ रवीन्दू जिह्वा च ते

 नाथ सरस्वतीयम् ॥ २५ ॥ पादौ धरित्री जठरं समस्ताँल्लोकान्हृषीकेश विलोकयामः ॥ जंघे वयं पादतलांगुलीषु पिशाचयक्षोरगसिद्धसंघाः ॥ 
 ॥ २६ ॥ पुंस्त्वे प्रजानां पतिरोष्ठयुग्मे प्रतिष्ठितास्ते क्रतवः समस्ताः ॥ सर्वे वयं ते दशनेषु देव दंष्ट्रासु देवा ह्यभवंश्च दंताः ॥ २७ ॥ रोमाण्यशेषा 
स्तव देवसंघा विद्याधरा नाथ तवांघ्रिरेखाः ॥ सांगाः समस्तास्तव देव वेदाः समास्थिताः संधिषु बाहुभूताः ॥ २८ ॥ वराहभूतं धरणीधरस्ते 
नृसिंहरूपं च सदा करालम् ॥ पश्याम ते वाजिशिरस्तथोच्चैस्त्रिविक्रमे यच्च तदाऽप्रमेयम् ॥ २९ ॥ अमी समुद्रास्तव देव देहे मौर्वालयः शैलधरा
स्तथाऽमी ॥ इमाश्च गंगाप्रमुखाः स्रवंत्यो द्वीपाण्यशेषाणि वनादिदेशाः ॥ ३० ॥ स्तुन्वति चेमे मुनयस्तवेश देहे स्थितास्त्वन्महिमानमग्र्यम् ॥
त्वामीशितारं जगतामनंतं यजंति यज्ञैः किल यज्ञिनोऽमी ॥ ३१ ॥ त्वत्तोऽहि सौम्यं जगतीह किंचित्त्वतो न रौद्रं च समस्तमूर्त्ते ॥ त्वत्तो न
शीतं च न केशवोष्णं सर्वस्वरूपातिशयी त्वमेव ॥ ३२ ॥ प्रसीद सर्वेश्वर सर्वभूत सनातनात्मन्परमेश्वरेश ॥ त्वन्मायया मोहितमानसाभिर्यत्तेऽप
राद्धं तदिदं क्षमस्व ॥ ३३ ॥ किं वाऽपराद्धं तव देवदेव यन्मायया नो हृदयं तवाऽपि ॥ मायाभिशंकिप्रणतार्त्तिहंतर्मनो हि नो विह्वलतामुपैति ॥
॥३४॥ न तेपराद्धं यदि तेऽपराद्धमस्माभिरुन्मार्गविवर्त्तिनीभिः ॥ तत्क्षम्यतां सृष्टिकृतस्तवैव देवाऽपराधः सृजतो विवेकम् ॥३५॥ नमो नमस्ते गो
विंद नारायण जनार्दन ॥ त्वन्नामस्मरणात्पापमशेषं नः प्रणश्यतु ॥ ३६ ॥ नमोऽनंत नमस्तुभ्यं विश्वात्मन्विश्वभावन ॥ त्वन्नामस्मरणात्पापमशेषं
नः प्रणश्यतु ॥ ३७ ॥ वरेण्य यज्ञपुरुष प्रजापालन वामन ॥ त्वन्नामस्मरणात्पापमशेषं नः प्रणश्यतु ॥ ३८ ॥ नमोऽस्तु तेऽब्जनाभाय प्रजापति
कृते हर ॥ त्वन्नामस्मरणात्पापमशेषं नः प्रणश्यतु ॥ ३९ ॥ संसारार्णवपोताय नमस्तुभ्यमधोक्षज ॥ त्वन्नामस्मरणात्पापमशेषं नः प्रणश्यतु ॥
॥ ४० ॥ नमः परस्मै श्रीशाय वासुदेवाय वेधसे ॥ स्वेच्छया गुणयुक्ताय सर्गस्थित्यंतकारिणे ॥ ४१ ॥ उपसंहर विश्वात्मन्रूपमेतत्सनातनम् ॥
वर्धमानं न नो द्रष्टुं समर्थं चक्षुरीश्वर ॥ ४२ ॥ प्रलयाग्निसहस्रस्य समा दीप्तिस्तवाऽच्युत ॥ प्रमाणेन दिशो भूमिर्गगनं च समावृतम् ॥ ४३ ॥
न विद्मः कुत्र वर्त्तामो भवान्नाथोपलक्ष्यते ॥ सर्वं जगदिहैकस्थं पिंडितं लक्षयामहे ॥ ४४ ॥ किं वर्णयामो रूपं ते किं प्रमाणमिदं हरे ॥ माहात्म्यं
॥१४२॥ किं नु ते देव यज्जिह्वाया न गोचरे ॥ ४५ ॥ वक्तारो वाऽयुतेनापि बुद्धीनामयुतायुतैः ॥ गुणनिर्वर्णनं नाथ कर्तुं तव न शक्यते ॥ ४६ ॥ नदेतद्द 
र्शितं रूपं प्रसादः परमः कृतः ॥ छंदतो जगतामीश तदेतदुपसंहर ॥ ४७ ॥ ॥ मार्कंडेय उवाच ॥ ॥ इत्येवं संस्तुतस्ताभिरप्सरोभिर्जना
र्दनः ॥ दिव्यज्ञानोपपन्नानां तासां प्रत्यक्षमीश्वरः ॥ ४८ ॥ विवेश सर्वभूतानि स्वैरंशैर्भूतभावनः ॥ तं दृष्ट्वा सर्वभूतेषु लीयमानमधोक्षजम् ॥ ४९ ॥

विस्मयं परमं चक्रुः समस्ता देवयोषितः ॥ स च सर्वेश्वरः शैलान्पादपान्सागरान्भुवम् ॥ ५० ॥ जलमग्निं तथा वायुमाकाशं च विवेश ह ॥
काले दिक्ष्वथ सर्वात्मा ह्यात्मनश्चाऽन्यथाऽपि च ॥ ५१ ॥ आत्मरूपस्थितं स्वेन महिम्ना भावयञ्जगत् ॥ देवदानवरक्षांसि यक्षविद्याधरोरगाः ॥
॥ ५२ ॥ मनुष्यपशुकीटादिमृगपक्ष्यंतरिक्षगाः ॥ येऽन्तरिक्षे तथा भूमौ दिवि ये च जलाश्रयाः ॥ ५३ ॥ तान्विवेश स विश्वात्मा पुनस्त
द्रूपमास्थितः ॥ नरेण सार्धं यत्ताभिर्दृष्टपूर्वमरिंदम ॥ ५४ ॥ ताः परं विस्मयं जग्मुः सर्वास्त्रिदशयोषितः ॥ प्रणेमुः साध्वसात्पांडुवक्त्रा नृपस
त्तम ॥ ५५ ॥ नारायणोऽपि भगवानाह तास्त्रिदशांगनाः ॥ ५६ ॥ ॥ नारायण उवाच ॥ ॥ नीयतामुर्वशी भद्रा यत्राऽसौ त्रिदशेश्वरः ॥
भवतीनां हितार्थाय सर्वभूतेष्वसाविति ॥ ५७ ॥ ज्ञानमुत्पादितं भूयो लयं भूतेषु कुर्वता ॥ तद्गच्छध्वं समस्तोऽयं भूतग्रामो मदंशकः ॥ ५८ ॥ अह
मध्यात्मभूतस्य वासुदेवस्य योगिनः ॥ अस्मात्परतरं नाऽस्ति योऽनंतः परिपठ्यते ॥ ५९ ॥ तमजं सर्वभूतेशं जानीत परमं पदम् ॥ अहं भवत्यो
देवाश्च मनुष्याः पशवश्च ये ॥ एतत्सर्वमनंतस्य वासुदेवस्य वै कृतम् ॥ ६० ॥ एवं ज्ञात्वा समं सर्वं सदेवासुरमानुषम् ॥ सपक्षादिगुणं चैव द्रष्टव्यं
त्रिदशांगनाः ॥ ६१ ॥ ॥ मार्कंडेय उवाच ॥ ॥ इत्युक्तास्तेन देवेन समस्तास्ताः सुरस्त्रियः ॥ प्रणम्य तौ समदनाः सवसन्ताश्च
पार्थिव ॥ ६२ ॥ आदाय चोर्वशीं भूयो देवराजमुपागताः ॥ आचख्युश्च यथावृत्तं देवराजाय तत्तथा ॥ ६३ ॥ ॥ मार्कंडेय उवाच ॥ ॥ तथा
त्वमपि राजेंद्र सर्वभूतेषु केशवम् ॥ चिंतयन्समतां गच्छ समतैव हि मुक्तये ॥ ६४ ॥ जानन्नेवं विशेषेण भूतेषु परमेश्वरम् ॥ वासुदेव कथं दोषांश्चो
भावींन्न प्रहास्यसि ॥ ६५ ॥ सर्वभूतानि गोविंदाद्यदा नाऽन्यानि भूपते ॥ तदा वैरादयो भावाः क्रियतां न तु पुत्रक ॥ ६६ ॥ इति पश्य जग
त्सर्वं वासुदेवात्मकं नृप ॥ एतदेव हि कृष्णेन रूपमाविष्कृतं नृप ॥ ६७ ॥ परमेश्वरेति यद्रूपं तदेतत्कथितं तव ॥ जन्मादिभावरहितं तद्विष्णोः परमं
पदम् ॥ ६८ ॥ संक्षेपेणाऽथ भूपाल श्रूयतां यद्वदामि ते ॥ यन्मतं पुरुषः कृत्वा परं निर्वाणमृच्छति ॥ ६९ ॥ सर्वो विष्णुसमासो हि भावाभावौ
च तन्मयौ ॥ सदसत्सर्वमीशोऽसौ महादेवः परं पदम् ॥ ७० ॥ भवजलधिगतानां द्वंद्ववाताहतानां सुतदुहितृकलत्रत्राणभारार्दितानाम् ॥
विषमविषयतोये मज्जतामप्लवानां भवति शरणमेको विष्णुपोतो नराणाम् ॥ ७१ ॥ इति श्रीस्कांदे महापुराण एकाशीतिसाहस्र्यां संहितायां
पञ्चम आवन्त्यखण्डे रेवाखण्डे श्रीपतिमाहात्म्यवर्णनंनाम त्रिनवत्युत्तरशततमोऽध्यायः ॥ १९३ ॥ ॥ छ ॥ ॥ श्रीमार्कंडेय उवाच ॥
तच्छ्रुत्वानंतदेवेन विश्वरूपमुदाहृतम् ॥ देवराजस्तथा देवाः परं विस्मयमागताः ॥ १ ॥ दृष्ट्वा चाप्सरसं पुण्यामुर्व्वशीं कमलाननाम् ॥ संत्रस्तो

विस्मितश्चाऽभूदिंद्रो राजश्रिया वृतः ॥ २ ॥ न किंचिदुत्तरं वाक्यमुक्तवाञ्जोषमास्थितः ॥ इति वृत्तांतभूतं हि नारायणविचेष्टितम् ॥ ३ ॥ भृगोः
स्वात्यां समुत्पन्ना लक्ष्मीः श्रुत्वा तु वै नृप ॥ वैश्वरूपं परं रूपं विस्मिताऽचिंतयत्तदा ॥ ४ ॥ केनोपायेन स स्यान्मे भर्त्ता नारायणः प्रभुः ॥ व्रतेन
तपसा वाऽपि दानेन नियमेन च ॥ ५ ॥ वृद्धानां सेवनेनाऽथ देवताराधनेन वा ॥ इति चिंतापरां कन्यां सती[1] ज्ञात्वा युधिष्ठिरं ॥ ६ ॥ प्राह प्राप्तो
मया भर्त्ता शंकरस्तपसा किल ॥ प्रजापतिश्च गायत्र्या ह्यन्याभिरभिवांछिताः ॥ ७ ॥ तपसैव हि ते प्राप्यस्तस्मात्तप्वर सुव्रते ॥ तपस्त्वं हि महत्प्रोग्रं
सर्ववांछितदायकम् ॥ ८ ॥ ॥ मार्कंडेय उवाच ॥ ॥ सागरांतं समासाद्य लक्ष्मीः परपुरंजय ॥ चचार विपुलं कालं तपः परमदुश्चरम् ॥
॥ ९ ॥ स्थाणुवत्संस्थिता साऽभूद्दिव्यं वर्षसहस्रकम् ॥ तत इंद्रादयो देवाः शंखचक्रगदाधराः ॥१०॥ भूत्वा जग्मुस्तदर्थं ते सा तु पृष्टवती सुरान् ॥
विश्वरूपं वैष्णवं यत्तद्दर्शयत मा चिरम् ॥ ११ ॥ विलक्षा व्रीडिता देवा गत्वा नारायणं तदा ॥ अब्रुवन्वैश्वरूपं नो शक्ता दर्शयितुं वयम् ॥ १२ ॥
ततो यथेष्टं ते जग्मुः स च विष्णुरचिंतयत् ॥ उग्ररूपा स्थिता देवी देहं दहति भार्गवी ॥ १३ ॥ तां तस्मात्तत्र गत्वाऽहं वरं दत्त्वा तु वाञ्छितम् ॥
पुनस्तपः करिष्यामि दर्शयिष्यामि वा पुनः ॥ वैष्णवं[2] विश्वरूपं यद्दुर्दर्श्यं देवदानवैः ॥ १४ ॥ ॥ मार्कंडेय उवाच ॥ ॥ ततो गत्वा हृषी
केशः सागरांतस्थितां श्रियम् ॥ प्राह तुष्टोऽस्मि ते देवि वरं वृणु यथेप्सितम् ॥ १५ ॥ ॥ श्रीरुवाच ॥ ॥ यदि तुष्टोऽसि मे देव प्रपन्नाया
जनार्द्दन ॥ तदा दर्शय यद्दृष्टमप्सरोभिस्तवाऽनघ ॥ १६ ॥ विश्वरूपमनंतं च भूतभावन केशव ॥ गंधमादनमासाद्य कृतं यत्र तपस्त्वया ॥ १७ ॥
तद्वदस्व विभो विष्णो न मिथ्या यदि केशव ॥ श्रद्दधामि न चैवाऽहं रूपस्याऽस्य कथंचन ॥१८॥ बहुभिर्यक्षरक्षोभिर्मायाचारिप्रचारिभिः ॥ छंदिता
मम जानद्भिर्भावमंतर्गतं हरौ ॥ १९ ॥ भूत्वा विष्णुस्वरूपास्ते चक्रिणश्च चतुर्भुजाः ॥ सुव्रीडिता गताः सर्वे विश्वरूपासहा[3] यतः ॥ २० ॥
॥ ॥ मार्कंडेय उवाच ॥ ॥ नारायऽणोऽथ भगवाञ्छंखचक्रगदाभृतम् ॥ तया तथोक्तस्तद्रूपं मुक्त्वा वै सुरपूजितम् ॥ २१ ॥ रूपं परं यथोक्तं
वै विश्वरूपमदर्शत् ॥ दर्शयित्वा वचः प्राह पंचरात्रविधानतः ॥ २२ ॥ योऽर्चयिष्यति मां नित्यं स पूज्यः स च पूजितः ॥ धनधान्यसमायुक्तः
सर्व भोगसमन्वितः ॥ २३ ॥ मूलं हि सर्वधर्माणां ब्रह्मचर्यं परं तपः ॥ तेनाहं तत्र स्थास्यामि मूलश्रीपतिसंज्ञितः ॥ २४ ॥ मूलश्रीः प्रोच्यते

१ सती—भवानी तां प्रति कदाचिदगत्य—कृपाप्रस्तावात् इदं वक्ष्यमाणं प्राह मयेत्यादि । २ अस्य—इदानीं मद्दर्शनपर्थं गतस्य—तव—रूपस्य—इत्यर्थः । ३ विश्वरूपासहाः—विश्वरूपं दर्शयितुमसमर्थाः—इत्यर्थः ।

ब्राह्मी ब्रह्मचर्यस्वरूपिणी ॥ सर्वयोगमयी पुण्या सर्वपापहरी शुभा ॥ २५ ॥ पतिस्तस्याः प्रभुरहं वरदः प्राणिनां प्रिये ॥ रेवा
जले नरः स्नात्वा योऽर्चयेन्मां यतव्रतः ॥ २६ ॥ मूलश्रीपतिनामानं वाञ्छितं प्राप्नुयात्फलम् ॥ दानानि तत्र यो दद्या
न्महादानानि च प्रिये ॥ २७ ॥ सहस्रगुणितं पुण्यमन्यस्थानादवाप्यते ॥ दृष्टं त्वया तत्र देशे सम्यक्चैवावधारितम् ॥ तद
र्चित्वा परान्कामानाप्स्यसि त्वं न संशयः ॥ २८ ॥ वरं वृणीष्व देवेशि वाञ्छितं दुर्लभं सुरैः ॥ दुर्गसंसारकांतारपतितैः परमे
श्वरि ॥ २९ ॥ ॥ श्रीरुवाच ॥ ॥ नारायण जगद्धातर्नारायण जगत्पते ॥ नारायण परब्रह्म नारायणपरायण ॥ ३० ॥ प्रसीद पाहि
मां भक्त्या सम्यक्सर्गे नियोजय ॥ प्रियो ह्यसि प्रियाऽहं ते यथा स्यां तत्तथा कुरु ॥ ३१ ॥ गृहं धर्मार्थकामानां कारणं देव संमतम् ॥ तदा
स्थायाऽश्रमं पुण्यं मां श्रेयसि नियोजय ॥ ३२ ॥ ॥ नारायण उवाच ॥ ॥ नारायणगिरा देवि विज्ञतोऽस्मि यतस्त्वया ॥ नारायणगिरि
र्नाम तेन मेऽत्र भविष्यति ॥ ३३ ॥ नारायणस्मृतौ याति दुरितं जन्मकोटिजम् ॥ यस्माद्गिरति तस्माच्च गिरिरित्येव शब्दितम् ॥ ३४ ॥ तस्मा
त्सर्वाश्रयो देवि गिरिः पर्वतराड् भवेत् ॥ सुरासुरमनुष्याणां यथाहमपि चाऽऽश्रयः ॥ ३५ ॥ य एतत्पूजयिष्यंति मंडलस्थं परं मम ॥ नारायण
गिरिर्नाम देवरूपं शुभेक्षणे ॥ ३६ ॥ ते दिव्यज्ञानसंपन्ना दिव्यदेहविचेष्टिताः ॥ दिव्यं लोकमवाप्स्यंति दिव्यभोगसमन्विताः ॥ ३७ ॥
॥ ॥ मार्कंडेय उवाच ॥ ॥ तयोरेवं संवदतोर्देवा इंद्रपुरोगमाः ॥ समागता वनोद्देशं सागरांते महर्षयः ॥ ३८ ॥ ततो भृगुं देवराजो नाराय
णविचिंतितम् ॥ वव्रे ज्ञात्वा तु तत्कन्यां धर्मात्मा स ददौ च ताम् ॥ ३९ ॥ धर्मोऽपि विधिवद्वत्स विवाहं समकारयत् ॥ देवदेवस्य राजर्षे देवतार्थे
समाहितः ॥ ४० ॥ ॥ युधिष्ठिर उवाच ॥ ॥ धर्मो विवाहमकरोद्विधिवद्यत्त्वयोदितम् ॥ को विधिस्तत्र का दत्ता दक्षिणा भृगुणाऽपि च ॥
॥ ४१ ॥ विवाहयज्ञे समभूत्स्रुक्स्रुवग्रहणे च कः ॥ ऋत्विजः के सदस्याश्च तस्यासन्द्विजसत्तम ॥ ४२ ॥ किं तस्याऽवभृथं त्वासीत्तत्सर्वं वद
विस्तरात् ॥ त्वद्वाक्यामृतपानेन तृप्तिर्मम न विद्यते ॥ ४३ ॥ ॥ मार्कंडेय उवाच ॥ ॥ नारायणविवाहस्य यज्ञस्य च युधिष्ठिर ॥ तपस
स्तस्य देवस्य सम्यगाचरणस्य च ॥ ४४ ॥ वक्तुं समर्थो न गुणान्ब्रह्माऽपि परमेश्वरः ॥ तथाप्युद्देशतो वच्मि शृणु भूत्वा समाहितः ॥ ४५ ॥
ब्रह्मा सप्तर्षयस्तत्र स्रुक्स्रुवग्रहणे रताः ॥ अग्नीञ्जुहुविरे राजन्वेदिर्धात्री ससागरा ॥ ४६ ॥ ददुः समुद्रा रत्नानि ब्रह्मर्षिभ्यो नृपोत्तम ॥ धनदोऽपि

ददौ वित्तं सर्वब्राह्मणवाञ्छितम् ॥ ४७ ॥ विश्वकर्माऽपि देवानां ब्रह्मर्षीणां परंतप ॥ वेश्मानि सुविचित्राणि सर्वरत्नमयानि च ॥ ४८ ॥ कृत्वा
प्रदर्शयामास देवेंद्राय यशस्विने ॥ शतक्रतुस्ततो विप्रान्कापिष्ठलपुरोगमान् ॥ ४९ ॥ शौनकादींश्च पप्रच्छ बाष्कलाञ्छागलानपि ॥ आत्रेयानपि
राजेंद्र वृणुध्वमभिवाञ्छितम् ॥ ५० ॥ दृष्ट्वा ते चित्ररत्नानि प्राहुः सर्वेश्वरेश्वरम् ॥ देवानां च ऋषीणां च संगमोऽयं सुपुण्यकृत् ॥ ५१ ॥ अस्मि
न्पुण्ये सुरेशान वस्तुं वाञ्छामहे सदा ॥ शतक्रतुः प्राह पुनर्वासो वोऽत्र भविष्यति ॥ सत्यधर्मरता यूयं यावत्कालं भविष्यथ ॥ ५२ ॥ ॥ मार्कं
डेय उवाच ॥ ॥ पृष्टं यद्राजशार्दूल के मखे होत्रिणोऽभवन् ॥ तत्प्रोच्यमानमधुना शृणु भूत्वा समाहितः ॥ ५३ ॥ सनत्कुमारप्रमुखाः सद
स्यास्तस्य चाऽभवन् ॥ औद्गात्रमत्र्यंगिरसौ मरीचिश्च चकार ह ॥ ५४ ॥ हौत्रं धर्मवशिष्ठौ च ब्रह्मत्वं सनको मुनिः ॥ षट्त्रिंशद्ग्रामसाहस्रं
प्रादात्तेभ्यः शतक्रतुः ॥ ५५ ॥ लक्ष्मीर्भर्त्रा च संयुक्ताभवत्तत्कृतवान्प्रभुः ॥ ब्रह्मणो जुह्वतो वह्निं यावद्देशस्थितैः सुरैः ॥ ५६ ॥ दृष्टं ललाटं
देशेऽसौ ललाट इति संज्ञितः ॥ स देशः श्रीपतेः क्षेत्रपुण्यं देवर्षिसेवितम् ॥ ५७ ॥ सर्वाश्चर्यमयं दिव्यं दिव्यसिद्धिसमन्वितम् ॥ ब्राह्मणानां
ततः पंक्तिं निवेशयितुमुद्यता ॥ ५८ ॥ लक्ष्मीः श्रीपतिनामानमाह देवं वचस्तदा ॥ ॥ श्रीरुवाच ॥ ॥ य एते ब्राह्मणाः शिष्या भृग्वादीनां
यतव्रताः ॥ ५९ ॥ तान्निवेशयितुमिच्छामि त्वत्प्रसादादधोक्षज ॥ मरीच्यादयः सुरेन्द्रेण स्थापिता गरुडध्वज ॥ ६० ॥ नैष्ठिकव्रतिनो विप्रा
बहवोऽत्र यतव्रताः ॥ प्राजापत्ये व्रते ब्राह्मे केचिदत्र व्यवस्थिताः ॥ तानहं स्थापयिष्यामि त्वत्प्रसादादधोक्षज ॥ ६१ ॥ ॥ मार्कंडेय उवाच ॥
ततः कौतूहलधरो भगवान्वृषभध्वजः ॥ पप्रच्छ व्रतिनः सर्वान्वृत्तिभेदे व्यवस्थितान् ॥ ६२ ॥ नारदोऽपि महादेवमुपेत्य च सतीपतिम् ॥ प्राह
कृष्णाजिनधरो नैष्ठिका ब्राह्मणा ह्यमी ॥ ६३ ॥ अमी कार्याः सुवस्त्रेण छन्नगुह्या द्विजोत्तमाः ॥ प्राजापत्याश्चतुर्विंशसहस्राणि नरेश्वर ॥ ६४ ॥
ब्रह्मचर्यव्रतस्थानां व्रतब्रह्मविचारिणाम् ॥ द्वादशैषां सहस्राणि संति वै वृषभध्वज ॥ ६५ ॥ नारदस्य वचः श्रुत्वा देवा देवर्षयोऽपि
च ॥ साधुसाध्वित्यमन्यंत नोचुः केचन किंचन ॥ ६६ ॥ समाहूयततो लक्ष्मीस्तान्विप्रान्भक्तिसंयुता ॥ उवाच चरणान्गृह्य
॥१४४॥ प्रसादः क्रियतां मयि ॥ ६७ ॥ षट्त्रिंशच्च सहस्राणि वेश्मनामत्र संस्थितिः ॥ विश्वकर्मकृतानां तु तेषु तिष्ठंतु वोऽखिलाः ॥ ६८ ॥ ॥११८॥
ते तथेति प्रतिज्ञाय स्थिताः संप्रीतमानसाः ॥ धनधान्यसमृद्धाश्च वाञ्छितप्राप्तिलक्षणाः ॥ सर्वकामसमृद्धाश्च ह्यनारंभेषु कर्मणाम् ॥ ६९ ॥

१ वः—द्वितीयात्र प्रथमार्थे आर्षी । यूयम्—इत्यर्थः ।

इति संस्थाप्य तान्विप्रान्सा स्थिता पर्यपालयत् ॥ चतुर्द्धा तु स्थितो विष्णुः श्रिया देव्याः प्रिये रतः ॥ ७० ॥ एवं वैवाहिकमखे निवृत्ते ऋषयस्तु तम् ॥ ऊचुश्चावभृथस्नानं कुत्र कुर्मो जनार्द्दन ॥ ७१ ॥ इति श्रुत्वा तु वचनं श्रीपतिः पादपंकजात् ॥ मुमोच जाह्नवीतोयं रेवामध्यगमं शुचि ॥ ७२ ॥ हरेः पादोदकं दृष्ट्वा निःसृतं मुनयस्तु ते ॥ विस्मिताः समपद्यंत जानंतस्तस्य गौरवम् ॥ ७३ ॥ रुद्रेण सहिताः सर्वे देवता ऋषयस्तथा ॥ संकथा विस्मिताश्चक्रुर्विधुन्वंतः शिरांसि च ॥ ७४ ॥ ॥ ऋषय ऊचुः ॥ ॥ ब्रूहि शंभो किमत्रायं अकस्माद्वारिसंभवः ॥ विष्णोः पादांबुजोत्थश्च सम्मोहकरणः परः ॥ ७५ ॥ ॥ ईश्वर उवाच ॥ ॥ पादोदकमिदं विष्णोरहं जानामि वै सुराः ॥ दशाश्वमेधावभृथैः स्नानमत्रातिरिच्यते ॥ ७६ ॥ युष्माभिः श्रीपतिः पूज्यः स्नानं चावभृथं कुतः ॥ भविष्यतीति तेनाशु इदं वोऽर्थे विनिर्म्मितम् ॥ ७७ ॥ स्नात्वात्र त्रिदशेशाना यत्फलं संप्रपद्यते ॥ वक्तुं न केनाचिद्याति ततः किमुत्तरं वचः ॥ ७८ ॥ ॥ मार्कंडेय उवाच ॥ ॥ एवमुक्त्वा तु ते सर्वे स्नानं कृत्वा यथागतम् ॥ जग्मुर्देवा महेशानपुरोगा भरतर्षभ ॥ ७९ ॥ ब्राह्मणाश्च ततः सर्वे स्ववेश्मान्येव भेजिरे ॥ देवतीर्थे महाराज सर्वपापप्रणाशने ॥ ८० ॥ इति श्रीस्कांदे महापुराण एकाशीतिसाहस्र्यां संहितायां पञ्चम आवन्त्यखंडे रेवाखंडे श्रीपतिविवाहवर्णनंनाम चतुर्नवत्युत्तरशततमोऽध्यायः ॥ १९४ ॥ छ ॥ ॥ युधिष्ठिर उवाच ॥ ॥ देवतीर्थे तु किन्नाम माहात्म्यं समुदाहृतम् ॥ फलं किं स्नानदानादिकारिणां जायते मुने ॥ १ ॥ ॥ ॥ मार्कंडेय उवाच ॥ ॥ पृथिव्यां यानि तीर्थानि देवैर्मुनिगणैरपि ॥ सेवितानि महाबाहो तानि ध्यातानि विष्णुना ॥ २ ॥ समागतान्येकतां वै तत्र तीर्थे युधिष्ठिर ॥ तत्तीर्थं वैष्णवं पुण्यं देवतीर्थमिति श्रुतम् ॥ ३ ॥ कुरुक्षेत्रं भुवि परमंतरिक्षे त्रिपुष्करम् ॥ पुरुषोत्तमं दिवि परं देवतीर्थं परात्परम् ॥४॥ देवतीर्थसमं नास्ति तीर्थमत्र परत्र च ॥ यत्प्राप्य मनुजस्तप्येन्न कदाचिद्युधिष्ठिर ॥५॥ देवैरुक्तानि तीर्थानि योऽत्र स्नानं समाचरेत् ॥ देवतीर्थे स सर्वत्र स्नातो भवति मानवः ॥ ६ ॥ एवमस्त्विति तैरुक्ता देवा ऋषिगणा अपि ॥ संतुष्टाः श्रीशमभ्यर्च्य स्वंस्वं स्थानं तु भेजिरे ॥७॥ सूर्यग्रहेऽत्र वै क्षेत्रे स्नात्वा यत्फलमश्नुते ॥ स्नात्वा श्रीशं समभ्यर्च्य समुपोष्य यथाविधि ॥ ८ ॥ यद्ददाति हिरण्यानि दानानि विधिवन्नृप ॥ तदनंतफलं सर्वं सूर्यस्य ग्रहणे यथा ॥ ९ ॥ भूमिदानं धेनुदानं स्वर्णदानमनंतकम् ॥ वस्त्रदानमनंतं च फलं प्राह शतक्रतुः ॥ १० ॥ सोमो वै वस्त्रदानेन मौक्तिकानां च भार्गवः ॥ सुवर्णस्य रविर्दानं धर्मराजो ह्यनंतकम् ॥ ११ ॥ देवतीर्थे तु यद्दानं श्रद्धायुक्तेन दीयते ॥ तदनंतफलं प्राह

१ वक्तुं न केनचिद्याति—केनापि वक्तुं न शक्यते—इत्यर्थः ।

बृहस्पतिरुदारधीः ॥ १२ ॥ देवतीर्थं भृगुक्षेत्रे सर्वतीर्थाधिकं नृप ॥ देवतीर्थे नरः स्नात्वा श्रीपतिं योऽनुपश्यति ॥ १३ ॥ सोमग्रहे कुलशतं
स समुद्धृत्य नाकभाक् ॥ दानानि द्विजमुख्येभ्यो देवतीर्थे नराधिप ॥ १४ ॥ यैर्दत्तानि नरैर्भोगभागिनः प्रेत्य चेह ते ॥ देवतीर्थे विप्रभोज्यं
हरिमुद्दिश्य यश्चरेत् ॥ १५ ॥ स सर्वाह्लादमाप्नोति स्वर्गलोके युधिष्ठिर ॥ देवतीर्थे नरो नारी स्नात्वा नियतमानसौ ॥ १६ ॥ उपोष्यैकादशीं
भक्त्या पूजयेद्यः श्रियः पतिम् ॥ रात्रौ जागरणं कृत्वा घृतेनोद्बोध्य दीपकम् ॥ १७ ॥ द्वादश्यां प्रातरुत्थाय तथा वै नर्मदाजले ॥ विप्रदां
पत्यमभ्यर्च्य विधिवत्कुरुनंदन ॥ १८ ॥ वस्त्राभरणतांबूलपुष्पधूपविलेपनैः ॥ अक्षये विष्णुलोकेऽसौ मोदते चारितव्रतः ॥ १९ ॥ यः सदैकाद
शीतिथौ स्नात्वोपोष्याऽर्चयेद्धरिम् ॥ रात्रौ जागरणं कुर्याद्वेदशास्त्रविधानतः ॥ २० ॥ धर्मराजकृतां पापां न स पश्यति यातनाम् ॥ पंचरात्र
विधानेन श्रीपतिं योऽर्चयिष्यति ॥ २१ ॥ दीक्षामवाप्य विधिवद्वैष्णवीं पापनाशिनीम् ॥ स्वर्गमोक्षप्रदां पुण्यां भोगदां वित्तदामथ ॥ २२ ॥
राज्यदां वा महाभाग पुत्रदां भाग्यदामथ ॥ सुकलत्रप्रदां वापि विष्णोर्भक्तिप्रदामिति ॥ २३ ॥ तरिष्यति भवांभोधिं स नरः कुरुनंदन ॥
योऽर्चयिष्यति तत्रैव देवतीर्थे श्रियः पतिम् ॥ २४ ॥ विश्वरूपमथो सम्यङ्मूलश्रीपतिमेव वा ॥ नारायणगिरिं वाऽपि गृहे वैकादशीतिथौ ॥
॥ २५ ॥ भक्तिमाञ्छ्रद्धया युक्तः क्षीरैस्तीर्थोदकैरपि ॥ सुसूक्ष्मैरहतैर्वस्त्रैर्महाकौशेयकैर्नृप ॥ २६ ॥ विचित्रैर्नैत्रजैर्वाऽपि धूपैरगुरुचंदनैः ॥
गुग्गुलैर्घृतमिश्रैश्च नैवेद्यैर्विविधैरपि ॥ २७ ॥ पायसाद्यैर्मनुष्येंद्र पयसा वा युधिष्ठिर ॥ पिष्टदीपैः सुविमलैर्वर्द्धमानैर्मनोहरैः ॥ २८ ॥
पूजयित्वा नरो याति यथा तच्छृणु भारत ॥ शंखी चक्री गदी पद्मी भूत्वाऽसौ गरुडध्वजः ॥ २९ ॥ देवलोकानतिक्रम्य विष्णुलोकं
प्रपद्यते ॥ यस्तु वै परया भक्त्या श्रीपतेः पादपंकजम् ॥ ३० ॥ चतुर्द्धाऽधिष्ठितं पश्येच्छ्रियं त्रैलोक्यमातरम् ॥ नृत्यगीतविनोदेन मुच्यते पात
कैर्धुवम् ॥ ३१ ॥ नीराजने तु देवस्य प्रातर्मध्ये दिने तथा ॥ सायं च नियतो नित्यं यः पश्येत्पूजयेद्धरिम् ॥ ३२ ॥ स तीर्त्वा ह्यापदं दुर्गां
नैवार्त्तिं समवाप्नुयात् ॥ आयुःश्री वर्द्धनं पुंसां चक्षुषामपि पूरकम् ॥ ३३ ॥ उपपापहरं चैव सदा नीराजनं हरेः ॥ तदा नीराजनाकाले यो हरेः
 पठति स्तवम् ॥ ३४ ॥ स धन्यो देवदेवस्य प्रसन्नेनांऽतरात्मना ॥ हरेर्नीराजनाशेषं पाणिभ्यां यः प्रयच्छति ॥ ३५ ॥ संगृह्य चक्षुषी तेन योजये 
न्मार्जयन्मुखम् ॥ तिमिरादीनक्षिरोगान्नाशयेद्दीप्तिमन्मुखम् ॥ ३६ ॥ भवत्यशेषदुष्टानां नाशायालं नरोत्तम ॥ दीपप्रज्वलनं यस्य नित्यमग्रे
श्रियः पतेः ॥ ३७ ॥ स्नात्वा रेवाजले पुण्ये प्रदद्यादधिकं व्रती ॥ सप्तद्वीपवती तेन ससागरवनापगा ॥ ३८ ॥ प्रदक्षिणीकृता स्याद्वै धरणी शंक

रोऽब्रवीत् ॥ इदं यः पठ्यमानं तु शृणुयात्पठतेऽपि वा ॥ ३९ ॥ स्मरणं सोंऽतसमये विपाप्मा प्राप्नुयाद्धरेः ॥ इदं यशस्यमायुष्यं स्वर्ग्यं पितृगुण प्रियम् ॥ ४० ॥ माहात्म्यं श्रावयेद्विप्राञ्छ्रीपतेः श्राद्धकर्मणि ॥ घृतेन मधुना तेन तर्पिताः स्युः पितामहाः ॥ ४१ ॥ इति श्रीस्कान्दे महापुराण एकाशीतिसाहस्र्यां संहितायां पंचम आवन्त्यखण्डे रेवाखण्डे श्रीपतिमाहात्म्यवर्णनंनाम पंचनवत्युत्तरशततमोऽध्यायः ॥ १९५ ॥ ॥ छ ॥ ॥ ॥ श्रीमार्कंडेय उवाच ॥ ॥ ततो गच्छेद्धरणीश हंसतीर्थमनुत्तमम् ॥ यत्र हंसस्तपस्तप्त्वा ब्रह्मवाहनतां गतः ॥ १ ॥ हंसतीर्थे नरः स्नात्वा दानं दत्त्वा च कांचनम् ॥ सर्वपापविनिर्मुक्तो ब्रह्मलोकं स गच्छति ॥ २ ॥ हंसयुक्तेन यानेन तरुणादित्यवर्चसा ॥ सर्वकामसमृद्धेन सेव्यमानोऽप्सरोगणैः ॥ ३ ॥ तत्र भुक्त्वा यथाकामं सर्वान्भोगान्यथेप्सितान् ॥ जातिस्मरो हि जायेत पुनर्मानुष्यमागतः ॥ ४ ॥ संन्यासेन त्यजेद्देहं मोक्षमाप्नोति भारत ॥ ५ ॥ एतत्ते कथितं पार्थ हंसतीर्थस्य यत्फलम् ॥ सर्वपापहरं पुण्यं सर्वदुःखविनाशनम् ॥ ६ ॥ इति श्रीस्कांदे महापुराण एकाशीतिसाहस्र्यां संहितायां पञ्चम आवंत्यखण्डे रेवाखण्डे हंसतीर्थमाहात्म्यवर्णनंनाम षण्णवत्युत्तरशततमोऽध्यायः ॥ १९६ ॥ ॥ छ ॥ ॥ ॥ श्रीमार्कंडेय उवाच ॥ ॥ तस्यैवानंतरं गच्छेत्सूर्यतीर्थमनुत्तमम् ॥ मूलस्थानमिति ख्यातं पद्मजस्थापितं शुभम् ॥ १ ॥ मूलश्रीपतिना देवी प्रोक्ता स्थापय भास्करम् ॥ श्रुत्वा देवोदितं देवी स्थापयामास भास्करम् ॥ २ ॥ प्रोच्यते नर्मदातीरे मूलस्थानाख्यभास्करः ॥ ३ ॥ तत्र तीर्थे नरो यस्तु स्नात्वा नियतमानसः ॥ संतर्प्य पितृदेवांश्च पिंडेन सलिलेन च ॥ ४ ॥ मूलस्थानं ततः पश्येत्स गच्छेत्परमां गतिम् ॥ गुह्याद्गुह्यतरस्तत्र विशेषस्तु श्रुतो मया ॥ ५ ॥ समागमे मुनीनां तु शंकराच्छशिशेखरात् ॥ सदा वै शुक्लसप्तम्यां मूलमादित्यवासरः ॥ ६ ॥ तदा रेवाजलं गत्वा स्नात्वा संतर्प्य देवताः ॥ पितृंश्च भरतश्रेष्ठ दत्त्वा दानं स्वशक्तितः ॥ ७ ॥ करवीरैस्ततो गत्वा रक्तचन्दनवारिणा ॥ संस्थाप्य भास्करं भक्त्या संपूज्य च यथाविधि ॥ ८ ॥ ततः सागुरुकैर्धूपैः कुन्दरैश्च विशेषतः ॥ धूपयेद्देवदेवेशं दीपान्बोध्य दिशो दश ॥ ९ ॥ उपोष्य जागरं कुर्याद्गीतवाद्यं विशेषतः ॥ एवं कृते महीपाल न भवेदुग्रदुःखभाक् ॥ १० ॥ सूर्यलोके वसेत्तावद्यावत्कल्पशतत्रयम् ॥ गंधर्वैरप्सरोभिश्च सेव्यमानो नृपोत्तम ॥ ११ ॥ इति श्रीस्कांदे महापुराण एकाशीतिसाहस्र्यां संहितायां पंचम आवन्त्यखण्डे रेवाखण्डे मूलस्थानतीर्थमाहात्म्यवर्णनंनाम सप्तनवत्युत्तरशततमोऽध्यायः ॥ १९७ ॥ ॥ मार्कंडेय उवाच ॥ ॥ ततो गच्छेन्महीपाल भद्रकालीतिसंगमम् ॥ शूलतीर्थमिति ख्यातं स्वयं देवेन निर्मितम् ॥ १ ॥ पञ्चायतनमध्ये तु तिष्ठते परमेश्वरः ॥ शूलपाणिर्महादेवः सर्वदैवतपूजितः ॥ २ ॥ स संगमो नृपश्रेष्ठ नित्यं देवैर्नि

षेवितः ॥ दर्शनात्तस्य तीर्थस्य स्नानदानाद्विशेषतः ॥ ३ ॥ दौर्भाग्यं दुर्निमित्तं च ह्यभिशापो नृपग्रहः ॥ यदन्यदुष्कृतं कर्म नश्यते शंकरोऽब्र
वीत् ॥ ४ ॥ ॥ युधिष्ठिर उवाच ॥ ॥ कथं शूलेश्वरी देवी कथं शूलेश्वरो हरः ॥ प्रथितो नर्मदातीरे एतद्विस्तरतो वद ॥ ५ ॥ ॥ मार्कं
डेय उवाच ॥ ॥ बभूव ब्राह्मणः कश्चिन्मांडव्य इति विश्रुतः ॥ वृत्तिमान्सर्वधर्मज्ञः सत्ये तपसि च स्थितः ॥ ६ ॥ अशो
काश्रममध्यस्थो वृक्षमूले महातपाः ॥ ऊर्द्ध्वबाहुर्महातेजास्तस्थौ मौनव्रतान्वितः ॥ ७ ॥ तस्य कालेन महता तीव्रे तपसि वर्त्ततः ॥
तमाश्रममनुप्राप्ता दस्यवो लोप्त्रहारिणः ॥ ८ ॥ अनुसर्प्यमाणा बहुभिः पुरुषैर्भरतर्षभ ॥ ते तस्यावसथे लोप्त्रं न्यदधुः
कुरुनन्दन ॥ ९ ॥ निधाय च तदा लीनास्तत्रैवाऽऽश्रममण्डले ॥ तेषु लीनेष्वथो शीघ्रं ततस्तद्रक्षिणां बलम् ॥ १० ॥ आज
गाम ततोऽपश्यंस्तमृषिं तस्करानुगाः ॥ तमपृच्छंस्तदा वृत्तं रक्षिणस्तं तपोधनम् ॥ ११ ॥ वद केन पथा याता दस्यवो द्विजसत्तम ॥ तेन गच्छा
महे ब्रह्मन्यथा शीघ्रतरं वयम् ॥ १२ ॥ तथा तु वचनं तेषां ब्रुवतां स तपोधनः ॥ न किंचिद्वचनं राजन्नवदत्साध्वसाधु वा ॥ १३ ॥ ततस्ते राज
पुरुषा विचिन्वंतस्तमाश्रमम्॥ संयम्यैनं ततो राज्ञे सर्वान्दस्यून्न्यवेदयन् ॥१४॥ तं राजा सहितैश्चोरैरन्वशाद्वध्यतामिति ॥ संबध्य तं च ते राजञ्छू
ले प्रोतो महातपाः॥ १५ ॥ ततस्ते शूलमारोप्य तं मुनिं रक्षिणस्तदा ॥ प्रतिजग्मुर्महीपाल धनान्यादाय तान्यथ ॥१६॥ शूलस्थः स तु धर्मात्मा
कालेन महता तदा ॥ ध्यायन्देवं त्रिलोकेशं शंकरं तमुमापतिम् ॥ १७ ॥ बहुकालं महेशानं मनसाऽऽध्याय संस्थितः ॥ निराहारोऽपि विप्रर्षि
र्मरणं नाऽभ्यपद्यत ॥ १८ ॥ धारयामास विप्राणामृषभः स हृदा हरिम् ॥ शूलाग्रे तप्यमानेन तपस्तेन कृतं तदा ॥ १९ ॥ संतापं परमं जग्मुः
श्रुत्वैतन्मुनयोऽखिलाः ॥ ते रात्रौ शकुना भूत्वा संन्यवर्त्तत भारत ॥ २० ॥ दर्शयंतो मुनेः शक्तिं तमपृच्छन्द्विजोत्तमम्॥ श्रोतुमिच्छाम ते ब्रह्म
न्किं पापं कृतवानसि ॥ २१ ॥ ॥ श्रीमार्कंडेय उवाच ॥ ॥ ततः स मुनिशार्दूलस्तानुवाच तपोधनान् ॥ दोषतः किं गमिष्यामि न हि मेऽन्यो
पराध्यति ॥ २२ ॥ एवमुक्त्वा ततः सर्वानाचचक्षे ततो मुनिः॥ मुनयश्च ततो राज्ञे द्वितीयेह्नि न्यवेदयन् ॥ २३ ॥ राजा तु तमृषिं श्रुत्वा निष्क्रांतः
सह बंधुभिः ॥ प्रसादयामास तदा शूलस्थमृषिसत्तमम् ॥ २४ ॥ ॥ राजोवाच ॥ ॥ यन्मयाऽपकृतं तात तवाऽज्ञानवशाद्वहु ॥ प्रसादये त्वां
तत्राऽहं न मे त्वं क्रोद्धुमर्हसि ॥ २५ ॥ एवमुक्तस्ततो राज्ञा प्रसादमकरोन्मुनिः ॥ कृतप्रसादं राजा तं ततः समवतारयत् ॥ २६ ॥ अवतीर्यमाणस्तु
मुनिः शूले मांसत्वमागते ॥ अतिसंपीडितो विप्रः शंकरं मनसाऽगमत् ॥ २७ ॥ संध्यातः शंकरस्तेन बहुकालोपवासतः ॥ प्रादुर्भूतो महादेवः

शूलं तस्य तथाच्छिनत् ॥ २८ ॥ शूलमूलस्थितः शंभुस्तुष्टः प्राह पुनःपुनः ॥ ब्रूहि किं क्रियतां विप्र सत्त्वस्थानपरायण ॥ २९ ॥ अदेयमपि दास्यामि तुष्टोऽस्म्यद्योमया सह ॥ किं तु सत्यवतां लोके सिद्धिर्न स्याच्च भूयसी ॥ ३० ॥ स्वकर्मणोनुरूपं हि फलं भुंजंति जंतवः ॥ शुभेन कर्मणा भूतिर्दुःखं स्यात्पातकेन तु ॥ ३१ ॥ बहुभेदप्रभिन्नं तु मनुष्येषु विपच्यते ॥ केषां दरिद्रभावेन केषां धनविपत्तिजम् ॥ ३२ ॥ संतत्यभावजं केषां केषां चित्तद्विपर्यये॥तथा दुर्वृत्तितस्तेषां फलमाविर्भवेन्नृणाम्॥३३॥ केषांचित्पुत्रमरणे वियोगात्प्रियमित्रयोः॥ राजचौराग्नितः केषां दुःखं स्याद्दैवनिर्मितम् ॥ ३४ ॥ तच्छरीरे तु केषांचित्कर्मणा संप्रदृश्यते ॥ जराश्च विविधाः केषां दृश्यंते व्याधयस्तथा ॥ ३५ ॥ दृश्यंते चाऽभिशापाश्च पूर्वकर्म्मानुसंचिताः ॥ कष्टाः कष्टतरावस्था गताः केचिदनागसः ॥ ३६ ॥ पूर्वकर्मविपाकेन धर्म्मेण तपसि स्थिताः ॥ दांताः स्वदारनिरता भूरिद्युः परिपूजकाः ॥ ३७ ॥ ह्रीमंतो नयसंयुक्ता अन्ये बहुगुणैर्युताः ॥ दुर्गमामापदं प्राप्य निजकर्मसमुद्भवाम् ॥ ३८ ॥ न संज्वरंति ये मर्त्या धर्मनिंदां न कुर्वते ॥ इदमेव तपो मत्वा क्षिपंति सुविचेतसः ॥ ३९ ॥ हा भ्रातर्मातः पुत्रेति कष्टेषु न वदंति ये ॥ स्मरंति मां महेशानमथवा पुष्करेक्षणम् ॥ ॥ ४० ॥ दुष्कृतं पूर्वजं भोक्तुं ध्रुवं तदुपशाम्यति ॥४१॥ दिनानि यावंति वसेत्स कष्टे यथाकृतं चिंतयद्देवमीशम् ॥ तावंति सौम्यानि कृतानि तेन भवंति विप्र श्रुतिनोदनैषा ॥ ४२ ॥ यस्मात्त्वया कष्टगतेन नित्यं स्मृतश्चाहं मनसा पूजितश्च ॥ गौरीसहायस्तेन इहाऽगतोऽस्मि ब्रूह्यद्य कृत्यं क्रियतां किं नु विप्र ॥ ४३ ॥ ॥ मांडव्य उवाच ॥ ॥ तुष्टो यद्युमया सार्धं वरदो यदि शंकर ॥ तदा मे शूलसंस्थस्य संशयं परमं वद ॥ ४४ ॥ न रुजा मम काऽपि स्याच्छूलसंप्रोतितेऽगके ॥ अमृतस्रावि तच्छूलं प्रभावात्कस्य शंस मे ॥ ४५ ॥ ॥ श्रीशूलपाणिरुवाच ॥ ॥ शूलस्थेन त्वया विप्र मनसा चिंतितोऽस्मि यत् ॥ अनयानां निहंताऽहं दुःखानां विनिबर्हणः ॥ ४६ ॥ ध्यातमात्रो ह्यऽहं विप्र पाताले वाऽपि संस्थितः ॥ शूलमूले त्वहं शंभुरग्रे देवी स्वयं स्थिता॥जगन्मातांबिका देवी त्वांऽमृतेनान्वपूरयत् ॥ ४७ ॥ ॥ माडव्य उवाच ॥ ॥ पूर्वमेव स्थितो यस्माच्छूलं व्याप्योमया सह ॥ प्रसादप्रवणो मह्यमिदानीं चानया सह ॥ ४८ ॥ यस्याः संस्मरणादेव दौर्भाग्यं प्रलयं व्रजेत् ॥ न दौर्भाग्यात्परं लोके दुःखाद्दुःखतरं किल ॥ ४९ ॥ किलैवं श्रूयते गाथा पुराणेषु सुरोत्तम ॥ त्रैलोक्यं दहतस्तुभ्यं सौभाग्यमेकतां गतम् ॥ ५० ॥ विष्णोर्वक्षःस्थलं प्राप्य तस्त्स्थितं चेति नः श्रुतम् ॥ पीतं तद्दक्षसव्यस्तदक्षेण परमेष्ठिना ॥ ५१ ॥

१ त्वा—त्वाम्—इत्यर्थः ।

तस्मात्सतीति संजज्ञ इयमिंदीवरेक्षणा ॥ यजतस्तस्य देवेश तव मानावखंडनात् ॥ ५२ ॥ जुहावाग्नौ तु सा देवी ह्यात्मानं
प्राणसंज्ञिकम् ॥ आत्मानं भस्मसात्कृत्वा प्रालेयाद्रेस्ततः सुता ॥ ५३ ॥ मेनकायां प्रभो जाता सांप्रतं या ह्युमाभिधा ॥ अना
दिनिधना देवी ह्यप्रतर्क्या सुरेश्वर ॥ ५४ ॥ यदि तुष्टोसि देवेश ह्युमा मे वरदा यदि ॥ उभावप्यत्र वै स्थाने स्थितौ शूलाग्रमूलयोः ॥ ५५ ॥
अवतारो यत्र तत्र संस्थितिं वै ततः कुरु ॥ ५६ ॥ ॥ श्रीमार्कंडेय उवाच ॥ ॥ तेनैवमुक्ते सहसा कृत्वा भूमंडलं द्विधा ॥ निःसृतौ शूलमूलाग्रा
ल्लिंगार्चाप्रतिरूपिणौ ॥ ५७ ॥ प्रद्योतयद्दिशः सर्वा लिंगं मूले प्रदृश्यते ॥ वामतः प्रतिमा देवी तदा शूलेश्वरी स्थिता ॥ ५८ ॥ विलोभयन्ती च
जगद्भाति पूरयती दिशः ॥ दृष्ट्वा कृतांजलिपुटः स्तुतिं चक्रे द्विजोत्तमः ॥ ५९ ॥ ॥ मांडव्य उवाच ॥ ॥ त्वमस्य जगतो माता जगत्सौभाग्य
देवता ॥ न त्वया रहितं किंचिद्ब्रह्मांडेऽस्ति वरानने ॥ ६० ॥ प्रसादं कुरु धर्मज्ञे मम त्वाज्ञप्तुमर्हसि ॥ ईदृशेनैव रूपेण केषु स्थानेषु तिष्ठसि ॥
प्रसादप्रवणा भूत्वा वद तानि महेश्वरि ॥ ६१ ॥ ॥ श्रीदेव्युवाच ॥ ॥ सर्वगा सर्वभूतेषु द्रष्टव्या सर्वतो भुवि ॥ सर्वलोकेषु यत्किंचिद्विहितं
न मया विना ॥ ६२ ॥ तथापि येषु स्थानेषु द्रष्टव्या सिद्धिमीप्सुभिः ॥ स्मर्त्तव्या भूतिकामेन तानि वक्ष्यामि तत्त्वतः ॥ ६३ ॥ वाराणस्यां
विशालाक्षी नैमिषे लिंगधारिणी ॥ प्रयागे ललिता देवी कामुका गन्धमादने ॥ ६४ ॥ मानसे कुमुदानाम विश्वकाया तथाऽपरे ॥ गोमंते गोमती
नाम मंदरे कामचारिणी ॥ ६५ ॥ मदोत्कटा चैत्ररथे हयन्ती हास्तिने पुरे ॥ कान्यकुब्जे स्थिता गौरी रंभा ह्यमलपर्वते ॥ ६६ ॥ एकाम्रके
कीर्त्तिमती विश्वां विश्वेश्वरे विदुः ॥ पुष्करे पुरुहूता च केदारे मार्गदायिनी ॥ ६७ ॥ नंदा हिमवतः प्रस्थे गोकर्णे भद्रकर्णिका ॥ स्थानेश्वरे
भवानी तु बिल्वके बिल्वपत्रिका ॥ ६८ ॥ श्रीशैले माधवीनाम भद्रे भद्रेश्वरीति च ॥ जया वराहशैले तु कमला कमलालये ॥ ६९ ॥ रुद्रकोट्यां
तु कल्याणी काली कालंजरे तथा ॥ महालिंगे तु कपिला माकोटे मुकुटेश्वरी ॥ ७० ॥ शालिग्रामे महादेवी शिवलिंगे जलप्रिया ॥ मायापुर्यां
कुमारी तु संताने ललिता तथा ॥ ७१ ॥ उत्पलाक्षी सहस्राक्षे हिरण्याक्षे महोत्पला ॥ गयायां विमलानाम मंगला पुरुषोत्तमे ॥ ७२ ॥ विपा
शायाममोघाक्षी पाटला पुंड्रवर्धने ॥ नारायणी सुपार्श्वे तु त्रिकूटे भद्रसुन्दरी ॥ ७३ ॥ विपुले विपुलानाम कल्याणी मलयाचले ॥ कोटवी
कोटितीर्थेषु सुगन्धा गंधमादने ॥ ७४ ॥ गोदाश्रमे त्रिसंध्या तु गंगाद्वारे रतिप्रिया ॥ शिवचंडे सभानंदा नंदिनी देविकातटे ॥ ७५ ॥ रुक्मिणी

१ प्रालेयाद्रेः—हिमाचलस्य—इत्यर्थः ।

द्वारवत्यां तु राधा वृंदावने वने ॥ देवकी मथुरायां तु पाताले परमेश्वरी ॥ ७६ ॥ चित्रकूटे तथा सीता विंध्ये विंध्यनिवासिनी ॥ सह्याद्रावेकवीरा तु हरिश्चंद्रे तु चंडिका ॥ ७७ ॥ रमणा रामतीर्थे तु यमुनायां मृगावती॥ करवीरे महालक्ष्मी रूपादेवी विनायके ॥ ७८ ॥ आरोग्या वैद्यनाथे तु महाकाले महेश्वरी ॥ अभयेत्युष्णतीर्थे तु मृगी वा विंध्यकंदरे ॥ ७९ ॥ मांडव्ये मांडुकीनाम स्वाहा माहेश्वरे पुरे ॥ छागलिंगे प्रचंडा तु चंडिकाऽमरकण्टके ॥ ८० ॥ सोमेश्वरे वरारोहा प्रभासे पुष्करावती ॥ वेदमाता सरस्वत्यां पारा पारातटे मुने ॥ ८१ ॥ महालये महाभागा पयोष्ण्यां पिंगलेश्वरी ॥ सिंहिका कृतशौचे तु कार्त्तिके चैव शांकरी ॥ ८२ ॥ उत्पलावर्तके लोला सुभद्रा शोणसंगमे ॥ मता सिद्धवटे लक्ष्मीस्तरंगा भारताश्रमे ॥ ८३ ॥ जालंधरे विश्वमुखी तारा किष्किंधपर्वते ॥ देवदारुवने पुष्टिर्मेधा काश्मीरमण्डले ॥ ८४ ॥ भीमादेवी हिमाद्रौ तु पुष्टिर्वस्त्रेश्वरे तथा ॥ कपालमोचने शुद्धिर्माता कायावरोहणे ॥ ८५ ॥ शंखोद्धारे ध्वनिर्नाम धृतिः पिंडारके तथा ॥ काला तु चंद्रभागायामच्छोदे शक्तिधारिणी ॥ ८६ ॥ वेणायाममृतानाम बदर्यामुर्वशी तथा ॥ ओषधी चोत्तरकुरौ कुशद्वीपे कुशोदका ॥ ८७ ॥ मन्मथा हेमकूटे तु कुमुदे सत्यवादिनी ॥ अश्वत्थे वंदिनीका तु निधिर्वैश्रवणालये ॥ ८८ ॥ गायत्री वेदवदने पार्वती शिवसन्निधौ ॥ देवलोके तथेंद्राणी ब्रह्मास्ये तु सरस्वती ॥ ८९ ॥ सूर्यविम्बे प्रभानाम मातॄणां वैष्णवी मता ॥ अरुंधती सतीनां तु रामासु च तिलोत्तमा ॥ ९० ॥ चित्रे ब्रह्मकलानाम शक्तिः सर्वशरीरिणाम् ॥ शूलेश्वरी भृगुक्षेत्रे भृगौ सौभाग्यसुन्दरी॥९१॥ एतदुद्देशतः प्रोक्तं नामाष्टशतमुत्तमम् ॥ अष्टोत्तरं च तीर्थानां शतमेतदुदाहृतम् ॥ ९२ ॥ इदमेव परं विप्र सर्वेषां तु भविष्यति ॥ पठत्यष्टोत्तरशतं नाम्नां यः शिवसन्निधौ ॥ ९३ ॥ स मुच्यते नरः पापैः प्राप्नोति स्त्रियमीप्सिताम् ॥ स्नात्वा नारी तृतीयायां मां समभ्यर्च्य भक्तितः ॥ ९४ ॥ न सा स्याद्दुःखिनी जातु मत्प्रभावान्नरोत्तम ॥ नित्यं मद्दर्शने नारी नियता या भविष्यति ॥ ९५ ॥ पतिपुत्रकृतं दुःखं न सा प्राप्स्यति कर्हिचित् ॥ मदालये तु या नारी तुलापुरुषसंज्ञितम् ॥ ९६ ॥ संपूज्य मंडयेद्वाष्टौ लोकपालांश्च साग्निकान् ॥ सपत्नीकान्द्विजान्पूज्य वासोभिर्भूषणैस्तथा ॥ ९७ ॥ भूतेभ्यस्तु बलिं दद्यादृत्विग्भिः सह देशिकः ॥ ततः प्रदक्षिणीकृत्य तुलामित्यभिमंत्रयेत् ॥ ९८ ॥ शुचिरक्तांबरो वा स्याद्गृहीत्वा कुसुमांजलिम् ॥ नमस्ते सर्वदेवानां शक्तिस्त्वं परमा स्थिता ॥ ९९ ॥ साक्षिभूता जगद्धात्री निर्मिता विश्वयोनिना ॥ त्वं तुले सर्वभूतानां प्रमाणमिह कीर्त्तिता ॥ १०० ॥ कराभ्यां बद्धमुष्टिभ्यामास्ते पश्यन्नुमामुखम् ॥ ततो परे तुलाभागे न्यसेयुर्द्विजपुंगवाः ॥ १ ॥ द्रव्यमष्टविधं तत्र ह्यात्मवित्तानुसारतः ॥ मदंशभूतं विप्रेंद्र पृथिव्यां यदधिष्ठितम् ॥ २ ॥ सुवर्णं चैव निष्पावां

स्तथा राजिकुसुम्भकम् ॥ तृणराजेंदुलवणं कुंकुमं तु तथाष्टमम् ॥ ३ ॥ एषामेकतमं कुर्याद्यथा वित्तानुसारतः ॥ साम्यादभ्यधिकं यावत्कांचनादि
भवेद्विज ॥ ४ ॥ तावत्तिष्ठेन्नरो नारी पश्चादिदमुदीरयेत् ॥ नमो नमस्ते ललिते तुलापुरुषसंज्ञिते ॥ ५ ॥ त्वमुमे तारयस्वास्मानस्मात्संसार
कर्दमात् ॥ ततोऽवतीर्य गुरवे पूर्वमर्द्धं निवेदयेत् ॥ ६ ॥ ऋत्विग्भ्योऽपरमर्द्धं च दद्यादुदकपूर्वकम् ॥ तेभ्यो लब्धा ततोऽनुज्ञां दद्यादन्येषु चार्थिषु
॥ ७ ॥ सपत्नीकं गुरुं रक्तवाससी परिधापयेत् ॥ अन्यांश्च ऋत्विजः शक्त्या गुरुं केयूरकंकणैः ॥ ८ ॥ शुक्लां गां क्षीरिणीं दद्याल्ललिता प्रीयता
मिति ॥ अनेन विधिना या तु कुर्यान्नारी ममालये ॥ ९ ॥ मत्तुल्या सा भवेद्राज्ञां तेजसा श्रीरिवामला ॥ सावित्रीव च सौंदर्य्ये जन्मानि दश
पंच च ॥ ११० ॥ ॥ श्रीमार्कंडेय उवाच ॥ ॥ एवं निशम्य वचनं गौर्या द्विजवरोत्तमः ॥ नमस्कृत्य जगामाऽऽशु धर्मराज निवेशनम् ॥
॥ ११ ॥ तदा प्रभृति तत्तीर्थं ख्यातं शूलेश्वरीति च ॥ तस्मिंस्तीर्थे तु यः स्नात्वा तर्पयेत्पितृदेवताः ॥ १२ ॥ ब्राह्मणानन्नवासोभिः पिंडैः पितृ
पितामहान् ॥ भक्तोपहारैर्देवेशमुमया सह शंकरम् ॥ १३ ॥ धूपगुग्गुलदानैश्च दीपदानैः सुबोधितैः ॥ सर्वपापविनिर्मुक्तः स गच्छेच्छिवसन्निधिम् ॥
॥ १४ ॥ तस्मिंस्तीर्थे तु यः कश्चिदभियुक्तो नरेश्वर ॥ अभिशापी तथा स्नातस्त्रिदिनं मुच्यते नरः ॥ १५ ॥ कृष्णपक्षे चतुर्दश्यां रात्रौ जागर्त्ति
यो नरः ॥ उपवासपरः शुद्धः शिवं संपूजयेन्नरः ॥ प्रमुच्य पापसंमोहं रुद्रलोकं स गच्छति ॥ १६ ॥ त्रिनेत्रश्च चतुर्बाहुः साक्षाद्रुद्र इवाऽपरः ॥
क्रीडते देवकन्याभिर्यावच्चंद्रार्कतारकम् ॥ १७ ॥ इति श्रीस्कांदे महापुराण एकाशीतिसाहस्र्यां संहितायां पंचम आवन्त्यखण्डे रेवाखण्डे
शूलेश्वरतीर्थमाहात्म्यवर्णनंनामाष्टनवत्युत्तरशततमोऽध्यायः ॥ १९८ ॥ ॥ छ ॥ ॥ श्रीमार्कंडेय उवाच ॥ ॥ तस्यैवानंतरं राजन्नाश्विनं तीर्थ
मुत्तमम् ॥ कामिकं सर्वतीर्थानां प्राणिनां सिद्धिदायकम् ॥ १ ॥ तत्र तीर्थेऽश्विनौ देवौ सुरूपौ भिषजां वरौ ॥ तपः कृत्वा सुविपुलं संजातौ यज्ञ
भागिनौ ॥ २ ॥ सम्मतौ सर्वदेवानामादित्यतनयावुभौ ॥ नासत्यौ सत्त्वसंपन्नौ सर्वदुःखघ्नसत्तमौ ॥ ३ ॥ ॥ युधिष्ठिर उवाच ॥ ॥ आदि
त्यस्य सुतौ तात नासत्यौ येन हेतुना ॥ संजातौ श्रोतुमिच्छामि निर्णयं परमं द्विज ॥ ४ ॥ ॥ मार्कंडेय उवाच ॥ ॥ पुराणे भास्करे तात
एतद्विस्तरतो मया ॥ संश्रुतं देवदेवस्य मार्त्तंडस्य महात्मनः ॥ ५ ॥ तत्ते संक्षेपतः सर्वं भक्तियुक्तस्य भारत ॥ कथयामि न संदेहो वृद्धभावेन
कर्शितः ॥ ६ ॥ अतितेजो रवेर्दृष्ट्वा राज्ञी देवी नरोत्तम ॥ चचार मेरुकांतारे वडवा तप उल्बणम् ॥ ७ ॥ ततः कतिपयाऽहस्य कालस्य भग

१ पुराणे—भास्कर—आदित्यपुराणे—इत्यर्थः । २ चारित्रम्—इति शेषः ।

वाग्रविः ॥ दृष्ट्वा तु रूपमुत्सृज्य परमं तेज उज्ज्वलम् ॥ ८ ॥ मनोभववशीभूतो हयो भूत्वा लघुक्रमः ॥ विस्फुरंती यथाप्राणं धावमाना इतस्ततः ॥ ॥ ९ ॥ हेषमाणः स्वरेणाऽसौ मैथुनायोपचक्रमे ॥ सम्मुखी तु ततो देवी निवृत्ता लघुविक्रमा ॥ १० ॥ यथा तथा नासिकायां प्रविष्टं बीजमुत्तमम् ॥ ततो नासागते बीजे संजातो गर्भ उत्तमः ॥ ११ ॥ जातौ यतः सुतौ पार्थ नासत्यौ विश्रुतौ ततः ॥ सुसमौ सुविभक्तांगौ बिंबाद्बिंबमिवोद्यतौ ॥ १२ ॥ अधिकौ सर्वदेवानां रूपैश्वर्य्यसमन्वितौ ॥ नर्मदातटमाश्रित्य भृगुकच्छे गतावुभौ ॥ परां सिद्धिमनुप्राप्तौ तपः कृत्वा सुदुश्चरम् ॥ ॥ १३ ॥ तत्र तीर्थे तु यः स्नात्वा तर्पयेत्पितृदेवताः ॥ सुरूपः सुभगः पार्थ जायते यत्र तत्र च ॥ १४ ॥ इति श्रीस्कांदे महापुराण एकाशीतिसाहस्र्यां संहितायां पञ्चम आवन्त्यखण्डे रेवाखण्डे आश्विनतीर्थमाहात्म्यवर्णनंनामैकोनद्विशततमोऽध्यायः ॥ १९९ ॥ ॥ छ ॥

॥ ॥ श्रीमार्कंडेय उवाच ॥ ॥ तस्यैवानंतरं पार्थ सावित्रीतीर्थमुत्तमम् ॥ यत्र सिद्धा महाभागा सावित्री वेदमातृका ॥ १ ॥ ॥ युधिष्ठिर उवाच ॥ ॥ सावित्री का द्विजश्रेष्ठ कथं वाऽऽराध्यते बुधैः॥ प्रसन्ना वा वरं कं च ददाति कथयस्व मे ॥२॥ श्रीमार्कंडेय उवाच ॥ पद्मा पद्मासनस्थेनाधिष्ठिता पद्मयोगिनी ॥ सावित्रतेजःसदृशी सावित्री तेन चोच्यते ॥ ३ ॥ पद्मानना पद्मवर्णा पद्मपत्रनिभेक्षणा ॥ ध्यातव्या ब्राह्मणैर्नित्यं क्षत्रवैश्यैर्यथाविधि ॥ ४ ॥ ब्रह्महत्याभयात्सा हि न तु शूद्रैः कदाचन ॥ उच्चारणाद्धारणाद्वा नरके पतति ध्रुवम् ॥ ५ ॥ वेदोच्चारणमात्रेण क्षत्रियैर्द्धर्मपालकैः ॥ जिह्वाच्छेदोऽस्य कर्त्तव्यः शूद्रस्येति विनिश्चयः ॥ ६ ॥ बाला बालेंदुसदृशी रक्तवस्त्रानुलेपना ॥ उषःकाले तु ध्यातव्या संध्या संधान उत्तमे ॥ ७ ॥ उत्तुंगपीवरकुचा सुमुखी शुभदर्शना ॥ सर्वाभरणसंपन्ना श्वेत माल्यानुलेपना ॥ ८ ॥ श्वेतवस्त्रपरिच्छन्ना श्वेतयज्ञोपवीतिनी ॥ मध्याह्नसंध्या ध्यातव्या तरुणा भुक्तिमुक्तिदा ॥ ९ ॥ प्रदोषे तु पुनः पार्थ श्वेता पांडुरमूर्द्धजा ॥ स्मृता तु दुर्गकांतारे मातृवत्परिरक्षति ॥ ॥ १० ॥ विशेषेण तु राजेंद्र सावित्रीतीर्थमुत्तमम् ॥ स्नात्वाऽऽचम्य विधानेन मनोवाक्कायकर्मभिः ॥ ११ ॥ प्राणायमैर्दहेद्दोषान्सप्तजन्मार्जितान्बहून् ॥ आपोहिष्ठेति मन्त्रेण प्रोक्षयेदात्मनस्तनुम् ॥ १२ ॥ नवषट् च तथा तिस्रस्तत्र तीर्थे नृपोत्तम ॥ आपोहिष्ठेति त्रिरावृत्य प्रतिग्राहैर्न लिप्यते ॥ १३ ॥ अघमर्षणं त्र्यृचं तोये यथावेदमथाऽपि वा ॥ उपपापैर्न लिप्येत पद्मपत्रमिवांभसा ॥ १४ ॥ त्र्यापं हि कुरुते विप्र उल्लेखत्रयमाचरेत् ॥ चतुर्थं कारयेद्यस्तु ब्रह्महत्यां व्यपोहति ॥ १५ ॥ द्रुपदास्यश्च यो मन्त्रो वेदे वाजसनेयके ॥ अन्तर्जले सकृज्जप्तः सर्वपापक्षयं

१ यथाप्रणम्—यथाबलम्—यावच्छक्ति—इत्यर्थः । २ शूद्रः—इति शेषः । ३ त्र्यापम्—त्रिराचमनम्—इत्यर्थः ।

कर: ॥ १६ ॥ उदुत्यमिति मंत्रेण पूजयित्वा दिवाकरम् ॥ गायत्रीं च जपेद्देवीं पवित्रां वेदमातरम् ॥ १७ ॥ गायत्रीं तु जपेद्देवीं यः संध्यानंतरं
द्विजः ॥ सर्वपापविनिर्मुक्तो ब्रह्मलोकं स गच्छति ॥ १८ ॥ दशभिर्जन्मभिर्लब्धं शतेन तु पुराकृतम् ॥ त्रियुगं तु सहस्रेण गायत्री हन्ति किल्बि
षम् ॥ १९ ॥ गायत्रीसारमात्रोऽपि वरं विप्रः सुयंत्रितः ॥ नायंत्रितश्चतुर्वेदी सर्वाशी सर्वविक्रयी ॥ २० ॥ संध्याहीनोऽशुचिर्नित्यमनर्हः सर्व
कर्मसु ॥ यदन्यत्कुरुते किंचिन्न तस्य फलभाग्भवेत् ॥ २१ ॥ संध्यां नोपासते यस्तु ब्राह्मणो मंदबुद्धिमान् ॥ स जीवन्नेव शूद्रः स्यान्मृतः श्वा
संप्रजायते ॥ २२ ॥ सावित्रीतीर्थमासाद्य सावित्रीं यो जपेद्द्विजः ॥ त्रैविद्यं तु फलं तस्य जायते नात्र संशयः ॥ २३ ॥ पितॄनुद्दिश्य यः स्नात्वा
पिंडनिर्वपणं नृप ॥ कुरुते द्वादशाब्दानि तृप्यंति तत्पितामहाः ॥२४॥ सावित्रीतीर्थमासाद्य यः कुर्यात्प्राणसंक्षयम् ॥ ब्रह्मलोके वसेत्तावद्यावदाभूत
संप्लवम् ॥ २५ ॥ पूर्णे चैव ततः काल इह मानुष्यतां गतः ॥ चतुर्वेदो द्विजो राजञ्जायते विमले कुले ॥ २६ ॥ धनधान्यचयोपेतः पुत्रपौत्रसम
न्वितः ॥ व्याधिशोकविनिर्मुक्तो जीवेच्च शरदां शतम् ॥ २७ ॥ इति श्रीस्कांदे महापुराण एकाशीतिसाहस्र्यां संहितायां पञ्चम आवन्त्यखण्डे
रेवाखण्डे सावित्रीतीर्थमाहात्म्यवर्णनंनाम द्विशततमोऽध्यायः ॥ २०० ॥ ॥ छ ॥ ॥ श्रीमार्कंडेय उवाच ॥ ॥ ततो गच्छेन्महीपाल देव
तीर्थमनुत्तमम् ॥ यत्र सिद्धा महाभागा देवाः सेन्द्रा युधिष्ठिर ॥ १ ॥ स्नानं दानं जपो होमः स्वाध्यायो देवतार्चनम् ॥ तत्र तीर्थप्रभावेन कृतमानं
त्यमश्नुते ॥ २ ॥ विशेषाद्भाद्रपदे तु कृष्णपक्षे त्रयोदशीम् ॥ प्रधानं सर्वतीर्थानां देवैरध्यासितं पुरा ॥ ३ ॥ स्नात्वा त्रयोदशीदिने श्राद्धं कृत्वा
विधानतः ॥ देवैः संस्थापितं देवं संपूज्य वृषभध्वजम् ॥ सर्वपापविनिर्मुक्तो रुद्रलोकमवाप्नुयात् ॥ ४ ॥ इति श्रीस्कांदे महापुराण एकाशीतिसा
हस्र्यां संहितायां पंचम आवन्त्यखण्डे रेवाखण्डे देवतीर्थमाहात्म्यवर्णनंनामैकोत्तरद्विशततमोऽध्यायः ॥ २०१ ॥ ॥ छ ॥ ॥ ॥ मार्कंडेय
उवाच ॥ ॥ तस्यैवानंतरं चान्यच्छिखितीर्थमनुत्तमम् ॥ प्रधानं सर्वतीर्थानां पञ्चायतनमुत्तमम् ॥ १ ॥ तत्र तीर्थे तपस्तप्त्वा शिखार्थं हव्यवा
हनः ॥ शिखां प्राप्य शिखी भूत्वा शिखाख्यं स्थापयञ्छिवम् ॥ २ ॥ प्रतिपच्छुक्लपक्षे या भवेदाश्वयुजे नृप ॥ तदा तीर्थवरे गत्वा स्नात्वा वै नर्म
दाजले ॥ ३ ॥ देवानृषीन्पितॄंश्चान्यांस्तर्प्पयेत्तिलवारिणा ॥ हिरण्यं ब्राह्मणे दद्यात्संतर्प्य च हुताशनम् ॥ ४ ॥ गंधमाल्यैस्तथा धूपैस्ततः संपूजये
च्छिवम् ॥ अनेन विधिनाऽभ्यर्च्य शिखितीर्थे महेश्वरम् ॥ ५ ॥ विमानेनार्कवर्णेन ह्यप्सरोगणसंवृतः ॥ गीयमानस्तु गन्धर्वै रुद्रलोकं स

१ स्थापयत्—अडभाव आर्षः । अस्थापयत् । २ संतर्प्य पितॄन्वारिणा–इ० पा० ।

गच्छति ॥ ६ ॥ शत्रुक्षयमवाप्नोति तेजस्वी जायते भुवि ॥ ७ ॥ इति श्रीस्कांदे महापुराण एकाशीतिसाहस्र्यां संहितायां पञ्चम आवन्त्यखण्डे रेवाखण्डे शिखितीर्थमाहात्म्यवर्णनंनाम द्व्यधिकद्विशततमोऽध्यायः ॥ २०२ ॥ ॥ ॥ छ ॥ ॥ ॥ श्रीमार्कंडेय उवाच ॥ ॥ ततो गच्छेद्धराधीश कोटितीर्थमनुत्तमम् ॥ यत्र सिद्धा महाभागाः कोटिसंख्या महर्षयः ॥ १ ॥ तपः कृत्वा सुविपुलमृषिभिः स्थापितः शिवः ॥ तथा कोटीश्वरी देवी चामुण्डा महिषार्दिनी ॥२॥ कृष्णपक्षे चतुर्दश्यां मासि भाद्रपदे नृप ॥ तीर्थकोटीः समाहूय मुनिभिः स्थापितः शिवः ॥३॥ तस्यां तिथौ च हस्तर्क्षं सर्वपापप्रणाशनम् ॥ तत्र तीर्थे तदा गत्वा स्नानं कृत्वा समाहितः ॥ ४ ॥ नरकादुद्धरत्याशु पुरुषानेकविंशतिम् ॥ तिलोदकप्रदानेन किमुत श्राद्धदो नरः ॥ ५ ॥ स्नानं दानं जपो होमः स्वाध्यायो देवतार्चनम् ॥ तस्य तीर्थस्य योगेन सर्वं कोटिगुणं भवेत् ॥ ॥ ६ ॥ इति श्रीस्कान्दे महापुराण एकाशीतिसाहस्र्यां संहितायां पञ्चम आवन्त्यखण्डे रेवाखण्डे कोटितीर्थमाहात्म्यवर्णनंनाम त्र्युत्तरद्विशततमोऽध्यायः ॥ २०३ ॥ ॥ छ ॥ ॥ श्रीमार्कंडेय उवाच ॥ ॥ भृगुतीर्थं ततो गच्छेत्तीर्थराजमनुत्तमम् ॥ पैतामहं महापुण्यं सर्वपातकनाशनम् ॥ १ ॥ ब्रह्मणा तत्र तीर्थे तु पुरा वर्षशतत्रयम् ॥ आराधनं कृतं शंभोः कस्मिंश्चित्कारणांतरे ॥ २ ॥ ॥ युधिष्ठिर उवाच ॥ ॥ किमर्थं मुनिशार्दूल ब्रह्मा लोकपितामहः ॥ आराधयद्देवदेवं महाभक्त्या महेश्वरम् ॥ ३ ॥ आराध्यः सर्वभूतानां जगद्भर्ता जगद्गुरुः ॥ श्रोतव्यं श्रोतुमिच्छामि महदाश्चर्यमुत्तमम् ॥ ४ ॥ धर्मपुत्रवचः श्रुत्वा मार्कंडेयो मुनीश्वरः ॥ कथयामास तद्वृत्तमितिहासं पुरातनम् ॥ ५ ॥ ॥ मार्कंडेय उवाच ॥ ॥ स्वपुत्रिकामभिगंतुमिच्छन्पूर्वं पितामहः ॥ शप्तस्तु देवदेवेन कोपाविष्टेन सत्तम ॥ ६ ॥ वेदास्तव विनश्यंति ज्ञानं च कमलासन ॥ अपूज्यः सर्वलोकानां भविष्यसि न संशयः ॥ ७ ॥ एवं दत्ते ततः शापे ब्रह्मा खेदावृतस्तदा ॥ रेवाया उत्तरे कूले स्नात्वा वर्षशतत्रयम् ॥ तोषयामास देवेशं तुष्टः प्रोवाच शंकरः ॥ ८ ॥ पूज्यस्त्वं भविता लोके प्राप्ते पर्वणिपर्वणि ॥ अहमत्र च वत्स्यामि दैवैश्च पितृभिः सह ॥ ९ ॥ ॥ ॥ श्रीमार्कंडेय उवाच ॥ ॥ तदाप्रभृति तत्तीर्थं ख्यातिं प्राप्तं पितामहात् ॥ सर्वपापहरं पुण्यं सर्वतीर्थेष्वनुत्तमम् ॥ १० ॥ तत्र भाद्रपदे मासि कृष्णपक्षे विशेषतः ॥ अमावास्यां तु यः स्नात्वा तर्पयेत्पितृदेवताः ॥ ११ ॥ पिंडदानेन चैकेन तिलतोयेन वा नृप ॥ तृप्यंति द्वादशाब्दानि पितरो नाऽत्र संशयः ॥ १२ ॥ कन्यागते तु यस्तत्र नित्यं श्राद्धप्रदो भवेत् ॥ अवाप्य तृप्तिं तत्पूर्वे वलगंति च हसंति ष ॥ १३ ॥ सर्वेषु पितृ

१ तदा गजच्छायापर्वणि इत्यर्थः ।

तीर्थेषु श्राद्धं कृत्वास्ति यत्फलम् ॥ तत्फलं समवाप्नोति दर्शे तत्र न संशयः ॥ १४ ॥ पैतामहे नरः स्नात्वा पूजयन्पार्वतीपतिम् ॥ मुच्यते
नाऽत्र सन्देहः पातकैश्चोपपातकैः ॥१५॥ तत्र तीर्थे मृतानां तु नराणां भावितात्मनाम् ॥ अनिवर्तिका गती राजन्रुद्रलोकादसंशयम ॥ १६ ॥ इति
श्रीस्कांदे महापुराण एकाशीतिसाहस्र्यां संहितायां पंचम आवन्त्यखण्डे रेवाखण्डे पैतामहतीर्थमाहात्म्यवर्णनंनाम चतुरधिकद्विशततमोऽध्यायः ॥
॥ २०४ ॥ ॥ छ ॥ ॥ श्रीमार्कंडेय उवाच ॥ ॥ गच्छेत्ततः क्षोणिनाथ तीर्थं परमशोभनम् ॥ कुर्कुरीनाम विख्यातं सर्वपापप्रणा
शनम् ॥ १ ॥ यंयं प्रार्थयते कामं पशुपुत्रधनादिकम् ॥ तं तं ददाति देवेशी कुर्कुरी तीर्थदेवता ॥ २ ॥ क्षेत्रपालो वसेत्तत्र ढौंढेशोनाम नामतः ॥
तस्य चाऽऽराधनं कृत्वा नारी वा पुरुषोऽपि वा ॥ ३ ॥ वंदनादपि राजेंद्र दौर्भाग्यं नाशमाप्नुयात् ॥ अपुत्रो लभते पुत्रमधनो धनमुत्तमम् ॥ ४ ॥
नारी नरस्तथाप्येवं लभते काममुत्तमम् ॥ स्पर्शनाद्दर्शनात्तस्य तीर्थस्य विधिपूर्वकम् ॥ ५ ॥ इति श्रीस्कांदे महापुराण एकाशीतिसाहस्र्यां
संहितायां पञ्चम आवन्त्यखण्डे रेवाखण्डे कुर्कुरीतीर्थमाहात्म्यवर्णनंनाम पंचाधिकद्विशततमोऽध्यायः ॥ २०५ ॥ ॥ छ ॥ ॥ श्रीमार्कंडेय
उवाच ॥ ॥ गच्छेत्ततः क्षोणिनाथतीर्थं परमशोभनम् ॥ सर्वपापहरं पुण्यं दशकन्येति विश्रुतम् ॥ महादेवकृतं पुण्यं सर्वकामफलप्रदम् ॥ १ ॥
तत्र तीर्थे महादेवो दशकन्या गुणान्विताः ॥ ब्रह्मणो वरयामास ह्युद्वाहेन युयोज ह ॥ २ ॥ तदाप्रभृति तत्तीर्थं दशकन्येति विश्रुतम् ॥ सर्व
पापहरं पुण्यमक्षयं कीर्त्तितं फलम् ॥ ३ ॥ तत्र तीर्थे तु यः कन्यां ददाति समलंकृताम् ॥ प्राप्नोति पुरुषो दत्त्वा यथाशक्त्या स्वलंकृताम् ॥ ४ ॥
तेन दानोत्थपुण्येन पूतात्मानो नराधिप ॥ वसंति रोमसंख्यानि वर्षाणि शिवसन्निधौ ॥ ५ ॥ ततः कालेन महता त्विह लोके नरेश्वर ॥ मानुष्यं
प्राप्य दुःष्प्राप्यं धनकोटीपतिर्भवेत् ॥ ६ ॥ तत्र तीर्थे तु यो भक्त्या स्नात्वा विप्राय कांचनम् ॥ संप्रयच्छति शांताय सोऽत्यंतं सुखमश्नुते ॥
॥ ७ ॥ वाचिकं मानसं वाऽपि कर्मजं यत्पुरा कृतम् ॥ तत्सर्वं विलयं याति स्वर्णदानेन भारत ॥ ८ ॥ नरो दत्त्वा सुवर्णं च अपि वालाग्रमात्र
कम् ॥ तत्र तीर्थे दिवं याति मृतो नाऽस्त्यत्र संशयः ॥ ९ ॥ तत्र विद्याधरैः सिद्धैर्विमानवरमास्थितः ॥ पूज्यमानो वसेत्तावद्यावदाभूतसंप्ल
वम् ॥ १० ॥ इति श्रीस्कांदे महापुराण एकाशीतिसाहस्र्यां संहितायां पञ्चम आवन्त्यखण्डे रेवाखण्डे दशकन्यातीर्थमाहात्म्यवर्णनंनाम
षडुत्तरद्विशततमोऽध्यायः ॥ २०६ ॥ ॥ छ ॥ ॥ श्रीमार्कंडेय उवाच ॥ ॥ तस्याऽग्रे पावनं तीर्थं स्वर्णबिंद्विति विश्रुतम् ॥ यत्र स्नात्वा दिवं
यांति मृताश्च न पुनर्भवम् ॥१॥ तत्र तीर्थे तु यः स्नात्वा दत्ते विप्राय कांचनम् ॥ तेन यत्तु फलं प्रोक्तं तच्छृणुष्व महीपते ॥२॥ सर्वेषामेव रत्नानां

कांचनं रत्नमुत्तमम् ॥ अग्नितेजःसमुद्भूतं तेन तत्परमं भुवि ॥ ३ ॥ तेनैव दत्ता पृथिवी सशैलवनकानना ॥ सपत्तनपुरा सर्वा कांचनं यः प्रयच्छति ॥
॥४॥ मानसं वाचिकं पापं कर्मणा यत्पुरा कृतम् ॥ तत्सर्वं नश्यति क्षिप्रं स्वर्णदानेन भारत ॥ ५ ॥ स्वर्णदानं तु यो दत्त्वा ह्यपि वालाग्रमात्रकम् ॥ तत्र
तीर्थे मृतो याति दिवं नास्त्यत्र संशयः ॥ ६ ॥ तत्र विद्याधरैः सिद्धैर्विमानवरमास्थितः ॥ पूज्यमानो वसेत्तावद्यावदाभूतसंप्लवम् ॥ ७ ॥ पूर्णे तत्र ततः
काले प्राप्य मानुष्यमुत्तमम् ॥ सुवर्णकोटिसहिते गृहे वै जायते द्विजः ॥ ८ ॥ सर्वव्याधिविनिर्मुक्तः सर्वलोकेषु पूजितः ॥ जीवेद्वर्षशतं साग्रं राजसं
सत्सु विश्रुतः ॥ ९ ॥ इति श्रीस्कांदे महापुराण एकाशीतिसाहस्र्यां संहितायां पञ्चम आवन्त्यखण्डे रेवाखण्डे सुवर्णबिंदुतीर्थमाहात्म्यवर्णनंनाम
सप्ताधिकद्विशततमोऽध्यायः ॥ २०७ ॥ ॥ छ ॥ ॥ श्रीमार्कंडेय उवाच ॥ ॥ भूमिपाल ततो गच्छेत्तीर्थं परमशोभनम् ॥ विख्यातं त्रिषु लोकेषु
पितृणामृणमोचनम् ॥ १ ॥ तत्र स्नात्वा विधानेन संतर्प्य पितृदेवताः ॥ मनुष्यश्च नृपश्रेष्ठ दानं दत्त्वाऽनृणो भवेत् ॥ २ ॥ इच्छंति पितरः सर्वे
स्वार्थहेतोः सुतं यतः ॥ पुन्नाम्नो नरकात्पुत्रोऽस्मानयं मोचयिष्यति ॥ ३ ॥ पिंडदानं जलं तात ऋणमुत्तममुच्यते ॥ पितणां तद्धि वै प्रोक्तमृणं
दैवमतः परम् ॥ ४ ॥ अग्निहोत्रं तथा यज्ञाः पशुबंधास्तथेष्टयः ॥ इति देवऋणं प्रोक्तं शृणु मानुष्यकं ततः ॥ ५ ॥ ब्राह्मणेषु च तीर्थेषु देवायतन
कर्मसु ॥ प्रतिश्रुत्य ददेत्तत्तद्व्यवहारः कृतो यथा ॥ ६ ॥ ऋणत्रयमिदं प्रोक्तं पुत्राणां धर्मनंदन ॥ सत्पुत्रास्ते तु राजेंद्र स्नाता य ऋणमोचने ॥ ७ ॥
ऋणत्रयाद्विमुच्यंते ह्यपुत्राः पुत्रिणस्तथा ॥ तस्मात्तीर्थवरं प्राप्य पुत्रेण नियतात्मना ॥ पितृभ्यस्तर्पणं कार्यं पिंडदानं विशेषतः ॥ ८ ॥
तत्र तीर्थे हुतं दत्तं गुरवस्तोषिता यदि ॥ मृतानां सप्त जन्मानि फलमक्षयमश्नुते ॥ ९ ॥ इति श्रीस्कांदे महापुराण एकाशीतिसाहस्र्यां संहितायां
पञ्चम आवन्त्यखण्डे रेवाखण्डे ऋणमोचनतीर्थमाहात्म्यवर्णनं नामाष्टोत्तरद्विशततमोऽध्यायः ॥ २०८ ॥ ॥ छ ॥ ॥ श्रीमार्कंडेय उवाच ॥
तस्यैवानंतरं पार्थ पुष्कलीतीर्थमुत्तमम् ॥ तत्र तीर्थे नरः स्नात्वा ह्यश्वमेधफलं लभेत् ॥ १ ॥ क्षमानाथं ततो गच्छेत्तीर्थं त्रैलोक्यविश्रुतम् ॥ देव
दानवगंधर्वैरप्सरोभिश्च सेवितम् ॥ २ ॥ तत्र तिष्ठति देवेशः साक्षाद्रुद्रो महेश्वरः ॥ भारेण महता जातो भारभूतिरिति स्मृतः ॥ ३ ॥ ॥ युधिष्ठिर
उवाच ॥ ॥ भारभूतीति विख्यातं तीर्थं सर्वगुणान्वितम् ॥ श्रोतुमिच्छामि विप्रेंद्र परं कौतूहलं हि मे ॥ ४ ॥ ॥ श्रीमार्कंडेय उवाच ॥ ॥ भार
भूतिसमुत्पत्तिं शृणु पांडवसत्तम ॥ विस्तरेण यथा प्रोक्ता पुरा देवेन शंभुना ॥ ५ ॥ आसीत्कृतयुगे विप्रो वेदवेदांगपारगः ॥ विष्णुशर्मेति विख्यातः
सर्वशास्त्रार्थपारगः ॥ ६ ॥ क्षमा दमो दया दानं सत्यं शौचं धृतिस्तथा ॥ विद्या विज्ञानमास्तिक्यं सर्वं तस्मिन्प्रतिष्ठितम् ॥ ७ ॥ ईदृग्गुणा हि ये

विप्रा भवंति नृपसत्तम ॥ पतितान्नरके घोरे तारयंति पितृंस्तु ते ॥ ८ ॥ इंद्रियलोलुपा विप्रा ये भवंति नृपोत्तम ॥ पतंति नरके घोरे रौरवे पाप
मोहिताः ॥ ९ ॥ ये क्षांतदांताः श्रुतिपूर्णकर्णा जितेंद्रियाः प्राणिवधान्निवृत्ताः ॥ प्रतिग्रहे संकुचिताग्रहस्तास्ते ब्राह्मणास्तारयितुं समर्थाः ॥ १० ॥
एवं गुणगणाकीर्णो ब्राह्मणो नर्मदातटे ॥ वसते ब्राह्मणैः सार्धं शिलोञ्छवृत्तिजीवनः ॥ ११ ॥ तादृशं ब्राह्मणं ज्ञात्वा देवदेवो महेश्वरः ॥ द्विज
रूपधरो भूत्वा तस्याश्रममगात्स्वयम् ॥ १२ ॥ दृष्ट्वा तं ब्राह्मणैः सार्धमुच्चरंतं पदक्रमम् ॥ अभिवादयते विप्रं स्वागतेन च पूजितः ॥ १३ ॥
प्रोवाच तं मुहूर्त्तेन ब्राह्मणो विस्मयान्वितः ॥ किमथ तद्बटो ब्रूहि ।किं करोमि तवेप्सितम् ॥ १४ ॥ ॥ बटुरुवाच ॥ ॥ विद्यार्थिनमनुप्राप्तं विद्धि
मां द्विजसत्तम ॥ ददासि यदि मे विद्यां ततः स्थास्यामि ते गृहे ॥ १५ ॥ ॥ ब्राह्मण उवाच ॥ ॥ सर्वेषामेव विप्राणां बटो त्वं गोत्र उत्तमे ॥
दानानां परमं दानं कथं विद्या च दीयते ॥ १६ ॥ गुरुशुश्रूषया विद्या पुष्कलेन धनेन वा ॥ अथवा विद्यया विद्या भवतीह फलप्रदा ॥ १७ ॥
॥ ॥ बटुरुवाच ॥ ॥ यथान्ये बालकाः स्नाताः शुश्रूषंति ह्यहर्निशम् ॥ तथाऽहं बटुभिः सार्धं शुश्रूषामि न संशयः ॥ १८ ॥ तथेति चोक्त्वा
विप्रेंद्रः पाठयंस्तं दिनेदिने ॥ वर्त्तते सह शिष्यैः स शिलोञ्छानुपहारयन् ॥१९॥ ततः कतिपयाहोभिः प्रोक्तो बटुभिरीश्वरः ॥ पचनाद्यं बटो कर्म
कुरु क्रमत आगतम् ॥ २० ॥ तथेति चोक्तो देवेशो भारग्राममुपागतः ॥ ध्यात्वा वनस्पतीः सर्वा इदं वचनमब्रवीत् ॥ २१ ॥ यावदागच्छते विप्रो
बटुभिः सह मंदिरम् ॥ अदर्शनाभिः कर्त्तव्यं तावदन्नं सुसंस्कृतम् ॥ २२ ॥ एवमुक्त्वा तु ताः सर्वा विश्वरूपो महेश्वरः ॥ क्रीडनार्थं गतस्तत्र बटुवेष
धरः पृथक् ॥२३॥ दृष्ट्वा समागतं तत्र बटुवेषधरं पृथक् ॥ धिक्त्वां च परुषं वाक्यमूचुस्ते गिरिसन्निधौ ॥२४॥ क्षुत्क्षामकंठाः सर्वे च गत्वा तु किल
मंदिरम् ॥ त्वया सिद्धन चाऽन्नेन तृप्तिं यास्यामहे वयम् ॥२५॥ तद्वृथा चिंतितं सव त्वयागत्य कृतं द्विज ॥ मिथ्याप्रतिज्ञेन सता दुरनुष्ठितमद्य ते
॥२६॥ बटुरुवाच॥संतापमनुतापं वा भोजनार्थं द्विजर्षभाः॥मा कुरुध्वं यथान्यायं सिद्धेऽन्ने गृहमेष्यथ॥२७॥बटुरुवाच॥दिनशेषेण चास्माकं पंचतां
च दिनेदिने ॥ निष्पत्तिं याति वा नेति तदसिद्धमशेषतः ॥ २८ ॥ असिद्धं सिद्धमस्माकं यत्त्वया समुदाहृतम् ॥ दृष्ट्वाऽनृतं गतास्तत्र त्वां बद्ध्वांऽ
भसि निक्षिपे ॥ २९ ॥ ॥ बटुरुवाच ॥ ॥ भोभोः शृणुद्ध्व सर्वेऽत्र सोपाध्याया द्विजोत्तमाः ॥ प्रतिज्ञां मम दुर्द्धर्षां यां श्रुत्वा विस्मयो
भवेत् ॥ ३० ॥ यदि सिद्धमिदं सर्वमन्नं स्यादाश्रमे गुरोः ॥ यूयं बध्वा मया सर्वे क्षेप्तव्या नर्मदांभसि ॥ ३१ ॥ अथवाऽन्नं न सिद्धं स्याद्भवद्भि

र्ढबन्धनेः ॥ गुरोस्तु पश्यतो बध्वा क्षेप्तव्योऽहं नर्मदाह्रदे ॥ ३२ ॥ तथेति कृत्वा ते सर्वे समयं गुरुसन्निधौ ॥ स्नात्वा जाप्यविधानेन भूतग्रामं ततो ययुः ॥ ३३ ॥ दृष्ट्वा ते विस्मयं जग्मुर्विस्तृते भक्ष्यभोजने ॥ षड्रसेन नृपश्रेष्ठ भुक्त्वा हुत्वा पृथक्पृथक् ॥ ३४ ॥ ततः प्रोवाच वचनं हृष्टपुष्टो द्विजोत्तमः ॥ वरदोऽस्मि वरं वत्स वृणु यत्तव रोचते ॥ ३५ ॥ सांगोपांगास्तु ते वेदाः शास्त्राणि विविधानि च ॥ प्रतिभास्यंति ते विप्र मदीयोऽस्तु वरस्त्वयम् ॥३६॥ प्रणम्य बटुभिः सार्धं स चिक्रीड यथासुखम् ॥ द्वितीये तु ततः प्राप्ते दिवसे नर्मदाजले ॥ ३७ ॥ क्रीडनार्थं गताः सर्वे सोपाध्याया युधिष्ठिर ॥ ततः स्मृत्वा पणं सर्वे भाषयित्वा विधानतः ॥३८॥ उपाध्यायमथोवाच नत्वा देवः कृतांजलिः॥ जले प्रक्षेपयाम्यद्य निष्प्रतिज्ञान्बटून्प्रभो ॥ ३९ ॥ तद्देवस्य वचः श्रुत्वा नष्टास्ते बटवो नृप ॥ गुरोस्तु पश्यतो राजन्धावमाना दिशो दश ॥ ४० ॥ वायुवेगेन देवेन लुं[2]ञ्जितास्ते समंततः ॥ भारं बध्वा तु सर्वेषां बटूनां च नरेश्वर ॥ ४१ ॥ शापानुग्रहको देवोऽक्षिपत्तोये यथा गृहे ॥ ततो विषादमगमद्दृष्ट्वा तान्नर्मदाजले ॥ ४२ ॥ गुरुणा बटुरुक्तोऽथ किमेतत्साहसं कृतम् ॥ एतेषां मातृपितरो बालकानां गृहेंऽगनाः ॥ ४३ ॥ यदि पृच्छंति ते बालान्क्व गतान्कथयाम्यहम् ॥ एवं स्थिते महाभाग यदि कश्चिन्मरिष्यति ॥४४॥ तदा स्वकीयजीवेन त्वं योजयितुमर्हसि ॥ मृतेषु तेषु विप्रेषु न जीवे निश्च यो मृतः ॥ ४५ ॥ ब्रह्महत्याश्च ते बह्वयो भविष्यंति मृते मयि ॥ द्विजबन्धनमात्रेण नरको भवति ध्रुवम् ॥ ४६ ॥ मरणाद्यां गतिं यासि न तां वेद्मि द्विजाधम ॥ एवमुक्तः स्मितं कृत्वा देवदेवो महेश्वरः ॥४७॥ भारभूतेश्वरे तीर्थे उज्जहार जलाद्द्विजान् ॥ मुक्त्वा भारं तु देवेन च्छादयित्वा तु तान्द्विजान्॥४८॥लिंगं प्रतिष्ठितं तत्र भारभूतेति विश्रुतम्॥मृतांस्तान्वै द्विजान्दृष्ट्वा ब्रह्महत्या निराकृता॥४९॥गतानिपञ्चवेदृष्ट्वाब्रह्महत्याशतानि वै ॥ ततः स विस्मयाविष्टो दृष्ट्वा तान्बालकान्गुरुः॥५०॥नाऽन्यस्य कस्यचिच्छक्तिरेवं स्यादीश्वरं विना॥ज्ञात्वा तं देवदेवेशं प्रणाममकरोद्द्विजः ॥५१॥ अज्ञानेन मया सत्र यदुक्तं परमेश्वर ॥ अप्रियं यत्कृतं सर्वं क्षंतव्यं तन्मम प्रभो ॥ ५२ ॥ ॥ देव उवाच ॥ ॥ भगवन्गुरुर्भवान्देवो भवान्मम पिता महः ॥ वेदगर्भ नमस्तेस्तु नास्ति कश्चिद्व्यतिक्रमः ॥५३॥ जनिता चोपनेता च यस्तु विद्यां प्रयच्छति ॥ अन्नदाता भयत्राता पंचैते पितरः स्मृताः ॥ ५४ ॥ एवमुक्त्वा जगन्नाथो विष्णुशर्माणमानतः ॥ तत्र तीर्थे जगामाऽऽशु कैलासं धरणीधरम् ॥ ५५ ॥ तदाप्रभृति तत्तीर्थं भारभूतीति विश्रु

---

१ अक्षराधिक्यमार्षम् । २ लुंजिताः—धृत्वा धृत्वा एकत्र कृताः—इत्यर्थः । ३ न जीवे निश्चयो मृतः—न जीवे-अहं न जीविष्यामि—इत्यर्थः । मृतः—स्याम्—इति निश्चयः—निश्चयेन मरिष्यामि—इति वाक्यार्थः ।

तम् ॥ विख्यातं सर्वलोकेषु महापातकनाशनम् ॥ ५६ ॥ तत्र तीर्थे पुनर्वृत्तमितिहासं ब्रवीमि ते ॥ सर्वपापहरं दिव्यमेकाग्रस्त्वं शृणुष्व तत् ॥
॥ ५७ ॥ पुरा कृतयुगस्यादौ वैश्यः कश्चिन्महामनाः ॥ सुकेश इति विख्यातस्तस्य पुत्रोऽतिधार्मिकः ॥ ५८ ॥ सोमशर्मेति विख्यातो मृतः
पृथुललोचनः ॥ स सखायं वणिक्पुत्रं कंचिच्चक्रे दरिद्रिणम् ॥ ५९ ॥ सहदेवमिति ख्यातं सर्वकर्मसु कोविदम् ॥ एकदा तु समं तेन व्यवहारम
चिंतयत् ॥ ६० ॥ सखे समुद्रयानेन गच्छावोत्तरणैः शुभैः ॥ भांडं बहु समादाय मदीये द्रव्यसाधने ॥ ६१ ॥ परं तीरं गमिष्याव उत्कर्षस्त्वा
वयोः समः ॥ इति तौ मंत्रयित्वा तु मंत्रवत्समभीप्सितम् ॥ ६२ ॥ सर्वं प्रयाणकं गृह्य ह्यारूढौ लवणोदधिम् ॥ तौ गत्वा तु परं भांडं
विक्रीय पुरतस्तदा ॥ ६३ ॥ प्राप्तौ बहु सुवर्णं च रत्नानि विविधानि च ॥ नावं तां संगतां कृत्वा पश्चात्तावारुरोहतुः ॥ ६४ ॥ नावमंतर्जले
दृष्ट्वा निशीथे स्वर्णसंभृताम् ॥ दृष्ट्वा तु सोमशर्माणमुत्संगे कृतमस्तकम् ॥ ६५ ॥ शयानमतिविश्वस्तं सहदेवो व्यचिंतयत् ॥ एष निद्रावशं
यातो मयि प्राणान्निधाय वै ॥ ६६ ॥ अस्याधीनमिदं सर्वं द्रव्यरत्नमशेषतः ॥ उत्कर्षार्द्धं तु मे दद्यात्तत्र गत्वेति वा नवा ॥ ६७ ॥ इति
निश्चित्य मनसा पापस्तं लवणोदधौ ॥ चिक्षेप सोमशर्माणं पापध्यातेन चेतसा ॥ ६८ ॥ उत्तीर्य तरणात्तस्माद्गत्वा संगृह्य तद्धनम् ॥ ततः
कतिपयाहोभिः संयुक्तः कालधर्मणा ॥ ६९ ॥ गतो यमपुरं घोरं गृहीतो यमकिंकरैः ॥ स नीतस्तेन मार्गेण यत्र संतपते रविः ॥ ७० ॥ कृत्वा
द्वादशधात्मानं संप्राप्ते प्रलये यथा ॥ सुतीक्ष्णाः कण्टका यत्र यत्र श्वानः सुदारुणाः ॥ ७१ ॥ तीक्ष्णदंष्ट्रा महाव्याला व्याघ्रा यत्र महावृकाः ॥
सुतप्ता वालुका यत्र क्षुधा तृष्णा तमो महत् ॥ ७२ ॥ पानीयस्य कथा नास्ति न च्छाया नाऽऽश्रमः क्वचित् ॥ अन्नं पानीयसहितं यावत्त
दीयते विषम् ॥ ७३ ॥ छायां संप्रार्थमानानां भृशं ज्वलति पावकः ॥ तैर्दह्यमाना बहुशो विलपंति मुहुर्मुहुः ॥ ७४ ॥ हा भ्रातर्मातः पुत्रेति
पतन्ति पथि मूर्च्छिताः ॥ इत्थंभूतेन मार्गेण स नीतो यमकिंकरैः ॥ ७५ ॥ यत्र तिष्ठति देवेशः प्रजासंयमनो यमः ॥ ते द्वारदेशे तं मुक्त्वाच
चक्षुर्यमकिंकराः ॥ ७६ ॥ बद्ध्वा तं गलपाशेन ह्यासीनं मित्रघातिनम् ॥ अवधारय देवेश बुध्यस्व यदनन्तरम् ॥ ७७ ॥ ॥ यम उवाच ॥ ॥
॥१५२॥ न तु पूर्वं मुखं दृष्टं मया विश्वासघातिनाम् ॥ ये मित्रद्रोहिणः पापास्तेषां किं शासनं भवेत् ॥ ७८ ॥ ऋषयोऽत्र विचारार्थं नियुक्ता निपुणाः
स्थिताः ॥ ते यत्र ब्रुवते तत्र क्षिपध्वं मा विचार्यताम् ॥ ७९ ॥ इत्युक्तास्ते तमादाय किंकराः शीघ्रगामिनः ॥ मुनीशांस्तत्र तान्प्रत्युस्तं निवेद्य ॥३२६॥
यमाज्ञया ॥ ८० ॥ द्विजा अनेन मित्रं स्वं प्रसुप्तं निशि घातितम् ॥ विश्वस्तं धनलोभेन को दण्डोऽस्य भविष्यति ॥ ८१ ॥ ॥ मुनय

ऊचुः ॥ ॥ अदृष्टपूर्वमस्माभिर्वदनं मित्रघातिनाम् ॥ कृत्वा पटांतरे ह्येनं शृण्वन्तु गतिमस्य ताम् ॥ ८२ ॥ ते शास्त्राणि विचार्याथ ऋषयश्च
परस्परम् ॥ आहूय यमदूतांस्तानूचुर्ब्राह्मणपुंगवाः ॥ ८३ ॥ आलोकितानि शास्त्राणि वेदाः सांगाः स्मृतीरपि ॥ पुराणानि च मीमांसा दृष्ट
मस्माभिरत्र च ॥ ८४ ॥ ब्रह्मघ्न च सुरापे च स्तेये गुर्वंगनागमे ॥ निष्कृतिर्विहिता शास्त्रे कृतघ्ने नाऽस्ति निष्कृतिः ॥ ८५ ॥ ये स्त्रीघ्नाश्च गुरु
घ्नाश्च ये बालब्रह्मघातिनः ॥ विहिता निष्कृतिः शास्त्रे कृतघ्ने नाऽस्ति निष्कृतिः ॥ ८६ ॥ वापीकूपतडागानां भेत्तारो ये च पापिनः ॥ उद्यानवा
टिकानां च छेत्तारो ये च दुर्जनाः ॥ ८७ ॥ दावाग्निदाहका ये च सततं येऽसुर्हिंसकाः[1] ॥ न्यासापहारिणो ये च गरदाः स्वामिवंचकाः ॥ ८८ ॥
मातापितृगुरूणां च त्यागिनो दोषदायिनः ॥ स्वभर्तृवंचनपरा या स्त्री गर्भप्रघातिनी ॥ ८९ ॥ विवेकरहिता या स्त्री याऽस्नाता भोजने रता ॥
द्विकालभोजनरतास्तथा वैष्णववासरे ॥ ९० ॥ तासां स्त्रीणां गतिर्दृष्टा न तु विश्वासघातिनाम् ॥ विश्वासघातिनां पुंसां मित्रद्रोहकृतां तथा॥९१॥
तेषां गतिर्न वेदेषु पुराणेषु च का कथा ॥ इति स्थितेषु पापेषु गतिरेषां न विद्यते ॥ ९२ ॥ नाऽन्या गतिर्मित्रहनने विश्वस्तघ्ने च नः श्रुतम् ॥
इतो नीत्वा यमदूता एनं विश्वस्तघातिनम् ॥ ९३ ॥ कल्पकोटिशतं साग्रं पर्यायेण पृथक्पृथक् ॥ नरकेषु च सर्वेषु त्रिंशत्कोटिषु संख्यया ॥ ९४ ॥
क्षिप्यतामेष मित्रघ्नो विचारो मा विधीयताम् ॥ इति ते वचनं श्रुत्वा किंकरास्तं निगृह्य च ॥ ९५ ॥ यत्र ते नरका घोरास्तत्र क्षेप्तुं गतास्ततः ॥
ते तमादाय हि नरके घोरे रौरवसंज्ञिते ॥ ९६॥ चिक्षिपुस्तत्र पापिष्ठं क्षिप्ते रावोऽभवन्महान् ॥ नरकस्थितभूतेषु मोक्तव्यो नैष पापकृत् ॥ ९७ ॥
अस्य संस्पर्शनादेव पीडा शतगुणा भवेत् ॥ यथा व्यथासिकाष्ठैश्च समिद्धैर्दहनात्मकैः ॥ ९८ ॥ भवति स्पर्शनात्तस्य किमेतेन कृतामलम् ॥
यथा दुर्जनसंसर्गात्सुजनो याति लाघवम् ॥ ९९ ॥ सन्निधानात्तथास्याऽऽशु क्षते क्षारावसेचनम् ॥ प्रसादः क्रियतामाशु नीयतां नरकेऽन्यतः ॥
॥ १०० ॥ एवमुक्तास्ततस्तैस्तु गतास्ते त्वशुचिं प्रति ॥ तत्र ते नारकाः संति पूर्ववत्तेऽपि चुक्रुशुः ॥ १ ॥ एवं ते किंकराः सर्वेऽपर्यटन्नरकमं
डले ॥ नरकेऽपि स्थितिस्तस्य नास्ति पापस्य दुर्मतेः ॥ २ ॥ यदा तदा तु ते सर्वे तं गृह्य यमसन्निधौ ॥ गत्वा निवेद्य तत्सर्वं यदुक्तं नारकैर्नरैः ॥
नरके न स्थितिर्यस्य तस्य किं क्रियतां वद ॥ ३ ॥ ॥ यम उवाच ॥ ॥ पापिष्ठ एष वै यातु योनिं तिर्यङ्निषेविताम् ॥ कालं मुनिभिरु
द्दिष्टः तिर्यग्योनिं प्रवेश्यताम् ॥ ४ ॥ एवमुक्ते तु वचने प्रजासंयमनेन च ॥ स गतः कृमितां पापो विष्ठासु च पृथक्पृथक् ॥ ५ ॥

१ असुर्हिंसकाः—जीवहिंसकाः—इत्यर्थः ।

ततोऽसौ दंशमशकान्पिपीलिकसमुद्भवान् ॥ यूकामत्कुणकाश्चांश्च गत्वा पक्षित्वमागतः ॥ ६ ॥ स्थावरत्वं गतः पश्चात्पाषाणत्वं
ततः परम् ॥ सरीसृपानजगरवराहमृगहस्तिनः ॥ ७ ॥ वृकश्वानखरोष्ट्रांश्च शूकरीं ग्रामजातिकाम् ॥ योनिमाश्वतरीं प्राप्य तथा महि
षसंभवाम् ॥ ८ ॥ एताश्चान्याश्च बह्वीर्वै प्राप योनीः क्रमेण वै ॥ स ता योनीरनुप्राप्य धुर्योऽभूद्भारवाहकः ॥ ९ ॥ स गृहे पार्थिवेशस्य
धार्मिकस्य यशस्विनः ॥ स दृष्ट्वा कार्त्तिकीं प्राप्तामेकदा नृपसत्तमः ॥ ११० ॥ पुरोहितं समाहूय ब्राह्मणांश्च तथा बहून् ॥ न गृहे कार्त्तिकीं कुर्य्या
देतन्मे बहुशः श्रुतम् ॥ ११ ॥ समेता कुत्र यास्याम इति ब्रूत द्विजोत्तमाः ॥ यो गृहे कार्तिकीं कुर्यात्स्नानदानादिवर्जितः ॥ १२ ॥ संवत्सरकृतात्पु
ण्यात्स बहिर्भवति श्रुतिः ॥ तस्मात्सर्वप्रयत्नेन तीर्थं सर्वगुणान्वितम् ॥ १३ ॥ सहितास्तत्र गच्छामः स्नातुं दातुं च शक्तितः ॥ एवमुक्ते तु वचने
पार्थिवेन द्विजोत्तमाः ॥ १४ ॥ ऊचुः श्रेष्ठं नृपश्रेष्ठ रेवाया उत्तरे तटे ॥ भारेश्वरेति विख्यातं मुक्तितीर्थं नृपोत्तम ॥ १५ ॥ तत्र यामो वयं सर्वे सर्व
पापक्षयावहम् ॥ एवमुक्तः स नृपतिर्गृहीत्वा प्रचुरं वसु ॥ १६ शकटं संभृतं कृत्वा तत्र युक्तः स धूर्वहः ॥ यः कृत्वा मित्रहननं गोयोनिं समुपागतः
॥ १७ ॥ इत्थं स नर्मदातीरे संप्राप्तस्तीर्थमुत्तमम् ॥ गत्वा चतुर्दशीदिने ह्युपवासकृतक्षणः ॥ १८ ॥ गत्वा स नर्मदातीरे नाम रुद्रेत्यनुस्मरन् ॥
शुचिप्रदेशाच्च मृदं मंत्रेणाऽनेन गृह्यताम् ॥ १९ ॥ उद्धृतासि वराहेण रुद्रेण शतबाहुना ॥ अहमप्युद्धरिष्यामि प्रजया बंधनेन च ॥ १२० ॥ स एवं
तां मृदं नीत्वा मुक्त्वा तीरे तथोत्तरे ॥ ददर्श भास्करं पश्चान्मंत्रेणाऽनेन चालभेत् ॥ २१ ॥ अश्वक्रांते रथक्रांते विष्णुक्रांते वसुन्धरे ॥ मृत्तिके हर
मे पापं जन्मकोटिशतार्जितम् ॥ २२ ॥ तत एवं विगाह्यापो मंत्रमेतमुदीरयेत् ॥ त्वं नर्मदे पुण्यजले तवांभः शंकरोद्भवम् ॥ २३ ॥ स्नानं प्रकुर्वतो
मेऽद्य पापं हरतु चार्जितम् ॥ स स्नात्वाऽनेन विधिना संतर्प्य पितृदेवताः ॥ २४ ॥ ययौ देवालयं पश्चादुपहारैः समन्वितः ॥ भक्त्या संचिंत्य
सान्निध्ये शकरं लोकशंकरम् ॥ २५ ॥ पुराणोक्तविधानेन पूजां समुपचक्रमे ॥ पूजाचतुष्टयं देवि शिवरात्र्यां निगद्यते ॥ २६ ॥ संस्नाप्य प्रथमे
यामे पंचगव्येन शंकरम् ॥ घृतेन पूरणं पश्चात्कृतं नृपवरेण तु ॥ २७ ॥ धूपदीपौनिवेद्याद्यं संकल्प्य च यथाविधि ॥ अर्घेणानेन देवेशं मंत्रेणानेन
शंकरम्॥२८॥नमस्ते देवदेवेश शंभो परमकारण ॥ गृहाणार्घमिमं देव संसाराघमपाकुरु ॥२९॥ वित्तानुरूपतो दत्तं सुवर्णं मंत्रकल्पितम् ॥ अग्निर्हि
देवाः सर्वे सुवर्णं च हुताशनात् ॥ १३० ॥ अतः सुवर्णदानेन प्रीताः स्युः सर्वदेवताः ॥ तदर्घं सर्वदा दातुः प्रीतो भवतु शंकरः ॥ ३१ ॥ अनेन
विधिना तेन पूजितः प्रथमे शिवः ॥ यामे द्वितीये तु पुनः पूर्वोक्तविधिना चरेत् ॥ ३२ ॥ स्नापयामास दुग्धेन गव्येन त्रिपुरांतकम् ॥ तंदुलैः

पूरणं पश्चात्कृतं लिंगस्य शूलिनः ॥ ३३ ॥ कृत्वा विधानं पूर्वोक्तं दत्तं वस्त्रयुगं सितम् ॥ श्वेतवस्त्रयुगं यस्माच्छंकरस्यातिवल्लभम् ॥ ३४ ॥ प्रीतो भवति वै शंभुर्दत्तेन श्वेतवाससा ॥ यामं तृतीयं संप्राप्तं दृष्ट्वा नृपतिसत्तमः ॥ ३५ ॥ देवं संस्नाप्य मधुना पूरणं चक्रिवांस्तिलैः ॥ तिलद्रोणप्रदानं च कुर्यान्मंत्रमुदीरयन् ॥ ३६ ॥ तिलाः श्वेतास्तिलाः कृष्णाः सर्वपापहरास्तिलाः ॥ तिलद्रोणप्रदानेन संसारश्छिद्यतां मम ॥ ३७ ॥ अनेन विधिना राजा यामिनीयामपूजनम् ॥ अतिवाद्य विनोदेन ब्रह्मघोषेण जागरम् ॥ ३८ ॥ चकार पूजनं शंभोर्बहुपुण्यप्रसाधकम् ॥ ये जागरे त्रिनेत्रस्य शिवरात्र्यां शिवस्थिताः ॥३९॥ ते यां गतिं गताः पार्थ न तां गच्छंति यज्विनः ॥ पापानि यानि कानि स्युः कोटिजन्मार्जितान्यपि ॥ ॥ १४० ॥ हरकेशवयोः स्नांति जागरे यांति संक्षयम् ॥ यावंतो निमिषा नृणां भवंति निशि जाग्रताम् ॥ ४१ ॥ निमिषेनिमिषे राजन्नश्वमेधफलं ध्रुवम् ॥ उपवासपराणां च देवायतनवासिनाम् ॥ ४२ ॥ शृण्वतां धर्ममाख्यानं ध्यायतां हरकेशवौ ॥ न तां बहुसुवर्णेन क्रतुना गतिमाप्नुयुः ॥ ॥ ४३ ॥ शिवरात्रिस्तिथिः पुण्या कार्तिकी च विशेषतः ॥ रेवाया उत्तरं कूलं तीरं भारेश्वरेति च ॥ ४४ ॥ जागृतश्चातिदुःखेन कथं पापं न हास्यति ॥ इत्थंस जागरं कृत्वा शिवरात्र्यां नरेश्वरः ॥ ४५ ॥ प्रभाते विमले गत्वा नर्मदातीरमुत्तमम् ॥ स्नापितास्तेन ते सर्वे वाहनानि गजादयः ॥ ४६ ॥ येस्तु वाहैर्गतस्तीर्थं स्नातोऽहं स्नापयामि तान् ॥ तत्र मध्यस्थितः स्नातस्तिर्यक्त्वान्निर्गतो वणिक् ॥ ४७ ॥ दानं ददौ तानुदिश्य किंचिच्छत्त्यनुरूपतः ॥ तेन वाहकृताद्दोषान्मुक्तो भवति मानवः ॥ ४८ ॥ अन्यथाऽसौ कृतो लाभः कृतो व्रजति तान्प्रति ॥ संस्नाप्य तं ततो राजा स्वयं स्नात्वा विधानतः ॥४९॥ संतर्प्य पितृदेवांश्च कृत्वा श्राद्धं यथाविधि॥कृत्वा पिंडान्पितृभ्यश्च वृषमुत्सृज्य लक्षणम् ॥१५०॥ गत्वा देवालयं पश्चाद्देवं तीर्थोदकेन च॥संस्नाप्य पंचगव्येन ततः पंचामृतेन च ॥५१॥सर्व्वौषधिजलेनैव ततः शुद्धोदकेन च॥चंदनेन सुगंधेन समालभ्य च शंकरम्॥५२॥कुंकुमैश्च सकर्पूरैर्गंधैश्च विविधैस्तथा ॥ पुष्पौघैश्च सुगंधाढ्यैश्चतुर्थं लिंगपूरणम् ॥५३॥कृतं नृपवरेणाऽत्र कुर्वता पूर्वकं विधिम्॥गोदानं च कृतं पश्चाद्विधिदृष्टेन कर्मणा ॥ ५४ ॥ धेनुके रुद्ररूपाऽसि रुद्रेण परिनिर्मिता ॥ अस्मिन्नगाधे संसारे पतंतं मां समुद्धर ॥ ५५ ॥ धेनुं स्वलंकृतां दद्यादनेन विधिना ततः ॥ क्षमाप्य देवदेवेशं ब्राह्मणान्भोजयेद्बहून् ॥ ५६ ॥ षड्विधैर्भोजनैर्भक्ष्यैर्वासोभिस्तान्समर्चयेत् ॥ दक्षिणाभिर्विचित्राभिः पूजयित्वा क्षमापयेत् ॥ ५७ ॥ स स्वयं बुभुजे पश्चात्परिवारसमन्वितः ॥ तामेव रजनीं तत्र न्यवसज्जगतीपतिः ॥ ५८ ॥ तस्य तत्रोषितस्यैवं निशीथेऽथ नरेश्वर ॥ आकाशे सोऽति शुश्राव दिव्यवाणीसमीरितम् ॥ ५९ ॥ ॥ वागुवाच ॥ ॥ राजन्समंततो लोके फलं भवति सांप्रतम् ॥

संसारसागरे ह्यत्र पतितानां दुरात्मनाम् ॥ १६० ॥ यदि संनिधिमात्रेण फलं तत्रोच्यते कथम् ॥ यदि शंतनुवंशस्य तत्रोन्मादकरं भवेत् ॥ ६१ ॥
य एष त्वद्गृहे वोढा ह्यतिभारधुरंधरः ॥ अनेन मित्रहननं पापं विश्वासघातनम् ॥ ६२ ॥ कृतं जन्मसहस्राणामतीते परिजन्मनि ॥ गतेन पाप्मना
ऽऽत्मानं नरकेषु च संस्थितिः ॥ ६३ ॥ ततो योनिसहस्रेषु गतिस्तिर्यक्षु चैव हि ॥ गोयोनिं समनुप्राप्तस्त्वद्गृहे स सुदुर्मतिः ॥ ६४ ॥ स्नापितश्च
त्वया तीर्थे ह्यस्मिन्पर्वसमागमे ॥ दृष्ट्वा पूजां त्वया कृतां कृता जागरणक्रिया ॥ ६५ ॥ तेन निष्कल्मषो जातो मुक्त्वा देहं तवाऽग्रतः ॥ स्वर्गं
प्रति विमानस्थः सोद्य राजन्गमिष्यति ॥ ६६ ॥ ॥ श्रीमार्कंडेय उवाच ॥ ॥ एवमुक्ते निपतितो धुर्यः प्राणैर्व्ययुज्यत ॥ विमानवरमारूढस्तत्क्षणा
त्समदृश्यत ॥ ६७ ॥ स तं प्रणम्य राजेंद्रमुवाच प्रहसन्निव ॥ ६८ ॥ ॥ वृष उवाच ॥ ॥ भोभो नृपवरश्रेष्ठ तीर्थमाहात्म्यमुत्तमम् ॥ यत्र
चाऽस्मद्विधस्तीर्थे मुच्यते पातकैर्नरः ॥ मया ज्ञातमशेषेण मत्समो नास्ति पातकी ॥ ६९ ॥ अतः परं किं तु कुर्यां परं तीर्थाऽनुकीर्त्तनम् ॥
भवान्माता भवान्भ्राता भवांश्चैव पितामहः ॥ १७० ॥ क्षंतव्यं प्रणतोऽस्म्यद्य यस्मिंस्तीर्थे हि मादृशाः ॥ गतिमीदृग्विधां यांति न जाने तव का
गतिः ॥ ७१ ॥ समाराध्य महेशानं संपूज्य च यथाविधि ॥ का गतिस्तव संभाष्या देवतुल्यां मम प्रभो ॥ ७२ ॥ त्वरयंति च मां ह्येते दिविस्थाः
प्रणयाद्गणाः ॥ स्वस्त्यस्तु ते गमिष्यामीत्युक्त्वा सोंऽतर्दधे क्षणात् ॥ ७३ ॥ ॥ श्रीमार्कंडेय उवाच ॥ ॥ गते चाऽदर्शनं तत्र स राजा विस्म
यान्वितः ॥ तीर्थमाहात्म्यमतुलं वर्णयन्स्वपुरं गतः ॥ ७४ ॥ इत्थंभूतं हि तत्तीर्थं नर्मदायां व्यवस्थितम् ॥ सर्वपापक्षयकरं सर्वदुःखघ्नमुत्तमम् ॥
॥ ७५ ॥ उपपापानि नश्यंति स्नानमात्रेण भारत ॥ कार्त्तिकस्य चतुर्दश्यामुपवासपरायणः ॥ ७६ ॥ चतुर्द्वा पूरयेल्लिंगं तस्य पुण्यफलं शृणु ॥
ब्रह्महत्या सुरापानं स्तेयं गुर्वंगनागमः॥७७॥महापापानि चत्वारि चतुर्भिर्यांति संक्षयम् ॥ सोश्वमेधस्य यज्ञस्य लभते फलमुत्तमम् ॥७८॥ कार्त्तिके
शुक्लपक्षस्य चतुर्दश्यामुपोषितः॥ स्वर्णदानाच्च तत्तीर्थे यज्ञस्य लभते फलम् ॥७९॥ अष्टम्यां वा चतुर्दश्यां वैशाखे मासि पूर्ववत् ॥ दीपं पिष्टमयं कृत्वा
पितॄन्सर्वान्विमोक्षयेत् ॥ १८० ॥ तत्र यद्दीयते दानमपि वालाग्रमात्रकम् ॥ तदक्षयफलं सर्वमेवमाह महेश्वरः ॥८१॥ भारभूत्यां मृतानां तु नराणां
भावितात्मनाम् ॥ अनिवर्त्तिका गती राजञ्छिवलोकान्निरन्तरम् ॥ ८२ ॥ अथवा लोकवृत्त्यर्थं मर्त्यलोकं जिगीषति ॥ सांगवेदज्ञविप्राणां जायते
विमलेकुले ॥ ८३ ॥ धनधान्यसमायुक्तो वेदविद्यासमन्वितः ॥ सर्वव्याधिविनिर्मुक्तो जीवेच्च शरदां शतम् ॥ ८४ ॥ पुनस्तत्तीर्थमासाद्य अक्षयं

१ तत्र—वृषयोनिगते—वैश्ये—इत्यर्थः ।

पदमाप्नुयात् ॥ ८९ ॥ एतत्पुण्यं पापहरं कथितं ते नृपोत्तम ॥ भारतेदं महाख्यानं शृणु चैव ततः परम् ॥ १८६ ॥ इति श्रीस्कांदे महापुराण एकाशीतिसाहस्र्यां संहितायां पञ्चम आवंत्यखण्डे रेवाखण्डे भारभूतितीर्थमाहात्म्यवर्णनंनाम नवाधिकद्विशततमोऽध्यायः ॥ २०९ ॥ ॥ ॥ छ ॥ ॥ श्रीमार्कंडेय उवाच ॥ ॥ तस्यैवानंतरं तात पुंखिलं तीर्थमुत्तमम् ॥ तत्र तीर्थे पुरा पुंखः पार्थ सिद्धिमुपागतः ॥ १ ॥ जामदग्न्यो महातेजाः क्षत्रियांतकरः प्रभुः ॥ तपः कृत्वा सुविपुलं नर्मदोत्तरतीरभाक् ॥ २ ॥ ततः प्रभृति विख्यातं पुंखतीर्थं नरेश्वर ॥ तत्र तीर्थे तु यः स्नात्वा ह्याराध्य परमेश्वरम् ॥ ३ ॥ इहलोके बलैर्युक्तः परे मोक्षमवाप्नुयात् ॥ देवान्पितॄन्समभ्यर्च्य पितॄणामनृणी भवेत् ॥ ४ ॥ तत्र तीर्थे नरो यस्तु प्राणत्यागं करोति वै ॥ अनिवर्तिका गतिस्तस्य रुद्रलोकादसंशयम् ॥ ५ ॥ तत्र तीर्थे नरः स्नात्वा हयमेधफलं लभेत् ॥ ६ ॥ तत्र तीर्थे नरो यस्तु ब्राह्मणान्भोजयेन्नृप ॥ एकस्मिन्भोजिते विप्रे कोटिर्भवति भोजिता ॥ ७ ॥ तत्र तीर्थे तु यः कश्चित्पूजयेद्वृषभध्वजम् ॥ वाजपेयस्य यज्ञस्य फलं प्राप्नोत्यसंशयम् ॥ ८ ॥ इति श्रीस्कांदे महापुराण एकाशीतिसाहस्र्यां संहितायां पञ्चम आवन्त्यखण्डे रेवाखण्डे पुंखिलतीर्थमाहात्म्यवर्णनंनाम दशोत्तरद्विशततमोऽध्यायः ॥ २१० ॥ ॥छ॥ ॥ श्रीमार्कंडेय उवाच ॥ ॥ आश्चर्यभूतं लोकस्य देवदेवेन यत्कृतम् ॥ तत्ते सर्वं प्रवक्ष्यामि नर्मदातटवासिनाम् ॥ १ ॥ द्विजान्मुकृपणान्देवः कुष्ठी भूत्वा ययाच ह ॥ श्राद्धकाले तु संप्राप्ते रक्तगंधानुलेपनः ॥२॥ स्रवद्वहुदगात्रस्तु मक्षिकाकृमिसंवृतः ॥ दुश्चर्मा दुर्मुखो गन्धी प्रस्खलंश्च पदेपदे ॥ ३ ॥ ब्राह्मणावसथं गत्वा स्खलन्द्वारेऽब्रवीदिदम् ॥ भोभो गृहपते त्वद्य ब्राह्मणैः सह भोजनम् ॥ ४ ॥ त्वद्गृहे कर्तुमिच्छामि ह्येभिः सह सुसंस्कृतम् ॥ ततस्तं ब्राह्मणं दृष्ट्वा यजमानसमन्विताः ॥ ५ ॥ स्रवंतं सर्वगात्रेषु धिग्धिगित्येवमब्रुवन् ॥ निर्गच्छस्वाऽऽशु दुर्गंध गृहाच्छीघ्रं द्विजाधम ॥ ६ ॥ अभोज्यमेतत्सर्वेषां दर्शनात्तव सत्कृतम् ॥ एवमेव तथेत्युक्त्वा देवदेवो महेश्वरः ॥ ७ ॥ जगामाऽऽकाशममलं दृश्यमानो द्विजोत्तमैः ॥ गते चाऽदर्शनं देवे स्नात्वाऽभ्युक्ष्य समंततः ॥ ८ ॥ भुंजतेऽस्म द्विजा राजन्यावत्पात्रे पृथक्पृथक् ॥ यत्रयत्र च पश्यंति तत्रतत्र कृमिर्बहुः ॥ ९ ॥ दृष्ट्वा विस्मयमापन्नाः सर्वे किमिति चाऽब्रुवन् ॥ ततः कश्चिदुवाचेदं ब्राह्मणो गुणवानजः ॥ १० ॥ योगीन्द्रः शंकया तत्र बहुविप्रसमागमे ॥ योऽत्र पूर्वं समायातः स योगी परमेश्वरः ॥११॥ तस्येदं क्रीडितं मन्ये भर्त्सितस्य विपाकजम् ॥ फलं भवति नाऽन्यस्य ह्यतिथेः शास्त्रनिश्चयात् ॥ १२ ॥ संपूज्य परमात्मा वै ह्यतिथिश्च विशेषतः ॥ श्राद्धकाले तु संप्राप्तमतिथिं यो न पूजयेत् ॥ १३ ॥ पिशाचा राक्षसास्तस्य तद्विलुंपन्त्यसंशयम् ॥ रूपान्वितं विरूपं वा मलिनं मलिनांबरम् ॥ १४ ॥ योगीन्द्रं श्वपचं

वाऽपि अतिथिं न विचारयेत् ॥ तच्छ्रुत्वा वचनं तस्य यजमानपुरोगमाः ॥ १५ ॥ ब्राह्मणा द्विजमन्वेष्टुं धाविताः सर्वतोदिशम् ॥ तावत्कथंचि
त्केनाऽपि गहनं वनमाश्रितः ॥ १६ ॥ दृष्टो दृष्ट इति प्रोक्तं तेन ते सर्वे आगताः ॥ ततः पश्यंति तं विप्रं स्थाणुवन्निश्चलं स्थितम् ॥ १७ ॥
क्रंदते न चलति स्पन्दते न च पश्यति ॥ जल्पंति करुणं केचित्स्तुवंति च तथाऽपरे ॥ १८ ॥ वाग्भिः सततमिष्टाभिः स्तूयमानस्त्रिलोचनः ॥
क्षुधार्दितानां देवेश ब्राह्मणानां विशेषतः ॥ विनष्टमन्नं सर्वेषां पुनः संकर्तुमर्हसि ॥ १९ ॥ श्रुत्वा तु वचनं तेषां ब्राह्मणानां युधिष्ठिर ॥ परया
कृपया देवः प्रसन्नस्तानुवाच ह ॥ २० ॥ मया प्रसन्नेन महानुभावास्तदेव वोऽन्नं विहितं सुधेव ॥ भुंजंतु विप्राः सह बन्धुभृत्यैरर्चंतु नित्यं मम
मंडलं च ॥ २१ ॥ ततश्चायतनं पार्थ देवदेवस्य शूलिनः ॥ मुण्डिनामेति विख्यातं सर्वपापहरं शुभम् ॥ कार्तिक्यां तु विशेषेण गयातीर्थेन तत्स
मम् ॥ २२ ॥ इति श्रीस्कांदे महापुराण एकाशीतिसाहस्र्यां संहितायां पञ्चम आवन्त्यखण्डे रेवाखंडे मुण्डितीर्थमाहात्म्यवर्णनंनामैकादशोत्तर
द्विशततमोऽध्यायः ॥ २११ ॥ ॥ छ ॥ ॥ श्रीमार्कंडेय उवाच ॥ ॥ अथान्यत्संप्रवक्ष्यामि देवस्य चरितं महत् ॥ श्रुतमात्रेण येनाऽऽशु
सर्वपापैः प्रमुच्यते ॥ १ ॥ भिक्षुरूपं परं कृत्वा देवदेवो महेश्वरः ॥ एकशालां गतो ग्रामं भिक्षार्थी क्षुत्पिपासितः ॥ २ ॥ अक्षसूत्रोद्यतकरो भस्म
गुंठितविग्रहः ॥ स्फुरत्त्रिशूलो विश्वेशो जटाकुण्डलभूषितः ॥ ३ ॥ कृत्तिवासा महाकायो महाहिकृतभूषणः ॥ वादयन्वै डमरुकं डिंडिमप्रतिमं
शुभम् ॥ ४ ॥ कपालपाणिर्भगवान्बालकैर्बहुभिर्वृतः ॥ क्वचिद्गायन्हसंश्चैव नृत्यन्वादन्क्वचित्क्वचित् ॥ ५ ॥ यत्रयत्र गृहे देवो लीलया डिंडमं न्यसे
त् ॥ भाराक्रांतं गृहं पार्थ तत्रतत्र विनश्यति ॥६॥ एवं संप्रचरन्देवो वेष्टितो बहुभिर्जनैः ॥ दृश्यादृश्येन रूपेण निर्जगाम बहिः प्रभुः ॥ ७ ॥ इतश्चे
तश्च धावन्तं न पश्यंति यदा जनाः ॥ विस्मितास्ते स्थिताः शम्भुर्भविष्यति ततोऽस्तुवन् ॥ ८ ॥ तेषां तु स्तुवतां भक्त्या शंकरं जगतां
पतिम् ॥ डिंडिरूपो हि भगवांस्तदाऽसौ प्रत्यदृश्यत ॥ ९ ॥ तदाप्रभृति देवेशो डिंडिमेश्वर उच्यते ॥ दर्शनात्स्पर्शनाद्राजन्सर्वपापैः प्रमु
च्यते ॥ १० ॥ इति श्रीस्कांदे महापुराण एकाशीतिसाहस्र्यां संहितायां पंचम आवन्त्यखंडे रेवाखण्डे एकशालडिंडिमेश्वरतीर्थमाहात्म्यवर्णनं
नाम द्वादशोत्तरद्विशततमोऽध्यायः ॥ २१२ ॥ छ ॥ ॥ श्रीमार्कंडेय उवाच ॥ ॥ पुनरन्यत्प्रवक्ष्यामि देवस्य चरितं महत् ॥ श्रुतमात्रेण येनैव
सर्वपापैः प्रमुच्यते ॥ १ ॥ अबालो बालरूपेण ग्रामण्यैर्बालकैः सह ॥ आमलैः क्रीडते शंभुस्तत्ते वक्ष्यामि भारत ॥ २ ॥ सर्वैस्तैरामलाः क्षिप्ता ये
ते देवेन पांडव ॥ आनीतास्तत्क्षणादेव ततः पश्चात्क्षिपेद्धरः ॥ ३ ॥ यावद्गत्वा दिशो दिग्भ्य आगच्छन्ति पृथक्पृथक् ॥ तावत्तमामलं भूतं पश्यं

ति परमेश्वरम् ॥ ४ ॥ तृतीये चैव यत्कर्म देवदेवस्य धीमतः ॥ स्थानानां परमं स्थानमामलेश्वरमुत्तमम् ॥ ५ ॥ तेन पूजितमात्रेण प्राप्यते परमं पदम् ॥६॥ इति श्रीस्कांदे महापुराण एकाशीतिसाहस्र्यां संहितायां पंचम आवन्त्यखंडे रेवाखंडे आमलेश्वरतीर्थमाहात्म्यवर्णनंनाम त्रयोदशोत्तरद्विशततमोऽध्यायः ॥२१३॥ ॥छ॥ ॥ श्रीमार्कंडेयउवाच ॥ ॥ चतुर्थं संप्रवक्ष्यामि देवस्य चरितं महत्॥श्रुतमात्रेण येनैव सर्वपापैः प्रमुच्यते ॥ १ ॥ कपाली कांथिको भूत्वा यथा स व्यचरन्महीम् ॥ पिशाचै राक्षसैर्भूतैर्डाकिनीयोगिनीवृतः ॥२॥ भैरवं रूपमास्थाय प्रेतासनपरिग्रहः॥त्रैलोक्यस्याऽभयं दत्त्वा चचार विपुलं तपः ॥ ३ ॥ आषाढी तु कृता तत्र ह्याषाढीनाम विश्रुतम् ॥ कंथा मुक्ता ततोऽन्यत्र देवेन परमेष्ठिना ॥४॥ तदाप्रभृति राजेंद्र स कंथेश्वर उच्यते ॥ तस्य दर्शनमात्रेण ह्यश्वमेधफलं लभेत् ॥ ५ ॥ देवो मार्गे पुनस्तत्र भ्रमते च यदृच्छया ॥ विकीणाति बलाकारो दृष्ट्वा चोक्तो हरेण तु ॥ ६ ॥ यदि भद्र न चेत्कोपं करोषि मयि सांप्रतम् ॥ बलाभिर्भर मे लिंगं ददामि बहु ते धनम् ॥ ७ ॥ एवमुक्तोऽथ देवेन स वणिग्लोभमोहितः ॥ योजयामास बलका लिंगे चोत्तमम‌ध्यमान् ॥ ८ ॥ तावद्यावत्क्षयं सर्वे गताः काले सुसंचिताः ॥ स्थितं समुन्नतं लिंगं दृष्ट्वा शोकमुपागमत् ॥ ९ ॥ कृत्वा तु खंडखंडानि स देवः परमेश्वरः॥ उवाच प्रहसन्वाक्यं तं दृष्ट्वा गतसाध्वसम्॥१०॥न च मे पूरितं लिंगं यास्यामि यदि मन्यसे ॥ ददामि तत्र वित्तं ते यदि लिंगं प्रपूरितम् ॥ ११ ॥ ॥ वणिगुवाच ॥ ॥ अधन्योकृतपुण्योऽहं निग्राह्यः परमेश्वर ॥ तव प्रियम कुर्वाणः शोचिष्ये शाश्वतीः समाः ॥१२॥ एतच्छ्रुत्वा वचस्तस्य वणिक्पुत्रस्य भारत ॥ असंक्षयं धनं दत्त्वा स्थितस्तत्र महेश्वरः ॥ १३ ॥ तदाप्रभृति राजेंद्र बलाकैरिव भूषितम् ॥ प्रत्ययार्थं स्थितं लिंगं लोकानुग्रहकाम्यया ॥ १४ ॥ देवेन रचितं पार्थ क्रीडया सुप्रतिष्ठितम् ॥ देवमार्गमिति ख्यातं त्रिषु लोकेषु विश्रुतम् ॥ पश्यन्प्रपूजयन्वाऽपि सर्वपापैः प्रमुच्यते ॥ १५ ॥ देवमार्गे तु यो गत्वा पूजयेद्बलाकेश्वरम् ॥ पंचायतनमासाद्य रुद्रलोकं स गच्छति ॥ १६ ॥ देवमार्गे मृतानां तु नराणां भावितात्मनाम् ॥ न भवेत्पुनरावृत्ती रुद्रलोकात्कदाचन ॥ १७ ॥ देवमार्गस्य माहात्म्यं भक्त्या श्रुत्वा नरोत्तम ॥ मुच्यते सर्वपापेभ्यो नाऽत्र कार्या विचारणा ॥ १८ ॥ इति श्रीस्कांदे महापुराण एकाशीतिसाहस्र्यां संहितायां पञ्चम आवंत्यखण्डे रेवाखण्डे श्रीकपालतीर्थमाहात्म्यवर्णनंनाम चतुर्दशोत्तरद्विशततमोऽध्यायः ॥ २१४ ॥ ॥छ॥ ॥ श्रीमार्कंडेय उवाच ॥ ॥ शृंगितीर्थं ततो गच्छेन्मोक्षदं सर्वदेहिनाम् ॥ मृतानां तत्र राजेंद्र मोक्षप्राप्तिर्न संशयः ॥ १ ॥ तत्रैव पिंडदानेन पितॄणामनृणो

भवेत् ॥ तेन पुण्येन पूतात्मा लभेद्राणेश्वरीं गतिम् ॥ २ ॥ इति श्रीस्कांदे महापुराण एकाशीतिसाहस्र्यां संहितायां पञ्चम आवंत्यखंडे रेवा
खण्डे शृंगितीर्थमाहात्म्यवर्णनंनाम पंचदशोत्तरद्विशततमोऽध्यायः ॥ २१५ ॥ ॥ छ ॥ ॥ श्रीमार्कंडेय उवाच ॥ ॥ अषाढीतीर्थमागच्छे
त्ततो भूपालनंदन ॥ कामिकं रूपमास्थाय स्थितो यत्र महेश्वरः ॥ १ ॥ चातुर्युगमिदं तीर्थं सर्वतीर्थेष्वनुत्तमम् ॥ तत्र स्नात्वा नरो राजन्रुद्रस्या
नुचरो भवेत् ॥ २ ॥ तत्र तीर्थे तु यः कश्चित्कुरुते प्राणमोक्षणम् ॥ अनिवर्तिका गतिस्तस्य रुद्रलोकादसंशयम् ॥ ३ ॥ इति श्रीस्कांदे महापुराण
एकाशीतिसाहस्र्यां संहितायां पञ्चम आवन्त्यखण्डे रेवाखंडे अषाढीतीर्थमाहात्म्यवर्णनंनाम षोडशोत्तरद्विशततमोऽध्यायः ॥ २१६ ॥
॥ ॥ छ ॥ ॥ श्रीमार्कंडेय उवाच ॥ ॥ एरंडीसंगमं गच्छेत्सुरासुरनमस्कृतम् ॥ तत्तु तीर्थं महापुण्यं महापातकनाशनम् ॥ १ ॥ उप
वासपरो भूत्वा नियतेंद्रियमानसः ॥ तत्र स्नात्वा विधानेन मुच्यते ब्रह्महत्यया ॥ २ ॥ तत्र तीर्थे तु यो भक्त्या प्राणत्यागपरो भवेत् ॥ अनिव
र्त्तिका गतिस्तस्य रुद्रलोकादसंशयम् ॥ ३ ॥ इति श्रीस्कांदे महापुराण एकाशीतिसाहस्र्यां संहितायां पञ्चम आवन्त्यखण्डे रेवाखण्डे
एरंडीतीर्थमाहात्म्यवर्णनंनाम सप्तदशोत्तरद्विशततमोऽध्यायः ॥ २१७ ॥ ॥ छ ॥ ॥ श्रीमार्कंडेय उवाच ॥ ॥ ततो गच्छेद्धराधीश
तीर्थं परमशोभनम् ॥ जमदग्निरिति ख्यातं यत्र सिद्धो जनार्दनः ॥ १ ॥ ॥ युधिष्ठिर उवाच ॥ ॥ कथं सिद्धो द्विजश्रेष्ठ वासुदेवो जगद्गुरुः ॥
मानुषं रूपमास्थाय लोकानां हितकाम्यया ॥ २ ॥ एतत्सर्वं यथान्यायं देवदेवस्य चक्रिणः ॥ चरितं श्रोतुमिच्छामि कथ्यमानं त्वयाऽनघ ॥ ३ ॥
॥ ॥ श्रीमार्कंडेय उवाच ॥ ॥ आसीत्पूर्वं महाराज हैहयाधिपतिर्महान् ॥ कार्त्तवीर्य इति ख्यातो राजा बाहुसहस्रवान् ॥ ४ ॥ हस्त्यश्वरथसं
पन्नः सर्वशस्त्रभृतां वरः ॥ वेदविद्व्रतस्नातः सर्वभूताभयप्रदः ॥ ५ ॥ माहिष्मत्याः पतिः श्रीमान्राजा ह्यक्षौहिणीपतिः ॥ स कदाचिन्मृगान्हंतुं निर्ज
गाम महाबलः ॥ ६ ॥ बहुभिर्दिवसैः प्राप्तो भृगुकच्छमनुत्तमम् ॥ जमदग्निर्महातेजा यत्र तिष्ठति तापसः ॥ ७ ॥ रेणुकासहितः श्रीमान्सर्वभूता
भयप्रदः ॥ तस्य पुत्रोऽभवद्रामः साक्षान्नारायणः प्रभुः ॥ ८ ॥ सर्वक्षत्रगुणैर्युक्तो ब्रह्मविद्ब्राह्मणोत्तमः ॥ तोषयन्परया भक्त्या पितरौ
परमार्थवत् ॥ ९ ॥ तं तदा चार्जुनं दृष्ट्वा जमदग्निः प्रतापवान् ॥ चरंतं मृगयां गत्वा ह्यातिथ्येन न्यमंत्रयत् ॥ १० ॥ ॥१३०॥
॥१५६॥ तथेति चोक्त्वा स नृपः सभृत्यबलवाहनः ॥ जगाम चाऽऽश्रमं पुण्यमृषेस्तस्य महात्मनः ॥ ११ ॥ तत्क्षणादेव संपन्नं श्रिया परमया वृतम् ॥
विस्मयं परमं तत्र दृष्ट्वा राजा जगाम ह ॥ १२ ॥ गतमात्रस्तु सिद्धेन परमान्नेन भोजितः ॥ सभृत्यबलवान्राजा ब्राह्मणेन यदृच्छया ॥ किमेतदिति

यप्रच्छ कारणं शक्तिमेव च ॥ १३ ॥ कामधेनोः प्रभावं तं ज्ञात्वा प्राह ततो द्विजम् ॥ दक्षिणां देहि मे विप्र कल्मषां धेनुमुत्तमाम् ॥ १४ ॥ शतं शतसहस्राणामयुतं नियुतं परम् ॥ भूषितानां च धेनूनां ददामि तव चार्बुदम् ॥ १५ ॥ ॥ जमदग्निरुवाच ॥ ॥ अयुतैः प्रयुतैर्नाऽहं शतकोटिभिरुत्तमाम् ॥ कामधेनुमिमां तात न दद्मि प्रतिगम्यताम् ॥ १६ ॥ एवमुक्तः स राजेंद्रस्तेन विप्रेण भारत ॥ क्रोधसंरक्तनयन इदं वचनमब्रवीत् ॥ १७ ॥ यस्येदृशः कामचारो मय्यपि द्विजपांसन ॥ अहं ते पश्यतस्तस्मान्नयामि सुरभिं गृहाद् ॥ १८ ॥ ॥ द्विज उवाच ॥ ॥ कः क्रीडति सरोषेण निर्भयो हि महाहिना ॥ मृत्युदंष्ट्रांतरेणाऽपि मम धेनुं नयेत यः ॥१९॥ एवमुक्त्वा महादण्डं ब्रह्मदंड मिवाऽपरम् ॥ गृहीत्वा परम क्रुद्धो जमदग्निरुवाच ह ॥ २० ॥ यस्याऽस्ति शक्तिस्तेजो वा क्षत्रियस्य कुलाऽधमः ॥ धेनुं नयतु मे सद्यः क्षीणायुः सपरिच्छदः ॥ २१ ॥ एतच्छ्रुत्वा वचः क्रूरं हैहयः शतशो वृतः ॥ धावमानः क्षितितले ब्रह्मदंडहतोऽपतत् ॥ २२ ॥ हुंकृतेन ततो धेन्वाः खड्गपाशासिपाणयः ॥ निर्गच्छंतः प्रदृश्यंते कल्मषायाः सहस्रशः ॥ २३ ॥ नासापुटाग्राद्रोमाग्रात्किराता मागधा गुदात् ॥ रंध्रांतरेषु चोत्पन्नाः शतशोथ सहस्रशः ॥ २४ ॥ एवमन्योऽन्यमाहत्य हैहयष्टंकणान्दहन् ॥ विनाशं सह विप्रेण गता ह्यर्जुनतेजसा ॥ २५ ॥ कार्त्तवीर्यो जयं लब्ध्वा संख्ये हत्वा द्विजोत्तमम् ॥ जगाम स्वां पुरीं हृष्टः कृतांतवशमोहितः ॥ २६ ॥ ततस्त्वरान्वितः प्राप्तः पश्चाद्रामो गते रिपौ ॥ आक्रंदमानां जननीं ददर्श पितुरंतिके ॥ २७ ॥ ॥ राम उवाच ॥ ॥ केनेदमात्मनाशाय ह्यज्ञानात्साहसं कृतम् ॥ मम तातं जिघांसुर्यो द्रष्टुं मृत्युमिहेच्छति ॥ २८ ॥ ततः सा रामवाक्येन गतसत्त्वेव विह्वला ॥ उदरं करयुग्मेन ताडयंती ह्युवाच तम् ॥ २९ ॥ अर्जुनेन नृशंसेन क्षत्रियैरपरैः सह ॥ इहाऽऽगत्य पिता तेन निहतो बाहुशालिना ॥ ॥ ३० ॥ तं पश्य निहतं तातं गतासुं गतचेतसम् ॥ संस्कृत्य विधिवत्पुत्र तर्पयस्व यथातथम् ॥ ३१ ॥ एतच्छ्रुत्वा स वचनं जननीमभिवाद्य ताम् ॥ प्रतिज्ञामकरोद्यां तां शृणुष्व च नराधिप ॥ ३२ ॥ त्रिःसप्तकृत्वः पृथिवीं निःक्षत्रियकुलान्वयाम् ॥ स्नात्वा च तेषामसृजा तर्पयिष्यामि ते पतिम् ॥ ३३ ॥ तस्यापि परशुना बाहून्कार्त्तवीर्यस्य दुर्मतेः ॥ च्छित्वा पास्यामि रुधिरमिति सत्यं शृणुष्व मे ॥ ३४ ॥ एवं प्रतिज्ञां कृत्वाऽसौ जामदग्न्यः प्रतापवान् ॥ क्रोधेन महताऽऽविष्टा संस्कृत्य पितरं ततः॥ ३५ ॥ माहिष्मतीं पुरीं रामो जगाम क्रोधमूर्च्छितः॥ च्छित्वा बाहुवनं तस्य हत्वा तं क्षत्रियाधमम् ॥ ३६ ॥ जगाम क्षत्रियांताय पृथिवीमवलोकयन् ॥ सप्तद्वीपार्णवयुतां सशैलवनकाननाम् ॥ ३७ ॥ पूर्वतः पश्चिमामाशां दक्षिणोत्तरतः कुरून् ॥ समंतपंचके पंच चकार रुधिरह्रदान् ॥ ३८ ॥ स तेषु रुधिरांभस्सु ह्रदेषु क्रोधमूर्च्छितः ॥ पितॄन्संतर्प्पयामास

रुधिरेणेति नः श्रुतम् ॥ ३९ ॥ अथर्चीकादयोपेत्य पितरो ब्राह्मणर्षभम् ॥ तं क्षमस्वेति जगदुस्ततः स विरराम ह ॥ ४० ॥ तेषां समीपे यो
देशो ह्रदानां रुधिरांभसाम् ॥ समंतपंचकमिति पुण्यं तत्परिकीर्त्तितम् ॥ ४१ ॥ निवर्त्त्य कर्मणस्तस्मात्पितॄन्प्रोवाच पांडव ॥ रामः परम
धर्मात्मा यदिदं रुधिरं मया ॥ ४२ ॥ क्षिप्तं पंचसु तीर्थेषु तद्भूयात्तीर्थमुत्तमम् ॥ तथेत्युक्त्वा तु ते सर्वे पितरोऽदृश्यतां गताः ॥ ४३ ॥
एवं रामस्य संसर्गो देवमार्गे युधिष्ठिर ॥ सर्वपापक्षयकरो दर्शनात्स्पर्शनान्नृणाम् ॥ ४४ ॥ रेणुकाप्रत्ययार्थाय अद्यापि पितृदेवताः ॥ दृश्यंते देव
मार्गस्थाः सर्वपापक्षयंकराः ॥ ४५ ॥ तत्र तीर्थे तु राजेंद्र नर्मदोदधिसंगमे ॥ स्थानं कृत्वा विधानेन मुच्यंते पातकैर्नराः ॥ ४६ ॥ कुशाग्रेणाऽपि
कौंतेय न स्पृष्टव्यो महोदधिः ॥ अनेन तत्र मंत्रेण स्नातव्यं नृपसत्तम ॥ ४७ ॥ नमस्ते विष्णुरूपाय नमस्तुभ्यमपां पते ॥ सान्निध्यं कुरु देवेश
सागरे लवणांभसि ॥ ४८ ॥ ॥ इति स्पर्शनमन्त्रः ॥ ॥ अग्निश्च तेजो मृडया च देहे रेतोऽथ विष्णुरमृतस्य नाभिः ॥ एतद्ब्रुवन्पांडव सत्य
वाक्यं ततोऽवगाहेत पतिं नदीनाम् ॥ ४९ ॥ पंचरत्नसमायुक्तं फलपुष्पाक्षतैर्युतम् ॥ मंत्रेणाऽनेन राजेंद्र दद्यादर्घं महोदधेः ॥ ५० ॥ सर्वरत्ननि
धानस्त्वं सर्वरत्नाकराकरः ॥ सर्वामरप्रधानेश गृहाणार्घं नमोऽस्तु ते ॥५१॥ इत्यर्घमन्त्रः ॥ आजन्मजनितात्पापान्मामुद्धर महोदधे ॥ याव्द्यार्चितो
रत्ननिधे पर्वतान्पार्वणोत्तम ॥ ॥ इति विसर्जनमन्त्रः ॥ ॥५२॥ कोऽपरः सागराद्देवात्स्वर्गद्वारविपाटन ॥ तत्र सागरपर्यन्तं महातीर्थमनुत्तमम् ॥
॥५३॥ जामदग्न्येन रामेण तत्र देवः प्रतिष्ठितः॥ यत्र देवाः सगन्धर्वा मुनयः सिद्धचारणाः॥५४॥उपासते विरूपाक्षं जमदग्निमनुत्तमम्॥रेणुकां चैव
ये देवीं पश्यंति भुवि मानवाः ॥ ५५ ॥ प्रियवासे शिवे लोके वसन्ति कालमीप्सितम् ॥ तत्र स्नात्वा नरो राजंस्तर्पयन्पितृदेवताः ॥ ५६ ॥ तारयेन्न
रकाद्घोरात्कुलानां शतमुत्तरम् ॥ स्नात्वा दत्त्वाऽत्र सहिताः श्रुत्वा वै भक्तिपूर्वकम् ॥ ५७ ॥ इति श्रीस्कांदे महापुराण एकाशीतिसाहस्र्यां संहि
तायां पञ्चम आवन्त्यखण्डे रेवाखण्डे जामदग्न्यतीर्थमाहात्म्यवर्णनंनामाष्टादशाधिकद्विशततमोऽध्यायः ॥ २१८ ॥ ॥ छ ॥ ॥ श्रीमार्क
डेय उवाच ॥ ॥ नर्मदादक्षिणे कूले तीर्थं कोटीश्वरं परम् ॥ यत्र स्नानं च दानं च सर्वं कोटिगुणं भवेत् ॥ १ ॥ तत्र देवाः सगन्धर्वा ऋषयो
॥१५७॥ ये तथाऽमलाः ॥ कोटितीर्थे परां सिद्धिं संप्राप्ता भुवि दुर्लभाम् ॥ २ ॥ स्थापितश्च महादेवस्तत्र कोटीश्वरो नृप ॥ तं दृष्ट्वा देवदेवेशं सिद्धिं प्राप्नो ॥३३१॥
त्यनुत्तमाम ॥ ३ ॥ तत्र तीर्थे तु यत्किंचिच्छुभं वा यदि वाऽशुभम् ॥ क्रियते तन्नृपश्रेष्ठ सर्वं कोटिगुणं भवेत् ॥ ४ ॥ तत्र दक्षिणमार्गस्था ये
केचिन्मुनिसत्तमाः ॥ सिद्धा मृताः पदं यांति पितृलोकं ध्रुवं हि ते ॥ ५ ॥ उत्तरं नर्मदाकूलं ये श्रेष्ठा मुनिपुंगवाः ॥ देवलोकं गताः पूर्वमिति

शास्त्रस्य निश्चयः ॥ ६ ॥ इति श्रीस्कांदे महापुराण एकाशीतिसाहस्त्र्यां संहितायां पञ्चम आवंत्यखंडे रेवाखण्डे कोटितीर्थमाहात्म्यवर्णनंनामै कोनविंशदधिकद्विशततमोऽध्यायः ॥ २१९ ॥ ॥ छ ॥ ॥ श्रीमार्कंडेय उवाच ॥ ॥ ततो गच्छेद्धराधीश लोटणेश्वरमुत्तमम् ॥ उत्तरे नर्मदाकूले सर्वपातकनाशनम् ॥ १ ॥ तत्क्षणादेव तत्सर्वं सप्तजन्मार्जितं त्वघम् ॥ नश्यते देवदेवस्य दर्शनादेव तन्नृप ॥ २ ॥ बाल्यात्प्रभृति यत्पापं यौवने चाऽपि यत्कृतम् ॥ तत्सर्वं विलयं याति देवदेवस्य दर्शनात् ॥ ३ ॥ ॥ युधिष्ठिर उवाच ॥ ॥ आश्चर्यभूतं लोकेषु नर्मदाचरितं महत् ॥ त्वया वै कथितं विप्र सकलं पापनाशनम् ॥ ४ ॥ यदेकं परमं तीर्थं सर्वतीर्थफलप्रदम् ॥ श्रोतुमिच्छामि तत्सर्वं दयां कृत्वा वदाऽऽशु मे ॥ ५ ॥ ये केचिद्दुर्लभाः प्रश्नास्त्रिषु लोकेषु सत्तम ॥ त्वत्प्रसादेन ते सर्वे श्रुता मे सह बांधवैः ॥ ६ ॥ एतमेकं परं प्रश्नं सर्वप्रश्नविदां वर ॥ श्रुत्वाऽहं त्वत्प्रसादेन यत्र यामि सबांधवः ॥ ७ ॥ ॥ श्रीमार्कंडेय उवाच ॥ ॥ साधुसाधु महाप्राज्ञ यस्य ते मतिरीदृशी ॥ दुर्लभं त्रिषु लोकेषु तस्य ते नाऽस्ति किंचन ॥ ८ ॥ धर्ममर्थं च कामं च मोक्षं च भरतर्षभ ॥ काले काले च यो वेत्ति कर्त्तव्यस्तेन धीमता ॥ ९ ॥ तस्मात्ते संप्रवक्ष्यामि प्रश्नस्यास्योत्तरं शुभम् ॥ यच्छ्रुत्वा सर्वपापेभ्यो मुच्यन्ते भुवि मानवाः ॥ १० ॥ नर्मदा सरितां श्रेष्ठा सर्वतीर्थमयी शुभा ॥ विशेषः कथितस्तस्या रेवासागरसंगमे ॥ ११ ॥ आगच्छन्तीं नृपश्रेष्ठ दृष्ट्वा रेवां महोदधिः ॥ प्रणम्य च पुनर्देवीं संगमे रेवया सह ॥ १२ ॥ संचिंत्य मनसा केयमिति मां वै सरिद्वरा ॥ ज्ञात्वा संचिंत्य मनसा रेवां लिंगोद्भवां पराम् ॥ १३ ॥ लुठन्वै सम्मुखस्तात गतो रेवां महोदधिः ॥ समुद्रे नर्मदा यत्र प्रविष्टाऽस्ति महानदी ॥ १४ ॥ तत्र देवाधिदेवस्य समुद्रे लिंगमुत्थितम् ॥ लिंगोद्भूता महाभागा नर्मदा सरितां वरा ॥ १५ ॥ लयं गता तत्र लिंगे तेन पुण्यतमा हि सा ॥ नर्मदायां वसन्नित्यं नर्मदांबु पिबन्सदा ॥ दीक्षितः सर्वयज्ञेषु सोमपानं दिनेदिने ॥ १६ ॥ संगमे तत्र यः स्नात्वा लोटणेश्वरमर्चयेत् ॥ सोऽश्वमेधस्य यज्ञस्य फलं प्राप्नोति मानवः ॥ १७ ॥ वाचिकं मानसं पापं कर्मणा यत्कृतं नृप ॥ लोटणेश्वरमासाद्य सर्वं विलयतां व्रजेत् ॥ १८ ॥ कार्त्तिक्यां तु विशेषेण कथितं शंकरेण तु ॥ तच्छृणुष्व नृपश्रेष्ठ सर्वपापापनोदनम् ॥ १९ ॥ संप्राप्तां कार्त्तिकीं दृष्ट्वा गत्वा तत्र नृपोत्तम ॥ चतुर्दश्यामुपोष्यैव स्नात्वा वै नर्मदाजले ॥ २० ॥ संतर्प्य पितृदेवांश्च श्राद्धं कृत्वा यथाविधि ॥ रात्रौ जागरणं कुर्यात्संपूज्य लोटणेश्वरम् ॥ २१ ॥ सफलं जीवितं तस्य सफलं तस्य चेष्टितम् ॥ पंगवस्ते न सन्देहो जन्म तेषां निरर्थकम् ॥ २२ ॥ एकाग्रमनसा येस्तु न दृष्टो लोटणेश्वरः ॥ पिशाचत्वं वियोनित्वं न भवेत्तस्य वै कुले ॥ २३ ॥ संगमे तत्र यो गत्वा स्नानं कृत्वा यथा

विधि ॥ पुण्येश्चैव तथा कुर्याद्गीतैर्नृत्यैः प्रबोधनम्[1] ॥ २४ ॥ ततः प्रभातां रजनीं दृष्ट्वा नत्वा महोदधिम् ॥ आमन्त्र्य स्नानवि
धिना स्नानं तत्र तु कारयेत् ॥ २५ ॥ ॐनमो विष्णुरूपाय तीर्थनाथाय ते नमः ॥ सान्निध्यं कुरु मे देव समुद्र लवणांऽ
भसि ॥ २६ ॥ ॥ इत्यामंत्रणमन्त्रः ॥ ॥ अग्निश्च तेजो मृडया च देहो रेतोऽधा विष्णुरमृतस्य नाभिः ॥ एवं ब्रुवन्पांडव सत्यवाक्यं ततोऽवगाहेत
पतिं नदीनाम् ॥ २७ ॥ ॥ इति स्नानमन्त्रः ॥ ॥ आजन्मशतसाहस्रं यत्पापं कृतवान्नरः ॥ सकृत्स्नानाद्व्यपोहेत पापौघं लवणांभसि ॥
॥ २८ ॥ अन्यथा हि कुरुश्रेष्ठ देवयोनिरसौ विभुः ॥ कुशाग्रेणाऽपि विबुधैर्न स्प्रष्टव्यो महार्णवः ॥ २९ ॥ सर्वरत्नप्रधानस्त्वं सर्वरत्नाकराकर ॥
सर्वामरप्रधानेश गृहणार्घं नमोऽस्तु ते ॥ ३० ॥ ॥ इति अर्घमन्त्रः ॥ ॥ पितृदेवमनुष्यांश्च संतर्प्य तदनंतरम् ॥ उत्तीर्य तीरे तस्यैव
पंचभिर्द्विजपुंगवैः ॥ ३१ ॥ श्राद्धं समाचरेत्पश्चाल्लोकपालानुरूपिभिः ॥ कृत्वाऽग्रे लोकपालांस्तु प्रतिष्ठाप्य यथाविधि ॥ ३२ ॥ संपूज्य च यथान्यायं
तानेव ब्राह्मणैः सह ॥ सुकृतं दुष्कृतं पश्चात्तेभ्यः सर्वं निवेदयेत् ॥ ३३ ॥ बाल्यात्प्रभृति यत्पापं कृतं वार्धकयौवने ॥ प्रख्यापयित्वा तेभ्योऽग्रे लोक
पालान्निमंत्रयेत् ॥ ३४ ॥ बाल्यात्प्रभृति यत्किंचित्कृतमाजन्मतोऽशुभम् ॥ विप्रेभ्यः कथितं सर्वं तत्सान्निध्यं स्थितेषु मे ॥ ३५ ॥ इत्युक्त्वा स
लुठेत्पश्चात्तेभ्योऽग्रेण च सम्मुखम् ॥ अनुमान्य च तान्पंच पश्चात्स्नानं समाचरेत् ॥ ३६ ॥ श्राद्धं च कार्यं विधिवत्पितृभ्यो नृपसत्तम ॥ एवं
कृते नृपश्रेष्ठ सर्वपापक्षयो भवेत् ॥ ३७ ॥ जिज्ञासार्थं तु यः कश्चिदात्मानं ज्ञातुमिच्छति ॥ शुभाऽशुभं च यत्कर्म तस्य निष्ठामिमां शृणु ॥
॥ ३८ ॥ स्नात्वा तत्र महातीर्थे लुठमानो व्रजेन्नरः ॥ पापकर्मान्यतो याति धर्मकर्मा व्रजेन्नदीम् ॥ ३९ ॥ पापकर्मा ततो ज्ञात्वा पापं मे पूर्वसंचि
तम् ॥ स्नात्वा तीर्थवरे तस्मिन्दानं दद्याद्यथाविधि ॥ ४० ॥ लोटणेश्वरमभ्यर्च्य सर्वपापैः प्रमुच्यते ॥ अवक्रगमनं गत्वा मुच्यते सर्वपातकैः ॥
॥ ४१ ॥ तस्मात्सर्वप्रयत्नेन ज्ञात्वैवं नृपसत्तम ॥ स्नातव्यं मानवैस्तत्र यत्र संनिहितो हरः ॥ ४२ ॥ एवं स्नात्वा विधानेन ब्राह्मणान्वेदपारगान् ॥
पूजयेत्पृथिवीपाल सर्वपापोपशांतये ॥ ४३ ॥ एवंगुणविशिष्टं हि तत्तीर्थं नृपसत्तम ॥ तस्य तीर्थस्य माहात्म्यं शृणुष्वैकमना नृप ॥ ४४ ॥ तत्र
॥१५८॥ तीर्थे नरः स्नात्वा संतर्प्य पितृदेवताः ॥ श्राद्धं यः कुरुते तत्र पितॄणां भक्तिभावितः ॥ ४५ ॥ दानं ददाति विप्रेभ्यो गोभूतिलहिरण्यकम् ॥ षष्टि
वर्षसहस्राणि कोटिवर्षशतानि च ॥ ४६ ॥ विमानवरमारूढः स्वर्गलोके महीयते ॥ नर्मदासर्वतीर्थेभ्यः स्नाने दाने च यत्फलम् ॥ ४७ ॥ तत्फलं

---

१ प्रबोधनम्–जागरम्–इत्यर्थः ।

समवाप्नोति रेवासागरसंगमे ॥ सुवर्णं रजतं ताम्रं मणिमौक्तिकभूषणम् ॥ ४८ ॥ गोवृषं च महीं धान्यं तत्र दत्त्वाऽक्षयं फलम् ॥ शुभस्याप्यशुभ
स्याऽपि तत्र तीर्थे न संशयः ॥ ४९ ॥ तत्र तीर्थे नरः कश्चित्प्राणत्यागं युधिष्ठिर ॥ करोति भक्त्या विधिवत्तस्य पुण्यफलं शृणु ॥ ५० ॥ कोटि
वर्षं तु वर्षाणां क्रीडित्वा शिवमंदिरे ॥ वेदवेदांगविद्विप्रो जायते विमले कुले ॥ ५१ ॥ पुत्रपौत्रसमृद्धोऽसौ धनधान्यसमन्वितः ॥ सर्वव्याधिविनि
र्मुक्तो जीवेच्च शरदांशतम् ॥ ५२ ॥ अपि द्वादशयात्रासु सोमनाथे यदर्चिते ॥ कार्त्तिक्यां कृत्तिकायोगे तत्पुण्यं लोटणेश्वरे ॥५३॥ गया गंगा कुरु
क्षेत्रे नैमिषे पुष्करे तथा ॥ तत्पुण्यं लभते पार्थ लोटणेश्वरदर्शनात् ॥ ५४ ॥ यः शृणोति नरो भक्त्या पठ्यमानमिदं शुभम् ॥ सर्वपापविनिर्मुक्तो
रुद्रलोकं स गच्छति ॥ ५५ ॥ इति श्रीस्कान्दे महापुराण एकाशीतिसाहस्र्यां संहितायां पञ्चम आवन्त्यखण्डे रेवाखण्डे लोटणेश्वरतीर्थमाहा
त्म्यवर्णनंनाम विंशत्युत्तरद्विशततमोऽध्यायः ॥ १२० ॥ ॥ छ ॥ ॥ श्रीमार्कंडेय उवाच ॥ ततो गच्छेत्तु राजेंद्र रेवाया दक्षिणे तटे ॥ क्रोश
द्वयांतरे तीर्थं मातृतीर्थादनुत्तमम् ॥ १ ॥ नाम्ना हंसेश्वरं पुण्यं वैमनस्यविनाशनम् ॥ कश्यपस्य कुले जातो हंसो दाक्षायणीसुतः ॥ २ ॥ ब्रह्मणो
वाहनं जातः पुरा तप्त्वा तपो महत् ॥ सैकदा विधिनिर्देशं विना वैयग्र्यमास्थितः ॥ ३ ॥ अभिभूतः शिवगणैः प्रणनाश युधिष्ठिर ॥ दक्षयज्ञप्रम
थने कांदिशीको विधिं विना ॥ ४ ॥ ब्रह्मणा संस्मृतोऽप्याशु नायाति स यदा खगः ॥ तदा तं शप्तवान्ब्रह्मा पातयामास वै पदात् ॥ ५ ॥ ततः स
शप्तमात्मानं मत्वा हंसस्त्वरान्वितः ॥ पितामहमुपागम्य प्रणिपत्येदमब्रवीत् ॥ ६ ॥ ॥ हंस उवाच ॥ ॥ तिर्यग्योनिसमुत्पन्नं भवाञ्छप्तुं न
चार्हति ॥ स्वभाव एव तिर्यक्षु विवेकविकलं मनः ॥ ७ ॥ तथापि देव पापोऽस्मि यदहं स्वामिनं त्यजे ॥ किं तु धावद्भिरत्युग्रैर्गणैः शार्वैः पिता
मह ॥ सहसाहं भयाक्रांतस्त्रस्तस्त्यक्त्वा पलायितः ॥८॥ अद्यापि भयमेवाहं पश्यन्नस्मि विभो पुरः ॥ तेन स्मृतोऽपि भवता नाव्रजं भवदंतिके ॥
॥ ९ ॥ ॥ श्रीमार्कंडेय उवाच ॥ ॥ इति ब्रुवन्नेव हि धातुरग्रे हंसः श्वसत्यक्षिपूज्यः सुदीनः ॥ तिर्यञ्चं मां पापिनं मूढबुद्धिं प्रभो पुरः पतितं पाहि
पाहि ॥ १० ॥ एको देवस्त्वं हि सर्गस्य कर्ता नानाविधं सृष्टमेतत्त्वयैव ॥ अहं सृष्टस्त्वीदृशो यत्त्वया वै सोऽयं दोषो धातरद्धा तवैव ॥ ११ ॥
शापस्य वानुग्रहस्यापि शक्तस्त्वत्तो नान्यः शरणं कं व्रजामि ॥ सेवाधर्माद्विच्युतं दासभूतं चपेटैर्हतव्यं वै तात मां त्राहि भक्तम् ॥ १२ ॥ विद्या
विद्ये त्वत्त एवाविरास्तां धर्माधर्मौ सदसद्दुर्युनिशे च ॥ नानाभावाञ्जगतस्त्वं विधत्सेऽस्तं त्वामेकं शरणं वै प्रपद्ये ॥१३॥ एकोऽसि बहुरूपोऽसि
नानाचित्रैककर्मतः ॥ निष्कर्माखिलकर्मासि त्वामतः शरणं व्रजे ॥ १४ ॥ नमोनमो वरेण्याय वरदाय नमोनमः ॥ नमो धात्रे विधात्रे

च शरण्याय नमोनमः ॥ १५ ॥ शिक्षाक्षरवियुक्तेयं वाणी मे स्तौति किं विभो ॥ का शक्तिः किं परिज्ञानमिदमुक्तं क्षमस्व मे ॥ १६ ॥
॥ ॥ श्रीमार्कंडेय उवाच ॥ ॥ एवं वदति हंसे वै ब्रह्मा प्राह प्रसन्नधीः ॥ शिक्षा दत्ता तवैवेयं मा विषादं कृथाः खग ॥ १७ ॥ तपसा शोध
यात्मानं यथा शापांतमाप्नुयाः ॥ रेवासेवां कुरु स्नात्वा स्थापयित्वा महेश्वरम् ॥ अचिरेणैव कालेन ततः संस्थानमाप्स्यसि ॥ १८ ॥ यश्चेष्ट्वा
बहुभिर्यज्ञैः समाप्तवरदक्षिणैः ॥ गोस्वर्णकोटिदानैश्च तत्फलं स्थापिते शिवे ॥ १९ ॥ ब्रह्मघ्नो वा सुरापो वा स्वर्णहृद्गुरुतल्पगः ॥ रेवातीरे शिवं
स्थाप्य मुच्यते सर्वपातकैः ॥ २० ॥ तस्माद्धर्गसरित्तीरे स्थापयित्वा त्रियंबकम् ॥ वियुक्तः सर्वदोषैस्त्वं यास्यसे पदमुत्तमम् ॥ २१ ॥ एवमुक्तः स
विधिना हृष्टतुष्टः खगोत्तमः ॥ तथेत्युक्त्वा जगामाशु नर्मदातीरमुत्तमम् ॥ २२ ॥ तपस्तप्त्वा कियत्कालं स्थापयामास शंकरम् ॥ २३ ॥ स्व
नाम्ना भरतश्रेष्ठ हंसेश्वरमनुत्तमम् ॥ पूजयित्वा परं स्थानं प्राप्तवान्खगसत्तमः ॥ २४ ॥ तत्र हंसेश्वरे तीर्थे गत्वा स्नात्वा युधिष्ठिर ॥ पूजयेत्परमे
शानं स पापैः परिमुच्यते ॥ २५ ॥ स्तुवन्नेकमना देवं न दैन्यं प्राप्नुयात्कचित् ॥ श्राद्धं दीपप्रदानं च ब्राह्मणानां च भोजनम् ॥ दत्त्वा शक्त्या
नृपश्रेष्ठ स्वर्गलोके महीयते ॥ २६ ॥ त्रिकालमेककालं वा यो भक्त्या पूजयेच्छिवम् ॥ नवप्रसूतां धेनुं च दत्त्वा पार्थ द्विजोत्तमे ॥ षष्टिवर्षसहस्राणि
शिवलोके महीयते ॥२७॥ इति श्रीस्कांदे महापुराण एकाशीतिसाहस्र्यां संहितायां पञ्चम आवन्त्यखंडे रेवाखंडे हंसेश्वरतीर्थमाहात्म्यवर्णनंनामैक
विंशदधिकद्विशततमोऽध्यायः ॥ २२१ ॥ ॥ छ ॥ ॥ श्रीमार्कंडेय उवाच ॥ ॥ ततः क्रोशांतरे गच्छेत्तिलादं तीर्थमुत्तमम् ॥ तिलप्राशनकृद्यत्र
जाबालिः शुद्धिमाप्तवान् ॥ १ ॥ पितृमातृपरित्यागी भ्रातुर्भार्याभिलाषकृत् ॥ पुत्रविक्रयकृत्पापश्छलकृद्गुरुणा सह ॥ २ ॥ एवं दोषसमाविष्टो यत्र
यत्रापि गच्छति ॥ तत्र तत्रापि धिक्कारं लभते सत्सु भारत ॥ न कोऽपि संगतिं धत्ते तेन सार्द्धं सभास्वपि ॥ ३ ॥ इति लज्जान्वितो विप्रः काले
न महता नृप ॥ चिंतामवाप महतीमगतिज्ञो हि पावने ॥ ४ ॥ चकार सर्वतीर्थानि रेवां चाप्यवगाहयत् ॥ ५ ॥ अणिवापांतमासाद्य दक्षिणे नर्म
दातटे ॥ तस्थौ यत्र व्रती पार्थ जाबालिः प्राशयंस्तिलान्॥६॥तिलैरेकाशनं कुर्वंस्तथैवैकांतराशनम् ॥ त्र्यहषड्द्वादशाहाशी पक्षमासाशनस्तथा ॥
॥१५९॥ ॥ ७ ॥ कृच्छ्रचांद्रायणादीनि व्रतानि च तिलैरपि ॥ तिलादत्वमनुप्राप्तो ह्यब्दद्वासप्ततिं क्रमात् ॥८॥ कालेन गच्छता तस्य प्रसन्नोऽभवदीश्वरः ॥ ॥३३३॥
प्रादादिहामुत्रिकीं तु शुद्धिं सालोक्यमात्मकम् ॥ ९ ॥ तेन स स्थापितो देवः स्वनाम्ना भरतर्षभ ॥ तिलादेश्वरसंज्ञां च प्राप लोकादपि प्रभुः ॥
॥ १० ॥ तदा प्रभृति विख्यातं तीर्थं पापप्रणाशनम् ॥ तत्र तीर्थे नरः स्नात्वा चतुर्दश्यष्टमीषु च ॥ ११ ॥ उपवासपरः पार्थ तथैव हरिवासरे ॥

तिलहोमी तिलोद्वर्ती तिलस्नायी तिलोदकी ॥ १२ ॥ तिलदाता च भोक्ता च नानापापैः प्रमुच्यते ॥ तिलैरापूरयेल्लिंगं तिलतैलेन दीपदः ॥ रुद्रलोकमवाप्नोति पुनात्यासप्तमं कुलम् ॥ १३ ॥ तिलपिंडप्रदानेन श्राद्धे नृपतिसत्तम ॥ विकर्मस्थाश्च गच्छंति गतिमिष्टां हि पूर्वजाः ॥ १४ ॥ स्वर्गलोकस्थिताः श्राद्धैर्ब्राह्मणानां च भोजनैः ॥ अक्षयां तृप्तिमासाद्य मोदंते शाश्वतीः समाः ॥ १५ ॥ पितुः कुलं मातृकुलं तथा भार्याकुलं नृप ॥ कुलत्रयं समुद्धृत्य स्वर्गं नयति वै नरः ॥ १६ ॥ इति श्रीस्कान्दे महापुराण एकाशीतिसाहस्र्यां संहितायां पञ्चम आवन्त्यखंडे रेवाखण्डे तिलादेश्वरतीर्थमाहात्म्यवर्णनंनाम द्वाविंशदधिकद्विशततमोऽध्यायः ॥ २२२ ॥ ॥ छ ॥ ॥ मार्कंडेय उवाच ॥ ॥ ततः क्रोशांतरे पार्थ वासवं तीर्थमुत्तमम् ॥ वसुभिः स्थापितं तत्र स्थित्वा वै द्वादशाब्दकम् ॥ १ ॥ धरो ध्रुवश्च सोमश्च आपश्चैवानिलोऽनलः ॥ प्रत्यूषश्च प्रभासश्च वसवोऽष्टाविमे पुरा ॥ २ ॥ पितृशापपरिक्लिष्टा गर्भवासाय भारत ॥ नार्मदं तीर्थमासाद्य तपश्चक्रुर्यतेंद्रियाः ॥ ३ ॥ आराधयंतः परमं भवानीपतिमव्ययम् ॥ द्वादशाब्दानि राजेंद्र ततस्तुष्टो महेश्वरः ॥ ४ ॥ प्रत्यक्षः प्रददौ तेभ्यस्त्वभीष्टं वरमुत्तमम् ॥ ततः स्वनाम्ना संस्थाप्य वसवस्तं महेश्वरम् ॥ जग्मुराकाशमाविश्य प्रसन्ने सति शंकरे ॥ ५ ॥ ततः प्रभृति विख्यातं तीर्थं तद्वासवाह्वयम् ॥ तस्मिंस्तीर्थे महाराज यो भक्त्या पूजयेच्छिवम् ॥ यथालब्धोपहारैश्च दीपं दद्यात्प्रयत्नतः ॥ ६ ॥ शुक्लपक्षे तदाष्टम्यां प्रत्यहं वापि शक्तितः ॥ अष्टौ वर्षसहस्राणि स वसेच्छिवसंनिधौ ॥ ७ ॥ ततः शिवालयं याति गर्भवासं न पश्यति ॥ पुष्पैर्वा पल्लवैर्वापि फलैर्धान्यैस्तथापि वा ॥ ८ ॥ पूजयेद्देवमीशानं स दैन्यं नाप्नुयात्क्वचित् ॥ सर्वशोकविनिर्मुक्तः स्वर्गलोके महीयते ॥ ९ ॥ एकाहमपि कौंतेय यो वसेद्वासवेश्वरे ॥ पापराशिं विनिर्धूय भानुवद्दिवि मोदते ॥ १० ॥ विप्रांश्च भोजयेद्भक्त्या दद्याद्वासांसि दक्षिणाम् ॥ ११ ॥ इति श्रीस्कांदे महापुराण एकाशीतिसाहस्र्यां संहितायां पञ्चम आवन्त्यखण्डे रेवाखण्डे वासवेश्वरतीर्थमाहात्म्यवर्णनंनाम त्रयोविंशत्यधिकद्विशततमोऽध्यायः॥ २२३ ॥ छ ॥ ॥ मार्कंडेय उवाच ॥ ॥ ततः क्रोशांतरे पार्थ तीर्थं कोटीश्वरं परम् ॥ यत्र स्नानं च दानं च जपहोमार्चनादिकम् ॥ भक्त्या कृतं नरैस्तत्र सर्वं कोटिगुणं भवेत् ॥ १ ॥ तत्र देवाः सगन्धर्वा ऋषयः सिद्धचारणाः ॥ जलधिं प्रति गच्छंति नर्मदां वीक्षितुं किल ॥ २ ॥ मिलिताः कोटिशो राजन्रेवासागरसंगमे ॥ विनोदमतुलं दृष्ट्वा रेवार्णवसमागमे ॥ ३ ॥ स्नात्वा शिवं च संस्थाप्य पूजयित्वा महेश्वरम् ॥ कोटीश्वराभिधानं तु स्वस्वभक्त्या विधानतः ॥ ४ ॥ कोटीतीर्थे परां सिद्धिं संप्राप्ताः सर्वतोषणात् ॥ तेन तत्पुण्यमतुलं सर्वतीर्थेषु चोत्तमम् ॥ ५ ॥ तत्र तीर्थे तु यत्किंचिच्छुभं वा यदि वाऽशुभम् ॥ क्रियते नृपशार्दूल सर्वं कोटिगुणं भवेत् ॥ ६ ॥

तत्र तीर्थे तु मार्गस्था ये केचिद्दषिसत्तमाः ॥ सिद्धामृतपदं यांति पितृलोकं तथोत्तमम् ॥ ७ ॥ उत्तरे नर्मदातीरे दक्षिणे चाश्रिताश्च ये ॥ देवलोकं गतास्तत्र इति मे निश्चिता मतिः ॥ ८ ॥ बिल्वार्कपुष्पैर्धत्तूरकुशकाशप्रसूनकैः ॥ ऋतूद्भवैस्तथान्यैश्च पूजयित्वा महेश्वरम्॥९॥नानोपचारैर्विधिवन्मंत्रपूर्वं युधिष्ठिर ॥ धूपदीपार्घनैवेद्यैस्तोषयित्वा च धूर्जटिम् ॥ १० ॥ शिवलोकमवाप्नोति यावदिंद्राश्चतुर्दश ॥ पौषकृष्णाष्टमीयोगे विशेषः पूजने स्मृतः ॥ ११ ॥ नित्यं च नृपतिश्रेष्ठ चतुर्दश्यष्टमीषु च ॥ शिवमभ्यर्च्य विप्रांश्च भोजयेद्भक्तितो वरान् ॥ १२ ॥ इति श्रीस्कांदे महापुराण एकाशीतिसाहस्र्यां संहितायां पञ्चम आवंत्यखण्डे रेवाखण्डे कोटीश्वरतीर्थमाहात्म्यवर्णनंनाम चतुर्विंशत्यधिकद्विशततमोऽध्यायः ॥ २२४ ॥

॥ ॥ छ ॥ ॥ श्रीमार्कंडेय उवाच ॥ ॥ ततः क्रोशांतरे गच्छेदलिकातीर्थमुत्तमम् ॥ अलिकानाम गांधर्वी कुशीला कुटिलाशया ॥ १ ॥ चित्रसेनस्य दौहित्री विद्यानंदमृषिं गता ॥ वव्रे तं स्वीकृता तेन दशवर्षाणिं तं श्रिता ॥ २ ॥ पतिं जघान तं सुप्तं कस्मिंश्चित्कारणांतरे ॥ गत्वा निवेदयामास पितरं रत्नवल्लभम् ॥ ३ ॥ पित्रा मात्रा च संत्यक्ता बहुभिर्भर्त्सिता नृप ॥ गर्भघ्नी त्वं पतिघ्नी त्वमिति दर्शय मा मुखम् ॥ ४ ॥ ब्रह्मघ्नी याहि पापिष्ठे परित्यक्ता गृहाजद्व ॥ ५ ॥ ॥ मार्कंडेय उवाच ॥ ॥ इति दुःखान्विता मूढा ताभ्यां निर्भर्त्सिता सती ॥ तनुं त्यक्तुं मनश्चक्रे प्राप्य तीर्थांतरं क्वचित् ॥ ६ ॥ संपृच्छ्यमाना तीर्थानि ब्राह्मणेभ्यो युधिष्ठिर ॥ श्रुत्वा पापहरं तीर्थं रेवासागरसंगमे ॥ ७ ॥ तत्र पार्थ तपश्चक्रे निराहारा जितव्रता ॥ कृच्छ्रातिकृच्छ्रपाराकमहासांतपनादिभिः ॥ ८ ॥ चांद्रायणैर्ब्रह्मकूर्चैः कर्शयामास वै तनुम् ॥ एवं वर्षशतं सार्द्धं व्यतीतं तपसा नृप ॥ ९ ॥ तस्या विशुद्धिमिछंत्याः शिवध्यानार्चनादिभिः ॥ ततः कतिपयाहोभिस्तस्या ज्ञात्वा हठं परम् ॥ परितुष्टः शिवः प्राह पार्वत्या परिनोदितः ॥ १० ॥ ॥ ईश्वर उवाच ॥ ॥ पुत्रि मा साहसं कार्षीः शुद्धदेहासि सांप्रतम् ॥ तुष्टोऽहं तपसा तेऽद्य वरं वरय वांछितम् ॥ ११ ॥ ॥ अलिकोवाच ॥ ॥ यदि तुष्टोऽसि देवेश वरार्हा यद्यहं मता ॥ नानापापाभितप्ताया देहि शुद्धिं परां मम ॥ १२ ॥ त्वं मे नाथो ह्यनाथायास्त्वमेव जगतां गुरुः ॥ दीनानाथसमुद्धर्त्ता शरण्यः सर्वदेहिनाम् ॥ १३ ॥ ॥ ईश्वर उवाच ॥ ॥ त्वं भद्रे शुद्धदेहासि
॥१६०॥ मा किंचिदनुशोचिथाः ॥ स्वनाम्ना स्थापयित्वेह मां ततः स्वर्गमेष्यसि ॥ १४ ॥ इत्युक्त्वा देवदेवेशस्तत्रैवांतरधीयत ॥ अलिकापि ततो भक्त्या ॥३३४॥
स्नात्वा संस्थाप्य शंकरम् ॥ १५ ॥ दत्त्वा दानं च विप्रेभ्यो लोकमाप महोत्कटम् ॥ पितरं च समासाद्य मातरं च युधिष्ठिर ॥ १६ ॥ तैश्च सन्मानिता प्रीत्या बन्धुभिः सालिका ततः ॥ विमानवरमारूढा दिव्यमालान्विता नृप ॥ १७ ॥ गौरीलोकमनुप्राप्य सखित्वेद्य पे मोदते ॥

ततः प्रभृति तत्पार्थ विख्यातमलिकेश्वरम् ॥ १८ ॥ तत्र तीर्थे तु या नारी पुरुषो वा युधिष्ठिर ॥ स्नात्वा संपूजयेद्भक्त्या महादेवमुमायुतम् ॥
॥ १९ ॥ स पापैर्विविधैर्मुक्तो लोकमाप्नोति शांकरम् ॥ मानसं वाचिकं पापं कायिकं यत्पुरा कृतम् ॥ २० ॥ सर्वं तद्विलयं याति भोजयित्वा
द्विजान्सदा ॥ दीपं दत्त्वा च देवाग्रे न रोगैः परिभूयते ॥ २१ ॥ धूपपात्रं विमानं च घण्टां कलशमेव च ॥ दत्त्वा देवाय राजेंद्र शार्क्कं लोक
मवाप्नुयात् ॥ २२ ॥ इति श्रीस्कांदे महापुराण एकाशीतिसाहस्र्यां संहितायां पञ्चम आवंत्यखंडे रेवाखंडे रेवासागरसंगमेऽलिकेश्वरतीर्थमाहा
त्म्यवर्णनंनाम पंचविंशत्यधिकद्विशततमोऽध्यायः ॥ २२५ ॥ ॥ छ ॥ ॥ मार्कंडेय उवाच ॥ ॥ ततः क्रोशांतरे पुण्यं तीर्थं तद्विमले
श्वरम् ॥ यत्र स्नानेन दानेन जपहोमार्चनादिभिः ॥ १ ॥ विमलेश्वरमाराध्य यो यदिच्छेत्स तल्लभेत् ॥ स्वर्गलाभादिकं वापि पार्थिवं वा यथेप्सि
तम् ॥ २ ॥ पुरा त्रिशिरसं हत्वा त्वष्टुः पुत्रं शतक्रतुः ॥ यस्य तीर्थस्य माहात्म्याद्वैमल्यं परमं गतः ॥ ३ ॥ यत्र वेदनिधिर्विप्रो महत्तप्त्वा तपः
पुरा ॥ नानाकर्ममलैः क्षीणैर्विमलोऽभवदर्कवत् ॥ ४ ॥ महादेवप्रसादेन सोमवत्प्रियदर्शनः ॥ पुरा भानुमतीं भानुः सुतां स्मरशरार्दितः ॥ ५ ॥
चकमे तेन दोषेण कुष्ठरोगार्दितोऽभवत् ॥ स चाप्यत्र तपस्तप्त्वा विमलत्वमुपागतः ॥ ६ ॥ महादेवेन तुष्टेन स्वस्थानं मुदितोऽभजत् ॥ तथैव
च पुरा पार्थ विभांडकसुतो मुनिः ॥ ७ ॥ योगिसंगं वने प्राप्य पुरे च नृपतेस्तथा ॥ राजसंसर्गदोषाद्वै मालिन्यं परमात्मनः ॥ ८ ॥ विचारयन्न
भ्युपेत्य रेवासागरसंगमम् ॥ शांतया भार्यया सार्द्धं तप्त्वा द्वादशवत्सरान् ॥ ९ ॥ कृच्छ्रचांद्रायणैर्देवं तोषयंस्त्र्यंबकं मुनिः ॥ महादेवेन तुष्टेन
सोऽपि वैमल्यमाप्तवान् ॥ १० ॥ शर्वाण्या प्रेरितः शर्वः पुरा दारुवने नृप ॥ मोहनान्मुनिपत्नीनां स्वं वीक्ष्य विमलं किल ॥ ११ ॥ विचार्य
परमस्थानं नर्मदोदधिसंगमम् ॥ तत्र स्थित्वा महाराज तपस्तप्त्वा सहोमया ॥ १२ ॥ विमलोऽसौ यतो जातस्तेनासौ विमलेश्वरः ॥ तेन नाम्ना
स्वयं तस्थौ लोकानां हितकाम्यया ॥ १३ ॥ ततस्तिलोत्तमां सृष्ट्वा ब्रह्मा लोकपितामहः ॥ प्रजानाथोपि तां सृष्ट्वां दृष्ट्वाग्रे सुमनोहराम् ॥ १४ ॥
भावियोगबलाक्रांतः स तस्याम[1]भिकोऽभवत् ॥ तेन वीक्ष्य सदोषत्वं रेवातीरद्वयं श्रितः ॥ १५ ॥ तीर्थान्यनुसरन्मौनी त्रिस्नायी संस्मरञ्छिवम् ॥
रेवार्णवसमायोगे स्नात्वा संपूज्य शंकरम् ॥ कालेनाल्पेन राजर्षे ब्रह्माप्यामलतां गतः ॥ १६ ॥ एवमन्येपि बहुशो देवर्षिनृपसत्तमाः ॥ त्यक्त्वा
दोषमलं तत्र विमला बहवोऽभवन् ॥ १७ ॥ तथा त्वमपि राजेंद्र तत्र स्नात्वा शिवार्चनात् ॥ अमलोपि विशेषेण वैमल्यं प्राप्स्यसे परम् ॥ १८ ॥

१ अभिकः—कामुक—इत्यर्थः ।

तत्र स्नात्वा नरो नारी पूजयित्वा महेश्वरम् ॥ पापदोषविनिर्मुक्तो ब्रह्मलोके महीयते ॥ १९ ॥ तत्रोपवासं यः कृत्वा पश्येत विमले
श्वरम् ॥ अष्टम्यां च चतुर्दश्यां सर्वपर्वसु पार्थिव ॥ २० ॥ सप्तजन्मकृतं पापं हित्वा याति शिवालयम् ॥ श्राद्धं कृत्वा विधानेन पितॄणामनृणी
भवेत् ॥ ब्राह्मणान्भोजयेच्छक्त्या तेभ्यो दद्याच्च दक्षिणाम् ॥ २१ ॥ यद्यदिष्टतमं लोके यच्चैवात्महितं गृहे ॥ तत्तद्गुणवते देयं तत्रैवाक्षयमिच्छता ॥
स्वर्णधान्यानि वासांसि छत्रोपानत्कमण्डलुम् ॥ २२ ॥ गृहं देवस्य वै शक्त्या कृत्वा स्याद्भुवि भूपतिः ॥ गीतनृत्यकथाभिश्च तोषयेत्परमेश्वरम् ॥
॥ २३ ॥ इति श्रीस्कांदे महापुराण एकाशीतिसाहस्र्यां संहितायां पञ्चम आवन्त्यखण्डे रेवाखण्डे विमलेश्वरतीर्थमाहात्म्यवर्णनंनाम षड्विंशत्य
धिकद्विशततमोऽध्यायः ॥ २२६ ॥ ॥ छ ॥ ॥ मार्कंडेय उवाच ॥ ॥ एतानि तव संक्षेपात्प्राधान्यात्कथितानि च ॥ न शक्तो
विस्तराद्वक्तुं संख्यां तीर्थेषु पांडव ॥ १ ॥ एषा पवित्रा विमला नदी त्रैलोक्यविश्रुता ॥ नर्मदा सरितां श्रेष्ठा महादेवस्य वल्लभा ॥ २ ॥ मनसा
संस्मरेद्यस्तु नर्मदां सततं नृप ॥ चांद्रायणशतस्यासौ लभते फलमुत्तमम् ॥ ३ ॥ अश्रद्दधानाः पुरुषा नास्तिकाश्चात्र ये स्थिताः ॥ पतंति नरके
घोरे प्राहैवं परमेश्वरः ॥ ४ ॥ नर्मदां सेवते नित्यं स्वयं देवो महेश्वरः ॥ तेन पुण्या नदी ज्ञेया ब्रह्महत्यापहारिणी ॥ ५ ॥ इयं माहेश्वरी गंगा
महेश्वरतनूद्भवा ॥ प्रोक्ता दक्षिणगंगेति भारतस्य युधिष्ठिर ॥ ६ ॥ जाह्नवी वैष्णवी गंगा ब्राह्मी गंगा सरस्वती ॥ इयं माहेश्वरी गंगा रेवा नास्त्यत्र
संशयः ॥ ७ ॥ यथा हि पुरुषे देवस्त्रैमूर्तत्वमुपाश्रितः ॥ ब्रह्मविष्णुमहेशाख्यं न भेदस्तत्र वै यथा ॥ तथा सरित्त्रये पार्थ भेदं मनसि मा कृथाः ॥
॥ ८ ॥ कोटिशो ह्यत्र तीर्थानि लक्षशश्चापि भारत ॥ तथा सहस्रशो रेवातीरद्वयगतानि तु ॥ ९ ॥ वृक्षांतरिक्षसंस्थानि जलस्थलगतानि च ॥कः
शक्तस्तानि निर्णेतुं वागीशो वा महेश्वरः ॥१०॥ स्मरणाज्जन्मजनितं दर्शनाच्च त्रिजन्मजम्॥सप्तजन्मकृतं नश्येत्पापं रेवावगाहनात्॥११॥देवकार्यं
कृतं तेन अग्नयो विधिवद्धुताः ॥ वेदा अधीताश्चत्वारो येन रेवावगाहिता ॥ १२ ॥ प्राधान्याच्चापि संक्षेपात्तीर्थान्युक्तानि ते मया ॥ न शक्यो
विस्तरः पार्थ श्रोतुं वक्तुं च वै मया ॥ १३ ॥ ॥ युधिष्ठिर उवाच ॥ ॥ विधानं च यमांश्चैव नियमांश्च वदस्व मे ॥ प्रायश्चित्तार्थगमने को
विधिस्तं वदस्व मे ॥ १४ ॥ ॥ श्रीमार्कंडेय उवाच ॥ ॥ साधु पृष्टं महाराज यच्छ्रेयः पारलौकिकम् ॥ शृणुष्वावहितो भूत्वा यथाज्ञानं वदामि
ते ॥ १५ ॥ अध्रुवेण शरीरेण ध्रुवं कर्म समाचरेत् ॥ अवश्यमेव यास्यंति प्राणाः प्राघूर्णिका इव ॥ १६ ॥ दानं वित्तादृतं वाचः कीर्तिधर्मौतथा
ऽऽयुषः ॥ परोपकरणं कायादसारात्सारमुद्धरेत् ॥ १७ ॥ अस्मिन्महामोहमये कटाहे सूर्याग्निना रात्रिदिवेंधनेन ॥ मासर्तुदर्वीपरिघट्टनेन भूतानि

कालः पचतीति वार्ता ॥ १८ ॥ ज्ञात्वा शास्त्रविधानोक्तं कर्म कर्त्तुमिहार्हसि ॥ नायं लोकोऽस्ति न परो न सुखं संशयात्मनः ॥ १९ ॥ मंत्रे
तीर्थे द्विजे देवे दैवज्ञे भेषजे गुरौ ॥ यादृशी भावना यस्य सिद्धिर्भवति तादृशी ॥ २० ॥ अश्रद्धया हुतं दत्तं तपस्तप्तं कृतं च यत् ॥
असदित्युच्यते पार्थ न च तत्प्रेत्य नो इह ॥ २१ ॥ यः शास्त्रविधिमुत्सृज्य वर्तते कामकारतः ॥ न स सिद्धिमवाप्नोति न
सुखं न परां गतिम् ॥ २२ ॥ संतीह विविधोपाया नृणां देहविशोधनाः ॥ तीर्थसेवासमं नास्ति स्वशरीरस्य शोधनम् ॥ २३ ॥
कृच्छ्रचांद्रायणाद्यैर्वा द्वितीयं तीर्थसेवया ॥ यदा तीर्थं समुद्दिश्य प्रयाति पुरुषो नृप ॥ तदा देवाश्च पितरस्तं व्रजंत्यनु खेचराः ॥ २४ ॥ परमा
मोदपूर्णास्ते प्रयांत्यस्यानुयायिनः ॥ कृत्वाऽऽभ्युदयिकं श्राद्धं समापृच्छय तु देवताम् ॥२५॥ इष्टबन्धूंश्च विष्णुं च शंकरं सगणेश्वरम् ॥ व्रजेद्द्विजा
भ्यनुज्ञातो गृहीत्वा नियमानपि ॥ २६ ॥ एकाशनं ब्रह्मचर्यं भूशय्यां सत्यवादिताम् ॥ वर्जनं च परान्नस्य प्रतिग्रहविवर्जनम् ॥ २७ ॥ वर्जयित्वा
तथा द्रोहवंचनादि नृपोत्तम ॥ साधुवेषं समास्थाय विनयेन विभूषितः ॥ २८ ॥ दंभाहंकारमुक्तो यः स तीर्थफलमश्नुते ॥ यस्य हस्तौ च पादौ
च मनश्चैव सुसंयतम् ॥ २९ ॥ विद्या तपश्च कीर्तिश्च स तीर्थफलमश्नुते ॥ अक्रोधनश्च राजेन्द्र सत्यशीलो दृढव्रतः ॥ ३० ॥ आत्मोपमश्च भूतेषु
स तीर्थफलमश्नुते ॥ मुण्डनं चोपवासश्च सर्वतीर्थेष्वयं विधिः ॥ ३१ ॥ वर्जयित्वा कुरुक्षेत्रं विशालां विरजां गयाम् ॥ स्नानं सुरार्चनं चैव श्राद्धे वै
पिण्डपातनम् ॥ ३२ ॥ विप्राणां भोजनं शक्त्या सर्वतीर्थेष्वयं विधिः ॥ प्रायश्चित्तनिमित्तं च यो व्रजेद्यतमानसः ॥ ३३ ॥ तस्यापि च विधिं
वक्ष्ये शृणु पार्थ समाहितः ॥ एकाशनं ब्रह्मचर्यमक्षारलवणाशनम् ॥ ३४ ॥ स्नात्वा तीर्थाभिगमनं हविष्यैकान्नभोजनम् ॥ वर्जयेत्पतितालापं
बहुभाषणमेव च ॥ ३५ ॥ परीवादं परान्नं च नीचसंगं विवर्जयेत् ॥ व्रजेद्व निरुपानत्को वसानो वाससी शुचिः ॥ ३६ ॥ संकल्पं मनसा कृत्वा
ब्राह्मणानुज्ञया व्रजेत् ॥ तीर्थे गत्वा तथा स्नात्वा कृत्वा चैव सुरार्चनम् ॥ ३७ ॥ दुष्कर्मतो विमुक्तः स्यादनुतापी भवेद्यदि ॥ वेदे तीर्थे च देवे च
दैवज्ञे चौषधे गुरौ ॥ ३८ ॥ यादृशी भावना यस्य सिद्धिर्भवति तादृशी ॥ उक्ततीर्थफलानां च पुराणेषु स्मृतिष्वपि ॥ ३९ ॥ अर्थवादभवां शंकां
विहाय भरतर्षभ ॥ कृत्वा विचारं शास्त्रोक्तं परिकल्प्य यथोचितम् ॥ ४० ॥ कायेन कृच्छ्रचरणे ह्यशक्तानां विशुद्धये ॥ ज्ञात्वा तीर्थविशेषं हि
प्रायश्चित्तं समाचरेत् ॥ ४१ ॥ तच्छृणुष्व महाराज नर्मदायां यथोचितम् ॥ चतुर्विंशतिसंख्येभ्यो योजनेभ्यो व्रजेन्नरः ॥ ४२ ॥ चतुर्विंशति
कृच्छ्राणां फलमाप्नोति शोभनम् ॥ अत ऊर्ध्वं योजनेषु पादकृच्छ्र उदाहृतः ॥ ४३ ॥ तन्मध्ये च महाराज यो व्रजेच्छ्रद्धिकाक्षया ॥ योजने

योजने तस्य प्रायश्चित्तं विदुर्बुधाः ॥ ४४ ॥ [1]प्रणवाख्ये भ" राज तथा रेवोरिसंगमे ॥ भृगुक्षेत्रे तथा गत्वा फलं तद्द्विगुणं स्मृतम् ॥ ४५ ॥ संगमे देवनद्याश्च शूलभेदे नृपोत्तम ॥ द्विगुणं पादहीनं स्यात्करजाःगमे तथा ॥ ४६ ॥ एरण्डीसंगमे तद्वत्कपिलायाश्च संगमे ॥ केचित्त्रिगुणितं प्राहुः कुब्जारेवोत्थसंगमे ॥ ४७ ॥ ॐकारे च महाराज तदपि स्यात्समंजसम् ॥ संगमेषु तथान्यासां नदीनां रेवया सह ॥ ४८ ॥ प्राहुस्ते सार्द्धकृच्छ्रं वै फलं पूर्वं युधिष्ठिर ॥ त्रिगुणं कृच्छ्रमाप्नोति रेवासागरसंगमे ॥ ४९ ॥ कृच्छ्रं चतुर्गुणं प्रोक्तं शुक्लतीर्थे युधिष्ठिर ॥ योजने योजने गत्वा चतुर्विंशतियोजनम् ॥ तत्र तत्र वसेद्यस्तु सुचिरं नृवरोत्तम ॥ ५० ॥ रेवासेवासमाचारः संयुक्तः शुद्धबुद्धिमान् ॥ दंभाहंकाररहितः शुद्ध्यर्थं स विमुच्यते ॥ ५१ ॥ इति ते कथितं पार्थ प्रायश्चित्तार्थलक्षणम् ॥ रेवायात्राविधानं च गुह्यमेतद्युधिष्ठिर ॥ ५२ ॥ ॥ युधिष्ठिर उवाच ॥ ॥ योजनस्य प्रमाणं मे वद त्वं मुनिसत्तम ॥ यज्ज्ञात्वा निश्चितं मे स्यान्मनःशुद्धेस्तु कारणम् ॥ ५३ ॥ ॥ मार्कंडेय उवाच ॥ ॥ शृणु पांडव वक्ष्यामि प्रमाणं योजनस्य यत् ॥ तथा यात्राविशेषेण विशेषं कृच्छ्रसम्भवम् ॥ ५४ ॥ तिर्यग्यवोदराण्यष्टावूर्ध्वा वा व्रीहयस्त्रयः ॥ प्रमाणमंगुलं स्याद्वितस्तिर्द्वादशांगुला ॥ ५५ ॥ वितस्तिद्वितयं हस्तश्चतुर्हस्तं धनुः स्मृतम् ॥ स एव दण्डो गदितो विशेषज्ञैर्युधिष्ठिर ॥ ५६ ॥ धनुःसहस्रे द्वे कोशश्चतुःक्रोशं च योजनम् ॥ एतद्योजनमानं ते कथितं भरतर्षभ ॥ ५७ ॥ येन यात्रां व्रजन्वेत्ति फलमानं निजार्जितम् ॥ उक्तं कृच्छ्रफलं तीर्थे जलरूपे नृपोत्तम ॥ ५८ ॥ यथाविशेषं ते वच्मि पूर्वोक्ते तत्र तत्र च ॥ तन्मे शृणु महीपाल श्रद्दधानाय कथ्यते ॥ ५९ ॥ यस्मिंस्तीर्थे हि यत्प्रोक्तं फलं कृच्छ्रादिकं नृप ॥ तत्राप्युपोषणात्कृच्छ्रफलं प्राप्नोत्यथाधिकम् ॥ ६० ॥ दिनजाप्याच्च लभते फलं कृच्छ्रस्य शक्तितः ॥ तत्र विख्यातदेवेशं स्नात्वा दृष्ट्वाभिपूज्य च ॥ ६१ ॥ प्रणम्य लभते पार्थ फलं कृच्छ्रभवं सुधीः ॥ तीर्थे मुख्यफलं स्नानाद्द्वितीयं चाप्युपोषणात् ॥ ६२ ॥ तृतीयं ख्यातदेवस्य दर्शनाभ्यर्चनादिभिः ॥ चतुर्थं जाप्ययोगेन देहशक्त्या त्वहर्निशम् ॥ ६३ ॥ पंचमं सर्वतीर्थेषु कल्पनीयं हि दूरतः ॥ तीरस्थो योजनादर्वाग्दशांशं लभते फलम् ॥ ६४ ॥ उक्ततीर्थफलात्पार्थ नात्र कार्या विचारणा ॥ ६५ ॥ उपवासेन सहितं महानद्यां हि मज्जनम् ॥ अप्यर्वाग्योजनात्पार्थ दद्यात्कृच्छ्रफलं नृणाम् ॥ ६६ ॥ षड्योजनवहा कुल्या नद्योऽल्पा द्वादशैव च ॥ चतुर्विंशतिगा न

१ प्रणवाख्ये—ॐकारेश्वरक्षेत्रे--इत्यर्थः ।

द्यो महानद्यस्ततोऽधिकाः ॥ ६७ ॥ इति श्रीस्कान्दे महापुराण एकाशीतिसाहस्र्यां संहितायां पञ्चम आवन्त्यखण्डे रेवाखण्डे तीर्थयात्रादिविधानविशेषकथनं नाम सप्तविंशत्यधिकद्विशततमोऽध्यायः ॥ २२७ ॥ ॥ छ ॥ ॥ युधिष्ठिर उवाच ॥ ॥ परार्थं तीर्थयात्रायां गच्छतः कस्य किं फलम् ॥ कियन्मात्रं मुनि श्रेष्ठ तन्मे ब्रूहि कृपानिधे ॥ १ ॥ ॥ मार्कंडेय उवाच ॥ ॥ परार्थं गच्छतस्तन्मे वदतः शृणु पार्थिव ॥ यथा यावत्फलं तस्य यात्रादिविहितं भवेत् ॥ २ ॥ उत्तमेनेह वर्णेन द्रव्यलोभादिना नृप ॥ नाधमस्य क्वचित्कार्यं तीर्थयात्रादिसेवनम् ॥ ३ ॥ धर्मकर्म महाराज स्वयं विद्वान्समाचरेत् ॥ शरीरस्याथवा शक्त्या अन्यद्वा कार्ययोगतः ॥ ४ ॥ धर्मकर्म सदा प्रायः सवर्णेनैव कारयेत् ॥ पुत्रपौत्रादिकैर्वापि ज्ञातिभिर्गोत्रसंभवैः ॥ ५ ॥ श्रेष्ठं हि विहितं प्राहुर्धर्मकर्म युधिष्ठिर ॥ तैरेव कारयेत्तस्मान्नोत्तमैर्नाधमैरपि ॥ ६ ॥ अधमेन कृतं सम्यक् न भवेदिति मे मतिः॥ उत्तमश्चाधमार्थे वै कुर्वन्दुर्गतिमाप्नुयात् ॥ ७ ॥ न शूद्राय मतिं दद्यान्नोच्छिष्टं न हविष्कृतम् ॥ न चास्योपदिशेद्धर्मं न चास्य व्रतमादिशेत् ॥ ८ ॥ जपस्तपस्तीर्थयात्रा प्रव्रज्या मंत्रसाधनम् ॥ देवताराधनं दीक्षा स्त्रीशूद्रपतनानि षट् ॥ ९ ॥ पतिवत्नी पत्येव विधवा सर्वमाचरेत् ॥ सभर्तृका ऽशक्ते[1] पत्यौ सर्वं कुर्यादनुज्ञया ॥ १० ॥ गत्वा परार्थं तीर्थादौ षोडशांशफलं लभेत् ॥ गच्छतश्च प्रसंगेन तीर्थमर्द्धफलं स्मृतम् ॥ ११ ॥ अनुसंगेन तीर्थस्य स्नाने स्नानफलं विदुः ॥ नैव यात्राफलं तज्ज्ञाः शास्त्रोक्तं कल्मषापहम् ॥ १२ ॥ पित्रर्थं च पितृव्यस्य मातुर्मातामहस्य च ॥ मातुलस्य तथा भ्रातुः श्वशुरस्य सुतस्य च ॥ १३ ॥ पोषकार्थादयोश्चापि मातामह्या गुरोस्तथा ॥ स्वसुर्मातृष्वसुः पैत्र्या आचार्याध्यापकस्य च ॥ १४ ॥ इत्याद्यर्थे नरः स्नात्वा स्वयमष्टांशमाप्नुयात् ॥ साक्षात्पित्रोः प्रकुर्वाणश्चतुर्थांशमवाप्नुयात् ॥ १५ ॥ पतिपत्न्योर्मिथश्चार्द्धं फलं प्राहुर्मनीषिणः ॥ भागिनेयस्य शिष्यस्य भ्रातृव्यस्य सुतस्य च ॥ षट्त्रिपंचचतुर्भागान्फलमाप्नोति वै नरः॥ १६ ॥ इति ते कथितं पार्थ पारंपर्यक्रमागतम् ॥ कर्तव्यं ज्ञातिवर्गस्य परार्थे धर्मसाधनम् ॥१७॥ वर्षाऋतुसमायोगे सर्वा नद्यो रजस्वलाः ॥ मुक्त्वा सरस्वतीं गंगां नर्मदां यमुनानदीम् ॥ १८ ॥ इति श्रीस्कांदे महापुराण एकाशीतिसाहस्र्यां संहितायां पंचम आवन्त्यखण्डे रेवाखण्डे परार्थतीर्थयात्राफलकथनंनामाष्टविंशत्यधिकद्विशततमोऽध्यायः ॥ २२८ ॥ ॥ छ ॥ ॥ श्रीमार्कंडेय उवाच ॥ ॥ एवं ते कथितं राजन्पुराणं धर्मसंहितम् ॥

---

१ अशक्ते—अशक्त—इत्यर्थः ।

शिवप्रीत्या यथा प्रोक्तं वायुना देवसंसदि ॥ १ ॥ षष्टितीर्थसहस्राणि षष्टिकोटिस्तथैव च ॥ आदिमध्यावसानेषु नर्मदायां पदेपदे ॥२॥ मया द्वाद
शसाहस्री संहिता या श्रुता पुरा ॥ देवदेवस्य गदतः सांप्रतं कथिता तव ॥३॥ पृष्टस्त्वयाऽहं भूपाल पर्वतेऽमरकंटके ॥ स्थितः संक्षेपतः सर्वं मया
तत्कथितं तव ॥ ४ ॥ नर्मदाचारितं पुण्यं शृणु तस्यास्ति यत्फलम् ॥ यत्फलं सर्ववेदैः स्यात्सषडंगपदक्रमैः ॥ ५ ॥ पठितैश्च श्रुतैर्वाऽपि तस्माद्बहु
तरं भवेत् ॥ सत्रयाजी फलं यत्र लभते द्वादशाऽब्दिकम् ॥ ६ ॥ चारिते तु श्रुते देव्या लभते तादृशं फलम् ॥ सर्वतीर्थेषु यत्पुण्यं स्नात्वा सागरमा
दितः ॥ ७ ॥ सकृत्स्नात्वा तथा श्रुत्वा नर्मदायां फलं हि तत् ॥ आदिमध्यावसानेन नर्मदाचरितं शुभम् ॥ ८ ॥ यः शृणोति नरो भक्त्या
तस्य पुण्यफलं शृणु ॥ स प्राप्य शिवसंस्थानं रुद्रकन्यासमावृतः ॥ ९ ॥ रुद्रस्यानुचरो भूत्वा तेनैव सह मोदते ॥ एतद्धर्ममुपाख्यानं सर्वशास्त्रेषु
सत्तमम् ॥ १० ॥ देशे वा मंडले वाऽपि वा ग्रामे नगरेऽपि वा ॥ गृहे वा तिष्ठते यस्य चातुर्वर्ण्यस्य भारत ॥ ११ ॥ स ब्रह्मा स शिवः साक्षात्स
च देवो जनार्दनः ॥ त्रिविधं कारणं लोके धर्मपंथानमुत्तमम् ॥ १२ ॥ देवतानां गुरुं शास्त्रं परमं सिद्धिकारणम् ॥ श्रुत्वेश्वरमुखात्पार्थ मयाऽपि
तव कीर्त्तितम् ॥ १३ ॥ दक्षिणे चोत्तरे कूले यानि तीर्थानि कानिचित् ॥ प्रधानतः सुपुण्यानि कथितानि विशेषतः ॥१४॥ स्पर्शनाद्दर्शनात्तेषां
कीर्त्तनाच्छ्रवणात्तथा ॥ मुच्यते सर्वपापेभ्यो रुद्रलोकं स गच्छति ॥ १५ ॥ इदं यः शृणुयान्नित्यं पुराणं शिवभाषितम् ॥ ब्राह्मणो वेदविद्यावान्क्ष
त्रियो विजयी भवेत् ॥ १६ ॥ धनभागी भवेद्वैश्यः शूद्रो वै धर्मभाग्भवेत् ॥ सौभाग्यं संततिं स्वर्गं नारी श्रुत्वाऽप्नुयाद्धनम् ॥ १७ ॥ ब्रह्मघ्नश्च सुरा
पश्च स्तेयी च गुरुतल्पगः ॥ माहात्म्यं नर्मदायास्तु श्रुत्वा पापबहिस्कृताः ॥ १८ ॥ पापभेदी कृतघ्नश्च स्वामिविश्वासघातकः ॥ गोघ्नश्च गरदश्चैव
कन्याविक्रयकारकः ॥ १९ ॥ एते श्रुत्वैव पापेभ्यो मुच्यंते नाऽत्र संशयः ॥ ये पुनर्भावितात्मानः शृण्वंति सततं नृप ॥ २० ॥ पूजयंत इदं देवा
पूजिता गुरुवश्च तैः ॥ नर्मदा पूजिता तेन भगवांश्च महेश्वरः ॥ २१ ॥ तस्मात्सर्वप्रयत्नेन गंधपुष्पविभूषणैः ॥ पूजितं परया भक्त्या शास्त्रमेतत्फ
लप्रदम् ॥ २२ ॥ लेखापयित्वा सकलं नर्मदाचरितं शुभम् ॥ उत्तमं सर्वशास्त्रेभ्यो यो ददाति द्विजन्मने ॥ २३ ॥ नर्मदा सर्वतीर्थेषु स्नाने दाने
च यत्फलम् ॥ तत्फलं समवाप्नोति स नरो नाऽत्र संशयः ॥ २४ ॥ एतत्पुराणं रुद्रोक्तं महापुण्यफलप्रदम् ॥ स्वर्गदं पुत्रदं धन्यं यशस्यं कीर्त्तिवर्द्ध
नम् ॥२५॥ सर्वपापहरं पार्थ दुःखःदुःस्वप्ननाशनम् ॥ पठतां शृण्वतां राजन्सर्वकमार्थसिद्धिदम् ॥२६॥ शांतिरस्तु शिवं चास्तु लोकाः सन्तु निरा
मयाः ॥ गोब्राह्मणेभ्यः स्वस्त्यस्तु धर्म्मं धर्म्मात्मजाऽऽश्रयः ॥ २७ ॥ नरकान्तकरी रेवा सतीर्थां विश्वपावनी ॥ नर्मदा धर्मदा चास्तु शर्मदा पार्थ

ते सदा ॥ २८ ॥ इति श्रीस्कान्दे महापुराण एकाशीतिसाहस्र्यां संहितायां पञ्चम आवन्त्यखण्डे रेवाखण्डे मार्कंडेययुधिष्ठिरसंवादे रेवाखण्डपठन
श्रवणदानादिफलश्रुतिवर्णनंनामैकोनत्रिंशदधिकद्विशततमोऽध्यायः ॥ २२९ ॥ ॥ छ ॥ ॥ सूत उवाच ॥ ॥ इत्युक्त्वोपरराामथ पाण्डोः
पुत्राय वै मुनिः ॥ मृकण्डतनयो धीमान्सप्तकल्पस्मरः पुरः ॥१॥ मार्कंडमुनिना प्रोक्तं यथा पार्थाय सत्तमाः ॥ तथा वः कथितं सर्वं रेवामाहात्म्य
मुत्तमम् ॥ २ ॥ इयं पुण्या सरिच्छ्रेष्ठा रेवा विश्वैकपावनी ॥ रुद्रदेहसमुद्भूता सर्वभूताभयप्रदा ॥ ३ ॥ ॐकारजलधिं यावदुवाच भृगुनन्दनः ॥
तीर्थसंगमभेदान्वै धर्मपुत्राय पृच्छते ॥ ४ ॥ समासेनैव मुनयस्तथाहं कथयामि वः ॥ सप्तषष्टिसहस्राणि षष्टिकोट्यस्तथैव च ॥ ५ ॥ कथं केनात्र
शक्यन्ते वक्तुं वर्षशतैरपि ॥ तथाप्यत्र मुनिश्रेष्ठाः प्रोक्तं पार्थाय वै यथा ॥ ६ ॥ तीर्थमोङ्कारमारभ्य वक्ष्ये तीर्थावलिं शुभाम् ॥ प्रोच्यमानां समा
सेन तां शृणुध्वं महर्षयः ॥ ७ ॥ नत्वा सोमं महेशानं नत्वा ब्रह्माच्युतावुभौ ॥ सरस्वतीं गणेशानं वेदव्यासांघ्रिपङ्कजम् ॥ ८ ॥ पूर्वाचार्यांस्तथा
सर्वान्दृष्टादृष्टार्थवेदिनः ॥ प्रणम्य नर्मदां देवीं वक्ष्ये तीर्थावलिं त्विमाम् ॥ ९ ॥ ॐ नमो विश्वरूपाय ॐकारायाखिलात्मने ॥ यमारभ्य प्रव
क्ष्यामि रेवातीर्थावलिं द्विजाः ॥ १० ॥ अस्मिन्मार्कंडगदिते रेवातीर्थक्रमे शुभे ॥ पुराणसंहिताध्याया मार्कण्डाश्रमवर्णनम् ॥११ ॥ ततः प्रश्ना
धिकारश्च प्रशंसा नर्मदोद्भवा ॥ तथा पञ्चदशानां च प्रवाहानां प्रकीर्तनम् ॥ १२ ॥ नामनिर्वचनं तद्वत्तथा कल्पसमुद्भवाः ॥ एकविंशतिकल्पानां
तद्वन्नामानुकीर्त्तनम् ॥ १३ ॥ मार्कंडेयानुभूतानां सप्तानां लक्षणानि च ॥ माहात्म्यं चैव रेवायाः शिवविष्ण्वोस्तथैव च ॥ १४ ॥ संहारलक्षणं
तद्वदोंकारस्य च संभवः ॥ तथैवोंकारमाहात्म्यममरंकटकीर्तनम् ॥ १५ ॥ अमरेश्वरतीर्थं च तथा दारुवनं महत् ॥ दारुकेश्वरतीर्थं च तीर्थं वै
चरुकेश्वरम् ॥ १६ ॥ चरुकासंगमस्तद्वद्व्यतीपातेश्वरं तथा ॥ पातालेश्वरतीर्थं च कोटियज्ञाह्वयं तथा ॥ १७ ॥ वरुणेश्वरतीर्थं च लिंगान्यष्टोत्तरं
शतम्॥सिद्धेश्वरं यमेशं च ब्रह्मेश्वरमतः परम्॥१८॥सारस्वतं चाष्टरुद्रं सावित्रं सोमसंज्ञितम्॥शिवखातं महातीर्थंरुद्रावर्तं द्विजोत्तमाः॥१९॥ब्रह्मावर्तं परं
तीर्थं सूर्यावर्तमतः परम् ॥ पिप्पलावर्ततीर्थं च पिप्पल्याश्चैव संगमः॥२०॥ अमरकण्टमाहात्म्यं कपिलासंगमस्तथा ॥ विशल्यासंभवश्चापि भृगुतुं
गाग्निकीर्तनम् ॥ २१ ॥ विशल्यासंगमः पुण्यः करमर्दासमागमः ॥ करमर्देश्वरं तीर्थं चक्रतीर्थमनुत्तमम् ॥ २२ ॥ संगमो नीलगंगायाः विध्वं
सस्त्रिपुरस्य च ॥ कीर्तनं तीर्थदानानां मधुकतृतीयाव्रतम् ॥२३॥ अप्सरेश्वरतीर्थं च देहक्षेपे विधिस्ततः ॥ तीर्थं ज्वालेश्वरं नाम ज्वालायाः संगम
स्तथा ॥ २४ ॥ शक्रतीर्थं कुशावर्तं हंसतीर्थं तथैव च ॥ अंबरीषस्य तीर्थं च महाकालेश्वरं तथा ॥ २५ ॥ मातृकेश्वरतीर्थं च भृगुतुंगानुवर्णनम् ॥

तत्र भैरवमाहात्म्यं चपलेश्वरकीर्तनम् ॥ २६ ॥ चण्डपाणेश्च माहात्म्यं कावेरीसंगमस्तथा ॥ कुबेरेश्वरतीर्थं च वाराहीसंगमस्तथा ॥ २७ ॥
संगमश्चंडवेगायास्तीर्थं चण्डेश्वरं तथा ॥ एरण्डीसंगमः पुण्य एरण्डेश्वरमुत्तमम् ॥ २८ ॥ पितृतीर्थं च तत्रैव ॐकारस्य च संभवम् ॥ माहात्म्यं
पंचलिंगानामोंकारस्य मुनीश्वराः ॥ २९ ॥ कोटितीर्थस्य माहात्म्यं तीर्थं काकह्रदं तथा ॥ जम्बुकेश्वरतीर्थं च सारस्वतमतः परम् ॥ ३० ॥
कपिलासंगमस्तद्वत्तीर्थं च कपिलेश्वरम् ॥ दैत्यसूदनतीर्थं च चक्रतीर्थं च वामनम् ॥ ३१ ॥ तीर्थलक्षं विदुः पूर्वे कपिलायास्तु संगमे ॥ स्वर्गस्य
नरकस्यापि लक्षणं मुनिभाषितम् ॥ ३२ ॥ व्यवस्थानं शरीरस्य गोप्रदानानुवर्णनम् ॥ अशोकवनिकातीर्थं मतंगाश्रमवर्णनम् ॥ ३३ ॥ अशोके
श्वरतीर्थं च मतंगेश्वरमुत्तमम् ॥ तथा मृगवनं पुण्यं तत्र तीर्थं मनोरथम् ॥ ३४ ॥ संगमोऽगारगर्ताया अंगारेश्वरमुत्तमम् ॥ तथा मेघवनं तीर्थं
देव्या नामानुकीर्तनम् ॥ ३५ ॥ संगमश्चापि कुब्जायास्तीर्थं कुब्जेश्वरं तथा ॥ बिल्वाम्रकं तथा तीर्थं पूर्णद्वीपमतः परम् ॥ ३६ ॥ तथा हिरण्य
गर्भायाः संगमः पुण्यकीर्तनः ॥ द्वीपेश्वरं नाम तीर्थं पुण्यं यज्ञेश्वरं तथा ॥ ३७ ॥ मांडव्याश्रमतीर्थं च विशोकासंगमस्तथा ॥ वागीश्वरं नाम तीर्थं
पुण्यो वै वागुसंगमः ॥ ३८ ॥ सहस्रावर्तकं तत्र तीर्थं सौगंधिकं तथा ॥ संगमश्च सरस्वत्या ईशानं तीर्थमुत्तमम् ॥ ३९ ॥ देवतात्रयतीर्थं च शूल
खातं ततः परम् ॥ ब्रह्मोदं शांकरं सौम्यं सारस्वतमतः परम् ॥ ४० ॥ सहस्रयज्ञतीर्थं च कपालमोचनं तथा ॥ आग्नेयमदितीशं च वाराहं
तीर्थमुत्तमम् ॥ ४१ ॥ तथा देवपथं तीर्थं तीर्थं यज्ञसहस्रकम् ॥ शुक्रतीर्थं दीप्तिकेशं विष्णुतीर्थं च योधनम् ॥ ४२ ॥ नर्मदेश्वरतीर्थं च वरु
णेशं च मारुतम् ॥ योगेशं रोहिणीतीर्थं दारुतीर्थं च सत्तमाः ॥ ४३ ॥ ब्रह्मावर्तं च पत्रेशं वाह्नं सौरं च कीर्त्यते ॥ मेघनादं दारुतीर्थं देवतीर्थं
गुहाश्रयम ॥ ४४ ॥ नर्मदेश्वरसंज्ञं तत्कपिलातीर्थमुत्तमम् ॥ करंजेशं कुण्डलेशं पिप्पलादमतः परम् ॥ ४५ ॥ विमलेश्वरतीर्थं च पुष्करिण्याश्च
संगमः ॥ प्रशंसा शूलभेदस्य तत्रैवांधकविक्रमः ॥ ४६ ॥ देवाश्वासनदानं च तथैवांधकनिग्रहः ॥ शूलभेदस्य चोत्पत्तिस्तथा पात्रपरीक्षणम् ॥
॥ ४७ ॥ प्रशंसा दानधर्मस्य ऋषिशृंगानुभावनम् ॥ स्वर्गतिं दीर्घतपसो भानुमत्यास्तथैंगितम् ॥ ४८ ॥ शबरस्वर्गगमनं माहात्म्यं शूलभेद
जम् ॥ कपिलेश्वरतीर्थं च मोक्षतीर्थमतः परम् ॥ ४९ ॥ संगमो मोक्षनद्याश्च तीर्थं च विमलेश्वरम् ॥ तथैवोलूकतीर्थं च पुष्करिण्याश्च संगमः ले
॥ ५० ॥ आदित्येश्वरतीर्थं च तीर्थं वै संगमेश्वरम् ॥ संगमो भीमकुल्यायास्तीर्थं भीमेश्वरं शुभम् ॥ ५१ ॥ मार्कंडेश्वरतीर्थं च तथा वै पिप्प॥
श्वरम् ॥ करोटीश्वरतीर्थं च तीर्थमिंद्रेश्वरं शुभम्॥५२॥अगस्त्येशं कुमारेशं व्यासेश्वरमनुत्तमम् ॥ वैद्यनाथं च केदारमानन्देश्वरसंज्ञितम्॥५३॥ मातृ

तीर्थं च मुंडेशं चौरं कामेश्वरं तथा ॥ संगमश्चानुदुह्या वै तीर्थे भीमार्जुनाह्वये ॥ तीर्थं धर्मेश्वरं नाम लुंकेश्वरमतः परम् ॥ ५४ ॥ ततो धनदतीर्थं च
जटेशं मंगलेश्वरम् ॥ कपिलेश्वरतीर्थं च गोपारेश्वरमुत्तमम्॥५५॥मणिनागेश्वरं नाम मणिनद्याश्च संगमः ॥ तिलकेश्वरतीर्थं च गौतमेशमतः परम्
॥ ५६ ॥ तत्रैव मातृतीर्थं च मुनिनोक्तं मुनीश्वराः ॥ शंखचूडं च केदारं पाराशरमतः परम्॥५७॥भीमेश्वरं च चंद्रेशमश्ववत्याश्च संगमः ॥ बह्वीश्वरं
नारदेशं वैद्यनाथं कपीश्वरम् ॥ ॥ ५८ ॥ कुम्भेश्वरं च मार्कंडं रामेशं लक्ष्मणेश्वरम् ॥ मेघेश्वरं मत्स्यकेशमप्सराह्रदसंज्ञकम् ॥ ५९ ॥ दधिस्कन्दं
मधुस्कन्दं नंदिकेशं च वारुणम् ॥ पावकेश्वरतीर्थं च तथैव कपिलेश्वरम् ॥ ६० ॥ नारायणाह्वयं तीर्थं चक्रतीर्थमनुत्तमम् ॥ चण्डादित्यं परं
तीर्थं चंडिकातीर्थमुत्तमम् ॥ ६१ ॥ यमहासाह्वयं तीर्थं तथा गंगेश्वरं शुभम् ॥ नंदिकेश्वरसंज्ञं च नरनारायणाह्वयम् ॥ ६२ ॥ नलेश्वरं च
मार्कंडं शुक्लतीर्थमतः परम् ॥ व्यासेश्वरं परं तीर्थं तत्र सिद्धेश्वरं तथा ॥ ६३ ॥ कोटितीर्थं प्रभातीर्थं वासुकीश्वरमुत्तमम् ॥ संगमश्च
करंजाया मार्कंडेश्वरमुत्तमम् ॥ ६४ ॥ तीर्थं कोटीश्वरं नाम तथा संकर्षणाह्वयम् ॥ कनकेशं मन्मथेशं तीर्थं चैवानसूयकम् ॥ ६५ ॥ एरण्डीसंगमः
पुण्यो मातृतीर्थं च शोभनम् ॥ तीर्थं स्वर्णशलाकाख्यं तथा चैवांबिकेश्वरम् ॥ ६६ ॥ करंजेशं भारतेशं नागेशं मुकुटेश्वरम् ॥ सौभाग्यसुन्दरी
तीर्थं धनदेश्वरमुत्तमम् ॥ ६७ ॥ रोहिण्यं चक्रतीर्थं च उत्तरेश्वरसंज्ञितम् ॥ भोगेश्वरं च केदारं निष्कलंकमतः परम् ॥ ६८ ॥ मार्कंडं धौतपापं च
तीर्थमांगिरसेश्वरम् ॥ कोटवीसंगमः पुण्यं कोटितीर्थं च तत्र वै ॥ ६९ ॥ अयोनिजं परं तीर्थमंगारेश्वरमुत्तमम् ॥ स्कांदं च नार्मदं ब्राह्मं वाल्मीके
श्वरसंज्ञितम् ॥ ७० ॥ कोटितीर्थं कपालेशं पांडुतीर्थं त्रिलोचनम् ॥ कपिलेशं कम्बुकेशं प्रभासं कोहनेश्वरम् ॥ ७१ ॥ इन्द्रेशं वालुकेशं च देवेशं
शाक्रमेव च ॥ नागेश्वरं गौतमेशमहल्यातीर्थमुत्तमम् ॥ ७२ ॥ रामेश्वरं मोक्षतीर्थं तथा कुशलवेश्वरौ ॥ नर्मदेशं कपर्दीशं सागरेशमतः परम् ॥
॥ ७३ ॥ धौरादित्यं परं तीर्थं तीर्थं चापरयोनिजम् ॥ पिंगलेश्वरतीर्थं च भृग्वीश्वरमनुत्तमम् ॥ ७४ ॥ दशाश्वमेधिकं तीर्थं कोटितीर्थं च
सत्तमाः ॥ मार्कंडं ब्रह्मतीर्थं च आदिवाराहमुत्तमम् ॥ ७५ ॥ आशापूराभिधं तीर्थं कौबेरं मारुतं तथा ॥ वरुणेशं यमेशं च रामेशं कर्कटेश्वरम् ॥
॥ ७६ ॥ शक्रेशं सोमतीर्थं च नंदाह्रदमनुत्तमम् ॥ वैष्णवं चक्रतीर्थं च रामकेशवसंज्ञितम् ॥ ७७ ॥ तथैव रुक्मिणीतीर्थं शिवतीर्थमनुत्तमम् ॥
जयवाराहतीर्थं च तीर्थमस्माहकाह्वयम् ॥७८॥ अंगारेशं च सिद्धेशं तापेश्वरमतः परम् ॥ पुनः सिद्धेश्वरं नाम तीर्थं च वरुणेश्वरम् ॥७९॥ पराशरे
श्वरं पुण्यं कुसुमेशमनुत्तमम् ॥ कुण्डलेश्वरतीर्थं च तथा कलकलेश्वरम् ॥ ८० ॥ न्यंकुवाराहसंज्ञं च अंकोलं तीर्थमुत्तमम् ॥ श्वेतवाराहतीर्थं च

भागलं सौरमुत्तमम् ॥ ८१ ॥ हुंकारस्वामितीर्थं च शुक्लतीर्थं च शोभनम् ॥ संगमो मधुमत्याश्च तीर्थं वै संगमेश्वरम् ॥ ८२ ॥ नर्मदेश्वरसंज्ञं च
नदीत्रितयसंगमः ॥ अनेकेश्वरतीर्थं च शर्मेशं मोक्षसंज्ञितम् ॥ ८३ ॥ कावेरीसंगमः पुण्यस्तीर्थं गोपेश्वराह्वयम् ॥ मार्कंडेशं च नागेशमुदंबर्याश्च
संगमः ॥ ८४ ॥ सांबादित्याह्वयं तीर्थमुदंबर्याश्च संगमः ॥ सिद्धेश्वरं च मार्कंडं तथा सिद्धेश्वरीकृतम् ॥ ८५ ॥ गोपेशं कपिलेशं च वैद्यनाथमनुत्त
मम् ॥ पिंगलेश्वरतीर्थं च सैंधवायतनं महत् ॥ ८६ ॥ भूतीश्वराह्वयं तीर्थं गंगावाहमतः परम् ॥ गौतमेश्वरतीर्थं च दशाश्वमेधिकं तथा ॥ ८७ ॥
भृगुतीर्थं तथा पुण्यं ख्याता सौभाग्यसुन्दरी ॥ वृषखातं च तत्रैव केदारं धूतपातकम् ॥ ८८ ॥ तीर्थं धूतेश्वरीसंगमेरण्डीसंज्ञकं तथा ॥ तीर्थं च
कनकेश्वर्या ज्वालेश्वरं ततः परम् ॥ ८९ ॥ शालग्रामाह्वयं तीर्थं सोमनाथमनुत्तमम् ॥ तथैवोदीर्णवाराहं तीर्थं चन्द्रप्रभासकम् ॥ ९० ॥ द्वादशा
दित्यतीर्थं च तथा सिद्धेश्वराभिधम् ॥ कपिलेश्वरतीर्थं च तथा त्रैविक्रमं शुभम् ॥ ९१ ॥ विश्वरूपाह्वयं तीर्थं नारायणकृतं तथा ॥ मूलश्रीपतिती
र्थं च चौलश्रीपतिसंज्ञकम्॥९२॥ देवतीर्थं हंसतीर्थं प्रभासं तीर्थमुत्तमम् ॥ मूलस्थानं च कण्ठेशमट्टहासमतः परम् ॥९३॥ भूर्भुवेश्वरतीर्थं च ख्याता
शूलेश्वरी तथा ॥ सारस्वतं दारुकेशमश्विनोस्तीर्थमुत्तमम् ॥ ९४ ॥ सावित्रीतीर्थमतुलं वालखिल्येश्वरं तथा ॥ नर्मदेशं मातृतीर्थं देवतीर्थमनुत्त
मम् ॥ ९५ ॥ मच्छकेश्वरतीर्थं च शिखितीर्थं च शोभनम् ॥ कोटितीर्थं मुनिश्रेष्ठास्तत्र कोटीश्वरी मृडा ॥ ९६ ॥ तीर्थं पैतामहं नाम मांडव्ये
श्वरसंज्ञितम् ॥ तत्र नारायणेशं च अक्रूरेशमतः परम् ॥ ९७ ॥ देवखातं सिद्धरुद्रं वैद्यनाथमनुत्तमम् ॥ तथैव मातृतीर्थं च उत्तरेशमतः परम् ॥
॥ ९८ ॥ तथैव नर्मदेशं च मातृतीर्थं तथा पुनः ॥ तथा च कुररीतीर्थं ढौंढेशं दशकन्यकम् ॥ ९९ ॥ सुवर्णबिंदुतीर्थं च ऋणपापप्रमोचनम् ॥
भारभूतेश्वरं तीर्थं तथा मुण्डीश्वरं विदुः ॥ १०० ॥ एकशालं डिंडिपार्णि तीर्थं चाप्सरसं परम् ॥ मुन्यालयं च मार्कंडं गणितादेवताह्वयम् ॥
॥ १०१ ॥ आमलेश्वरतीर्थं च तीर्थं कन्थेश्वरं तथा ॥ आषाढीतीर्थमित्याहुः शृंगीतीर्थं तथैव च ॥ १०२ ॥ बकेश्वरतीर्थं च कपालेशं तथैव च ॥
मार्कंडं कपिलेशं च एरण्डीसंगमस्तथा ॥ १०३ ॥ एरण्डीदेवतातीर्थं रामतीर्थमतःपरम् ॥ जमदग्नेः परं तीर्थं रेवासागरसंगमः ॥ १०४ ॥ लोटने
श्वरतीर्थं तल्लुंकेशनामकं तथा ॥ वृषखातं तत्र कुण्डं तथैव ऋषिसत्तमाः ॥ १०५ ॥ तथा हंसेश्वरंनाम तिलादं वासवेश्वरम् ॥ तथा कोटीश्वरं
तीर्थमलिकातीर्थमुत्तमम् ॥ विमलेश्वरतीर्थं च रेवासागरसंगमे ॥ १०६ ॥ एवं तीर्थावलिः पुण्या मया प्रोक्ता महर्षयः ॥ तीर्थमुक्तावलिः पुण्या
ग्रथिता तटरज्जुना ॥ १०७ ॥ नर्मदानीरनिर्णिक्ता मार्कंडेयविनिर्मिता ॥ मण्डनायेह साधूनां सर्वलोकहिताय च ॥ १०८ ॥ दुरितध्वांतशमनी

धार्यो धर्मार्थिभिः सदा ॥ अहोरात्रकृतं पापं सकृज्जप्त्वाशु नाशयेत्॥१०९॥त्रिकालं जप्त्वा मासोत्थं शिवाग्रे च त्रिमासिकम् ॥ मासं जप्त्वाथ वर्षोत्थं
वर्षं जप्त्वा शताब्दिकम् ॥ ११० ॥ श्राद्धकाले च विप्राणां भुञ्जतां पुरतः स्थितः ॥ पठँस्तीर्थावलिं पुण्यां गयाश्राद्धप्रदो भवेत् ॥१११॥ पूजाकाले च
देवानां श्रद्धया पुरतः पठन् ॥ प्रीणयेत्सर्वदेवांश्च पुनाति सकलं कुलम् ॥ ११२ ॥ एवं तीर्थावलिः पुण्या रेवातीरद्वयाश्रिता ॥ मया प्रोक्ता मुनिश्रेष्ठा
स्तथैवशृणुतानघाः ॥ ११३ ॥ इति श्रीस्कांदे महापुराण एकाशीतिसाहस्र्यां संहितायां पंचम आवन्त्यखण्डे रेवाखण्डे तीर्थावलिकथनं नाम
त्रिंशदधिकद्विशततमोऽध्यायः ॥ २३० ॥ ॥ छ ॥ ॥ श्रीसूत उवाच ॥ ॥ तथैव तीर्थस्तबकान्वक्ष्येहमृषिसत्तमाः ॥ यैस्तु तीर्थाव
लीगुंफः पूर्वोक्तैरेकतः कृतः ॥ १ ॥ विभक्तो भक्तलोकानामानंदप्रथनः शुभः ॥ मृकंडतनयः पूर्वं प्राह पार्थाय पृच्छते ॥ २ ॥ यथा तथाहं वक्ष्यामि
तीर्थानां स्तबकानिह ॥ शिवांबुपानजा पुण्या रेवा कल्पलता किल ॥ ३ ॥ तीरद्वयोद्भूततीर्थप्रसूनैः पुष्पिता शुभा ॥ यत्पुण्यगंधलक्ष्म्या वै त्रैलो
क्यं सुरभीकृतम् ॥ ४ ॥ तत्पुष्पमकरंदस्य रसास्वादविदुत्तमः ॥ भ्रमरः खलु मार्कंडो मुनिर्मतिमतां वरः ॥ ५ ॥ तत्पुष्पमालां हृदये तीर्थस्तबक
चित्रिताम् ॥ दधाति सततं पुण्यां मुनिर्भृगुकुलोद्वहः ॥ तस्याः स्तबकसंस्थानं वक्ष्येहमृषिसत्तमाः ॥६॥ ॐकारतीर्थमारभ्य यावत्पश्चिमसागरम् ॥
संगमाः पंचत्रिंशद्वै नदीनां पापनाशनाः ॥ ७ ॥ दशैकमुत्तरे तीरे सत्रिविंशति दक्षिणे ॥ पंचत्रिंशत्तमः श्रेष्ठो रेवासागरसंगमः ॥ ८ ॥ संगमः
सहितान्येवं रेवातीरद्वयेपि च ॥ चतुःशतानि तीर्थानि प्रसिद्धानि द्विजोत्तमाः ॥ ९ ॥ त्रिशतं शिवतीर्थानि त्रयस्त्रिंशत्समन्वितम् ॥ तत्रापि व्य
क्तितो वक्ष्ये शृणुध्वं तानि सत्तमाः ॥१०॥ मार्कंडेश्वरतीर्थानि दश तेषु मुनीश्वराः ॥ दशादित्यभवान्यत्र नवैव कपिलेश्वराः ॥ ११ ॥ सोमसस्था
पितान्यष्टौ तावंतो नर्मदेश्वराः ॥ कोटितीर्थान्यथाष्टौ च सप्त सिद्धेश्वरास्तथा ॥१२॥ नागेश्वराश्च सप्तैव रेवातीरद्वयेऽपि तु ॥ सप्तैव वह्निविहिता
न्यथाप्यावर्तसप्तकम् ॥ १३ ॥ केदारेश्वरतीर्थानि पंच पंचेंद्रजानि च ॥ वरुणेशाश्च पंचैव पंचैव धनदेश्वराः ॥ १४ ॥ देवतीर्थानि पंचैव चत्वारो
वै यमेश्वराः ॥ वैद्यनाथाश्च चत्वारश्चत्वारो वानरेश्वराः ॥ १५ ॥ अंगारेश्वरतीर्थानि तावंत्येव मुनीश्वराः ॥ सारस्वतानि चत्वारि चत्वारो दारुके
श्वराः ॥ १६ ॥ गौतमेश्वरतीर्थानि त्रीणि रामेश्वरास्त्रयः ॥ कपालेश्वरतीर्थानि त्रीणि हंसकृतानि च ॥ १७ ॥ त्रीण्येव मोक्षतीर्थानि त्रयो
वै विमलेश्वराः ॥ सहस्रयज्ञतीर्थानि त्रीण्येव मुनिरब्रवीत् ॥ १८ ॥ भीमेश्वरास्त्रयः ख्याताः स्वर्णतीर्थानि त्रीणि च ॥ धौतपापद्वयं प्रोक्तं
करंजेशद्वयं तथा ॥ १९ ॥ ऋणमोचनतीर्थे द्वे तथा स्कंदेश्वरद्वयम् ॥ दशाश्वमेधतीर्थे द्वे नंदीतीर्थद्वयं द्विजाः ॥ २० ॥ मन्मथेशद्वयं चैव
भृगुतीर्थद्वयं तथा ॥ पराशरेश्वरौ द्वौ च अयोनीसंभवद्वयम् ॥ २१ ॥ व्यासेश्वरद्वयं प्रोक्तं पितृतीर्थद्वयं तथा ॥ नंदिकेश्वरतीर्थे द्वे द्वौ च

गोपेश्वरौ स्मृतौ ॥ २२ ॥ मारुतेशद्वयं तद्वच्चैव ज्वालेश्वरौ स्मृतौ ॥ शुक्लतीर्थद्वयं पुण्यमप्सरेशद्वयं तथा ॥ २३ ॥ पिप्पलेश्वरतीर्थे द्वे
मांडव्येश्वरसंज्ञिते ॥ द्वीपेश्वरद्वयं चैव प्राह तद्वद्भृगूद्वहः ॥ उत्तरेश्वरतीर्थे द्वे अशोकेशद्वयी तथा ॥ २४ ॥ द्वे योधनपुरे चैव रोहिणीतीर्थकद्वयम् ॥
लुंकेश्वरद्वयं ख्यातमाख्यानं मुनिना तथा ॥ २५ ॥ सैकोनविंशतिशतं तीर्थान्येकैकशो द्विजाः ॥ स्तबकेषु कृतं तीर्थं द्विशतं सचतुर्दशम् ॥
॥ २६ ॥ शैवान्येतानि तीर्थानि वैष्णवानि च सत्तमाः ॥ शृणुध्वं प्रोच्यमानानि ब्राह्मशाक्तानि च क्रमात् ॥ २७ ॥ अष्टाविंशति तीर्थानि वैष्ण
वान्यब्रवीन्मुनिः ॥ तेषु वाराहतीर्थानि षडेव मुनिसत्तमाः ॥ २८ ॥ चत्वारि चक्रतीर्थानि शेषाण्यष्टादशैव हि ॥ विष्णुनाधितिष्ठितान्यत्र प्राह
पूर्वं मृकंडजः ॥ २९ ॥ तथैव ब्रह्मणा सिद्धयै सप्ततीर्थान्यवीवदत् ॥ त्रिषु च ब्रह्मणः पूजा ब्रह्मेशाश्चतुरोऽपरे ॥ अष्टाविंशन्मया ख्याता यथासंख्यं
यथाक्रमम् ॥ ३० ॥ एतत्पवित्रमतुलं ह्येतत्पापहरं परम् ॥ नर्मदाचरितं पुण्यं माहात्म्यं मुनिभाषितम् ॥ ३१ ॥ ॥ सूत उवाच ॥ ॥ एवमुद्देशतः
प्रोक्तो रेवातीर्थक्रमो मया ॥ यथा पार्थाय संक्षेपान्मार्कंडो मुनिरब्रवीत ॥ ३२ ॥ अवांतराणि तीर्थानि तेषु गुप्तान्यनेकशः ॥ यत्र यावत्प्रमाणानि
तान्याकर्णयतानघाः ॥ ३३ ॥ ॐकारतीर्थपरितः पर्वतादमरंकटात् ॥ क्रोशद्वये सर्वदिक्षु सार्द्धकोटीत्रयी मता ॥ ३४ ॥ तीर्थानां संख्यया गुप्त
प्रकटानां द्विजोत्तमाः ॥ कोटिरेका तु तीर्थानां कपिलासंगमे पृथक् ॥ ३५ ॥ अशोकवनिकायाश्च तीर्थं लक्षं प्रतिष्ठितम् ॥ शतमं
गारगर्तायाः संगमे मुनिसत्तमाः ॥ ३६ ॥ तीर्थानामयुतं तद्वत्कुब्जायाः संगमे स्थितम् ॥ शतं हिरण्यगर्भायाः संगमे समवस्थितम् ॥
॥ ३७ ॥ तीर्थानामष्टषष्टिश्च विशोकासंगमे स्थिता ॥ तथा सहस्रं तीर्थानां संस्थितं वागुसंगमे ॥ ३८ ॥ शतं सरस्वतीसंगे शुक्ल
तीर्थे शतद्वयम् ॥ सहस्रं विष्णुतीर्थेषु माहिष्मत्यामथायुतम् ॥ ३९ ॥ शूलभेदे च तीर्थानां साग्रं लक्षं स्थितं द्विजाः ॥
देवग्रामे सहस्रं च तीर्थानां मुनिरब्रवीत् ॥ ४० ॥ लुंकेश्वरे च तीर्थानां साग्रा सप्तशती स्थिता ॥ तीर्थान्यष्टोत्तरशतं मणिनद्याश्च संगमे ॥ वैद्य
नाथे च तीर्थानां शतमष्टाधिकं विदुः ॥ ४१ ॥ एवं तावत्प्रमाणानि तीर्थे कुम्भेश्वरे द्विजाः ॥ साग्रं लक्षं च तीर्थानां स्थितं रेवोरसंगमे ॥ ४२ ॥
॥१६६॥ ततश्चाप्यधिकानि स्युरिति मार्कंडभाषितम् ॥ अष्टाशीतिसहस्राणि व्यासद्वीपाश्रितानि च ॥ ४३ ॥ संगमे च करंजायाः स्थितमष्टोत्तरायुतम् ॥ ॥३४०॥
एरण्डीसंगमे तद्वत्तीर्थान्यष्टाधिकं शतम् ॥ ४४ ॥ धूतपापे च तीर्थानां षष्टिरष्टाधिका स्थिता ॥ स्कंदतीर्थे शतं पुण्यं तीर्थानां मुनिरुक्तवान् ॥
॥ ४५ ॥ कोहनेशे च तीर्थानां षष्टिरष्टाधिका स्थिता ॥ सार्द्धकोटी च तीर्थानां स्थिता वै कोरिलापुरे ॥ ४६ ॥ रामकेशवतीर्थे च सहस्रं साग्र

मुक्तवान् ॥ अस्माहके सहस्रं च तीर्थानि निवसंति हि ॥ ४७ ॥ लक्षाष्टकं सहस्रे द्वे शुक्लतीर्थे द्विजोत्तमाः ॥ तीर्थानि कथयामास पुरा पार्थाय भार्गवः ॥ ४८ ॥ शतमष्टाधिकं प्राह प्रत्येकं संगमेषु च ॥ नदीनामवशिष्टानां कावेरीसंगमं विना ॥ ४९ ॥ कावेर्याः संगमे विप्राः स्थिता पंचशती तथा ॥ तीर्थानां पर्वसु तथा विशेषो मुनिनोदितः ॥ ५० ॥ मोक्षतीर्थं हि सत्प्राहुः पुराणपुरुषाश्रितम् ॥ भृगोः क्षेत्रे च तीर्थानां कोटिरेका समाश्रिता ॥ ५१ ॥ साधिकानामृषिश्रेष्ठा वक्तुं शक्तो हि को भवेत् ॥ सर्वामराश्रयं प्रोक्तं सर्वतीर्थाश्रयं तथा ॥ ५२ ॥ त्रिषु लोकेषु विख्यातं पूजितं सिद्धिसाधनम् ॥ भारभूत्यां च तीर्थानां स्थितमष्टोत्तरं शतम् ॥ ५३ ॥ अक्रूरेश्वरतीर्थे च सार्द्धं तीर्थशतं स्थितम् ॥ विमलेश्वरतीर्थे तु रेवासागरसंगमे ॥ दशायुतानि तीर्थानां साधिकान्यब्रवीन्मुनिः ॥ ५४ ॥ इति श्रीस्कांदे महापुराण एकाशीतिसाहस्र्यां संहितायां पञ्चम आवंत्यखण्डे रेवाखण्डे तीर्थसंख्यापरिगणनवर्णनं नामैकत्रिंशदधिकद्विशततमोऽध्यायः ॥ २३१ ॥ ॥ छ ॥ ॥ ॥ ॥ सूत उवाच ॥ ॥ इति वः कथितं विप्रा रेवामाहात्म्यमुत्तमम् ॥ यथोपदिष्टं पार्थाय मार्कंडेयेन वै पुरा ॥ १ ॥ तथा तीर्थकदंबाश्च तेषु तीर्थविशेषतः ॥ प्राधान्येन मया ख्याता यथासंख्यं यथाक्रमम् ॥ २ ॥ एतत्पवित्रमतुलं ह्येतत्पापहरं परम् ॥ नर्मदाचरितं पुण्यं माहात्म्यं मुनिभाषितम् ॥ ३ ॥ सप्तकल्पानुगो विप्रो नर्मदायां मुनीश्वराः ॥ मृकण्डतनयो धीमान्परमार्थविदुत्तमः ॥ ४ ॥ संसेव्य सर्वतीर्थानि नदीः सर्वाश्च वै पुरा ॥ बहुकल्पस्मरां रेवामालक्ष्य शिवदेहजाम् ॥ ५ ॥ मे कलेति च शर्वोक्तां शरणं शर्वजां ययौ ॥ अजराममरां देवीं दैत्यध्वंसकरीं पराम् ॥ ६ ॥ महाविभवसंयुक्तां भवघ्नीं भवजाह्नवीम् ॥ तस्यामाबध्य सत्प्रेम जातः सोऽप्यजरामरः ॥ ७ ॥ षष्टितीर्थसहस्राणि षष्टिकोट्यश्च सत्तमाः ॥ व्यवस्थितानि रेवायास्तीरयुग्मे पदेपदे ॥ ८ ॥ सरितः परितः संति सतीर्थास्तु सहस्रशः ॥ न तुलां यांति रेवायास्ताश्च मन्ये मुनीश्वराः ॥ ९ ॥ एतद्वः कथितं सर्वं यत्पृष्टमखिलं द्विजाः ॥ यन्महेशमुखाच्छ्रुत्वा वायुराह ऋषीन्प्रति ॥ १० ॥ तद्वन्मृकण्डतनयोऽप्यनुभूयाखिलां नदीम् ॥ सतीर्थां पदशः प्राह पांडुपुत्राय पावनीम् ॥ ११ ॥ एतच्च कथितं सर्वं

---

१ एतस्माच्छ्लोकात्प्राक्—"शैवीयं संहिता पुण्या वायुना समुदीरिता ॥ चतुर्विंशतिसाहस्री मया वः समुदाहृता ॥" इति श्लोकः कस्मिंश्चित्पुस्तके पठ्यते तेन चतुर्विंशतिसहस्रसंख्याका वायुप्रोक्ता संहिता तदन्तर्गतं रेवाखण्डं स्यात् । अत्र च मार्कंडेयोक्तं रेवाखण्डं च द्वादशसहस्रसंख्याकग्रन्थसंमितमिति—"मया द्वादशसाहस्री संहिता या श्रुता पुरा । देवदेवस्य गदतः सांप्रतं कथिता तव ॥" इति मार्कण्डेयोक्तिरस्ति । ततश्च रेवाखण्डं किं चतुर्विंशतिसहस्रसंहितात्मकमाहोस्विद्द्वादशसहस्रसंहितात्मकमस्तीति शंका समुदेति । किंच, रेवाखण्डं किमावन्त्यखण्डान्तर्गतमाहोस्विच्छैवसंहितांतर्गतवायुप्रोक्तसंहितात्मकं वेत्यपि शंका समुदेति । परंतु—श्रीनारद

संक्षेपेण द्विजोत्तमाः ॥ नर्मदाचरितं पुण्यं त्रिषु लोकेषु दुर्लभम् ॥ १२ ॥ किमन्यैः सरितां तोयैः सेवितैस्तु सहस्रशः ॥ यदि संसे
व्यते तोयं रेवायाः पापनाशनम् ॥ १३ ॥ मेकलाजलसंसेवी मुक्तिमाप्नोति शाश्वतीम् ॥ १४ ॥ यथा यथा भजेन्मर्त्यो यद्यदिच्छति तीर्थगः ॥
तत्तदाप्नोति नियतं श्रद्धयाऽश्रद्धयापि च ॥ १५ ॥ इदं ब्रह्म हरिरिदमिदं साक्षात्परो हरः ॥ इदं ब्रह्म निराकारं कैवल्यं नर्मदा जलम्॥
॥ १६ ॥ तावद्गर्जंति तीर्थानि नद्यो ह्यघफलप्रदाः ॥ यावन्न स्मर्यते रेवा सेवाहेवा कलौ नरैः ॥ १७ ॥ ध्रुवं लोके हितार्थाय शिवेन
स्वशरीरतः ॥ शक्तिः कापि सरिद्रूपा रेवेयमवतारिता ॥ १८ ॥ तावद्गर्जंति यज्ञाश्च वनक्षेत्रादयो भृशम् ॥ यावन्न नर्मदानामकीर्तनं
क्रियते कलौ ॥ १९ ॥ गरिमा गण्यते तावत्तपोदानव्रतादिषु ॥ नरैर्वा प्राप्यते यावद्भुवि भर्गभवा धुनी ॥ २० ॥ ये वसंत्युत्तरे कूले रुद्रस्या
नुचरा हि ते ॥ वसंति याम्यतीरे ये लोकं ते यांति वैष्णवम् ॥ २१ ॥ धन्यास्ते देशवर्यास्ते येषु देशेषु नर्मदा ॥ नरकांतकरी शश्वत्संश्रिता
शर्वनिर्मिता ॥ २२ ॥ कृतपुण्याश्च ते लोकाः शोकाय न भवंति ते ॥ ये पिबंति जलं पुण्यं पार्वतीपतिसिंधुजम् ॥ २३ ॥ इदं पवित्र
मतुलं रेवायाश्चरितं द्विजाः ॥ शृणोति यः कीर्तयते मुच्यते सर्वपातकैः ॥ २४ ॥ यत्फलं सर्ववेदैश्च सषडंगपदक्रमैः ॥ श्रुतैश्च पठितैस्तस्मात्फलम
ष्टगुणं भवेत् ॥२५॥ सत्रयाजी फलं यच्च लभते द्वादशाब्दिकम्॥श्रुत्वा सकृच्च रेवायाश्चरितं तत्फलं लभेत् ॥२६॥ सर्वतीर्थावगाहाच्च यत्फलं साग
रादिषु ॥ सकृच्छ्रुत्वा च माहात्म्यं रेवायास्तत्फलं लभेत् ॥ २७ ॥ एतद्धर्म्यमुपाख्यानं सर्वशास्त्रेष्वनुत्तमम् ॥ देशे वा मण्डले वापि नगरे ग्रामम
ध्यतः ॥ २८ ॥ गृहे वा तिष्ठते यस्य लिखितं सार्ववर्णिकम् ॥ स ब्रह्मा स शिवः साक्षात्स च देवो जनार्दनः ॥ २९ ॥ धर्मार्थकाममोक्षाणां
मार्गोऽयं देवसेवितः ॥ गुरूणां च गुरुः शास्त्रं परमं सिद्धिकारणम् ॥ ३० ॥ यश्चेदं शृणुयान्नित्यं पुराणं देवभाषितम् ॥ ब्राह्मणो वेदवान्भूयात्क्ष
त्रियो विजयी भवेत् ॥३१॥ धनाढ्यो जायते वैश्यः शूद्रो वै धर्मभाग्भवेत् ॥ ३२ ॥ सौभाग्यसंततिं नारी श्रुत्वैतत्समवाप्नुयात् ॥ श्रियं सौख्यं
स्वर्गवासं जन्म चैवोत्तमे कुले ॥ ३३ ॥ रसभेदी[1] कृतघ्नश्च स्वामिध्रुक् मित्रवंचकः ॥ गोघ्नश्च गरदश्चैव कन्याविक्रयकारकः ॥ ३४ ॥ ब्रह्मघ्नश्च

महापुराणप्रोक्तस्कान्दमहापुराणस्यप्रतिखण्डाभिधयानुक्रमणिकायां पञ्चम आवंत्यखण्डे रेवाखण्डं प्रक्रांतमस्ति । तदेवैतद्रेवाखण्डमस्ति–यथावदनुक्रमम् । यत्तु–चतुर्विंशतिसहस्रसंहितात्मकं रेवाखण्डमस्ति–तस्त्वन्यदेव स्यात् ।
तत्पुस्तकांतरं चाप्यपूर्णमुपलभ्यते–एतेन तच्चतुर्विंशतिसहस्रसंहितात्मकमन्यदेव रेवाखण्डं स्यात्–सत्यनारायणव्रतादिकथानामत्र क्रमेऽनुपलम्भात्तत्र समावेशस्य सम्भवात् । अतश्चैकाशीतिसाहस्रसंहितात्मकस्कान्दमहापु
राणे रेवाखण्डं द्वादशसहस्रसंहितात्मकमेवास्ति । अन्यच्च–रेवाखण्डं चतुर्विंशतिसहस्रसंहितात्मकं यत्तन्मात्रत्वं किंतु तन्मृग्यम् । यदि कदाचिच्छतसहस्रसंहितात्मकश्रीस्कांदमहापुराणे स्याच्चेत्–शंकरसंहितायास्तत्र सत्त्वा
त्तस्याश्च चतुर्विंशतिसहस्रसंहितात्मकत्वसंभवात्तत्त्वं चान्यद्रेवाखण्डं यदेकं पुस्तकं किंचिदपूर्णमुपलब्धमस्ति तत्स्यात् । अतोऽत्र द्वादशसहस्रसंहितात्मकमेतेदमावन्त्यखण्डान्तर्गतं रेवाखण्डमस्तीति निपुणं सुधीभिरवधेयम् ।

१ रसभेदी–पंक्तिभेदकर्ता–इत्यर्थः,–धातुभस्मकरः–इत्यर्थो वा ।

सुरापी च स्तेयी च गुरुतल्पगः ॥ नर्मदाचरितं श्रृण्वंस्तामब्दं योऽभिषेवते ॥ ३५ ॥ सर्वपापविनिर्मुक्तो जायते नाऽत्र संशयः ॥ पाकभेदी वृथा
पाकी देवब्राह्मणनिंदकः ॥ ३६ ॥ परीवादी गुरोः पित्रोः साधूनां नृपतेस्तथा ॥ तेऽपि श्रुत्वा च पापेभ्यो मुच्यन्ते नात्र संशयः ॥ ३७ ॥ ये
पुनर्भावितात्मानः शास्त्रं श्रृण्वंति नित्यशः ॥ पूजयंति च तच्छास्त्रं नार्मदं वस्त्रभूषणैः ॥ ३८ ॥ पुष्पैः फलैश्चंदनाद्यैर्भोजनैर्विविधैरपि ॥ शास्त्रेऽ
स्मिन्पूजिते देवा पूजिता गुरवस्तथा ॥ ३९ ॥ इह लोके परे चैव नात्र कार्या विचारणा ॥ तस्मात्सर्वप्रयत्नेन गन्धवस्त्रादिभूषणैः ॥ ४० ॥ पूज
येत्परया भक्त्या वाचकं शास्त्रमेव च ॥ वेदपाठैश्च यत्पुण्यमग्निहोत्रैश्च पालितैः ॥ ४१ ॥ तत्फलं समवाप्नोति नर्मदाचरिते शुभे ॥ कुरुक्षेत्रे च
यत्पुण्यं प्रभासे पुष्करे तथा ॥४२॥ रुद्रावर्ते गयायां च वाराणस्यां विशेषतः ॥ गंगाद्वारे प्रयागे च गंगासागरसंगमे ॥ ४३ ॥ एवमादिषु तीर्थेषु
यत्पुण्यं जायते नृणाम् ॥ नर्मदाचरितं श्रुत्वा तत्पुण्यं सकलं लभेत् ॥ ४४ ॥ आदिमध्यावसानेषु नर्मदाचरितं शुभम् ॥ यः श्रृणोति नरो
भक्त्या श्रृणुध्वं तत्फलं महत् ॥ ४५ ॥ समाप्य शिवसंस्थानं देवकन्यासमावृतः ॥ रुद्रस्यानुचरो भूत्वा शिवेन सह मोदते ॥ ४६ ॥ धर्माख्या
नमिदं पुण्यं सर्वाख्यानेष्वनुत्तमम् ॥ गृहेपि पठ्यते यस्य चतुर्वर्णस्य सत्तमाः ॥ ४७ ॥ धन्यं तस्य गृहं मन्ये गृहस्थं चापि तत्कुलम् ॥ पुस्तकं
पूजयेद्यस्तु नर्मदाचरितस्य तु ॥ ४८ ॥ नर्मदा पूजिता तेन भगवांश्च महेश्वरः ॥ वाचके पूजिते तद्वद्देवाश्च ऋषयोर्चिताः ॥ ४९ ॥ लेखयित्वा
च सकलं रेवाचरितमुत्तमम् ॥ भूषणं सर्वशास्त्राणां यो ददाति द्विजन्मने ॥ ५० ॥ नर्मदासर्वतीर्थेषु स्नानदानेन यत्फलम् ॥ तत्फलं समवाप्नोति
स नरो नात्र संशयः ॥ ५१ ॥ एतत्पुराणं रुद्रोक्तं महापुण्यफलप्रदम् ॥ स्वर्गदं पुत्रदं धन्यं यशस्यं कीर्त्तिवर्धनम् ॥ ५२ ॥ धर्म्यमायुष्यमतुलं
दुःखदुःस्वप्ननाशनम् ॥ पठतां श्रृण्वतां चापि सर्वकामार्थसिद्धिदम् ॥ ५३ ॥ यत्प्रदत्तमिदं पुण्यं पुराणं वाच्यते द्विजैः ॥ शिवलोके स्थितिस्तस्य
पुराणाक्षरवत्सरी ॥ ५४ ॥ इति निगदितमेतन्नर्मदायाश्चरित्रं पवनगदितमग्र्यं शर्ववक्त्रादवाप्य ॥ त्रिभुवनजनवंद्यं त्वेतदादौ मुनीनां कुलपतिषु
रतस्तत्सूतमुख्येन साधु ॥ ५५ ॥ इति श्रीस्कांदे महापुराण एकाशीतिसाहस्र्यां संहितायां पञ्चम आवन्त्यखण्डे रेवाखण्डे रेवाखंडसमाप्तिरेवा
खंडपुस्तकदानादिमाहात्म्यवर्णनं नाम द्वात्रिंशदधिकद्विशततमोऽध्यायः ॥ २३२ ॥ ॥ छ ॥ ॥ छ ॥ ॥ छ ॥ ॥

इति श्रीस्कांदे महापुराणे पञ्चम आवन्त्यखण्डे तृतीयं रेवाखण्डं समाप्तम् ॥ (५-३) ॥

॥ इति श्रीस्कान्दे महापुराणे पञ्चम आवन्त्यखण्डे तृतीयं रेवाखण्डं समाप्तम् ॥(५-३)॥